श्रीमदानन्दतीर्थविरचितं

# श्रीमद् ब्रह्मसूत्रभाष्यम्

महामहोपाध्याय-श्रीमुष्णं-व्याकरण-सुब्बरायाचार्यविरचितया

## भाष्यार्थसहितसूत्रार्थमणिमञ्जरी

व्याख्यया सहितम्

(प्रथम-द्वितीयाध्यायौ)

अनुग्राहकसम्पादकाः

**श्रीविद्येशतीर्थश्रीपादाः**

श्रीभण्डारकेरिमठः, उडुपि.

सम्पादकः

**डा. ए.वि. नागसम्पिगे**

निर्देशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु

प्रकाशनम्

श्री ऐतरेयशोधप्रकाशनपीठम्,

श्रीभागवताश्रम्, श्रीभण्डारकेरिमठः,

गिरिनगरम्, बेङ्गलूरु

# श्रीमदानन्दतीर्थविरचितं श्रीमद् ब्रह्मसूत्रभाष्यम्

## महामहोपाध्याय-श्रीमुष्णं-व्याकरण-सुब्बरायाचार्यविरचितया भाष्यार्थसहितसूत्रार्थमणिमञ्जरीव्याख्यया सहितम्

## (प्रथम-द्वितीयाध्यायौ)


| | |
|---|---|
| अनुग्राहकसम्पादकाः | **श्रीविद्येशतीर्थश्रीपादाः**<br>**श्रीभण्डारकेरिमठः, उडुपि.** |
| सम्पादकः | **डा. ए.वि. नागसम्पिगे**<br>निर्देशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु |
| प्रकाशनम् | **श्री ऐतरेयशोधप्रकाशनपीठम्, श्रीभागवताश्रम्, श्रीभण्डारकेरिमठः, गिरिनगरम्, बेङ्गलूरु** |
| प्रथममुद्रणम् | **२०१५** |
| पृष्टसङ्ख्या | **७२ + ५३२** |
| मूल्यम् | **४०० रूप्यकाणि** |
| मुद्रणम् | **पवन् प्रिण्टर्स्, बेङ्गलूरु** |

# वेदान्तसूत्रस्य हृदयवाणी

श्रीवेदतात्पर्यनिर्णयात्मकस्य वेदान्तस्य ब्रह्मसूत्रम्, युक्तिसूत्रम्, शारीरकसूत्रम्, परविद्या-इत्याद्यनर्थान्तरनामानि वर्तन्ते ।

तत्र सपरिकरस्य ब्रह्मणो विचारश्चतुरध्यायेषु यथाक्रमं क्रियते । लक्षणप्रमाणविचारमुखेन समन्वयाध्याये तद्विचारः कृतः । ब्रह्मशब्दोक्तगुणपूर्णत्वतदुपपादकद्वितीयसूत्रोक्त-जगज्जन्मादिकारणत्वतत्सिद्धनिर्दोषत्वलक्षणानां युक्ति-समय-श्रुति-प्रबलयुक्तियुक्त-श्रुतिविरोधैर्लक्षणदुर्घटत्वशङ्कया ब्रह्मनिर्धारणेऽवरुद्धे सति द्वितीयाध्याये तद्विरोध-परिहारेण ब्रह्मणो निर्दोषगुणपूर्णत्वे सुदृढीकृते ।

एवंरीत्या निर्धारितं ब्रह्म केनोपायेन किं फलं प्रयच्छतीति जिज्ञासायां प्रथमतः वैराग्य-सुदृढभक्ति-उपासा-साक्षात्काराख्योपायैः प्रसन्नीकर्तव्यं ब्रह्मेति तृतीयेऽध्याये तदुपाया विचारिताः ।

उक्तोपायैः प्रसन्नीकृतात् भगवतः कर्मक्षय-उत्क्रान्ति-मार्ग-भोगात्मकदल-चतुष्टयोपेतमोक्षः सम्पाद्य इति चरमेऽध्याये तद्विचारः कृतः ।

एवं च, एवंविधसपरिकरब्रह्मविचारः चतुरध्यायात्मकब्रह्मसूत्रेषु यथाक्रमं कृतः ।

एतानि ब्रह्मसूत्राणि वेदान्तसूत्राणि । तेषु सूत्रेषु कानिचित् सूत्राणि पूर्वपक्षप्रापकाणि, कानिचित् सिद्धान्तप्रापकाणीति केचन विभजन्ते । तन्न पेशलम् । तथात्वे तेषु वेदान्तसूत्रमिति व्यपदेशो न स्वरसः स्यात्। पूर्वपक्षप्रापकसिद्धान्तप्रापकसूत्रघटितसमुदाये छत्रिन्यायेन तद्व्यपदेशो युज्यत इति तु समाधानमगतिका गतिरिति भावः ।

तत्र वेदान्तस्य शारीरकसूत्रमिति व्यपदेशः किन्निमित्तेन इत्यत्र किञ्चिद् विचार्यते ।

शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वरसञ्ज्ञितः इति प्रमाणानुसारेण शारीर-शब्देनोभयग्रहणसम्भवेऽपि शारीरश्चोभयेऽपि हि भेदेनैनमधीयते अनुपपत्तेस्तु न शारीरः इत्यादिस्थले शरीराभिमानेन बद्धो जीव एव सूत्रकारेण गृहीतः । शारीरकशब्देन तु भगवानेव स्वीकर्तव्य इति सूत्रकारेणैव तस्य प्रकृत्यादिशरीररूपकविन्यस्तत्वं वदता

सूचितम् । यस्य पृथिवी शरीरम् यस्यापः शरीरम् यस्यात्मा शरीरम् यस्य विज्ञानं शरीरम् इत्यादौ पृथिव्याद्यभिमानिदेवता आत्मविज्ञानशब्दिताः सकलाश्च चेतना भगवच्छरीरत्वेन कीर्तिताः । एते जीवास्तु भगवतो न मुख्यतः शरीररूपाः । तत्सुखदुःखभोगावच्छेदकत्वाभावात् । सादृश्यार्थकेन कुत्सनार्थकेन वा कप्रत्ययेनैतत् सूचितम् । सूर्यसदृशे तत्प्रतिबिम्बे सूर्यक इति व्यपदेशवत् । भगवद्वशत्वेन भगवदधिष्ठानत्वेन च शरीरसदृशे प्रकृत्यादौ शरीरक इति कप्रत्ययान्तशब्दस्य व्यपदेश इति बोध्यम् । तथाचोक्तम्–

पृथिव्याद्या देवतास्तु देहवद् यद्वशत्वतः ।
शरीरमिति चोच्यन्ते तस्य विष्णोर्महात्मनः ॥ इति ।

एवं च शरीरकशब्दितासु पृथिव्यादिदेवतासु नियामकत्वेन सन्निहितो भगवानेव शारीरकः (शरीरके भवः शारीरकः)। तद्विचाराङ्गयुक्तिमणिग्रथितसूत्रत्वात् ब्रह्मसूत्रस्य शारीरकसूत्रमिति व्यपदेशः साधु सङ्गच्छत इति बोध्यम् ।

एवं चानेन शब्देन ब्रह्मण एव विचारोऽत्र क्रियते । नतु शारीरस्य जीवस्य परोक्तरीत्या ब्रह्मत्वविचार इति सिद्धम् ।

एवं च शरीरात्माऽविवेककृतः संसारबन्ध इति वैदिकेषु यो व्यवहारः सुप्रसिद्धः, स च जीवपरमात्माऽविवेककृतः संसारबन्ध इत्यर्थेऽपि बोध्यम् । तथाचोक्तम्– सर्वभिन्नं परात्मानं विस्मरन् संसरेदिह इति ।

अथवा, अनिरुद्धादिनारायणान्तानि रूपाणि तैत्तिरीयोपनिषदि शारीर आत्मा इति कीर्तितानि । एवं च, शारीरशब्देन पञ्चरूपाणि गृह्यन्ते । तेषां (कै शब्दे) कशब्दितनानाविधनामात्मकलिङ्गात्मकशब्दानां समन्वयविचाराङ्गयुक्तिमणिग्रथितसूत्रत्वात् शारीरकसूत्रमिति व्यपदेशो वेदान्तस्य साधु सङ्गच्छत इति बोध्यम् ।

वेदान्ते (ब्रह्मसूत्रे) अनिरुद्धादिनारायणान्तरूपाणि प्रतिपाद्यन्त इति तु

वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वशः ।
अथवा पञ्चमूर्तिः सः प्रोक्तोऽधिकरणं प्रति ।
प्रतिसूत्रं प्रतिपदं प्रत्यक्षरमथापि वा ॥ इति बृहत्तन्त्रप्रमाणेन सिद्धम् ।

## अथातो ब्रह्मजिज्ञासा (१.१.१)

अथातो ब्रह्मजिज्ञासा इत्यत्र, अथ ब्रह्मापरोक्षज्ञानानन्तरम्, अतः परमात्म-प्रसादातिशयानन्दाद्यतिशयरूपफलसद्भावात् अतः सर्वमनोवृत्तिप्रेरकतत्प्रसादात् ब्रह्म-जिज्ञासा = तच्छ्रवणमननध्यानव्याख्यानादिरूपोपासा कर्तव्या- इत्यर्थोऽपि ग्राह्यः । एतदर्थस्य प्रामाणिकत्वात् । तथाचोक्तम्-

सर्वदुःखनिवृत्तिस्तु ज्ञानिनो निश्चितैव हि ।
उपासया कर्मभिश्च भक्त्या चानन्दचित्रता ॥ इति ।

अत्रोपासापदेन शास्त्राभ्यासोऽपि ग्राह्यः ।

यावत् सेवा परे तत्त्वे तावत् सुखविशेषता इति च।

सिद्धोपायेन विष्णोस्तु ध्यानव्याख्यार्चनादिकम् ।
कार्यं नान्यत् तस्य तेन तुष्टो भवति केशवः ॥ इति च प्रवृत्ते ।

अत्र सिद्धोपायपदेनापरोक्षज्ञानी गृह्यते ।

अत्र सूत्रे अतः इत्यनेन अशब्दितहरिप्रसादतः इत्यर्थः प्रदर्शितः । अवर्णप्रतिपाद्यत्वेन यथा भगवान् गृह्यते, तथा तदभिमानित्वेन ब्रह्मवाय्वपि ग्राह्यौ । तयोस्तदभिमानित्वं तु वायुर्ब्रह्मा चाकारदेवते नतु नामिनौ इति प्रमाणात् सिद्धम् । तताच, अतः = ब्रह्मवायुप्रसादतो ब्रह्मजिज्ञासा कर्तव्येत्यपि योजनीयम् ।

वायुप्रसादस्य विद्यारम्भकाल आवश्यकत्वादेव सर्वविद्याप्रवर्तकेषु तस्य श्रेष्ठत्वेन ब्रह्मविद्यारम्भकाले नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि इति तैत्तिरीये तस्य नुतिस्तुती प्रदर्शिते । अथवा अतः इति बुद्धिस्थपरामर्शः । विद्यारम्भकाले नम्यत्वेन स्तुत्यत्वेन च शास्त्रतो बुद्धिस्थस्तूक्तरीत्या वायुरेव । तस्मादत इत्यनेन वायुप्रसादत इत्यर्थो लभ्यते ।

## जन्माद्यस्य यतः (१.१.२)

जन्माद्यस्य यतः इत्यत्र जीवव्यावर्तकं ब्रह्मशब्दोक्तानन्तगुणपूर्णत्वरूप-मुख्यलक्षणसम्भावनायुक्तिरूपं जगज्जन्माद्यष्टकर्तृत्वरूपलक्षणं प्रदर्शितम् । तस्य

मुख्यलक्षणसम्भावनायुक्तित्वं कर्तृत्वात् सगुणं ब्रह्म इति तृतीये भागवते सूत्रकारेणैव सूचितम् ।

केचन जन्माद्यस्य यतः इति सृष्टि–स्थिति–संहारमात्रकर्तृत्वं स्वीकुर्वन्ति । तन्न समञ्जसम् । न्यूनगुणानुसन्धानस्यानर्थहेतुत्वात् । तच्च न गुणानां च भागहानिं प्रकल्पयेत् इति कौर्मवचनात् सिद्धम् ।

किञ्च, सूत्रकारेणैव भागवते नारायणकवचोपक्रमे–

हरिर्विदध्यान्मम सर्वरक्षां न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे ।
दरारिचर्मासिगदेषुचापपाशान् दधानोऽष्टगुणोऽष्टबाहुः॥

इत्यत्र जन्माद्यष्टकर्तृत्वरूपाष्टगुणानां कीर्तनात् जन्माद्यस्य यतः इत्यत्राप्यष्टगुणास्तेन विवक्षिता इति ज्ञेयम् ।

न केवलं लिङ्गदेहाद्यनिष्टान्मोचनकर्तृत्वं भगवतः, किन्तु मुक्त्यनन्तरमपि आनन्ददश्च मुक्तानां स एवैको जनार्दनः इत्युक्तदिशा मुक्तानां स्वरूपानन्दस्याविष्कर्तृत्वं च तस्य वर्तते । तच्च द्वितीये प्रदर्शितम् । अद्यस्य = भोग्यस्य, स्वरूपानन्दस्येति यावत्, जन्म = प्रादुर्भावः (अभिव्यक्तिः) यतस्तद् ब्रह्मेति । एतच्च वर्णकान्तरम् । एवं च मुक्तव्यावर्तकलक्षणान्तरमपि सूत्रकारेण सूचितमिति ज्ञेयम् । एतेन मुक्तावपि जीवब्रह्मणोरुपजीव्योपजीवकभावो नियत इति सिद्धम् ।

## शास्त्रयोनित्वात् (१.१.३)

रुद्रादीनां जगत्कारणत्वमनुमानगम्यमिति न शङ्क्यम् । तस्य शास्त्रयोनित्वात् शास्त्रैकसमधिगम्यत्वादिति यावत् । तथाचोक्तम् – औपनिषदः पुरुषः नावेदविन्मनुते तं बृहन्तम् नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति इत्यादिश्रुतिषु । अत्र पुरुष–पदेन महत्तत्त्वस्य स्रष्टा गृह्यते । तस्मात् केवलानुमानं रुद्रादिजगत्कारणत्वे न मानं भवितुमर्हतीति भावः ।

अत्र यद्यप्यापाततः शात्रं योनिः प्रमाणमस्येत्यन्यपदार्थप्रधानबहुव्रीह्याश्रयणं न स्वरसमिति भाति। शास्त्रयोनिपदापेक्षया शास्त्गम्येति पदं स्वरसम् । स्फुटार्थत्वात्, समासस्वरस–त्वाच्च । तथाऽपि शास्त्रयोनिपदं प्रयुञ्जता सूत्रकारेणायं प्रमेयविशेषः सूचितः ।

सूत्रकारेण हि योनिश्च गीयते इत्यत्राव्यवधानेनोत्पत्तिद्वारत्वरूपार्थो योनिशब्दस्य स्वीकृतः । तथाचात्र भाष्यम्- अव्यवधानेनोत्पत्तिद्वारत्वं प्रकृतित्वम् । तच्चास्यैव गीयते यद्भूतयोनिम् इति । अत्र तु नित्यस्य भगवतो नैवोत्पत्तिद्वारभूता योनिः शास्त्रम्। अत्राव्यवधानेन ज्ञप्तिद्वारत्वमेव योनिशब्देन सूत्रकृता स्वीकृतमिति विभावनीयम्।

एवं च, केनचिदुक्तरीत्या शक्यार्थव्यवधानेन लक्षणया चिन्मात्रज्ञप्तिद्वारत्वं शास्त्रस्य नास्ति, किन्तु साक्षादव्यवधानेन साक्षात् शक्तिवृत्त्या सगुणब्रह्मज्ञप्तिद्वारत्वमिति प्रमेयरहस्यं सूचितमिति ज्ञेयम् ।

किञ्च, मम योनिरिति गर्भाधानार्था योनिः । नतु माता इति चतुर्दशगीताभाष्यवचनेन योनिशब्दस्य मातेत्यर्थोऽपि सूचितः । जाने त्वामीश विश्वस्य जगतो योनिबीजयोः इत्यत्र चतुर्थे भागवते मातरि योनिशब्दप्रयोगाच्चायमर्थो निर्णीतो भवति ।

भागवते पञ्चमे वेदस्य गर्भ इति वेदसुतत्वेन (शिशुत्वेन) भगवान् कीर्तितः । त्रयीड्यत्वात् त्रयीसुतः' इति भागवततात्पर्योदाहृततन्त्रनिरुक्तवचनेऽपि तथा कीर्तितः ।

अत्र साक्षात् शक्तिवृत्त्या भगवज्ज्ञप्तिकारणत्वविवक्षयैव भगवन्मातृत्वेन वेदादिशास्त्रमुपवर्णितम् । काठकेऽपि ब्रह्मजज्ञम् इत्यत्राप्येतदर्थविवक्षया वेदजन्यत्वेन भगवान् प्रतिपादितः।

एवंच, शास्त्रेषु तत्रतत्रोक्तार्थविवक्षया भगवन्मातृत्वेन शास्त्रस्योपवर्णनात् सूत्रकारेण 'यमामनन्ति स्म हि शब्दयोनिं मनोमयं सत्वतुरीयमर्थम्' (तृः भागवते) इत्यादिशास्त्रानुसारेण शास्त्रयोनित्वेन भगवान् कीर्तित इति ज्ञेयम् ।

एवं चोक्तरीत्या शास्त्रयोनिपदेन शास्त्रमुख्यार्थ(वाच्यार्थ)लाभात्, 'तत्तु समन्वयात्' इत्यत्र समित्युपसर्गेण परममुख्यार्थ(वाच्यार्थ)त्वमुक्तमिति भाष्यकारेण सूचितमिति ज्ञेयम् । तथाचोक्तमनुव्याख्याने-

'शास्त्रयोनिर्न चान्योऽस्ति मुख्यतस्त्विति गम्यते ।
शास्त्रयोनित्वमेतस्य ज्ञायते हि समन्वयात् ॥
समिति ह्युपसर्गेण परमुख्यार्थतोच्यते ॥' इति ।

'भगवतः परमवाच्यार्थत्वम् वचसा वाच्यमुत्तम्' इति जितन्तेस्तोत्रेण सिद्धमिति ज्ञेयम् ।

अथवा, नचानुमानतो रुद्रादयो जगत्कारणत्वेन कल्पनीयाः । जगत्कारणत्वानुमापक-सदनुमानस्य शास्त्रयोनित्वात् = शास्त्रकारणत्वात् । शास्त्रमूलत्वादिति यावत् ।

प्रकृते रुद्रादिजगत्कारणत्वानुमापकानुमानस्य तु न शास्त्रयोनित्वम् = शास्त्र-मूलत्वमस्ति । किन्तु, पाशुपतादिस्मृतिमूलत्वमेव । नहि पाशुपतादिस्मृतयः शास्त्रम् । तथाचोक्तम् -

'ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥
यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत् ॥' इति स्कान्दे ।

विप्रलम्भादिमूलत्वात् पाशुपतादीनां न शास्त्रत्वमिति भावः । तच्च त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय इत्यादिस्मृतिसिद्धम् ।

तथाच रुद्रादिजगत्कारणत्वानुमापकानुमानस्य शास्त्रमूलत्वाभावेन विप्रलम्भादिमूल-पाशुपतादिमूलत्वेना-भासत्वात् न तेन रुद्रादेर्जगत्कारणत्वसिद्धिरिति भावः ।

अथवा, नच रुद्रादयः पाशुपतादिमूलानुमानतो जगत्कारणत्वेन कल्पनीयाः, तेषां शास्त्रयोनित्वात् । पाशुपतादिशास्त्र(आभास)मात्रकारणत्वात् । नतु तदुक्तजगत्कारणत्वमिति भावः । तथाचोक्तम्- अतथ्यानि वितथ्यानि दर्शयस्व महाभुज इति।

अथवा, रुद्रादीनामनुमानादिना जगत्सृष्ट्यादिमोक्षान्तकारणत्वं न कल्प्यम् । कुतः? तेषां शास्त्रयोनित्वात् । रुद्रगीतादिशास्त्रमात्रकारणत्वात् । गुरुत्वमात्रसद्भावादिति यावत् । तस्माद् देवस्येव जगज्जन्मादिमोक्षान्तकारणत्वं तेषां न युज्यते । जगत्सृष्ट्यादिक्रिया देवस्य स्वभावः, नतु गुरोः । तदुक्तम्- 'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' इति ।

नच रुद्रादीनां लीलामात्रेण सृष्ट्यादिक्रियाकर्तृत्वरूपं देवत्वमस्ति । सृष्ट्यादि-क्रीडाकर्तृत्वरूपं देवत्वं हरेरेव, नान्येषाम् । तेषां क्रीडनकत्वमात्रमिति तु बालः क्रीडनकैर्यद्वत् क्रीडतेऽस्माभिरच्युतः इति स्मृतिवचनेन सिद्धम् ।

किञ्च, रुद्रादीनां शास्त्रयोनित्वेन ज्ञानकारणत्वस्य कथञ्चित् सम्भवेऽपि मोक्षादिकारणत्वं न कथञ्चिदपि युज्यते ।

'ज्ञानं महेश्वरादिच्छेत् मोक्षमिच्छेज्जनार्दनात्' इति वचनात्

'वरं वरय भद्रं ते ऋते कैवल्यमात्मनः ।
एक एवेश्वरस्तस्य भगवान् विष्णुरव्ययः ॥' इति वचनाच्चेति भावः ।

अथवा, न रुद्रादीनां पुराणप्रसिद्ध्यादिना स्वातन्त्र्येण जगत्सृष्ट्यादिकारणत्वं मन्तव्यम् । कुतः? तेषां शास्त्रयोनित्वात् । शास्त्रस्य = अन्तर्यामिणः, योनित्वात् = स्थानत्वात् = अधिष्ठानत्वादिति भावः । एवं च, नह्यन्तर्यामिण इवाधिष्ठानभूतरुद्रादीनां जगत्सृष्ट्यादिस्वातन्त्र्यमस्ति ।

शास्त्रपदस्यान्तर्याम्यर्थस्तु संविच्छास्त्रं परं पदम् इत्यत्र भागवते सूत्रकारेणान्तर्यामिणि शास्त्रपदप्रयोगात् । तथा ब्रह्मसूत्रे शस्त्रदृष्ट्या तूपदेशो वामदेववत् इत्यत्र चोक्तार्थे प्रयोगाच्च सिद्धः ।

योनिपदस्य स्थान(अधिष्ठान)रूपार्थस्तु योनिर्भार्या तथा स्थानं योनिः कारणमेव च इति गीतातात्पर्योदाहृतप्रमाणवचनात् सिद्धः ।

ब्रह्मरुद्रादीनामन्तर्याम्यधिष्ठानत्वं सृष्ट्यादिक्रियाद्वारत्वं चाधोनिर्दिष्टप्रमाणात् सिद्धम्–

'ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः ।
स ब्रह्मणा विसृजति रुद्रेण विलापयति च ॥' इत्यादि ।

अथवा, नानुमानतो ब्रह्मरुद्रादीनां जगत्सृष्ट्यादिमुख्यकारणत्वं वाच्यम् । अपितु, ब्रह्मैव जगत्सृष्ट्यादिमुख्यकारणम् । कुतः? शास्त्रयोनित्वात् । शास्त्रशब्दितस्याव्यक्तस्य योनित्वात् कारणत्वादिति भावः । यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिम् इत्यम्भृणीसूक्तोक्तदिशा ब्रह्मरुद्रादीन् प्रति तवैतत् पदम् तवैतत् पदम् इति शास्ति = कथयति, तत्तत्पदेषु तान् नियोज्य तत्तद्व्यापारेषु तान् प्रशास्ति च (आज्ञापयति च) । ब्रह्मणः पञ्चममुखस्य छेत्तारमत एव ब्रह्मद्विषं रुद्रं हन्तुमेव धनुः आतनोति = विस्तारयति। तथाच रुद्रं शास्ति = दण्डयतीति यावत् ।

एवञ्च, उक्तत्रिविधशासनकर्तृत्वात् शास्त्रमित्यव्यक्तम् (लक्ष्मीः) उच्यते । तच्च साक्षात् (मुख्यतः) वेदादिशास्त्राभिमानित्वाच्चाभिमानिव्यपदेशन्यायेन शास्त्रेति गीयते ।

'सर्ववेदाभिमानिन्यो देव्यो लक्ष्मीस्ततोऽधिका ।
वेदाभिमानिनी साक्षात्' इति वचनेन तस्याव्यक्तस्य मुख्याभिमानित्वं सिद्धम् ।

एवञ्च, शास्त्रशब्दितस्याव्यक्तस्य योनित्वं (कारणत्वं) तु भगवतः मम योनिरप्स्वन्तः समुद्रे यतः प्रसूता जगतः प्रसूती इत्यादिप्रमाणेन सिद्धम् । एवञ्च, ब्रह्मरुद्रादिपददात्र्या तच्छासनस्य कर्त्र्या जगन्मातुर्लक्ष्म्याया कारणत्वात् तदधिको विष्णुरेव मुख्यतो जगत्सृष्ट्यादिकारणं नतु तदवरब्रह्मरुद्रादिकं जगत्सृष्ट्यादिमुख्यकारणम् । तथाचोक्तं भाष्ये–

'कामतो विधिरुद्रादिपददात्र्या स्वयं श्रिया ।
योनित्वेनात्मनो विष्णोस्तिष्ठन्तीत्युदितस्य च ॥
अन्तःसमुद्रगं विश्वप्रसूतेः कारणं तु यत् ।
सूत्रोपनिषदाद्युक्तं जन्माद्यस्येति लक्ष्यते ॥' इति ।

अथवा, शास्त्रयोनित्वात् इति सूत्रस्य वर्णकान्तरमपि स्वीकर्तुं शक्यते। ननु यदि जगत्कारणं शास्त्रैकसमधिगम्यं स्यात्, न तर्कगम्यम्, तर्हि युक्तिमणिग्रथितस्य ब्रह्ममीमांसाशास्त्रस्य वैयर्थ्यं स्यादिति न मन्तव्यम् । तर्कस्य जगत्कारणविषयकनिर्णयात्मकबोधोत्पादने आगमप्रमाणनिरपेक्षतया (स्वातन्त्र्येण) सामर्थ्याभावेऽपि, आगमस्य जगत्कारणविषयकबोधोत्पादनरूपे कार्ये प्रतिबन्धकभूततात्पर्यसंशयविपर्यय–निरासमुखेन साहाय्यमाचरति । तथाच, शास्त्रं योनिः = जगत्कारणविषयकनिर्णयस्य कारणं यस्मात् तर्कात् भवति स तर्कः शास्त्रयोनिः तस्मात् तर्कस्य शास्त्रयोनित्वात् ।

शास्त्रस्य जगत्कारणबोधकत्वे सहायत्वात् न स्वतन्त्रेण तर्केण जगत्कारणस्य निर्णयो भवतीति भावः । तथाचोक्तम्–

श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् ।
निश्चयात् साधयेदर्थं प्रमाणान्तरमेव च ॥

श्रुतिस्मृतिसहायं यत् प्रमाणान्तरमुत्तमम् ।
प्रमाणपदवीं गच्छेन्नात्र कार्या विचारणा ॥
पूर्वोत्तराविरोधेन कोऽत्रार्थोऽभिमतो भवेत् ।
इत्याद्यमूहनं तर्कः शुष्कतर्कं तु वर्जयेत् ॥ इति कौर्मे ॥

## ईक्षतेर्नाशब्दम् (१.१.५)

अशब्दमस्पर्शम् इत्यादिश्रुतिबलान्मायावादिरीत्या ब्रह्मण अशब्दत्वम्, अवाच्यत्वमिति यावत्, न वक्तव्यम् । कुतः? तथात्वे सात्विकश्रोतृणाम् ईक्षतेः प्रसङ्गात्, भगवद्विषये महाविस्मयहानिप्रसङ्गात् ।

भगवत अवाच्यत्वे लक्षणया चिन्मात्रबोधकत्वेन शक्तिवृत्त्या भगवद्गुण-माहात्म्यादिप्रतिपादकत्वाभावात् तद्बोधासम्भवेन सात्विकश्रोतृणामनुभव-प्रमाणसिद्धमहाविस्मयहानिप्रसङ्गः । नच स युज्यते ।

आश्चर्यवत् पश्यति कश्चिदेनमाश्चर्यवद् वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः श्रुणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥

इति गीतावचनेन विस्मयावहत्वेन भगवतः श्रवणं कश्चित्पदेनोक्तस्य सात्विकस्य भवतीति सिद्धत्वादिति भावः ।

अत्र, इशब्दो विस्मयवाची । दैर्घ्यं तु विस्मयाधिक्यं बोधयति । तथाचोक्तम्- 'आधिक्येऽधिकं न्यूनत्वे न्यूनमुच्यते' इति । तथाच, ईशब्दो महाविस्मयवाची । महतां वाक्यानि सोपस्कराणि भवन्ति । अत्र, ईक्षतेरित्यत्र प्रसङ्गादितिपदमुपस्कर्तव्यम् ।

अथवा, इशब्दो ज्ञानवाची । दैर्घ्यं तु तस्याधिक्यमाह । अधिकज्ञानं तु विष्णोर्गुणोत्कर्षज्ञानमेव । तस्यैव भगवन्महाप्रसादहेतुत्वात् । तथाचोक्तम्-

'न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात् ।
तत्प्रीणनात् मोक्षमाप्नोति सर्वस्ततो वेदास्तत्परा सर्व एव ॥' इत्युपनिषदि ।

तथाचेदमुक्तं भवति । भगवत अशब्दत्वे (अवाच्यत्वे) लक्षणया चिन्मात्रबोधकत्वेन

शस्त्रस्य शक्तिवृत्त्या गुणमाहात्म्याद्युत्कर्षप्रतिपादकत्वाभावेन तेन ईक्षतेः (प्रसङ्गः)। भगवन्महाप्रसादहेतुश्रेष्ठगुणोत्कर्षज्ञानक्षति(भङ्ग)-प्रसङ्गः ।

नच स इष्टः । तस्माद् भगवत अशब्दत्वम् अवाच्यत्वं न युक्तम् । निर्दिष्टोप-निषद्वचनोक्तदिशा महाशक्तिमहातात्पर्याभ्यां सर्वशास्त्राणां भगवद्गुणोत्कर्षपरत्व-मेवाङ्गीकर्तव्यमिति भावः ।

## गतिसामान्यात् (१.१.१०)

अनन्तत्वात् सर्वशाखानां ज्ञानं मन्दानां न सम्भवतीति, तत्रोपक्रमादिलिङ्गैर्नारायण एव गुणपूर्णत्वादिनैव तात्पर्यविषय इति निर्णेतुमशक्यत्वात्, उपलब्धशाखातिरिक्तशाखासु विष्णवन्यो वा विष्णुरेवान्यथा वा प्रतिपाद्यः स्यादिति शङ्कायां सूत्रकारः समाधत्ते - गतिसामान्यादिति ॥

सर्ववेदपुराणेतिहासादिभ्य उत्पन्नगतेः (ज्ञानस्य) धर्म्यंशे प्रकारांशे चैकरूपत्वात् साम्यम् । तस्मात् कासुचिच्छाखास्वन्यो वा विष्णुरेवान्यथा वा न प्रतिपाद्यत इति भावः । तथाचात्र प्रमाणम्-

'सर्वे वेदाः युक्तयः सुप्रमाणाः ब्राह्मं ज्ञानं परमं त्वेकमेव ।
प्रकाशयन्ते न विरोधः कुतश्चिद् वेदेषु सर्वेषु तथेतिहासे ॥' इति पैङ्गिश्रुतिः ।

अत्र रूढं ज्ञानशब्दं विहाय यौगिकं गतिपदं प्रयुञ्जता सूत्रकारेण संसाराद्गति-(सद्गति)हेतुभूतज्ञानस्यैव साम्यं तु, नतु दुर्गतिहेतुभूतमिथ्याज्ञानस्येति सूचितम् ।

आसुरस्वभावानां दुर्गतिहेतुभूतदुर्ज्ञानजननेऽपि वेदस्य तात्पर्यं वर्तते । तामसानां वेदतात्पर्यापरिज्ञानात् वेदादन्यान्यविपरीतज्ञानं जायते, नैकरूपम् । तथाचोक्तम्-

'बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्' इति ।

'यथा सुराणां सुज्ञाने तात्पर्यं सर्वदा श्रुतेः ।
तथा दुर्ज्ञानजनने तात्पर्यमासुरेषु च ॥' इति च ।

संसाराद्गतिहेतुत्वात् समीचीनज्ञानस्य मुख्यतः गतिशब्दवाच्यत्वमिति तु

'संसारस्थितिहेतुत्वात् स्थितं कर्म विदो विदुः ।
तस्मादुद्गतिहेतुत्वाज्ज्ञानं गतिरिहोच्यते ॥' इति वायुप्रोक्ते इति वचनेन सिद्धम् ।

गतिसामान्यात् इत्यत्र वर्णकान्तरमपि स्वीकर्तुमुचितम् । नच शाखाभेदेऽपि सर्ववेदोत्पन्नज्ञानेषु प्रकारांशे धर्म्यंशे साम्यवत्, अधिकारिभेदेऽपि तेषामुत्पन्नज्ञानेषु गुणादिरूपविषयाल्पत्वबहुत्वादिरूपतारतम्यं नास्ति, तत्रापि समसङ्ख्याकगुणादिविषयत्वरूपं साम्यमेवेति वाच्यम् । कुतः? गतिसामान्यात् । गतेः = ब्रह्मादियोग्यजीवानां शास्त्रादुत्पन्नाधिगतेः साम्यात् = समानत्वात्, तत्तद्योग्यतानुसारित्वादिति यावत् ।

तथाच ब्रह्मादियोग्यतातारतम्यात् तज्ज्ञानानामपि वेदोत्पन्नानां गुणादिविषयतारतम्यं वर्तत इति सिद्धम् । तथैव राजसस्वभावानां तद्योग्यतानुसारेण राजस्यवगतिः, तामसस्वभावानां तद्योग्यतानुसारेण तामस्यवगतिरिति चानेनोक्तं भवति ।

'यस्य यत्र यथा वृत्तिर्विहिता वर्तनं तथा ।
ज्ञानं वाऽपि समत्वं तद् विषमत्वमतोऽन्यथा ॥'

इति विष्णुपुराणवचनानुसारेण यस्य जीवस्य यादृशं ज्ञानं योग्यतानुसारेण भगवता क्लृप्तं तादृशज्ञानमेव तस्य सममिति सिद्ध्यति ।

किञ्च उपसंहारोऽर्थाभेदाद् विधिशेषवत् समाने इति सूत्रस्थसमानशब्दस्य भगवति योग्या इत्यर्थः टीकाकृता स्वीकृतः । प्रकृतयोग्यत्वं च जीवयोग्यतानुसारित्वमेव ।

नच सूत्रत्वात् साम्यात् इत्यल्पाक्षरशब्दापेक्षया सामान्यात् इत्यधिकाक्षरपदप्रयोगो न युज्यते, अल्पाक्षरमसन्दिग्धम् इत्युक्तलक्षणविघातकत्वादिति वाच्यम् । अस्त्यत्र तत्पदेन सूचितं प्रमेयरहस्यम् । सामान्यमिति पदस्य मानेन सहितं समानम्, समानस्य भावः सामान्यमिति निर्वचनं स्वीकर्तव्यम् । अत्र मानशब्दस्य बलं मर्यादा चेत्यर्थद्वयं स्वीकर्तव्यम् । तच्च प्रामाणिकम्–

'मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यते ।
उत्पादनं च सङ्ख्यानं बलं च क्वचिदुच्यते ॥' इत्यभिधानात् ।

अत्र बलं तु तात्पर्यनिर्णायकोपक्रमादिलिङ्गबलं भक्तिबलं चेति बोध्यम् ।

अधिगतेर्मानशब्दितोक्तबलद्वयसाहित्यं तु (मानेन सहितं समानम्, समानस्य भावः

सामान्यम्) जन्यजनकभावसम्बन्धरूपं ग्राह्यम् । बलाबलत्वेन विमृष्टोपक्रमादिलिङ्गबलेन हरिगुरुभक्तिबलेन च सर्वशास्त्रात् एकरूपाधिगतिर्भवति नान्यथेति भावः । तथाचोक्तम्–

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥' इति बृहत्संहितायाम् ।

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैतेऽकथिताः ह्यर्थाः प्रकाशन्ते महात्मनः ॥' इति चोपनिषदि ।

भक्तिबलेन युक्तिबलेन च सर्वशास्त्रादेकरूपब्रह्माधिगतेरुत्पत्तावपि न साकल्येनोत्पद्यते किन्तु मर्यादिताधिगतिरेव (परिमिताधिगतिरेव) उत्पद्यते । तदप्युक्तं सामान्यशब्देन । उक्तरीत्या मानेन मर्यादया परिच्छेदेनेति यावत्, सहितं समानम् । समानस्य भावः सामान्यम् ।

ब्रह्मणोऽपि सर्वशास्त्रात् मर्यादिताधिगतिरेव (परिच्छिन्नज्ञानमेव) भवति । नतु कृत्स्नगुणानाम–धिगतिः । वेदेष्वपि विशिष्यानन्तगुणानामनुक्तेरिति भावः । तथाचोक्तम्–
महिम्नः सर्वशोऽनुक्तेर्वेदाश्चासम–दर्शनाः इति भागवततात्पर्योदाहृतप्रमाणवचने।
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह इति च ।

एवञ्च, एतत्प्रमेयविशेषसूचनार्थमेव साम्यात् इत्यल्पाक्षरपदं विहाय सामान्यात् इत्यधिकाक्षरपदमुपात्तमिति वेदितव्यम् ।

तथाच गतिसामान्यात् इति सूत्रस्येयं समग्रयोजना । गतिसामान्यात् = वेदोत्पन्नब्रह्माधिगतेः सामान्यात् = मानसहितत्वात्, मानशब्दितोपक्रमादियुक्तिबल–भक्तिबलरूपकारणोपेतत्वादिति यावत्। तथाच, मानशब्दितोपक्रमादियुक्तिबलाद् भक्तिबलाच्च सर्वशास्त्रेभ्यः प्रकारांशे धर्म्यंशे च समाना ब्रह्मगतिः (ब्रह्मज्ञानं) भवति नान्यथा । एवञ्च, उक्तरीत्या गतिसामान्यादेव न कासुचिच्छाखासु विष्णवन्यो वा विष्णुरेवान्यथा वा प्रतिपाद्यत इति सिद्ध्यति ।

नचैवं ब्रह्माद्युत्तमाधिकारिणां भक्त्यादिबलात् सर्वशास्त्रेभ्यः निरवधिकसर्वगुणादि–विषयकज्ञानसम्भवात् ब्रह्मणोऽज्ञेयत्वभङ्गप्रसङ्ग इति वाच्यम् । कुतः? गति–सामान्यात् । उक्ताधिकारिणा–मपि सर्वशास्त्रोत्पन्नाधिगतेः सामान्यात् मानेन मर्यादया

(परिच्छेदेन) सहितत्वात्, परिच्छिन्नत्वादिति यावत्। तथाच, ब्रह्मादीनां न निरवधिकसर्वगुण-विषयकाधिगत्या ब्रह्मणोऽज्ञेयत्वभङ्गप्रसङ्गः। वेदेष्वप्यनन्त-भगवद्गुणानां विशिष्या-प्रतिपादनात् ब्रह्मादीनामपि न निरवधिकसर्वगुणादिविषयकाधिगतिर्भवतीति भावः। तथाचोक्तं भागवततात्पर्योदाहृतप्रमाणे-'महिम्नः सर्वशोऽनुक्तेर्वेदाश्चासमदर्शना' इति। तस्माद् ब्रह्मणोऽज्ञेयत्वमबाधितम्।

## अदृश्यत्वादिगुणको धर्मोक्तेः (१.२.२१)

यत् तदद्रेश्यमग्राह्यमवर्णमगोत्रमचक्षुःश्रोत्रं तदपाणिपादम्। नित्यं विभुं सर्वगतं सुसूक्ष्मम् इत्यत्रोक्तं परे तु दृश्यत्वादिधर्मरहितमखण्डं निर्गुण ब्रह्मेति वदन्ति। तन्न पेशलम्। सूत्रकारेणादृश्यत्वावर्णत्वादीनां गुणत्वेन कीर्तनात्। अदृश्यत्वं कथं गुणः? इति न शङ्क्यम्। एवं द्रष्टरि दृश्यत्वमारोपितमबुद्धिभिः इति भागवते प्रयुक्तस्य दृश्यत्वपदस्य जडरूपत्वमित्यर्थः स्वीकृतः।

एवं च, अदृश्यत्वमित्यस्य बन्धकजडरूपाभाव इत्यर्थः। स च गुण एव। दोषाभावस्य गुणत्वात्। यथा लोके रोगाभावः (आरोग्यम्) गुण इति प्रसिद्धः। क्रोधाभावो गर्वाभावश्च तथा प्रसिद्धौ।

एवमेव बन्धकप्राकृतदेहसम्बन्धरूपदोषाभावः (अदृश्यत्वम्) कथं गुणो न भवेत्? वात्सल्यकृपासौन्दर्यादिगुणाभावः कथं दोषो न भवेत्? एवञ्चाखण्डत्वं ब्रह्मणो दुर्घटमिति स्थितम्। तस्माद्वेदस्य वेदव्यासस्य वा परोक्तं निर्गुणं ब्रह्म (निर्धर्मकं ब्रह्म) न सम्मतमिति सिद्धम्।

पूर्वमदृश्यत्वमुक्त्वा, उत्तरत्र परिपश्यन्ति धीराः इति दृश्यत्वस्य प्रतिपादनादविरोधाय अदृश्यत्वं जडदेहसम्बन्धाभावरूपं गुणात्मकं गुणानन्त्यद्योतकं साकल्येन दृश्यत्वाभावरूपं वा स्वीकर्तव्यम्।

मायावादिभिः श्रुत्युक्तादृश्यत्वादेरेवंविधगुणरूपतयाऽज्ञातत्वादेव सूत्रकारः 'अदृश्यत्वादिगुणको धर्मोक्तेः' इत्यत्राज्ञातत्वार्थे कप्रत्ययमाह।

किञ्च, यदि श्रुतावदृश्यत्वेनोक्तमखण्डं ब्रह्मेति सूत्रकारस्याभिमतं स्यात् तर्हि तत्र 'धर्मोक्तेः' इति धर्मवचनं कथमसङ्गतं न भवेत्?

किञ्च, विवक्षितगुणोपपत्तेश्च इत्यत्राश्रुतत्वादिगुणानां विवक्षितत्वकथनेन शास्त्रस्य तत्र तात्पर्यं तद्गुणानामुपपत्तिं च सूत्रकार आह । गुणानामविद्याकल्पितत्वे कथं तत्र तात्पर्यं स्यात्? कथं वा सुघटत्वं स्यात्? ब्रह्मणि सर्वधर्माणां सुघटत्वं च सूत्रकारेण कण्ठरवेण सर्वधर्मोपपत्तेश्च इत्यत्राप्युक्तं किल । एवं पदेपदे धर्मोपपत्तिं वदन् सूत्रकारः कथं तेषामविद्याकल्पितत्वं मनुते? मायावादिमते मिथ्याभूताविद्याया दुर्घटत्वं भुषणत्वेनाङ्गीकृतं किल । एवं सति, अविद्याकल्पितगुणानां कथं सुघटत्वं स्यात्? एवं च सुघटत्वं वदतः सूत्रकारस्य सगुण एव तात्पर्यम्, नाखण्डब्रह्मणीति सिद्धम् ।

नच स्वातन्त्र्येण व्यावहारिकसर्वधर्माणामेवोपपत्तिः सूत्रकारेणोक्ता, नतु पारमार्थिकत्वेन तदुपपत्तिरिति शङ्क्यम् । सूत्रकारेणोपासात्रैविध्यवत् सत्तात्रैविध्यस्य कुत्रापि प्रतिपादनस्याभावात् न तस्य सत्तात्रैविध्यमभिमतं येन व्यावहारिकत्वेनोपपत्तिः पारमार्थिकत्वेनानुपपत्तिरिति स्यात् ।

किञ्च, महद्गुणत्वाद् यमनन्तमाहुः इति सूत्रकारेण भागवतवचने महागुणवत्त्व-मेवानन्तत्वं तस्य लक्षणम्, नतु मायावाद्युक्तं वस्तुतः परिच्छेदराहित्यात्मकं तदिति स्फुटं प्रतिपादनात् तद्रूपब्रह्मण एव अतोऽनन्तेन तथाहि लिङ्गम् इति सूत्रे प्रस्तावाच्च कथं ब्रह्मसूत्रस्याखण्डब्रह्मपरत्वं घटते?

किञ्च धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः इत्यादिसूत्रेषु गुणमाहात्म्यादिप्रतिपादनेन भागवतादिपुराणेषु सगुणस्यैव प्राचुर्येण वर्णनेन च सगुणे गृहीतसङ्गतिकानां तत्रैव सुदृढं लग्नमनस्कानामद्वैतसिद्धिकाराणां मधुसूदनसरस्वतीसूरीणामपि सगुणात् कृष्णादन्यत्र (अखण्डे ब्रह्मणि) मनो न सज्जते यदा तदा किमु वक्तव्यमन्येषां तत्र मनो न सज्जत इति ।

नच मधुसूदनसरस्वतीसूरीणां सगुणकृष्णाख्यपरतत्त्वादन्यत्र मनो न रमत इति कथमुच्यत इति वाच्यम् । तद्गीतकृष्णोद्गानादेव तत् सिद्धम् । तथा तेषां कृष्णोद्गानम्;–

'वंशीविभूषितकरान्नवनीरदाभात् पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात् कृष्णात् परं किमपि तत्त्वमहं न जाने ॥' इति ।

तस्मात् सूरीणामपि निर्गुणोपासनाया अशक्यत्वात् न निर्गुणब्रह्मणि सूत्रकारस्य तात्पर्यमिति सिद्धम् ।

किञ्च, अनावृत्तिः शब्दादनावृत्तिः शब्दात् इत्यन्तिमसूत्रे पुनरावृत्तिवर्जितममृतत्वं (मुक्तिः) उक्तम् । तच्च सगुणोपासकानामेवेति मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते इति भगवद्गीतावचनेन सिद्धम् । एवं च सगुणोपासनाफलकथनात् सगुणोपासनायां सगुणे च सूत्रस्य तात्पर्यमिति सिद्धम् ।

किञ्च, सर्वकामानाप्त्वाऽमृतः समभवत् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता इत्यादौ सर्वकामभोगविशिष्टमुक्तेः कथनात् तत्साधनविद्या कथमखण्डब्रह्मगोचरा स्यात्? नह्यखण्डब्रह्मविद्यया विशिष्टमुक्तिर्युक्ता । भोगमात्रसाम्यलिङ्गात् इति सूत्रे भोगविशिष्टमुक्तेः प्रस्तावात् तत्साधनब्रह्मविद्यायां ब्रह्मणि वा सूत्रस्य तात्पर्यम्, नत्वखण्डब्रह्मणीति स्थितम् ।

एतेन कस्यचित् पादस्य सगुणसमन्वयपरत्वं कस्यचित् पादस्य निर्गुणसमन्वयपरत्वमिति पादविभागः प्रयुक्तः । सूत्रस्याखण्डपरत्वस्य निरासात् ।

बन्धाध्यस्तत्वं (बन्धमिथ्यात्वं) न सूत्रार्थः

आद्यसूत्रे अतः इत्यनेन बन्धस्य ब्रह्मज्ञाननिवृत्तेः कथनात् ज्ञानादज्ञानस्यैव निवर्तनमिति स्थितेः, अज्ञानकल्पितत्वेनैव बन्धस्य ज्ञानेन निवृत्तिस्त्वुपपद्यते, अज्ञाने ज्ञानेन निवृत्ते सति तदुपादानकबन्धस्य स्वत एव निवृत्तेः सम्भवादित्यज्ञानकल्पितत्वाद् बन्धो ब्रह्मण्यध्यस्तः (मिथ्या) इति केचन बन्धाध्यस्तत्वमुक्तपदस्यार्थिकार्थ इत्यभि- प्रयन्ति । तन्न समञ्जसम् । सुखदुःखादिबन्धस्य (जगतः) सत्यत्वेन अप्शब्दित- देवताभिर्दर्शनात् तद्विरोधेन कथं प्रथमसूत्रस्थस्यातःशब्दस्य बन्धाध्यस्तत्व(मिथ्यात्व)रूप आर्थिकार्थः स्वीक्रियते? तथाचोक्तं ब्रह्मवैवर्ते–

'ब्रह्मसूत्रानुसारेण वेदाद्यं सर्वमेव हि ।
योज्यं न ब्रह्मसूत्राणि दृश्यमानार्थतोऽन्यथा ॥'

सत्यविश्वयथार्थदर्शनम् अप्–शब्दितदेवतानामस्तीति तु विश्वं सत्यं मघवाना युवोरिदापश्च न प्रमिनन्ति व्रतं वा इति वेदवचनेन सिद्धम् ।

किञ्च, 'स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति । नास्याब्रह्मवित् कुले भवति' इत्यत्र ब्रह्मज्ञानस्य फलत्वेन तज्ज्ञानिकुले ज्ञानिनामेवोत्पत्तिः, नत्वज्ञानिनां जन्मेत्युक्तम् । त्वन्मते ब्रह्मभावापत्तिरूपपरममुक्तेः साधननिर्विकल्पकचरमवृत्त्या विश्वस्यैव

बाधे सति तदन्तर्गतस्याज्ञानदशायां तत्कल्पितस्य कुलस्यापि बाधात् तत्कुलेऽज्ञानिनां जन्माभावो ज्ञानिनामेव जन्मेति फलकथनं कथमसङ्गतं न भवेत्?

तस्माद् बन्धस्याध्यस्तत्वं तस्य चरमवृत्तिबाध्यत्वं दुर्घटमिति न तत्सूत्रार्थत्वेन स्वीकर्तुमुचितमिति स्थितम्।

## सूत्रं नाभेदपरम्

ब्रह्मसूत्रस्यार्थाः सूत्रकारेणैव भविष्यत्पर्वणि प्रदर्शिताः । तस्मात् तदनुसारेणैव सूत्राणि व्याख्यातव्यानि । भविष्यत्पर्वणि तु–

'सर्वदोषविहीनत्वं गुणैः सर्वैरुदीर्णता ।
अभेदः सर्वरूपेषु जीवभेदः सदैव हि ॥
विष्णोरुक्तानि सूत्रेषु सर्ववेदेड्यता तथा ।
तारतम्यं च मुक्तानां विमुक्तिर्विद्यया तथा ॥
तस्मादेतद्विरुद्धं यन्मोहार्थं तदुदाहृतम् ॥ इति ।

एवं च सूत्रकारोक्तजीवब्रह्मभेदविरुद्धतया तदभेदः सूत्रार्थतया न स्वीकारार्हः ।

किञ्च भेदव्यपदेशाभ्यासाच्च सूत्रकारस्य भेदे तात्पर्यमिति सिद्ध्यति । अभ्यासो हि तात्पर्यलिङ्गम् । भेदकधर्मकथनेन युक्तिरूपं तात्पर्यलिङ्गं च प्रदर्शितम् । तथाच सूत्राणि– नेतरोऽनुपपत्तेः भेदव्यपदेशाच्च भेदव्यपदेशाच्चान्यः अनुपपत्तेस्तु न शारीरः शारीरश्चोभयेऽपि हि भेदेनैनमधीयते भेदव्यपदेशात् स्थित्यदनाभ्यां च सुषुप्त्युत्क्रान्त्योर्भेदेन पृथगुपदेशात् इत्यादौ पदेपदे सयुक्तिकभेदव्यपदेशात् सूत्रकारस्य भेदे तात्पर्यं नास्तीति कथमुच्यते?

यदि भेदो मिथ्या, तर्हि पदेपदे भेदव्यपदेशेन तद्विषयकदृढसंस्कारस्य मनस्युत्पादनं कथं सूत्रकारस्य युज्यते? पूर्वोक्तरीत्या भेदविषकसंस्कारे दृढीकृते 'सति द्वित्रिसूत्रेष्वभेदव्यपदेशमात्रेण कथं तत्संस्कारस्योन्मूलनं स्यात्?

लक्षणोक्तिस्तु लक्ष्यब्रह्मणः सजातीयविजातीयवस्तुभ्यो भेदेन दर्शनार्थम् । ब्रह्मणस्तल्लक्षणं तु द्वितीयसूत्र उक्तम् । अन्यथा तल्लक्षणस्य भेदकधर्मस्य च व्यपदेशो व्यर्थः स्यात् ।

किञ्च, उपक्रमादिन्यायैस्तात्पर्यविषयत्वेन भ्रान्तिप्राप्तजीवमुख्यप्राणादिभिन्नत्वेन ब्रह्मणो ज्ञानस्यावश्यम्भावात् कथं सूत्राणां भेदे तात्पर्यं नास्तीत्युच्यते ।

## प्रकृतप्रकाशनम्

प्रकृते ब्रह्मसूत्रार्थमणिमञ्जरीव्याख्यासमलङ्कृतं ब्रह्मसूत्रभाष्यं जिज्ञासूनां सूत्रं प्रविविक्षूणां परमोपकारकमिति हृदिकृत्यास्मद्गुरुविद्यामान्यजन्मशतमानोत्सवाङ्गतयाऽस्माकं षष्टिपूर्तिमहोत्सवाङ्गतया च श्रीऐतरेयशोधप्रकाशनपीठम्, भागवताश्रमः, भण्डारकेरि मठः इति संस्थानमुखेन प्रकटीकृतम् ।

एकं श्रीमठे मुद्रितं प्राचीनपुस्तकं लब्धम् । इदानीं ग्रन्थस्यास्य दौर्लभ्यात् जिज्ञासूनामध्ययनसौकर्याय पुनः प्रकाशितम् । महामहोपाध्यायेन श्रीव्याकरणसुब्रायाचार्येण सूत्रार्थमणिमञ्जरी प्रणीता । अयं पण्डितमहोदयः श्रीकृष्णापुरमठाधीशानां परमपूज्यानां विष्णुपादं गतानां श्रीविद्याधीशतीर्थश्रीपादानां साक्षादन्तेवासी । व्याकरणशास्त्रे तलस्पर्शिवैदुष्यविभूषित इति श्रूयते । अस्य च तनूजः सेतुमाधवाचार्योऽपि महामहोपाध्याय इत्युपाधिना विभूषितः । अनेन च व्यासपाणिनिभावनिर्णयः 'तत्त्वकौस्तुभकुलिशः' इति द्वौ ग्रन्थौ प्रणीतौ । तस्य जामाता श्रीराममूर्तिशर्मा । सोऽपि तिरुपतिसंस्कृत-पाठशालायां व्याकरणप्राध्यापक आसीत् । तस्य पुत्रः श्रीनिवासमूर्तिशुभनामधेयोऽ-स्मत्संस्थानस्य पुनः-प्रकाशनाधिकारमुदारमनसाऽङ्गीचकार । तस्य सौजन्यं वयमभिनन्दामः, हरिगुर्वनुग्रहं च प्रार्थयामहे ।

एतस्य ग्रन्थस्य पुनःप्रकाशनकार्ये ग्रन्थसम्पादन-संशोधन-मुद्रणदोषशोधनादिना, चन्द्रिकादौ प्रदर्शितनानामतव्याख्याविमर्शगर्भितोपयुक्तोपोद्घातप्रबन्धरचनया च महापरिश्रमविभूषितं पूर्णप्रज्ञसंशोधन-मन्दिरस्य निर्देशकं डा. ए. वि. नागसम्पिगे-महोदयं प्रहृष्टान्तःकरणेनाभिनन्दामः । प्रकाशनार्थं धृतपरिश्रमान् पूर्णप्रज्ञसंशोधनमन्दिरस्य सेवाविभूषितान् सर्वान् सदस्यांश्चाभिनन्दामः । एतत्प्रकाशनकार्ये धृतपरिश्रममस्मच्छिष्यं श्रीनिधिवासिष्ठं चाभिनन्दामः । अन्येनास्मच्छिष्येन श्री ए.जि. नागेन्द्रशुभनामधेयेन तदभिमानिवर्गेण चार्थिकसाहाय्यं च समर्पितम् । तं तदभिमानिवर्गं चाभिनन्द्य सर्वान् भगवान् मध्वान्तर्गतो वेदव्यासः कृपाकटाक्षेणानुगृह्णात्वित्याशास्महे ।

**श्रीश्रीविद्येशतीर्थश्रीपादाः**

**श्रीभण्डारकेरिमठः, उडपि**

# किञ्चिन्निवेदनम्

श्रुत्यर्थनिर्णायकन्यायग्रथनात्मकं हि ब्रह्ममीमांसाशास्त्रम् । सर्वाण्यपि सूत्राणि युक्तिरूपाणि भवन्तीति निश्चप्रचम् । अनुमानमुद्रया इमानि विज्ञातुं शक्यन्ते । यथा- 'आनन्दमयः (आनन्दमयशब्दवाच्यः) विष्णुः अभ्यासात् (ब्रह्मशब्दाभ्यासात्)' इति । इमानि सूत्राणि नारायणावतारभूतेन भगवता बादरायणेन सर्वज्ञसूरिणा प्रणीतानीत्यत्र न विवदन्ते केऽपि विदः । श्रीमदानन्दतीर्थभगवत्पादाचार्यैः सूत्रवाङ्मयमधिकृत्य चत्वारः प्रबन्धाः प्रणीताः । तत्रान्यतमं ब्रह्म-सूत्रभाष्यम् । श्रुति-स्मृतिवचनोल्लेखनपुरस्सरं सूत्रार्थवर्णनमिह कृतमिति ग्रन्थस्यास्य वैशिष्ट्यम् । नात्र परमतप्रक्रियानिरसनस्य विस्तरः । एकेन द्वाभ्यां वा वचनाभ्यां परमतनिरसनमिह विधीयते । अनुभाष्यं द्वितीयं भगवत्पादप्रणीतम् । एतदेवानुव्याख्यानमित्यपि गीयते । भाष्यमनुसृत्य प्रवृत्तः भगवत्पादीयग्रन्थान्तरगतयुक्तिसमुद्धरणात्मकः परकीयव्याख्याननिरसनचतुरश्चायं प्रबन्धः माध्ववेदान्तेऽसाधारणं महत्त्वं भजते । ब्रह्मसूत्रानुव्याख्याने तु सर्वेषां मताचार्याणां प्रायः प्रतिसूत्रं विमर्शः विहितः । भगवत्पादाचार्यौपसदा त्रिविक्रमपण्डिताचार्याः भाष्यस्य निरतिशय-माहात्म्यमेवमुवर्णयन् 'सहस्रार्थस्य भाष्यस्य' (तत्त्वप्रदीपः) इति । आचार्यपादचरितनिबन्धार नारायणपण्डिताचार्याः भाष्यस्यास्य महिमानमेवं प्रतिपादयामासुः-

'बालसङ्घमपि बोधयद् भृशं दुर्निरूपवचनं च पण्डितैः ।
अप्रमेयहृदयं प्रसादवत् सौम्यकान्ति च विपक्षभीषणम् ॥
अस्तदूषणमवन्ध्यभाषणं लक्षितं सकललक्षणैः समम् ।
माननीयमपि नाकिनायकैः रूपमन्यदिव धन्यमात्मनः ॥' (म.वि. ९.१०-११) इति ।

'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुकारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥'

इति भाष्यलक्षणं चात्रान्वर्थकमनुभूयते । भाष्यस्यास्य हार्दमाविष्कुवन्ती श्रीमज्जयतीर्थपूज्यचरण-प्रणीता प्रत्यधिकरणं पूर्वपक्ष-सिद्धान्तप्रज्ञापनचतुरा तत्त्वप्रकाशिका विराजतेतमाम् । अस्याः तत्त्वप्रकाशिकायाः समुद्र इव परमगभीराया आशयविशेषं प्रकाशयन्ती श्रीमद्व्यासतीर्थ-पूज्यचरणविरचिता चन्द्रिकाऽपि स्वमतानुगुण्येन सूत्रार्थसमर्थनदक्षा परकीयसूत्रार्थासामञ्जस्य-

प्रदर्शनदीक्षा च विद्वज्जनैकसुलभा विराजते । ब्रह्मसूत्रभाष्यस्य महत्त्वम् अपूर्वत्वं च न्यायसुधा-चन्द्रिकादिग्रन्थेषु तत्रतत्र सुष्ठूपवर्णितमस्ति । **माध्वग्रन्थाध्ययनविधुराणां विदुषाम् अत्रत्य-विचारप्रणालीं दिङ्मात्रमेव प्रदर्शयितुं कानिचन सूत्राणि यथामति विवृणोमि ।**

## जन्माधिकरणम्

तत्त्वप्रकाशिकोक्तरीत्याऽयमत्र पूर्वपक्षसङ्क्षेपः । 'अथातो ब्रह्मजिज्ञासा' इति पूर्वसूत्रे भाष्यकारेण 'ब्रह्मशब्दश्च विष्णावेव' इति ब्रह्मशब्दः विष्णुवाचीति प्रगृह्य ब्रह्मजिज्ञासा नाम जीवातिरिक्त-विष्णुजिज्ञासैवेति प्रतिपादितम् । बृह-जाति-जीव-कमलासनशब्दराशिष्विति अनुशासनाद् ब्रह्मशब्दः जीवमपि प्रतिपादयतीति निर्विवादम् । यद्यपि ब्रह्मशब्दस्य विष्णुप्रतिपादकत्वमपि विद्यत एवाथापि 'योगाद् रूढिर्बलीयसी' इति न्यायेन रूढ्या जीवपरत्वमप्रतिहतम् । तथाच रूढ्या जीव एवात्र ब्रह्मशब्दार्थत्वेन ग्राह्यः । एवं च ब्रह्मजिज्ञासा नाम जीवजिज्ञासा भवितुमर्हति, इति ।

सिद्धान्तसङ्क्षेपः- 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभि-संविशन्ति । तद्विजिज्ञासस्व तद् ब्रह्म ।' इति भगवती श्रुतिः सृष्टि-स्थित्यादि-कारणीभूते वस्तुनि ब्रह्मशब्दमनुशास्ति । अनैवंगुणकश्च जीव इति न स ब्रह्मशब्दार्थः । उक्तं स्मृतौ- 'उत्पत्तिस्थिति-संहाराः नियतिर्ज्ञानमावृतिः । बन्धमोक्षौ च पुरुषात् यस्मात् स हरिरेकराट् ॥' इति स्कान्दे । अनेन पुराणवचनेन सृष्ट्याद्यष्टकारणमेव ब्रह्मेति विज्ञायते । अनेन च रूढ्या जीवः ब्रह्मशब्दार्थ इति प्रत्युक्तम् । विद्वदविद्वद्रूढ्योः विद्वद्रूढेर्बलीयस्त्वात्, विद्वद्रूढेश्च विष्णुविषयकत्वात् विष्णुरेव ब्रह्मशब्दार्थ इति निश्चीयते ।

### सुधा-चन्द्रिकारीत्या वाक्यार्थसङ्ग्रहः

प्राक्तनाधिकरणे, योगेन ब्रह्मशब्दस्य गुणपूर्णत्वरूपार्थमभिधाय तस्य च जीवेऽभावेन, न जीवस्य जिज्ञास्यतेत्युक्तम् । तत्र यावज्जीवभेदकं नोच्यते, तावत् श्रुतौ ब्रह्मशब्दस्य रूढित्यागे बाधकाभावेन ब्रह्मपदयोगासिद्ध्या गुणपूर्त्यसिद्धेर्न जिज्ञासा युक्तेति पूर्वपक्षसम्भवात् आक्षेपिकी सङ्गतिः । यद्यपि ब्रह्मपदादेव गुणपूर्णत्वं प्रसिद्धम् । तथाऽपि विश्वकर्तृत्वरूपधर्मेण समस्त-वस्तुव्यावृत्ततयाऽवगते एव ब्रह्मणि गुणपूर्णत्वं प्रसिद्ध्यतीति तदुपपादनाय जगज्जन्मादिकारणत्वोक्तिः ।

सुधायां तु, आद्यसूत्रे साधनादिसहितं ब्रह्म विचार्यमित्युक्तम् । तत्र साधनफलयोः ब्रह्मज्ञान-साधनं ब्रह्मज्ञानफलमिति ब्रह्मोपहितत्वेन तज्ज्ञानाधीनज्ञानत्वाद् ब्रह्मणश्च साधनादिज्ञानानधीन-ज्ञानत्वाद् अभ्यर्हितत्वाच्चाऽदौ तज्जिज्ञासैव प्राप्ता । जिज्ञासा च लक्षणप्रमाणाभ्यां भवितुमर्हति । तत्रापि लक्षणविशिष्टे प्रमाणाकाङ्क्षा समुदेतीति लक्षणनिरूपणस्य प्राथम्यमिति सङ्गतिरुक्ता ।

**योगाद्रूढेर्बलीयस्त्वाद् जीव एव ब्रह्मशब्दार्थ इति पूर्वपक्षः**

१. 'बृह-जाति-जीव-कमलासन-शब्दराशिषु' इत्यत्र ब्रह्मशब्दस्य जीवे रूढत्वाद् अवयवार्थ-सापेक्षयोगाद् रूढेरेव बलीयस्त्वस्य रथकाराधिकरणन्यायप्रसिद्धत्वेन जीव एव ब्रह्मशब्दः रूढः। यद्यप्यत्र योगवृत्त्यैव ब्रह्मशब्दः जीववाचीति वक्तुं शक्यते । तथापि निखिलगुणपूर्णत्वमेव ब्रह्मशब्दप्रवृत्तिनिमित्तमित्युपेत्य तस्य जीवेऽभावात् रूढिरस्तीत्युक्तम् । ततश्च ब्रह्मजिज्ञासा नाम जीवजिज्ञासैव भवति । तस्य चाहंधीसिद्धत्वान्न जिज्ञास्यता इति पूर्वपक्षः ।

(रथकाराधिकरणन्यायाभिप्रायश्चेत्थम्- षष्ठे प्रथमपादे उपान्त्याधिकरणमिदम् । 'वचनाद् रथकारस्याऽधानमस्य सर्वशेषत्वात् ४४, न्यायो वा कर्मसंयोगात् शूद्रस्य प्रतिषिद्धत्वात् ४५, अकर्मत्वात्तु नैवं स्यात् ४६, आनर्थक्यं च संयोगात् ४७, गुणार्थेनेति चेत् ४८, उक्तमनिमित्तत्वम् ४९, सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात्प्रतीयेरन् ५०, इति सप्तसूत्राणि । ''वसन्ते ब्राह्मणोऽग्नीनादधीत । ग्रीष्मे राजन्यः । शरदि वैश्यः ।' इति विधाय श्रुतं 'वर्षासु रथकार आदधीत' इति वाक्यं किं ब्राह्मणादीनामेव 'रथं करोति' इति व्युत्पत्त्या रथकरणे निमित्ते वर्षाकालविध्यर्थमुत रूढ्याऽवान्तरवर्णस्येति सन्देहे, पूर्वत्र त्र्यार्षेयाणामेव वरणविधिरिव त्रैवर्णिकानामेव विद्वत्त्वात् कालमात्रविधाने च लाघवात्तेषामेव काल-विधिः । नाऽविदुषोऽवान्तरवर्णस्य कालविशिष्टाधानविधिः । न चौत्पत्तिकवसन्तादिकालविरोधात्कथं तेषामेव कालान्तरविधिरिति वाच्यम् । नित्यान्नैमित्तिकस्य बलवत्त्वादिति प्राप्ते, सिद्धान्तः- योगाद् रूढेर्बलवत्त्वात् रूढ्याऽवान्तरजातियुक्तस्य रथकारसञ्ज्ञकस्येदमाधानं वर्षाकालविशिष्टं विधीयते । तस्याविद्वत्त्वेऽपि वचनबलात्तावन्मात्रोपयुक्तज्ञानसम्पादनसम्भवात् इति । तदाह सूत्रे- 'वचनात् रथकारस्यैवाधानम् ।' अस्याधानस्य सर्वशेषत्वात् सर्वेषां त्रैवर्णिकानामाधानमुक्त्वा अनन्तरमुक्ततया परिशेषादत्रैवर्णिकस्य रथकारस्येदमाधानमिति । रथकारस्तु करण्यां माहिष्याज्जातः कथ्यते । शूद्रायां वैश्यादुत्पन्ना करणी । वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः ।'' (भाट्टसङ्ग्रहः, पृ. २९०)

२. नच 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिः सृष्ट्यादिकारणीभूते वस्तुनि ब्रह्मशब्दं प्रयुङ्क्ते । न जीवस्तादृश इति कथं तत्र ब्रह्मशब्दस्य प्रवृत्तिः ? इति वाच्यम् । जीवस्यापि

अदृष्टद्वारा नैकविधपदार्थस्रष्टृत्वस्यानुभवसिद्धत्वात् । सर्वमचेतनं चेतनोपभोग्यमिति जीवादृष्ट-निमित्तत्वाद् अदृष्टद्वारा जीवस्य विश्वकर्तृत्वं सम्भवति ।

३. 'इमानि' इति प्रसिद्धानि जीवकर्तृककार्यजातान्येव श्रुतावुक्तानि । अत एव 'आत्मा वाऽरे द्रष्टव्यः' इत्यादौ जिज्ञासाविधायकवाक्ये जीवे प्रसिद्धात्मपदप्रयोगः । एवञ्च जीव एवेदं ब्रह्म । तस्य चाहंधीसिद्धत्वान्न जिज्ञास्यता ।

४. श्रुतिप्रतिपाद्यं ब्रह्म तु निर्गुणं निर्विकारं च । नहि निर्विकारस्य ब्रह्मणः निमित्तत्वमुपादानत्वं वा सम्भावयितुं शक्यते । अतः ब्रह्मपक्ष एव बाधकम् ।

सङ्ग्रहस्तु चन्द्रिकाप्रकाशे-

**'निर्बाधरूढेर्जीवोऽत्र ब्रह्म विष्णुर्न यौगिकः ।**
**योगाद्रूढेर्बलीयस्त्वं रथकारनये स्थितम् ॥'** (ता.चं.प्र., पृ.२४६) इति ।

**अथ सिद्धान्तसङ्क्षेपः**

१. 'यतो वा' इत्यादि पूर्ववाक्योक्तजन्मादिकारणत्वस्य **'य उ त्रिधातु पृथिवीमुत द्याम्'**, **'यो नः पिता जनिता'** इत्यादिना विष्ण्वेकनिष्ठत्वात् । जगत्कर्तरि ब्रह्मशब्दानुशासनात् विष्णुरेवात्र प्रतिपाद्य इति निश्चेतुं शक्यते ।

२. अदृष्टद्वारा जीवकारणत्वे साक्षाज्जन्य एव प्रयुज्यमानजातादिपदाऽस्वारस्यात् ।

३. **अभिसंविशन्ति** इत्यत्र अभि= स्वेच्छया, संविशन्ति= सम्यग् विशन्ति इत्यनेनोक्तमुक्त-प्राप्यत्वस्यानुपपत्तेः । नहि मुक्तप्राप्यत्वं कदाचिज्जीवस्य सम्भवति ।

४. 'इमानि' इति सर्वनाम्नश्च सङ्कोचकाभावात् । 'इमानि' इति श्रौतं हि पदं सकलजीवजडात्मकं विश्वमाह । नात्र सङ्कोचे किमपि बाधकं प्रतीमः । तस्मादसङ्कुचितसर्वकारणत्वं न जीवस्य कल्पयितुं शक्यते ।

५. जीवकर्तृतायाश्च **'इतरव्यपदेशात्'** (ब्र.सू.२.१.२२) इत्यादौ द्वितीये निरसिष्यमाणत्वाच्च । 'इतरव्यपदेशात्' इत्यादिसूत्रे अल्पज्ञस्याल्पशक्तेर्जीवस्य हिताकरणमहितकरणं चानुभूयमानं जगत्कर्तृत्वं प्रतिषेधति । प्रज्ञापयति चास्यास्वातन्त्र्यम् । तस्माद् न जीवः विश्वकर्ता ।

६. जिज्ञास्ये श्रुतः आत्मशब्दः **'आत्मा नारायणः परः'** इत्यादिश्रुत्या **'द्युभ्वाद्यायतनं स्वशब्दात्'** (ब्र.सू.१.३.१) इति सूत्रोक्तरीत्या च विष्णुवाची ।

७. आत्मशब्दः कथञ्चित् जीवपरः भवितुमर्हति । तथापि अन्वेषणविधिवाक्योक्तापहत-पाप्मत्वादीनां शुद्धे जीवस्वरूपे उपपादयितुं शक्यत्वेऽपि सत्यसङ्कल्पत्वादीनाम् उपपादयितुम् अशक्यत्वात् । आत्मशब्दस्य जीवपरत्वे अन्वेषणविधिवाक्योक्तापहतपाप्मत्वादीनां च जीवे शुद्धरूपाभिप्रायेण सम्भवशङ्कायामपि सत्यकामत्वादीनां सर्वथाऽनुपपत्तेः ।

८. ब्रह्मणः निष्क्रियत्वश्रुतेश्च **स हि सर्वस्य कर्ता, सत्यकर्मा** इति **स इदं सर्वमसृजत** इति **स इमान् लोकानसृजत** इति **नामरूपे व्याकरोत्** इत्यादिकर्तृत्वश्रुतिबलात् **अकर्माऽक्लिष्टकारित्वात्** इत्यादिस्मृत्यनुसारेण च अक्लिष्टकारित्वादिनोपपत्तेश्च ।

९. **तदेव ब्रह्म परमं कवीनाम्** इति विद्वद्रूढिसत्वात् तस्याश्चाज्ञरूढितो बलवत्वात् योगरूढिभ्यां गुणपूर्णो विष्णुरेव ब्रह्मेति ब्रह्मस्वरूपस्य प्रतिपादनात् तादृशस्य सन्दिग्धत्वात् कर्तव्यैव जिज्ञासेति ।

**सौधवाक्यार्थसङ्ग्रहः**

ब्रह्मशब्दः प्रसिद्धजीवपरः उतार्थान्तरपर इति सन्देहे अन्त्ये तस्यार्थस्य तद्वाचितायाः तत्र तात्पर्यस्य च कल्प्यत्वाद् गौरवम् । आद्ये तु लाघवं जीवस्याकल्प्यत्वात् । **बृह-जातिजीवे**त्यभिधानात् शक्तेरपि क्लृप्तत्वात् । अबाधेन तात्पर्यस्यापि सिद्धत्वात् जीवपर एवेति प्राप्ते

**यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।**
**अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम् ॥**

इति श्रुतेः स्वर्गपदस्य चन्दनादिरूपप्रसिद्धार्थत्यागेन अप्रसिद्धार्थपरत्ववत् ब्रह्मशब्दस्यापि **'यतो वा'** इत्यादिवाक्यशेषात् प्रसिद्धार्थत्यागेन अलौकिकार्थपरत्वोपपत्तिरिति ।

एवम् अलौकिकविशेष्यपरत्वे गौरवात् प्रसिद्धविशेष्यपरत्वेन लाघवात् तदनुसारेण जीवे सम्भवद्गुणपूर्तिरेव प्रवृत्तिनिमित्तं न तु सिद्धान्त्यभिमतगुणपूर्तौ तात्पर्यमिति जीवपर एवेति प्राप्ते, कारणत्वेन बाधकेन अलौकिकविशेष्यपरत्वं ततश्च सङ्कोचकाभावात् सर्वगुणपूर्तिरेव प्रवृत्ति-निमित्तमित्यर्थान्तरपर एवेति सिद्धान्तः ।

अपि च पूर्वसूत्रे जिज्ञासोत्थज्ञानजन्यप्रसादद्वारा मोचकत्वाद् विष्णोः जिज्ञासा कार्येति प्रागभिहितमयुक्तम् । तथात्वे बन्धकत्वाज्जिज्ञासा न कार्येत्यपि स्यात् । न चायमबन्धकः, जीवस्याबद्धत्वस्वबद्धत्वयोरयोगेन अन्यबद्धत्वे वाच्ये, अन्यस्य चेतनस्य अचेतनस्य वा ईशाधीनत्वेन पुनरीश्वरस्य बन्धकत्वेनाजिज्ञास्यता । अन्याधीनत्वे स्वानधीनकृताद् बन्धात् मोचकत्वं नेशस्येति न तज्जिज्ञासा कार्येति प्राप्ते, अप्रसन्नस्य बन्धकत्वं, प्रसन्नस्य तु मोचकत्वम् इति तत्प्रसादहेतुज्ञानजननाय तज्जिज्ञासा कार्येति सिद्धान्तः । तदुक्तं तृतीयस्य तृतीयेऽनुव्याख्याने-

**'यतो मोक्षादिदाताऽसौ अतो जिज्ञास्य एव वः ।**

**इत्याह तत्परं ब्रह्म व्यासाख्यं ज्ञानरश्मिमत् ॥'** (ब्र.सू.अनु., पृ.४४९)

**सृष्ट्याद्यष्टकर्तृत्वं ब्रह्मलक्षणम्**

१. जन्मादीत्यत्र तद्गुणसंविज्ञानबहुव्रीहिमाश्रित्य सृष्टिस्थितिलयकारणत्वमेव ब्रह्मलक्षणम् इति केचित् व्याचक्षते । 'जन्माद्यस्य यतः' इत्यत्र अतद्गुणसंविज्ञानबहुव्रीहिमाश्रित्य स्थितिकारणत्वमेव ब्रह्मलक्षणमित्यपरे । अन्ये तु माययैव ब्रह्मणः जगत्कारणत्वम्, न शुद्धस्य तदिति मन्यन्ते । तदसत् । **'यतो वा'** इत्यत्र चतुर्णां **'तमेवैकं जानथ'**, **'यस्मिन् द्यौः'** इत्यादौ स्थित्यादीनामेकैकस्य **'आत्मानमन्तरो यमयति'** इत्यत्र नियमनादेः

**'त्वं मुक्तिदो बन्धदोऽतो मतो नः ।**

**त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो ॥'** इत्यादौ अष्टकर्तृत्वस्यैव लक्षणत्वोक्तेः ।

**जन्मादिकारणत्वं न स्वरूपलक्षणम् इति शङ्का**

प्रथमसूत्रे ब्रह्म जिज्ञास्यमित्युक्त्वा द्वितीयसूत्रे ब्रह्मणः लक्षणमुक्तम्- 'जन्माद्यस्य यतः' इति । अत्र इदं विमर्शनीयं, किमिदं जन्मादिकारणत्वं स्वरूपलक्षणम् आहोस्वित् तटस्थलक्षणमिति । अत्राऽहुः प्रकाशात्ममुनयः-

**त्रैविध्यमत्र सम्भवति । रज्ज्वाः संयुक्तसूत्रद्वयवत् मायाविशिष्टं ब्रह्म कारणम् इति वा 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति श्रुतेर्मायाशक्तिमत् कारणमिति वा जगदुपादानमायाश्रयतया ब्रह्म कारणम् इति वा, तत्र विशिष्टपक्षे तथैव ब्रह्मत्वेनोपलक्षितस्य ज्ञानानन्दादिस्वरूपलक्षणेन**

**मायानिष्कर्षात्, लक्षणद्वयेन विशुद्धब्रह्मसिद्धिः । उत्तरपक्षयोस्तु मायाया ब्रह्मपरतन्त्रत्वात्, तत्कार्यमपि ब्रह्म परतन्त्रं भवति यथा अंशुतन्त्रतन्त्वारब्धोऽपि पटः, अंशुतन्त्रः प्रतीयते । ततश्च, उत्पद्यमानकार्यस्य यदाश्रयोपाधिज्ञानानन्दलक्षणं च तद् ब्रह्म इति शुद्धब्रह्मलाभ इति ।**

(पं.पा.वि., पृ.२१२)

अयमाशयः- जन्मादिकारणत्वं सर्वथा न शुद्धनिष्ठमपि तु विशिष्टनिष्ठमेव । मायाविशिष्टस्य कारणत्वेन शुद्धस्य जगत्कारणत्वाभावः सिद्ध एव । अत्र आद्यपक्षे सूत्रद्वयसंयुक्तरज्जोरिव ब्रह्म-माययोः कारणत्वम् अयं समप्राधान्यपक्षः । द्वितीयपक्षे मायाशक्तिविशिष्टस्य ब्रह्मणः कारणत्वेन मायाया एव साक्षादुपादानत्वम् अधिष्ठानभूतस्य ब्रह्मणस्तु गौणमेव कारणत्वम् । तृतीयपक्षे आरोपितमायायाः अधिष्ठानातिरिक्तस्वरूपाभावेन साक्षादुपादानत्वेऽपि अधिष्ठानभूते ब्रह्मणि कारणत्वमौपचारिकमेव । एवञ्च पक्षत्रयेऽपि शुद्धस्य विश्वकारणत्वाभावात् तटस्थत्वं युक्तमेव ।

**जन्मादिकारणत्वं स्वरूपलक्षणमित्यत्र कृष्णध्यानमेव प्रमाणम्**

अत्रोच्यते- श्रीमद्भागवते दशमस्कन्धे कृष्णेन ध्यानं कृतमिति श्रूयते । तथाहि-

**एकं परञ्ज्योतिरनन्यमद्वयं स्वसंस्थया नित्यनिरस्तकिल्बिषम् ।**
**ब्रह्माख्यमस्योद्भवनादिहेतुभिः स्वलक्षणैः लक्षितभावनिर्वृतिम् ॥**

(श्रीमद्भा.१०.७८.५. पृ. ७१६) इति ।

अत्र अस्य= प्रत्यक्षादिसिद्धस्य जगतः उद्भवनादिहेतुभिः= सृष्ट्यादिकर्तृत्वरूपैः स्वलक्षणैः= स्वरूपभूतधर्मैः लक्षितं भावनिर्वृतिरूपम् इत्यर्थः । भावः ज्ञानम्, निर्वृतिरानन्दः ।

अत्र जगज्जन्मादिकारणत्वं स्वरूपलक्षणमिति कृष्णेन ध्यातमिति प्रतिपादनात् इदं स्वरूपलक्षणमेव, न तटस्थलक्षणम् ।

अत्राहुः । ननु सूत्रकारेण-

**ब्राह्मे मुहूर्त उत्थाय वार्युपस्पृश्य माधवः ।**
**दध्यौ प्रसन्नकरण आत्मानं तमसः परम् ॥** (श्रीमद्भा.१०.७८.४. पृ.७१५) **इति ।**

इति पूर्ववाक्ये कृष्णकृतध्यानस्य व्यासेन अनुवादात् न तत्र भागवतस्य(व्यासस्य) तात्पर्यमस्ति

इति चेत्, मैवम् । स्यादयम् अनुवादः व्यासानभिप्रेतः यदि उत्तरत्र अनूदितं निराक्रियेत । न चैवम् । तथाहि- सूत्रकारेण भगवता व्यासेन कचित् सर्वैरपि एवम् अनुसन्धेयमिति विधानार्थं कचिदनुवादः क्रियते । यथा- **'त्रित्वे हुत्वाथ पञ्चत्वम्'** (श्रीमद्भा. १.१५.११ पृ.३७) इत्यादौ । निराकरणार्थं च कचिदनुवादः यथा- **यावत् स्यात् गुणवैषम्यम्** (श्रीमद्भा.११.११.३२- पृ.७९९) इति । प्रकृते च व्यासस्य कृष्णकृतध्याने अनुसंहितं जगज्जन्मादिकारणत्वं यद्यसम्मतं तर्हि उत्तरत्र निराक्रियेत । न च निराकृतं व्यासेन । तेन ज्ञायते जगज्जन्मादिकारणत्वं स्वरूपलक्षणमिति व्यासस्य सम्मतमिति ।

अन्यथा, अनुवादरूपत्वात् प्रकृतस्य स्वार्थे तात्पर्याभावकल्पने **'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं ब्रह्मास्मि'** इत्यपि परोपासनानुवाद एव स्यात् । उपासनाप्रकरणप्राप्तत्वात् । तथा च अद्वैते प्रमाणमेव नास्तीत्यापद्यते । तस्मात् कृष्णध्यानच्छलेन भगवान् व्यासः जगज्जन्मादिकारणत्वं विष्णोः स्वरूपलक्षणमित्याह । तेन तटस्थलक्षणत्ववादिनः निराकृताः ।

तदेतदुक्तं चन्द्रिकायां–

**'असाधारणधर्मो हि लक्षणं परिकीर्त्यते ।**
**तच्च निर्धर्मकब्रह्मवादिनां युज्यते कथम् ॥**

**स्वरूपं वा तटस्थं वा लक्षणं भेदकं मतम् ॥**
**सजातीयाद्विजातीयात्तच्चाद्वैतिमते कथम् ॥**

**न च मिथ्याभेदसिद्ध्यै मिथ्यालक्षणकीर्तनम् ।**
**मुमुक्षुं तत्त्वजिज्ञासुं प्रति शास्त्रेषु शोभते ॥'** (ता.चं.१.१.२.५-पृ.३१४-३१५) **इति ।**

एवं न्यायसुधायां चन्द्रिकायां च निरूपिताः विषयाः विष्णोर्जन्मादिकारणत्वविषये सङ्क्षेपेण सङ्गृहीताः विमृष्टाश्चेत्यलम् ।

## आनन्दमयाधिकरणम्

इतः प्राक्तनानि चत्वारि अधिकरणानि अध्यायपादपीठानि । आनन्दमयाधिकरणे श्रौतशब्दसमन्वय आरभ्यते । वैदिकशब्दास्तावत् चतुर्विधाः - १. तत्रप्रसिद्धाः (नारायणादयः), २. अन्यत्रप्रसिद्धाः

**मायानिष्कर्षात्, लक्षणद्वयेन विशुद्धब्रह्मसिद्धिः । उत्तरपक्षयोस्तु मायाया ब्रह्मपरतन्त्रत्वात्, तत्कार्यमपि ब्रह्म परतन्त्रं भवति यथा अंशुतन्त्रतन्त्वारब्धोऽपि पटः, अंशुतन्त्रः प्रतीयते । ततश्च, उत्पद्यमानकार्यस्य यदाश्रयोपाधिज्ञानानन्दलक्षणं च तद् ब्रह्म इति शुद्धब्रह्मलाभ इति ।**

(पं.पा.वि., पृ.२१२)

अयमाशयः- जन्मादिकारणत्वं सर्वथा न शुद्धनिष्ठमपि तु विशिष्टनिष्ठमेव । मायाविशिष्टस्य कारणत्वेन शुद्धस्य जगत्कारणत्वाभावः सिद्ध एव । अत्र आद्यपक्षे सूत्रद्वयसंयुक्तरज्जोरिव ब्रह्म-माययोः कारणत्वम् अयं समप्राधान्यपक्षः । द्वितीयपक्षे मायाशक्तिविशिष्टस्य ब्रह्मणः कारणत्वेन मायाया एव साक्षादुपादानत्वम् अधिष्ठानभूतस्य ब्रह्मणस्तु गौणमेव कारणत्वम् । तृतीयपक्षे आरोपितमायायाः अधिष्ठानातिरिक्तस्वरूपाभावेन साक्षादुपादानत्वेऽपि अधिष्ठानभूते ब्रह्मणि कारणत्वमौपचारिकमेव । एवञ्च पक्षत्रयेऽपि शुद्धस्य विश्वकारणत्वाभावात् तटस्थत्वं युक्तमेव ।

**जन्मादिकारणत्वं स्वरूपलक्षणमित्यत्र कृष्णध्यानमेव प्रमाणम्**

अत्रोच्यते- श्रीमद्भागवते दशमस्कन्धे कृष्णेन ध्यानं कृतमिति श्रूयते । तथाहि-

**एकं परज्योतिरनन्यमद्वयं स्वसंस्थया नित्यनिरस्तकिल्बिषम् ।**
**ब्रह्माख्यमस्योद्भवनादिहेतुभिः स्वलक्षणैः लक्षितभावनिर्वृतिम् ॥**

(श्रीमद्भा.१०.७८.५. पृ. ७१६) इति ।

अत्र अस्य= प्रत्यक्षादिसिद्धस्य जगतः उद्भवनादिहेतुभिः= सृष्ट्यादिकर्तृत्वरूपैः स्वलक्षणैः= स्वरूपभूतधर्मैः लक्षितं भावनिर्वृतिरूपम् इत्यर्थः । भावः ज्ञानम्, निर्वृतिरानन्दः ।

अत्र जगज्जन्मादिकारणत्वं स्वरूपलक्षणमिति कृष्णेन ध्यातमिति प्रतिपादनात् इदं स्वरूपलक्षणमेव, न तटस्थलक्षणम् ।

अत्राहुः । ननु सूत्रकारेण-

**ब्राह्मे मुहूर्त उत्थाय वार्युपस्पृश्य माधवः ।**
**दध्यौ प्रसन्नकरण आत्मानं तमसः परम् ॥** (श्रीमद्भा.१०.७८.४. पृ.७१५) **इति ।**

इति पूर्ववाक्ये कृष्णकृतध्यानस्य व्यासेन अनुवादात् न तत्र भागवतस्य(व्यासस्य) तात्पर्यमस्ति

इति चेत्, मैवम् । स्यादयम् अनुवादः व्यासानभिप्रेतः यदि उत्तरत्र अनूदितं निराक्रियेत । न चैवम् । तथाहि- सूत्रकारेण भगवता व्यासेन कचित् सर्वैरपि एवम् अनुसन्धेयमिति विधानार्थं कचिदनुवादः क्रियते । यथा- **'त्रित्वे हुत्वाथ पञ्चत्वम्'** (श्रीमद्भा. १.१५.११ पृ.३७) इत्यादौ । निराकरणार्थं च कचिदनुवादः यथा- **यावत् स्यात् गुणवैषम्यम्** (श्रीमद्भा.११.११.३२- पृ.७९९) इति । प्रकृते च व्यासस्य कृष्णकृतध्याने अनुसंहितं जगज्जन्मादिकारणत्वं यद्यसम्मतं तर्हि उत्तरत्र निराक्रियेत । न च निराकृतं व्यासेन । तेन ज्ञायते जगज्जन्मादिकारणत्वं स्वरूपलक्षणमिति व्यासस्य सम्मतमिति ।

अन्यथा, अनुवादरूपत्वात् प्रकृतस्य स्वार्थे तात्पर्याभावकल्पने **'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं ब्रह्मास्मि'** इत्यपि परोपासनानुवाद एव स्यात् । उपासनाप्रकरणप्राप्तत्वात् । तथा च अद्वैते प्रमाणमेव नास्तीत्यापद्यते । तस्मात् कृष्णध्यानच्छलेन भगवान् व्यासः जगज्जन्मादिकारणत्वं विष्णोः स्वरूपलक्षणमित्याह । तेन तटस्थलक्षणत्ववादिनः निराकृताः ।

तदेतदुक्तं चन्द्रिकायां–

**'असाधारणधर्मो हि लक्षणं परिकीर्त्यते ।**
**तच्च निर्धर्मकब्रह्मवादिनां युज्यते कथम् ॥**

**स्वरूपं वा तटस्थं वा लक्षणं भेदकं मतम् ॥**
**सजातीयाद्विजातीयात्तच्चाद्वैतिमते कथम् ॥**

**न च मिथ्याभेदसिद्ध्यै मिथ्यालक्षणकीर्तनम् ।**
**मुमुक्षुं तत्त्वजिज्ञासुं प्रति शास्त्रेषु शोभते ॥'** (ता.चं.१.१.२.५-पृ.३१४-३१५) इति ।

एवं न्यायसुधायां चन्द्रिकायां च निरूपिताः विषयाः विष्णोर्जन्मादिकारणत्वविषये सङ्क्षेपेण सङ्गृहीताः विमृष्टाश्चेत्यलम् ।

## आनन्दमयाधिकरणम्

इतः प्राक्तनानि चत्वारि अधिकरणानि अध्यायपादपीठानि । आनन्दमयाधिकरणे श्रौतशब्दसमन्वय आरभ्यते । वैदिकशब्दास्तावत् चतुर्विधाः - १. तत्रप्रसिद्धाः (नारायणादयः), २. अन्यत्रप्रसिद्धाः

(गायत्री-आकाशादयः), ३. उभयत्रप्रसिद्धाः (इन्द्राग्न्यादयः), ४. अन्यत्रैवप्रसिद्धाः (दुःखि-बद्धादयः) ।

विष्णौ प्रसिद्धानां नारायण-वासुदेव-कृष्णादिनाम्नां समन्वयः नावश्यकः । अन्यत्रप्रसिद्धा हि शब्दाः गायत्र्यादयः । तेषां तु इदं लक्षणं भवति । ये शब्दाः श्रुतौ लोके वा बलवच्छ्रुतिलिङ्गाद्यैः इतरेषु प्रसिद्धाः, तेऽन्यत्रप्रसिद्धा उच्यन्ते । अथवा येषां शब्दानां ब्रह्मण्यप्रसिद्धिः, अन्यत्रप्रसिद्धिश्चेति विरोधिन्यौ तेऽन्यत्रप्रसिद्धाः । ये च शब्दाः विष्णौ प्रसिद्धा अपि अन्यत्रापि बहुलं प्रयुज्यन्ते ते उभयत्रप्रसिद्धाः । उभयत्रप्रसिद्धेषु चान्यत्र प्रसिद्धिपराकरणे विष्णौ समन्वयः स्वत एव सिद्धः । येषां शब्दानां ब्रह्मण्यप्रसिद्धिः, अन्यत्रप्रसिद्धिः कथञ्चिदपि ब्रह्मणि समन्वयाशक्यतेति तिस्रः विरोधिन्यः सन्ति ते अन्यत्रैव प्रसिद्धाः ।

तदुक्तं चन्द्रिकायाम्-

**'श्रुत्यादितो लोकतो वापीतरेषु प्रसिद्धता ।**
**बलवत्श्रुतिलिङ्गाद्यैः अन्येष्वेव प्रसिद्धता ॥'**

यद्वा,

**'येषां प्रसिद्धिरन्यत्र केवलैव विरोधिनी ।**
**समन्वयस्य उभयत्रप्रसिद्धास्ते हि कीर्तिताः ॥**
**येषां ब्रह्मण्यप्रसिद्धिः प्रसिद्धिश्चान्यवस्तुषु ।**
**विरोधिन्यौ हि तेऽन्यत्रप्रसिद्धाः कथिता इह ॥**
**येषामुक्तद्वयं ब्रह्मपरत्वस्यात्यशक्यता ।**
**इति तिस्रो विरोधिन्यः तेऽन्यत्रैव प्रसिद्धकाः ॥'**

समन्वयाध्याये प्रथमपादे अन्यत्रप्रसिद्धनामात्मकशब्दसमन्वयः । द्वितीयपादे अन्यत्रप्रसिद्ध-लिङ्गात्मकशब्दसमन्वयः । तृतीयपादे उभयत्र प्रसिद्धनामलिङ्गात्मकशब्दसमन्वयः । तुरीयपादे अन्यत्रैवप्रसिद्धशब्दसमन्वय इति पादचतुष्टये शब्दसमन्वयक्रमोऽवसेयः ।

सर्वाण्यपि सूत्राणि वेदोपनिषद्गतानि विषयवाक्यान्यवलम्ब्य प्रवृत्तानीति निर्गलितः पन्थाः । तत्र

आनन्दमयाधिकरणे सर्वेषां भाष्यकाराणामाशयानुरोधेन तैत्तिरीयोपनिषद्गतानि अन्नमयप्रकरणादारभ्य आनन्दमयप्रकरणान्तानि वचनानि विषयवाक्यानि भवन्ति । उपनिषद आपातार्थपर्यालोचने अन्नमयादिकोशा एवात्र प्रतिपाद्यन्त इति प्रतीयते । तथाप्यत्र ब्रह्मशब्दसामानाधिकरण्यात् ब्रह्मलिङ्गानां श्रवणेन च पञ्चसु प्रकरणेष्वपि पञ्च भगवद्रूपाणि प्रतिपादितानीति श्रीमध्वाचार्याणामाशयः । अत एवोक्तं सूत्रकारेण- 'आनन्दमयोऽभ्यासात्' (ब्र.सू. १.१.१२) इति ।

यद्यप्यत्र प्रथमप्राप्तान्नमयपरित्यागेन चरमश्रुताऽनन्दमयपर्यन्तानुधावने किं निदानमिति भवति सन्देहः । मनुष्योत्तमोपास्येषु सत्-चित्-आनन्दआत्मेति चतुर्गुणेषु 'आनन्दादयः प्रधानस्य' (ब्र.सू. ३.३.१२) इति सूत्रोक्तदिशा सर्वैरानन्दस्याभीप्सितत्वेन सर्वोपास्यत्वज्ञापनाय तत्पर्यान्तानुधावनमिति श्रीमध्वाचार्यैः समाहितम् । अत्र मताचार्याणाम् आशयविशेष अवश्यं विज्ञेय इति तेषां व्याख्यानप्रणाली सङ्क्षेपेणेह निरूप्यते । तैत्तिरीयगतमेतमेव विषयवाक्यजातमुपजीव्य 'आनन्दमयाधिकरणम्' प्रवृत्तं ब्रह्मसूत्रेषु ।

**शङ्कराचार्याणामभिप्रायः**

अस्मिन्नधिकरणे शारीर एवात्र प्रतिपाद्य इति पूर्वपक्षं प्रदर्श्य ब्रह्मैवानन्दमयशब्देनोच्यत इति सूत्रकाराशयः शङ्कराचार्यैः विवृतः । सूत्रे 'अभ्यासात्' इत्यस्य 'आनन्दशब्दाभ्यासात्' इत्यर्थः । तदुक्तं शाङ्करभाष्ये- 'पर एवानन्दमयो भवितुमर्हति । कुतः ? अभ्यासात् । परस्मिन्नेव ह्यात्मन्यानन्द-शब्दो बहुकृत्वोऽभ्यस्यते ।' आनन्दशब्दाभ्यासश्चात्र बहुत्र विद्यत इति शङ्कराचार्यैः निरूपितम् ।

रामानुजभाष्येऽपि शारीर एव आनन्दमय इति पूर्वपक्षयित्वा विष्णुरेव आनन्दमय इति सिद्धान्तितम् । अत्र विष्णोरानन्दमयत्वे अभ्यासादिति हेतुः । अभ्यासो नाम आनन्दशब्दाभ्यास एव । अस्मिन् प्रकरणे निरतिशयानन्द उपवर्ण्यमानः जीवेऽनुपपद्यमानश्च ब्रह्मण्येव पर्यवस्यतीति स एव आनन्दमय इति प्रतिपादितम् । तथाहि रामानुजभाष्यवचनानि- ''तस्मादविद्यापरिकल्पितविविध-विचित्रदेवादिभेदभिन्नस्य जीवात्मनः स्वाभाविकं रूपमखण्डैकरसं सुखैकतानमानन्दमय इत्युच्यत इत्यानन्दमयः प्रत्यगात्मा । एवं प्राप्ते प्रचक्ष्महे- आनन्दमयोऽभ्यासात् । आनन्दमयः परमात्मा । कुतः ? अभ्यासात् । 'सैषानन्दस्य मीमांसा भवति' इत्यारभ्य, 'यतो वाचो निवर्तन्ते' इत्येवमन्तेन वाक्येन शतगुणितोत्तरक्रमेण निरतिशयदशाशिरस्कोऽभ्यस्यमान आनन्दः, अनन्तदुःखमिश्रित-

परिमितसुखलवभागिनि जीवात्मनि असम्भवन् निखिलहेयप्रत्यनीकं कल्याणैकतानं सकलेतरविलक्षणं परमात्मानमेव स्वाश्रयमावेदयति । यथाह, 'तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्मा आनन्दमयः' '' (श्रीभाष्यम् १.१.६, १९६-१९९, विशिष्टाद्वैतप्रचारिणीसभा, श्रीदेशिकविद्याभवन्, मद्रास् १९८९) इति ।

द्वितीयं वर्णकान्तरं शाङ्करभाष्ये एवमुपवर्णितम्- यद्यपि सूत्रकारः ब्रह्मैवानन्दमयशब्दवाच्य इति प्रत्यपीपदत् । तथापि भगवती श्रुतिः आनन्दमयपुच्छत्वेन श्रुतं स्वप्राधान्येन प्रतिपादितं ब्रह्मैव आनन्दमयशब्दवाच्यमिति प्रतिपादयतीति स्वाशयमाविश्चक्रुः ।

तथाहि- अन्नमयादयः पञ्चापि कोशा एव । आनन्दमयपुच्छत्वेन श्रुतं यद् ब्रह्म तदेव स्वप्राधान्येन जिज्ञास्यम् । तत्रैव 'असन्नेव स भवति असद् ब्रह्मेति वेद चेद् अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः' इति ब्रह्मशब्दाभ्यासः । न चासावानन्दमयविषयत्वेनाऽकर्षणीयः । न च 'ब्रह्म पुच्छं प्रतिष्ठा' इति आनन्दमयपुच्छत्वेन ब्रह्म प्रतिपाद्यते । अतोऽत्र आनन्दमयावयवभूतस्य ब्रह्मणः स्वप्राधान्येन जिज्ञासा कथम् इति वाच्यम् । नात्र पुच्छशब्दः लाङ्गूलपरोऽवयवपरो वा । किन्तु आधारमात्रवाचकः । प्रतिष्ठापदं च अधिष्ठानवाचकम् । एवं च अन्नमयादय आनन्दमयान्ताः सर्वेऽपि कोशाः, विकारार्थक-मयट्प्रत्ययघटितशब्दसद्भावात् । एवं च निर्विशेषं ब्रह्मैव शाखाचन्द्रन्यायेन 'ब्रह्म पुच्छं प्रतिष्ठा' इति स्वप्राधान्येन निरूप्यते । एतच्च ब्रह्म सोपादानकस्य विश्वस्य मुख्यमधिष्ठानम् । अत एव प्रतिष्ठेत्युच्यते । पूर्वोक्तपृथिव्यादिषु पुच्छशब्देन यथाऽऽधारः विवक्षितः, तथैवेहापि सर्वाधारभूते ब्रह्मणि आधारलक्षकः पुच्छशब्दः ।

### आनन्दमयस्य ब्रह्मत्ववादिनां चत्वारः दोषाः

#### प्रायपाठत्यागः प्रथमः

अयमाशयः - १. आनन्दमयतदवयवयोः (अवयवायविनोः) उभयोरपि ब्रह्मत्वं नोपपद्यते'। तस्मात् एकस्य ब्रह्मता वाच्या । यदि आनन्दमयस्य ब्रह्मत्वमिष्यते तर्हि अन्नमयादौ यत् विकारार्थकत्वं मयट अभ्युपगतं तदानन्दमये त्यक्तं भवेत् । अन्नमयादीनां कोशत्वेनाब्रह्मत्वात् तत्प्रायपठितानन्दमयस्य विकारार्थत्वत्यागे प्रायपाठबाधः । एकत्र मयटः भिन्नार्थवर्णनं प्रकरणाननुगुणं च भवति ।

## मुख्यत्रितयलङ्घनम्

१. आनन्दमय इत्यत्र मयट प्राचुर्यार्थकत्वे प्राचुर्यस्यापि प्रतियोग्यल्पत्वापेक्षत्वात् ब्रह्मणि दुःखलेशाभ्युपगमः स्यात् । यथा 'ब्राह्मणप्रचुरो ग्रामः' इत्यत्र विजातीयशूद्राल्पत्वं लभ्यते तद्वदिहापि दुःखाल्पत्वं व्युत्पत्तिबलाल्लभ्यते । न च ब्रह्मणि दुःखमस्ति । तस्मान्मयटः स्वार्थत्यागः ।

२. निर्विकारे ब्रह्मणि मुख्यस्य ब्रह्मशब्दस्य अब्रह्मणि पुच्छे गौणार्थत्वम् ।

३. 'आनन्दमयः ब्रह्म अभ्यासात्' इत्युक्ते आनन्दमयशब्दस्यैवाभ्यासो गम्यते । श्रुतौ च 'सैषानन्दस्य मीमांसा भवति' इत्यादिना आनन्दस्यैवाभ्यासः न त्वान्दमयस्य । तथा च मयट्प्रत्ययार्थः लक्ष्यते ।

एवं चानन्दमयस्य ब्रह्मत्वे चत्वारः दोषाः (१+३ = ४) ।

पुच्छस्य ब्रह्मत्वे आनन्दमयावयवत्वप्रायपाठबाधमात्रम् ।

पुच्छशब्दस्य मुख्यार्थत्यागस्तु उभयत्र समानः । एवं च आनन्दमयप्रकारणे श्रुतं पुच्छपदम् आधारलक्षकं स्वप्राधान्येन निर्विशेषं ब्रह्म प्रतिपादयतीति स्थितम् ।

तदुक्तं कल्पतरौ -

'मयड्विकारे मुख्यः ब्रह्मशब्दः परब्रह्मणि मुख्यः । अभ्यस्यमानानन्दशब्दश्च प्रकृत्यर्थ एव मुख्यो न मयडर्थे । पूर्वपक्षे एतत्त्रितयलङ्घनम् आनन्दमयपदस्यान्नमयादिविकारप्रायपाठपरित्यागश्च स्यात् । उत्तरे पक्षे तु पुच्छशब्दस्यावयवप्रायपाठस्यैव बाधनम्, अनुगुणं तु मुख्यत्रितयमित्यर्थः ।' (पृ.१८७. ब्रह्मसूत्र-शाङ्करभाष्य-भामतीकल्पतरौ) इति । यानि भामतीवचनान्यालम्ब्यायमर्थ उपपादितः तानि वचनानि पश्यन्तु सूरयः -

'प्रायपाठपरित्यागः मुख्यत्रितयलङ्घनम् ।
पूर्वस्मिन्, उत्तरे पक्षे प्रायपाठस्य बाधनम् ॥' (शां.भा. भामती)

एवं तर्हि कथम् 'आनन्दमयोऽभ्यासात्' (ब्र.सू. १.१.१२) इति सूत्रकारो आनन्दमयस्य विष्णुत्वमसाधयदिति चेद्, उच्यते । सूत्रकारोऽप्यत्र मुग्ध एव । 'श्रुतिसूत्रयोर्विरोधे तु गुणे त्वन्याय्यकल्पना' इति न्यायेन सूत्रस्यैव गौणार्थत्वं वक्तव्यम् । न वेदस्य । ततश्चान्नमयाद्यारभ्य

आनन्दमयान्ता सर्वेऽपि कोशा एव । आनन्दमयावयवतया श्रुतमेव ब्रह्म ब्रह्मशब्दाभ्यासविशिष्टमिति स्वप्राधान्येन जिज्ञास्यम् । मयटां सर्वत्रापि विकारार्थतैव इति ।

अत्र ब्रूमः- **'एकत्रापि न मुख्यार्थलङ्घनं मामके मते ।**
**सर्वत्रापि च मुख्यार्थलङ्घनं तावके मते ॥'** (तात्पर्यचन्द्रिका)

एतदुत्तरत्र विव्रियते ।

**भास्कराभिप्रायः**

आनन्दमयः किं जीवोऽथ ब्रह्मेति पूर्वपक्षिते ब्रह्मैवाऽनन्दमयः । यतोऽत्र 'यदेष आकाश आनन्दो न स्यात्' 'आनन्दं ब्रह्मेति व्यजानात्' 'आनन्दं ब्रह्मणो विद्वान्' इत्यादौ आनन्दमये ब्रह्मशब्दाभ्यासाद् आनन्दमय एव ब्रह्म नान्नमयादयः । अन्नमयादयश्चत्वारः पुनः कोशा एव । तेषां ब्रह्मज्ञान-द्वारतयोपदिष्टत्वात् न ब्रह्मत्वम् । अन्नमयादीनामपि ब्रह्मत्वे प्रथमातिक्रमणे मानाभावाद् 'अन्नमयोऽभ्यासात्' इत्येव वक्तव्यं स्यात् । तस्माद् अन्नमयादयश्चत्वारः कोशा एव । आनन्दमये मयट् प्राचुर्यार्थः । अन्नमये विकारार्थः । प्राणादिषु त्रिषु विकारित्वासम्भवात् प्राण एव प्राणमय इत्येवंक्रमेण स्वार्थे मयट् इति ।

**रामानुजाचार्याशयः**

'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इति शारीरत्वेन जीव एवाऽनन्दमय इति प्राप्ते निरतिशयानन्दविशिष्ट एव ब्रह्मशब्दाभ्यासात् नानन्दमयो जीवः किन्तु ब्रह्मैवेति श्रीभाष्ये व्यवस्थापि-तम् । तन्मते मयटामनेकेऽर्थाः भवन्ति-

१. आनन्दमयेत्यत्र मयट् प्राचुर्यार्थः ।
२. विज्ञानमयो जीवः । तत्र मयट् सम्बन्धार्थः । वैयर्थ्यादप्यमुख्यार्थस्य ज्यायस्त्वात् ।
३. अन्नमयादित्रिकाणां कोशत्वेऽपि अन्नमये मयट् विकारार्थः ।
४. प्राणमनोमयेषु स्वार्थिकः ।

**मध्वाचार्याणामभिप्रायः**

श्रीमदानन्दतीर्थभगवत्पादाचार्याः तैत्तिरीयभाष्ये, ब्रह्मसूत्रभाष्ये, अनुव्याख्याने च पञ्चस्वपि

प्रकरणेषु अन्नमयादिशब्दैः नारायण-वासुदेव-सङ्कर्षण-प्रद्युम्न-अनिरुद्धरूपाणि प्रतिपाद्यन्त इति प्रत्यपीपदन् ।

यद्यप्यस्मिन् व्याख्याने 'ओषधीभ्योऽन्नम्' इत्यत्रोपनिषदि अन्नशब्दः प्रसिद्धान्नपर इत्यङ्गीकृत्य 'स वा एष पुरुषोऽन्नरसमयः' इत्यत्र तु अन्नशब्दः भगवत्परः व्याख्यायते । एकस्मिन्नेव प्रकरणे श्रुतेन एकेन शब्देन भेदश्रुतिं विना वस्तुद्वयोक्तिग्रहणायोगात् व्याख्यानमिदमनुपपन्नमिव भाति । तथापि 'ओषधीभ्योऽन्नम्' इत्यत्र प्रसिद्धान्नपरोऽपि 'स वा एषः' इत्यत्रान्नशब्दः रसशब्देन विशेषितत्वात् भगवत्परः भवितुमर्हति । दृष्टो हि एकस्मिन्नेव प्रकरणे श्रुतानां पदानां विशेषणान्तरसमभिव्याहारवशेन अर्थ-भेदः । 'अन्नस्यान्नम्' इत्यत्र अन्नस्यान्नत्वप्रदं भगवद्रूपमित्यर्थः । 'मध्यमः प्राणः' इत्यत्र प्राणशब्दः मध्यमविशेषणविशिष्टः, अवान्तरेश्वरभूतमुख्यप्राणप्रतिपादकः । 'प्राणः स्थूणा' इत्यत्र प्राणशब्दः सर्वस्यापि जगतः आश्रयभूतं हरिं प्रतिपादयति । तद्वदिहापि 'अन्नरसमयः' इत्यत्र हरिरभिधेयः भवितुमर्हति ।

तेषामाशयोऽत्र सङ्क्षेपेण सङ्गृह्यते-

१. यदि पुच्छब्रह्मणि ब्रह्मशब्दाभ्यासात् तस्य ब्रह्मत्वमुररीक्रियते तर्हि ब्रह्मशब्दाभ्यासस्य अन्नमयादिपञ्चकेऽपि सत्त्वात् तेषामपि ब्रह्मत्वमङ्गीकार्यमेव ।

२. ब्रह्मप्रश्नोत्तरप्रकरणत्वात् कोशा अत्र प्रतिपादिता इति त्वसङ्गतम् ।

३. 'तरति शोकमात्मवित्' इत्यत्र भगवती श्रुतिः आत्मज्ञानस्य शोकतरणोपायत्वं ब्रवीति । आत्मज्ञानभिन्नस्य कोशज्ञानस्यानात्मज्ञानत्वात् तस्य च मुक्तिहेतुत्वाभावाद् अनुपदेश्यत्वम् ।

४. न च 'स वा एष पुरुषोऽन्नरसमयः' इत्यत्र विकारार्थककोशपरत्वस्यैवोचितत्वम् । अन्नरसमय इत्यस्य अन्नमयः साररूपश्चेत्यर्थाङ्गीकारेऽनुपपत्त्यभावात् ।

५. न चात्रान्नमयशब्दः विकारार्थकः कोशवाचको वा । 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते' इति सर्वोपजीव्यत्वसर्वसंहर्तृत्वस्यैवान्नमयशब्दार्थत्वेन तादृशार्थस्यान्यत्र बाधितत्वेन परमात्मन्यबाधितत्वेन च स एवान्नमयः । एवं सर्वत्रापि प्राचुर्यार्थ एव मयट् । मयटः सर्वत्र एकार्थत्वे सम्भवति तत्र तत्रार्थान्तरकल्पनं प्रामादिकमेव ।

६. न चैवं मयटः प्राचुर्यार्थे दुःखाल्पत्वमपि स्यादिति वाच्यम्, 'अन्नप्रचुरो मखः' इत्यत्र तर्हि दुर्भिक्षाऽपि स्यात् । 'प्रकाशप्रचुरः सविता' इत्यत्रापि सवितर्यन्धकारलेशः स्यात् । एवं च प्रमाणान्तरेण यदि विरोधिसद्भावः प्रमितः तर्ह्येव तथाङ्गीकार उपपन्नः । अन्यथा बहुविप्लवः स्यात् । प्रकृते च आनन्दमयशब्देन ब्रह्मणि पूर्णानन्दत्वप्रतिपादनेन प्रमाणान्तरेण च दुःखाद्यप्रतीतेः भगवान् आनन्दमय इत्युक्ते आनन्दघनः, पूर्णानन्द इत्येव वाऽर्थः ।

७. ननु कथमत्र ब्रह्मशब्दाभ्यासः । भृगुवल्ल्यां यद्यपि 'अन्नं ब्रह्मेति व्यजानात्' इत्यादौ ब्रह्मशब्दसद्भावेऽपि -

(अ.) मयट्प्रत्ययविशिष्टशब्दाश्रवणात्, (आ.) चक्षुः-श्रोत्र-वाचाम् आधिक्येन प्रतिपादनात्, (इ.) विज्ञानानन्दमययोः परित्यागात् नैकं वस्त्वत्र उच्यत इति चेत्,

उच्यते । उभयोरपि वल्ल्योः ब्रह्मावगतिजननार्थमेव प्रवृत्तत्वादेकप्रकरणत्वमस्त्येव । आवापोद्वापस्य शाखासु बहुलं दृश्यमानत्वेन वाधूलशाखायामष्टरूपस्यापि ब्रह्मण उक्तत्वेन सङ्ख्यासाम्यादिसम्भवान्न कश्चिद्विरोधः ।

अवयवावयविनोः पूर्णत्वेन ब्रह्मशब्दस्तावन्मुख्यः सर्वत्र । पूर्णत्वं हि ब्रह्मशब्दार्थः । धर्मान्तरेष्वदृष्टमपि जातिसमवायादौ धर्मितोऽधिकदेशत्वं, परिच्छिन्नाज्ञानावृते निरंशे चैतन्ये, अपरिच्छिन्नत्वं, यथा वाऽऽनन्दान्तरेष्वदृष्टमपि ब्रह्मानन्दस्य पूर्णत्वादिकं, तथान्यत्रादृष्टमपि पूर्णत्वं विचित्रशक्तियुक्तावयवेऽस्तु । तदुक्तम्-

'ब्रह्मताऽवयवेऽपि स्यात् तथावयविनि स्वतः ।
यथैव कृष्णकेशस्य कृष्णस्य ब्रह्मताऽखिला ॥'
'उद्बबर्हात्मनः केशौ सितकृष्णौ महामुने ।
उवाच च सुरानेतौ मत्केशौ वसुधातले ।
अवतीर्य भुवो भारक्लेशहानिं करिष्यतः ॥' इति । तस्मादवयवावयविनो पूर्णत्वं प्रमितम् ।

८. नानन्दमय एव मयट् प्राचुर्यार्थः, किन्तु सर्वत्रापि । अतः न प्रायपाठविरोधः । अल्पदुःखप्राप्तिशङ्का तु 'प्रकाशमयः सविता' इत्यादाविव परिहरणीया ।

९. न आनन्दशब्दस्य 'सैषानन्दस्य' इत्यादौ प्राचुर्यलक्षकत्वम् । 'आनन्दं ब्रह्मणः', 'यदेष आकाशः' इत्यादौ तु प्रकरणवशादेव तादृशार्थसिद्धिः न त्वानन्दशब्दस्य प्राचुर्यलक्षकत्वेन ।

१०. न च 'यतो वाचो निवर्तन्ते' इत्यादयः निर्विशेषब्रह्माभिधायकाः। किन्त्ववाङ्मनसगोचरानन्त-गुणविशिष्टब्रह्मस्वरूपप्रतिपादकाः ।

११. किञ्चान्नमयादीनामब्रह्मत्वे ब्रह्मजिज्ञासोस्तदुपदेशानुपयोगः । द्वारमपि द्वारत्वेनैवोपदेष्टव्यम् न त्वात्मतया। न च 'अन्नं ब्रह्म' इत्यनुक्त्वा 'आनन्दो ब्रह्म' इति वक्तुमशक्यं, येन द्वारत्वं स्यात्। न च 'सत्यं ज्ञानम्' इत्यनेन स्वरूपलक्षणेन ब्रह्मोपदिश्य पुनस्तस्य देहादिरूपताभ्रान्तिमुत्पाद्य पुनरपि पुच्छवाक्येन तदुपदेशः समीचीनः प्रतिभाति।

किञ्च आनन्दमयावयवतया श्रुतं ब्रह्मैव स्वप्राधान्यनेनात्र प्रतिपाद्यते। ब्रह्मज्ञानोपदेशोपयोगितया (द्वारत्वेन) अन्नमयादिकोशानां निरूपणमिति मते भृगुर्वरुणोपदिष्टानां द्वारत्वं वेत्ति न वा ? वेत्ति चेत् तथैव स्फुटतया निर्देशः स्यादुपनिषदि। न च तथा निर्देशोऽस्तीति तु निश्चप्रचम्। नेति पक्षे विरोचनस्येव पुनरुपसत्त्ययोगः । अपि च तेषां द्वारत्वेनोपदेशे अन्नादीनामब्रह्मत्वात् 'नान्नं ब्रह्मेति व्यजानात्', 'नान्नाद्ध्येव' इत्यादि श्रूयेत। तस्मादन्नादयो न कोशाः।

१२.शुद्धब्रह्मपरमिति यदुक्तं तन्न। 'सोऽकामयत', 'भीषास्मात्' इत्यादिश्रुतौ कामादिगुणविशिष्ट-स्यैवास्मिन् प्रकरणे उक्तेः। किञ्च निर्विशेषज्ञानस्य सविशेषज्ञानाधीनत्वादादौ निर्विशेषोक्तिरयुक्ता।

१३.नन्वेवं तर्हि प्रथमातिक्रमणे मानाभावाद् अन्नमयोऽभ्यासादिति वक्तव्ये कुत आनन्दमयोऽ-भ्यासादित्युक्तमिति चेत्, मुमुक्षूपास्यगुणेषु 'आनन्दादयः प्रधानस्य' (ब्र.सू. ३.३.१२) इति प्रधानफलस्य मोक्षस्यार्थे सत्-चित्-आनन्द-आत्मा इत्युपास्य इत्युक्तत्वेन, सर्वापेक्षितत्वा-च्चानन्दस्यैव प्राधान्येन निर्देश उपपन्नतरः ।

१४. ननु अभ्यासादित्यस्य ब्रह्मशब्दाभ्यासाद् इत्यर्थ उक्तः भाष्ये। ''प्रकृते च 'एकविषयकासकृदुक्ति-रभ्यासः' इति अभ्यासलक्षणस्वीकारे आनन्दमयविज्ञानमययोस्तस्य सत्त्वेऽपि प्राणमयादित्रिके 'येऽन्नं ब्रह्मोपासते ये प्राणं ब्रह्मोपासते' इत्यत्र ब्रह्मशब्दश्रुतेः कथं 'ब्रह्मशब्दाभ्यासोऽस्ति' इत्युक्तमिति चेद्- उच्यते । नात्र सर्वत्र मुख्याभ्यासो भाष्यकृदभिमतः । यत्र विज्ञानानन्द-मययोस्तदस्ति तत्र मुख्य एवाभ्यासः । अन्यत्र तु ब्रह्मशब्दश्रवणमात्रं विवक्षितम् । अत एव तत्त्वप्रकाशिकायाम्- 'आनन्दमये ब्रह्मशब्दाभ्यासाद्' इत्युक्त्वा 'अन्नमयादीन् प्रत्युदाहृतश्लोकेषु तद्विषयत्वेन ब्रह्मशब्दश्रवणाद्' इत्येवोक्तम् ।

सुधायां तु 'येऽन्नं ब्रह्मेत्यादिरूपाद् अभ्यासात् तैत्तिरीयके' इत्यनुव्याख्यानानुसारेण एकविषयकासकृदुक्तिलक्षणमुख्याभ्यासाभावेऽपि असकृदुक्तिमात्रमस्ति । तथा चान्नमयादि-विषयत्वेन श्रुतत्वाभिप्रायोऽभ्यासशब्द इत्युक्तम् ।

१५. यद्वा भाष्ये ब्रह्मशब्दाभ्यासाद् इत्यस्य ब्रह्मवाचकशब्दाभ्यासाद् इत्यर्थः । ततश्च 'अन्योऽन्तर आत्मा' 'एतमन्नमयमात्मानमुपसङ्क्रामति' 'एतमन्नमयमात्मानमुपसङ्क्रम्य' इत्यादौ ब्रह्मशब्द-समानार्थकात्मशब्दाभ्यासस्य मुख्यस्यैव सर्वत्र सत्वात् ब्रह्मशब्दाभ्यासोऽस्तीत्युक्तमुपपन्नम् ।

१६. एवमभिनवचन्द्रिकोक्तदिशा अन्तरशब्दाभ्यासोऽपि ग्राह्यः ।

१७. यद्वा 'अन्नं ब्रह्मेति व्यजानात्' इत्युत्तरानुवाकेऽप्यन्नमयादौ ब्रह्मशब्दस्यासकृदेव सत्वात् उभयोरनुवाकयोरेकविषयकत्वात् मुख्याभ्यास एवास्तीत्युक्तमुपपन्नम् ।

**विशिष्टाद्वैतविचारप्रणाली न शोभावहा**

रामानुजसिद्धान्तोऽप्ययुक्तः ।'तस्यैष एव शारीर आत्मा' इत्याद्यानन्दमयस्य जीवत्वप्रापकवचनस्य जीवतयाऽनङ्गीकृतप्राणमयादिप्रकरणेऽपि विद्यमानत्त्वेन शारीरत्वेन जीवत्वशङ्काऽनुदयात् । आनन्दमयस्य ब्रह्मत्वे पुच्छत्वाद्यनुपपत्तीनामपरिहारात् ।

अस्मन्मते तु अवयवावयविनोरभेदस्याङ्गीकृतत्वेन 'अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः' इति बृहत्संहितोक्तेरनुपपत्तिलेशाभावात् ।

एवं विज्ञानमयस्य जीवत्वे 'विज्ञानं देवाः सर्वे ब्रह्मज्येष्ठमुपासते विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुते' इत्यादेरयोगः । अत्र विज्ञानमयस्य स्फुटं ब्रह्मत्वावगमात् ।

एवम् अद्वैत-विशिष्टाद्वैतविचारधारासु बहुधाऽनुपपत्तयः सुधाचन्द्रिकादौ प्रदर्शिताः विद्वद्भिरनुसन्धेयाः ।

**तदुक्तं चन्द्रिकायाम्-**

**ब्रह्मशब्दात् समस्तात्तृत्वादिलिङ्गाच्च वाक्यतः ।**
**पूर्वोत्तरस्मात् मन्त्रस्थब्रह्मप्रकरणादपि ।**

**भृगुवल्लीसमाख्यानात् मुक्तगीतावसानकात् ।**
**स्थानप्रमाणतश्चैव पञ्चानां ब्रह्मता स्थिता ।**
**ब्रह्मप्रश्नोत्तरात् ब्रह्मलक्षणात् ब्रह्मशब्दतः ।**
**विज्ञातत्वाच्च तपसा मुक्तगम्यत्वतस्तथा ।**
**वाधूलीयसमाख्यानाद् अनुव्याख्यानिरूपितात् ।**
**भृगुवल्ल्युदितस्यान्नप्राणादेर्ब्रह्मता स्थिता ॥**

**कारिकाया अयमाशयः-**

**ब्रह्मशब्दात्=** 'येन्नं ब्रह्मोपासते' 'ये प्राणं ब्रह्मोपासते' इति पञ्चकेऽपि ब्रह्मशब्दश्रवणान्न कोशाः ।

**समस्तात्तृत्वादिलिङ्गाच्च=** सर्वात्तृत्व-सर्वचेष्टकत्वादिलिङ्गतः ।

**वाक्यतः=** अन्नमयादिमहिमाप्रतिपादकानि 'अन्नाद्धै प्रजाः प्रजायन्ते' 'प्राणं देवा अनुप्राणन्ति' इत्यादीनि वाक्यानि न विस्मरणमर्हन्ति ।

**पूर्वोत्तरस्मात् मन्त्रस्थब्रह्मप्रकरणादपि=** ब्रह्मस्वरूपनिरूपणप्रकरणत्वात् तथैव वाक्यार्थावगतेश्च ।

**भृगुवल्लीसमाख्यानात् मुक्तगीतावसानकात्=** ब्रह्मभृगुवल्ल्योरेकविषयकत्वाद् अन्नमयादीनां ब्रह्मत्व-प्रतिपादकभृगुवल्लीसमाख्यानात् ।

**स्थानप्रमाणतश्चैव पञ्चानां ब्रह्मता स्थिता=** 'भृगुः पञ्चात्मकं पूर्णं अन्नादिमयमच्युतम् । मुक्तगीतावसानैस्तु स्तुतस्तेन जनार्दनः । सुप्रीतः प्रददौ ज्ञानम्..' इत्यादिस्थानप्रमाणात् ।

**ब्रह्मप्रश्नोत्तरात्=** 'भृगुर्वै वारुणिः', 'अन्नं प्राणं चक्षुः' इत्यादिप्रश्नोत्तरात् ।

**ब्रह्मलक्षणात्=** 'यतो वा इमानि भूतानि' इत्यादि लक्षणोक्तेः ।

**ब्रह्मशब्दतः=** 'अन्नं ब्रह्म', 'प्राणो ब्रह्म', 'मनो ब्रह्म' इत्यादिब्रह्मशब्दसद्भावात् ।

**विज्ञातत्वाच्च तपसा=** 'स तपोऽतप्यत', 'अन्नं ब्रह्मेति व्यजानात्', 'प्राणो ब्रह्मेति व्यजानात्' इति तत्तद्रूपसाक्षात्कारस्य प्रतिपादनात् ।

**मुक्तगम्यत्वतस्तथा=** 'स य एवंविदस्माल्लोकात्प्रेत्य एतमानन्दमयमात्मानमुपसङ्क्रम्य'

**वाधूलीयसमाख्यानात् अनुव्याख्यानिरूपितात्। भृगुवल्ल्युदितस्यान्नप्राणादेर्ब्रह्मता स्थिता।**

वाधूलशाखायाम् अन्नमय-प्राणमय-मनोमय-विज्ञानमय-चक्षुर्मय-श्रोत्रमय-वाङ्मय-आनन्दमयशब्दैः अष्टरूपं ब्रह्म प्रतिपादितम् ।

सुधा-चन्द्रिकोक्तरीत्या आनन्दमयाधिकरणे अन्नमयादिशब्दाः नारायणादिभगवद्रूपवाचका इत्येव सिद्धान्तपद्धतिः ।

**अन्तिमप्राणाधिकरणविमर्शः**

माध्वभाष्ये अन्तिमप्राणाधिकरणे 'प्राणस्तथाऽनुगमात्', 'न वक्तुरात्मोपदेशादिति चेत् अध्यात्मसम्बन्धभूमा ह्यस्मिन्', 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्', 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इति चत्वारि सूत्राणि भवन्ति । लोकतोऽन्यत्र प्रसिद्धप्राणनाम्नः विष्णौ समन्वयः विधीयते। 'तद्वै त्वम्' इति तैत्तिरीयारण्यके श्रुतः 'तावा एताः' इति ऐतरेये श्रुतश्च प्राणः विष्णुरेव । ब्रह्मशब्दसर्वदेवोपास्यत्वसर्ववेदोक्तत्वादिलिङ्गैः । 'प्राणो वाऽहमस्मि ऋषे' (ऐ.आ. २.२.३) इत्यादिव्यपदेशस्तु बह्वध्यात्मसम्बन्धमनुसृत्य प्रवृत्तः। 'अहं मनुरभवं सूर्यश्च' इत्याद्यभेदव्यपदेशोऽन्तर्यामिविवक्षया प्रवृत्तः । नहि प्रवक्तेन्द्रः श्रोता विश्वामित्रो वा मन्वादिभिरभेदं यथाश्रुतं मनुते। अत एवात्र शास्त्रशब्दोऽन्तर्यामिवाची। अत्र श्रीमद्भागवतं प्रमाणम्- **'संविच्छास्त्रं परं पदम्'** इति । अत्र शास्त्रपदम् अन्तर्यामिपरतया भगवता व्यासेनानुशिष्टम् । एवं चेन्द्रः 'अहं मनुरभवम्' इत्यादिषु अन्तर्यामिणं वामदेवमनुसूर्यादिगतम् ब्रह्मैवोपदिशति । अयमधिकरणसारार्थः । इतःपरमस्मिन्नधिकरणे शाङ्कर-माध्वभाष्यरीत्या प्रतिसूत्रगा विचारपद्धतिः सङ्क्षेपेण निरूप्यते ।

**प्राणस्तथाऽनुगमात् (१.१.२८)**

**शाङ्करभाष्यरीत्या अर्थः**

कौषीतकिब्राह्मणे प्रतर्दनेन्द्रसंवादे श्रूयते- **'प्राणोऽस्मि प्रज्ञाता'** इत्यादि । अत्र वाय्विन्द्रजीवब्रह्मप्रापकलिङ्गसद्भावात् संशयः । निरवकाशनिर्णायकप्रमाणाभावात् पूर्वपक्षस्त्वनिर्णय एव । सिद्धान्तस्तु- **'प्राणोऽस्मि प्रज्ञाता' 'आनन्दोऽजरोऽमृतः'** इत्याद्युपक्रमोपसंहार-

वचनैः प्राणशब्दवाच्यस्य ब्रह्मण एव च प्रज्ञात्मत्वमानन्दरूपत्वं च सम्भवति । तथैव श्रुतावभिहितं चेति नात्र प्राणो देवता जीवो वा इति निरूपितः ।

**माध्वभाष्यरीत्या सूत्रार्थः**

**'ता वा एता शीर्षन् श्रियः श्रिता चक्षुः श्रोत्रं मनो वाक् प्राणः'** इत्यत्र प्राणस्येन्द्रियगणे गणितत्वात् नायं विष्णुरिति प्राप्ते सिद्धान्तितम्- **प्राणस्तथेति** ॥

**'स एषोऽसुः स एष प्राणः तं देवा भूतिरित्युपासाञ्चक्रिरे' 'ता वा एताः सर्वा ऋचः सर्वे वेदाः ..... प्राण ऋच इत्येव विद्यात्'** इत्यादौ सर्वदेवोपास्यत्व - सर्ववेदप्रतिपाद्यत्वाद्युक्तेः नायं वाय्वादिः किन्तु विष्णुरेव इति ।

**न वक्तुरात्मोपदेशात् (१.१.२९)**

**शाङ्करभाष्यरीत्या अर्थः**

**'प्राणोऽस्मि प्रज्ञात्मा'** इति इन्द्रेण आत्मनः प्राणत्वेनोपदेशात् ब्रह्मण्यसम्भाव्यमानत्वाष्ट्रवधादि-धर्माणामुक्तेः इन्द्र एव प्राणशब्दवाच्यः न प्राण इति पूर्वपक्षिते, **'यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः...... स एष प्राण एव प्रज्ञानन्दोऽजरोऽमृतः'** इति अध्यात्म (परमात्म) सम्बन्धबाहुल्यस्यैतदध्याये दृश्यमानत्वेन ब्रह्मोपदेश एवायं न इन्द्रोपदेश इति सिद्धान्तितम् ।

**माध्वभाष्यरीत्या अर्थः**

'तमिन्द्र उवाच- प्रियं मे धामोपगा वरं ते ददामि' । इति होवाच- त्वामेव जानीयामिति । तमिन्द्र उवाच- **'प्राणो वा अहमस्मि ऋषे'** इति । बृहतीसहस्रवक्तुरिन्द्रस्य प्राणतया आत्मोपदेशात् इन्द्र एवायं प्राणः न विष्णुरिति प्राप्ते सिद्धान्तितम् - **न वक्तुरिति** ॥

नात्र इन्द्रेण आत्मनः प्राणतया व्यपदेशः कृतः । किन्तु इन्द्रगततेजोविशेषं दृष्ट्वा अत्र प्राणाविष्टो हरिरेव विशेषतः सन्निहित इति सम्भावयतो विश्वामित्रस्य **'त्वामेव विजानीयाम्'** इति स्वरूपविषयक आद्यः प्रश्नः । यद्यत्र विष्णुरेव विद्यते तदा तत्स्वरूपविशेषविजिज्ञासया द्वितीयः प्रश्नः । ततश्चेन्द्रेण मयि विद्यमानः अहंशब्दवाच्यः मदन्तर्यामि नित्यास्मितामानादस्मिशब्दवाच्यश्च प्राणो विष्णु-रेव । **'प्राणस्त्वं प्राणः सर्वाणि भूतानि'** इति स एव सर्वगत इत्युच्यते । न चैतदन्यस्य इन्द्रस्य सम्भवति । अन्यथा 'त्वामेव जानीयाम्' इति ज्ञातपूर्वेन्द्रस्य मुनेः प्रश्नस्यैवासम्भवः ।

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् (१.१.३०)

### शाङ्करभाष्यरीत्या सूत्रार्थः

कथं तर्हि वक्तुरात्मोपदेशः ? इन्द्रो नाम देवताऽऽत्मानं परमात्मत्वेन **'अहमेव परं ब्रह्म'** इत्यार्षेण दर्शनेन यथाशास्त्रं पश्यन्नुपदिशति स्म - **'मामेव विजानीहि'** इति। यथा **'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च'** इति तद्वत्। अत्र शाङ्करभाष्यवचनानि अनुसन्धेयानि-

**'इन्द्रो नाम देवतात्मा स्वमात्मानं परमात्मत्वेनाहमेव परं ब्रह्मेत्यार्षेण दर्शनेन यथाशास्त्रं पश्यन्नुपदिशति स्म - 'मामेव विजानीहि' इति। यथा 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' इति तद्वत्। 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्'** (बृ.१.४.१०) **इति श्रुतेः। यत्पुनरुक्तं 'मामेव विजानीहि' इत्युक्त्वा विग्रहधर्मैरिन्द्र आत्मानं तुष्टाव त्वाष्ट्रवधादिभिरिति, तत्परिहर्तव्यम्.... ''विज्ञेयं तु ब्रह्मैव प्राणोऽस्मि'' इति वक्ष्यमाणं तस्माद् ब्रह्मवाक्यमेतत्'** (ब्र.सू.शां.भा., पृ.७६) इति।

रामानुजभाष्ये शास्त्रदृष्टिर्नाम शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य जीवात्म-वाचिनाम् अहं-त्वमादिशब्दानामपि परमात्मन्येव पर्यवसानं ज्ञात्वा 'मामेव विजानीहि' 'मामुपास्व' इति स्वात्मशरीरकं परमात्मानमेव उपास्यत्वेनोपदिदेशेति वाक्यार्थ उक्तः।

### माध्वभाष्यरीत्या सूत्रार्थः

यद्येवं प्राणशब्दो विष्णुवाची, स एव सर्वगतत्वेनात्र उच्यते, तर्हि मयि प्राण इति प्रयोगः स्यान्न तु **'प्राणोऽहम्'** इति। तत्रोक्तम्- **'शास्त्रदृष्ट्या त्विति'**। शास्त्रमन्तर्यामी। **'संवित् शास्त्रं परं पदम्'** इति भागवतोक्तेः। ततश्च अन्तर्यामिविवक्षयैव श्रौतवचनानि नेयानि। न तु बाधिताऽभेदपरतया।

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् (१.१.३१)

### शाङ्कररीत्या सूत्रार्थः

जीवमुख्यप्राणलिङ्गानामुपदेशात् जीवमुख्यप्राणावेवात्र प्रतीयेते न ब्रह्मेति प्राप्ते सिद्धान्तितम्- **जीवेति**॥ एवं सति जीवोपासना-मुख्योपासना-ब्रह्मोपासनेति त्रैविध्यप्राप्तेः उपक्रमाद्यनानुगुण्यात् ब्रह्मपरलिङ्गानां निरवकाशत्वाच्च प्राणो ब्रह्मैव।

**माध्वभाष्यरीत्या अर्थः**

**'एष इमं लोकमभ्यार्चत्'** इत्युपक्रम्य **'शतं वर्षाण्यभ्यार्चत् तस्मात् शतं वर्षाणि पुरुषायुषो भवन्ति'** इति शतायुष्ट्वादिजीवलिङ्गश्रवणात्, प्राणस्येन्द्रियैः कलहश्रवण-प्राणसंवादादि-लिङ्गैश्चात्रोक्तौ जीवप्राणावेव न विष्णुरिति प्राप्ते, नायं प्राणो जीवादिः किन्तु विष्णुरेव । लिङ्गानां तदन्तर्यामिभगवद्विषयत्वोपपत्तेः इति सिद्धान्तः कृतः ।

**अद्वैतभाष्ये अनुपपत्तयः**

शाङ्करभाष्यव्याख्यानेषु क्वापि सूत्रकारः नाद्वैतं कण्ठत उपपादयतीत्याशङ्क्य कण्ठरवेणाद्वैत-प्रतिपादकं सूत्रमिति 'शास्त्रदृष्ट्या तूपदेशः' इति सूत्रमुपस्थापितम् । आदिपदेन चतुर्थाध्याय-गतं 'आत्मेति तूपगच्छन्ति', 'अविभागेन दृष्टत्वात्' इति सूत्रद्वयम् अद्वैतप्रतिपादकमित्युक्तम् । अत्र विदाङ्कुर्वन्तु सूरयः- स हि शास्त्रार्थः भवति, यः शास्त्रेषु सर्वत्र प्रतिपादितो भवति । एवमेव स हि पादार्थः भवति, यः समग्रेष्वपि पादेषु कण्ठरवेण प्रतिपादितः । एवमधिकरणेऽपि विज्ञेयम् । प्रकृते यद्यप्यद्वैतिनः त्रीणि सूत्राणि कण्ठरवेणाद्वैतप्रतिपादकानि निरवकाशानि च । एतदनुरोधेन सर्वाण्यपि सूत्राणि अद्वैतपराणीति प्रसाधयितुं प्रयतन्ते । यदि अद्वैत एव शास्त्रार्थः स्यात् तदेव कण्ठरवेण सूत्रकारेण प्रतिपाद्यं प्रत्यधिकरणं च प्रतिपादनीयम् । अपाकरणीयं च द्वैतम् । किमर्थं सूत्रकारः प्रथमाध्याये प्रथमपादे 'शास्त्रदृष्ट्या तु' इत्यत्र कण्ठरवेणाद्वैतं प्रतिपाद्य चतुर्थाध्यायपर्यन्तं विसस्मार ? इति ।

चत्वारि 'अहं ब्रह्मास्मि' इत्यादीनि वेदवचनानि स्फुटमद्वैतं प्रतिपादयन्ति । तदानुगुण्येन च सर्वाण्यपि वेदवचांसि व्याख्येयानि । एवं त्रीणि सूत्राणि कण्ठत अद्वैताभिधायीनि । अन्यानि सर्वाणि सूत्राणि भेदपराण्यपि अभेदपरतया योजनीयानीति महदिदं कौशलम् अद्वैतव्याख्यातॄणाम् । यो हि शास्त्रार्थः भवति स हि सर्वत्र क्रियासमभिव्याहारेण प्रतिपादनीयः । सर्वाण्यपि वेदवचनानि सगुणं साकारं ब्रह्मैव प्रतिपादयन्तीति तदध्येतॄणां निश्चप्रचम् । 'सर्वधर्मोपपत्तेश्च' 'अदृश्यत्वादि-गुणकः धर्मोक्तेः' 'अन्तर उपपत्तेः' 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्' इत्यादीनि सूत्राणि स्फुटं ब्रह्मणि गुणाभिधायकानि प्रतीयन्ते । अथापि निरवकाशानां वेदवचसां ब्रह्मसूत्राणां च सावकाशवेदवचोभिः सूत्रैश्च अन्यथाव्याख्यानं विदुषां नैव शोभते । सर्वत्र वेदोपनिषत्सु सगुणब्रह्मणः

प्रतिपादनेऽपि, मायावच्छिन्नं तद् ब्रह्म, तत्र शास्त्रतात्पर्यं नास्तीति वचनमतीवासङ्गतम् । प्रसङ्गाद् अयं विषय उपस्थापितः । प्रधानविषयस्तु (ब्रह्मनैर्गुण्यादिवादः) कुत्रचिदेव निबद्ध इति तु हासनिदानम् । तदुक्तं टीकाकृद्भिः- 'सार्थादपि तस्करा बहवः' इति ।

१. यद्यप्यत्राधिकरणे 'शास्त्रदृष्ट्या तु' इति सूत्रस्यैवाद्वैतपरत्वं शाङ्करे उपवर्णितम् । पूर्वोत्तरसूत्रयोर्भेदपरत्वेनैव तैरपि व्याख्यानात् एकस्य सूत्रस्याभेदपरतया व्याख्याने पूर्वोत्तरविरोधः स्फुटः ।

२. सर्वश्रुतिस्मृत्यादीनां भेदावेदकत्वेन प्रतनसूत्रस्यास्याभेदपरतया व्याख्याने सर्वप्रमाणविरोधः।

३. **'गर्भे नु सन् अन्वेषामवेदमहं देवानां जनिमानि विश्वा'** (ऋ.४.३.६) इत्यादि-मन्त्रपर्यालोचने गर्भ एव भगवत्प्रसादेन इन्द्रादिदेवताविषयकजन्मादि, नारायणाद् भवतीति ज्ञानं वामदेवस्यासीदिति विज्ञायते । एवं गर्भस्थस्यापि मम विष्णुप्रसादेन न विशेषतः दुःखमभूत् इत्याद्युक्त्या तस्य देवताजन्मकारणीभूते हरौ भक्तिः देवतादिषु तन्नियम्यत्वादिज्ञानं स्वस्य तयोर्भेदज्ञानमासीदिति ज्ञायते । एवमेव विद्यारण्यभाष्येऽपि व्याख्यातम् । ततश्च वामदेवस्याभेद-दृष्ट्यभावात् वामदेववत् इन्द्रोऽप्यभेददृष्ट्योपदिदेश इति कथनं न शोभते ।

४. 'अहं मनुरभवं सूर्यश्च' इत्यादौ विशिष्टैर्मन्वादिभिरैक्यासम्भवेन तादृशज्ञानोदये तस्य भ्रमत्वापत्त्या वामदेवस्याज्ञानित्वप्राप्तेः । न हि ज्ञानिनां भ्रमो दृष्टः । अहं मन्वादिपदानां चिन्मात्रे लक्षणामङ्गीकृत्य चित् चिदभवम् इति अखण्डबोधो भवतीत्यपि वक्तुं न शक्यते । लक्षणाश्रयणे अनवस्थादिदोषाणामपरिहार्यत्वात् ।

५. किञ्च चित् चिदभवम् इति लाक्षणिकार्थस्य तत्त्वमस्यादिस्थल इव शुद्धचितोर्भेदाप्रसक्त्या तदभेदबोधनस्य प्रकृतानुपयुक्तत्वादसङ्गतत्वमेव ।

६. किञ्चाद्वैतिमते सर्वस्य ब्रह्माऽज्ञानकल्पितत्वेन वामदेवस्य ब्रह्मैक्यज्ञाने जाते सर्वस्य मिथ्यात्वावगमेन **'अहं भूमिमददामार्याय अहं वृष्टिं दाशुषे'** इत्याद्युक्तदिशा आर्याय मनवे भूमिदानं, यज्ञकर्त्रे यजमानाय वृष्टिदानम्, उदकानां सर्वदेशप्रापणं शम्बरपुरनाशनञ्च सर्वमनुपपन्नं स्यात् । ब्रह्मज्ञानित्वे चास्य तदैव द्वितीयाभावज्ञानाद् उपदेशानुपपत्तिश्च ।

**शास्त्रदृष्टिर्नाम अन्तर्यामिदृष्टिः**

तथा च वामदेवः ब्रह्माभेददृष्ट्या **'अहं मनुरभवम्'** इत्याद्युक्तवान् इत्यर्थकथनस्यानु-पपन्नत्वात् शास्त्रदृष्टिर्नामान्तर्यामिदृष्टिरेवेति वक्तव्यम् । एवं च यथा वामदेवः अन्तर्यामिपरमात्मनः दृष्ट्या अहं मनुरभवं सूर्यश्चेत्युक्तवान् तथैवेन्द्रः मां मदन्तर्यामिणम् आत्मानं जानीहीत्यभिप्रायेण मामेव विजानीहि इत्युक्तवान् इत्यर्थस्यैव प्रमितत्वं भवति ।

**'अहं ब्रह्मास्मि' इति ब्रह्मणैवानुसन्धानात् नाभेदकथा**

किञ्च बृहदारण्योकपनिषदि 'अहं ब्रह्मास्मि' इति श्रुतौ अहं पदेन कथमपि न जीवपरिग्रहः कर्तुं शक्यते । किन्तु **'तदात्मानमेवावैत् अहं ब्रह्मास्मि'** इति वाक्यानुगुण्येन यस्मात् ब्रह्मैव स्वात्मानं ब्रह्मशब्दवाच्यम् अहं पदवाच्यं च व्यजानदिति वाक्यार्थः स्वरसत एव प्रतीयते । अतोऽत्र अहं शब्दः जीवान्तर्यामिणि ब्रह्मण्येव मुख्यः । स्मृतिश्च अत्र प्रमाणम् -

**सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते ।**
**एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः ॥** इति ।

अपि च 'अहं मनुरभवं सूर्यश्च' इत्यात्रापि विशिष्टैक्यं नोच्यत इति स्फुटमेव । अहं मन्वादिपदैश्च चिन्मात्रलक्षणायाम् उत्तमपुरुषपदप्रयोगानुपपत्तिः भूमिदानाद्यनुपपत्तिश्चापरिहार्या । अतः **'अहंनामा हरिर्नित्यम् अहेयत्वात् प्रकीर्तितः'** इति पुराणवचनानुगुण्येन केनापि हातुमशक्यत्व-रूपप्रवृत्तिनिमित्तमवलम्ब्य विष्णुरेव अहंशब्देनाभिधीयत इति द्रष्टव्यम् ।

एवमिदम् अद्वैतपरतया प्रतीयमानं सूत्रं भेदपरमेवेति आकरग्रन्थेषु स्फुटमुपपादितमिति न विस्तरेण कृत्यं प्रतीमः । विस्तरस्तु प्रातःस्मरणीयैः कर्मन्दिवृन्दाराधितकमनीयचरणैः श्रीमदुत्तरादि-मठाधीशैः **श्रीसत्यध्यानतीर्थश्रीमच्चरणैः** प्रणीते 'भेदपराण्येव खलु ब्रह्मसूत्राणि' इति प्रबन्धे द्रष्टव्यः ।

**भोक्त्रापत्त्यधिकरणम्**

प्राक् ब्रह्मणः सर्वकर्तृत्वमुक्तम् । अभेदश्रुतिः सर्वकर्तृत्वविरोधिनी । श्रुतिः नाभेदपरा इति स्थापनेन श्रुतिसिद्धान्ताविरोध इह प्रतिपाद्यते । इह ब्रह्मणो मुक्ताभेदमात्रे न पूर्वपक्षपर्यवसानमपि

तु अभेदयुक्त्या सर्वकर्तृत्वं नाङ्गीकारार्हमिति चिन्ताऽत्र क्रियते । मुक्तेश्वरयोर्भेदसमर्थनेनेदमधिकरणं फलाध्यायसङ्गतमिति शङ्का तु फलत्वेऽपि युक्तिविरोधेऽन्तर्भावादत्रोक्तेति परिहरणीया ।

अयमत्राधिकरणसारः । विष्णोर्जगत्कारणत्वे युक्तिविरोधः परिह्रियते । 'परेऽव्यये सर्व एकीभवन्ति' इति श्रुतिः मुक्तौ सर्वेषां जीवानां ब्रह्मणा सह अभेदमभिदधाति । यतस्तयोर्मुक्तावभेदस्तत एव पूर्वमपि अभेदः विद्यत इत्यनुसन्धेयम् । 'न हि अन्यस्य अन्यत्वं युज्यते' इति । एवं पूर्वपक्षिते भगवानाह सूत्रकारः- 'भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्' इति यथा लोके उदक उदकान्तरसेचने मिश्रं भवत्युदकं तद्वत् । नात्रोभयोरभेदः सम्भावयितुमपि शक्यते । वृद्धेर्दर्शनात् । एवञ्च जीवोऽपि मुक्तौ परमात्मना सम्मिलितो भवति नाभिन्नः । 'तादृगेव भवति' इति श्रुतिः तत्सादृश्यमेव प्रतिपादयति नाभेदमिति निश्चप्रचम् ।

अत्र भाष्ये भगवत्पादाचार्यैः 'न ह्यन्यस्य अन्यत्वं युज्यते' इति युक्तिः अभेदसाधकतया (पूर्वपक्षस्थापकतया) उदाहृता । अनुव्याख्याने तु 'नान्यदन्यत्वमापन्नं क्वचिद् दृष्टं कथञ्चन' इति इहभिन्नमुत्तरत्र नाभेदमापन्नं दृश्यत इत्यभेदनिरासपरतया व्याख्याता । तत्कथमिति चेत् अत्र ब्रूमः-

अत्र त्रयः पूर्वपक्षा भवन्ति । 'एकीभवन्ति' इति श्रुत्या ब्रह्मणस्तावन्मुक्ताभेदः प्रतीयते । न च तावतैव ब्रह्मणः सर्वकर्तृत्वं प्रतिषिद्धं भवति । संसारिण इव मुक्तस्य सर्वकर्तृत्वं प्रतिषिद्धं भवति । संसारिणः सर्वकर्तृत्वे विरोध इव मुक्तस्य सर्वकर्तृत्वे प्रत्यक्षादिविरोधाभावात् । पूर्वमसतः मोक्षस्य ज्ञानेनोदय इव पूर्वमसतोऽपि सर्वकर्तृत्वस्य मुक्तौ सम्भवात् । ततश्च जीवाभिन्नस्य ब्रह्मणः सर्वकर्तृत्वं न भवतीति वक्तुं शक्यते ।

असर्वकर्तृत्वेन योऽयं संसारी प्रसिद्धः तदभिन्नत्वात् ब्रह्मणोऽपि न सर्वकर्तृत्वमुपपद्यते । न च श्रुतिः मुक्तजीवस्यैव ब्रह्मभावमभिदधातीति वाच्यम् । 'न ह्यन्यस्यान्यत्वं युज्यत' इति न्यायेन अन्यस्य = संसारे भिन्नस्य मुक्तौ अन्यत्वं = ब्रह्मभावः न युज्यते । न हि क्वापि घटः कालान्तरे पटो भवति । अतः मुक्तौ जीवः परमात्माभिन्नः तर्हि संसारेऽपि तथा । तथा च संसारिण असर्वकर्तृत्वं प्रत्यक्षसिद्धम् । तदभिन्नस्य ब्रह्मणोऽपि तथेति न विष्णोः सर्वकर्तृत्वं युक्तमिति ।

अस्मिन् पक्षे अभूततद्भावार्थकच्विप्रत्ययः कथमुपपाद्यत इति चेत्, प्रतीत्यपेक्षया तदुपपत्तेः । प्राग्विभिन्नतया दृष्टोऽयं जीवः मुक्तौ अभिन्नतया दृश्यत इति 'एकीभवन्ति' इत्युच्यते । एवं च

मुक्तावभेदेन पूर्वमप्यभेदं प्रसाधयितुं 'न ह्यन्यस्यान्यत्वं युज्यते' (मुक्तावभेदेन पूर्वमपि अभेदं प्रसाधयितुं) इति पूर्वपक्षभाष्यं प्रवृत्तम् ।

२. च्विप्रत्ययस्वारस्यात् पूर्वं भेदः मुक्तौ त्वभेद इति द्वितीयः पक्षः । 'न ह्यन्यस्य' इति युक्तिस्तु च्विप्रत्ययश्रुतिबाधिता । एवं च जीवब्रह्मणोरभेदात् न ब्रह्मणः वास्तवं जगत्कारणत्वं युक्तम् इति द्वितीयः पक्षः ।

एतत्पक्षदूषणाय पूर्वं भेदस्य सिद्धत्वेन मुक्तावपि स एवाङ्गीकार्य इति साधयितुं 'नान्यदन्यत्वमापन्नं क्वचिद् क्वचिद् दृष्टं कथञ्चन' इति अनुव्याख्यानं प्रवृत्तम् । यतो लोके अन्यत् वस्तु अन्यत्वम् वस्त्वन्तरेणाभेदमापन्नं क्वचित् न दृष्टम् । अतस्तद्दृष्टान्तेन जीवस्य मुक्तावपि न ब्रह्मभावो भवतीति ।

३. तृतीयस्तु पूर्वं भेदाभेदौ । मुक्तौ तु केवलाभेदः । एवं च च्विप्रत्ययो युक्तः । पूर्वं केवलाभेदाभावात् । 'न ह्यन्यस्य' इति युक्तिविरोधोऽपि न । पूर्यमप्यभेदस्य सत्वात् । एतं वा पक्षमाश्रित्य भाष्यानुव्याख्याने प्रवृत्ते । तत्र भाष्ये च्विप्रत्ययेन पूर्वं भेदस्य सिद्धत्वात् पूर्वपक्षानुपयुक्तत्वाच्च अभेद एव साधितः । अनुव्याख्यानेऽपि पूर्वं भिन्नाभिन्नस्यापि पश्चात् केवलाभेदो नास्तीति भावेन 'नान्यदन्यत्वम्' इत्युक्तम् ॥

उक्तं पक्षत्रयमपि मुक्तावभेदसापेक्षम् । स एवासिद्धः 'एकीभवन्ति' इति श्रुतेः भाष्ये 'यथोदकं तूदके सिक्तं' इति श्रुत्यन्तरादिविरोधोक्तेः ।

न्यायविवरणे 'निरञ्जनः परमं साम्यम्' इति पूर्ववाक्यविरोधस्य, 'परात्परं पुरुषमुपैति' इति उत्तरवाक्यस्य च विरोधोक्तेः । परमसाम्यम् अभेदविरोधीति स्फुटम् । एवं 'पुरुषमुपैति' इति परमपुरुषमिलनमपि अभेदविरोध्येव ।

अभेदपरत्वे 'परेण' 'अव्ययेन' इति तृतीया स्यान्न सप्तमी ।

'सायं गोष्ठे गाव एकीभवन्ति' इत्यादाविव एकस्थानस्थितत्वनिमित्तेन ऐक्यव्यपदेशोपपत्तेः ।

'कर्माणि विज्ञानमयश्च आत्मा' इत्यत्र कर्मणां ब्रह्मैक्यस्य बाधितत्वाद् अभेदप्रतिपादनम् अयुक्तम् ।

'रथ्याजलं गङ्गाजलेनैक्यमापन्नम्' 'गोष्ठे गाव एकीभूताः' (स्थलद्वये स्थानैक्यपरा), 'एकीभूता सेना' (मत्यैक्यपरा) इत्यादाविवात्रापि ऐक्यवाक् भेदाविरोधिनी । तदुक्तम्-

'रथ्याजलं विष्णुपदीजलेनैकत्वमागतम् ।
इतस्ततो गता गावः सायमेकत्वमागताः ।
एकीभूता तु सा सेना पाण्डवानभ्यवर्तत ।
इत्यादिवद् भवदेकीभवन्तीत्यादिवेदवाक् ॥' इति ।

न च जलस्य जलान्तरमेलनेनैक्यं क्वापि दृष्टम् ।

'तादृगेव' इति भाष्योक्तसावधारणश्रुत्या 'यतो वृद्धिः प्रदृश्यते' इति सयुक्तिकस्मृत्या च विरोधात् नाभेदः वक्तुं शक्यते ॥

'मानभेदात् स्पर्शरसपूर्वभेदाच्च नीरयोः ।
मेलनेऽप्यभिधा नास्ति यथैव क्षीरनीरयोः ॥'

इत्युक्तेः प्रत्यक्षानुभवाच्च भेद एव सिद्धः । अन्यथा हंसेन विविच्यमानयोः क्षीरनीरयोरप्यभेदः स्यात् ।

द्रुतस्वर्णताम्रयोर्मेलनेनाभेदे तत्कार्ये पणादौ केवलस्वर्णादिकार्यपणान् मूल्यादिभेदश्च न स्यात् ।

'नदीपाथःपरमाणूनां समुद्रपाथःपरमाणुभ्यः पूर्वावस्थितेभ्यो भेद एव नाभेद' इति भामत्युक्तेः नदीसमुद्राभेदः निरस्तः । तदुक्तं व्यासतीर्थश्रीमच्चरणैः-

'माषादिवच्च राश्यादौ सभादौ ब्राह्मणादिवत् ।
जले जलान्तरस्यापि संश्लेषो न त्वभिन्नता ॥' इति ।

द्रवद्रव्यत्वेनान्योन्यं व्यामिश्रणात्तु भेदाप्रतीतिः । तस्मान्न जीवेशयोः कदाऽप्यभेदः ॥

## कर्तृत्वाधिकरणम्

द्वैतसिद्धान्तरीत्या कर्तृत्वाधिकरणविचारप्रणालीह प्रकाश्यते । अत्र दश सूत्राणि सन्ति ।

१. 'नान्यः कर्ता' 'स हि सर्वस्य कर्ता' ' न कर्तृत्वं न कर्माणि' 'न ऋते त्वत्क्रियते'

इत्यादिश्रुतेः न जीवः कर्ता । न च 'यत्कर्म कुरुते तदभिसम्पद्यते' इति फलसम्पत्तिश्रवणात् जीवोऽपि कर्तेति वाच्यम् । 'नान्यः कर्ता' इति श्रुतिः कर्तृत्वसामान्याभावं प्रतिपादयन्ती सयुक्तिका अत एव प्रबला (निरवकाशा) जीवस्य कर्तृत्वं प्रतिषेधयति । अत्रोक्तं भगवता-

**'कर्ता शास्त्रार्थवत्त्वात्'** (ब्र.सू. २.३.३१) इति

'स्वाध्यायोऽध्येतव्यः' 'तद् विजिज्ञासस्व' 'यत्कर्म कुरुते तदभिसम्पद्यते' इत्यादिश्रुतेः जडेश्वराविषयकत्वेन जीवविषयकत्वाभावे शास्त्रस्यारण्यरोदनायमानतापत्तेः जीवः कर्ता विध्यादिविषयश्च भवति ।

'यद् विद्यमानमपि परतन्त्रकार्योन्मुखं तदसदेव' इति सौधन्यायेन अकर्तृकत्वोक्तिः स्वातन्त्र्यप्रतिषेधपरेति विज्ञेया ।

२. न चात्रोक्तं कर्तृत्वं संसारदशायामेवोपलभ्यमानमाविद्यकमिति वाच्यम् । 'स तत्र पर्येति' इति मुक्तावपि प्रतीतेः । स्वाभाविकस्यैव मुक्तौ स्थितेः । 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति परप्राप्तेः स्वरूपेण स्थितेश्चात्र प्रतिपादनान्मुक्तप्रकरणमेवेदमिति विज्ञायते । तदुक्तम्- **'विहारोपदेशात्'** (ब्र.सू. २.३.३३) इति ।

३. मोक्षाद्यर्थं साधनाद्युपादानप्रतीतेश्च प्रत्यक्षसिद्धमेव कर्तृत्वम् ।

४. 'आत्मानमेव लोकमुपासीत' इति श्रुतिः जीवस्य, सर्वाधारत्वेन भगवदुपासनां विधत्ते । अतोऽपि जीवः कर्तेति विज्ञायते ।

'इतरव्यपदेशात्' इत्यादौ जीवस्य कर्तृत्वनिराकरणं कर्मण्यस्वातन्त्र्यज्ञापनाय विहितम् ।

**टीका-चन्द्रिकादिग्रन्थगा विचारपद्धतिः**

५.१. पराधीनकर्तृत्वं जीवस्याभ्युपगतम् । तत्र किमीश्वरः बहिरेव स्थित्वा जीवप्रेरकः, आहोस्विदन्तःस्थित्वा ? नाद्यः । 'आत्मानमन्तरो यमयति' इति श्रुतिविरोधात् । द्वितीये दारुयोषावत् सर्वथा पराधीनस्य जीवस्य न विध्यादिविषयत्वमपि तु भगवत एव ।

अत्रोच्यते- यद्यपि भगवान् स्वतन्त्रः सर्वकर्ता च । तथापि जीवः स्वभावत एव ज्ञानानन्दादि-

गुणकः । तथा च जीवस्य क्रियायां स्वातन्त्र्याभावेऽपि ईशायत्तज्ञानेच्छादिभिः कर्मकरणात्, तत्र स्वीयज्ञानेच्छादीनामपि सत्त्वात् ज्ञानेच्छाकृतिमत्वरूपकर्तृत्वस्य तस्मिन् विद्यमानत्वेन भवति स विध्यादिविषयः । एवं च विध्यादिविषयत्वं प्रति कर्तृत्वमेव तन्त्रं (प्रयोजकं) न स्वतन्त्रकर्तृत्वमिति ।

अत एव न जडतौल्यं जीवस्य । उक्तं च **प्रमेयदीपिकायाम्- 'जडं हि परकृतेन नोदनादिना क्रियावद् भवति । न त्वागन्तुककारणमन्तरेण स्वेच्छया । जीवस्तु अनादिसिद्धया परमेश्वरप्रसादायत्तया क्रियाशक्त्या कर्ता'** इत्युच्यत इति । तदुक्तं गीताभाष्ये-

**'स्वतन्त्रकर्तृत्वाभावेऽपि जीवस्य विधिद्वारा ईश्वरप्रसादादथ इच्छोत्पत्त्या उक्तकारणैः अधिष्ठानादिभिः कर्मद्वारा पुरुषार्थो भवतीति न प्रवृत्तिविधिवैयर्थ्यम्'** इति ।

५.२. जीवे विद्यमानाः गुणाः (ज्ञानेच्छादयः) यदि सर्वात्मना पराधीनाः, यदि न प्रवृत्तौ जीवः स्वतन्त्रः तर्हि अकर्तैव स भवति । यथा प्रवाहनिपतितो जन्तुः प्रबलोर्मिबाधितो यत्र क्वचन प्रसरति बलान्निपतति वा, न तस्यास्ति गमने स्वातन्त्र्यं तथैव जीवस्येति न स विध्यादिविषयः ।

अत्रोच्यते- मयेदं फलं प्राप्यमिति जीवे फलेच्छामुत्पाद्यैव ईश्वरः जीवं विहिते प्रतिषिद्धे वा प्रेरयतीति फलेच्छया जीवेन तत्र प्रवृत्तेः भवति स विध्यादिविषयः ।

एवं च ईशोत्पादितज्ञानेच्छादिभिः स्वीयज्ञानेच्छादिभिश्च कर्म कुर्वतः जीवस्य फलभाक्त्वं विध्यादिविषयत्वं चोपपन्नमेव ।

५.३. जीवस्य कर्तृत्वेऽपि एकस्यां क्रियायाम् ईश्वरस्यापि कर्तृत्वेन स्वमात्रकर्तृत्वं नास्तीति कुतः विध्यादिविषयत्वम् ? (उभयोर्विध्यादिविषयत्वं भवतु, उभयोर्मा वा)

अत्र ब्रूमः- रथाकर्षणादौ सत्रयागादौ चानेककर्तृसद्भावेऽपि स्वकर्तृत्वमात्रेण जीवस्य विध्यादिविषयत्वोपपत्तिः ।

५.४. स्वेच्छामात्राधीनप्रवृत्त्यभावात् न जीवः विध्यादिविषय इत्यपि न चारु । कस्यापि क्वापि स्वेच्छामात्राधीनप्रवृत्त्यभावात् । अदृष्ट-काल-कर्मादिभिः ईशेच्छया च जीवप्रवृत्तिरिति तत्र जीवेच्छादेरपि अनुभूयमानत्वेन विध्यादिविषयत्वमुपपन्नम् ।

५.५. ईशप्रेरणादेव जीवे ज्ञानेच्छादय उत्पद्यन्ते न स्वातन्त्र्येण । अतः **विष्टिगृहीतपुरुषस्येव** प्रवाहनिपतितपुरुषस्येव च न विध्यादिविषयत्वमिति चेत् ।

उच्यते- पित्राद्युत्पादितेच्छादिमतोऽपि माणवकस्य सन्ध्यादौ प्रवृत्तिदर्शनात् स्वेच्छामात्राधीनत्वाभावेऽपि स्वेच्छाधीनत्वमात्रेण विध्यादिविषयत्वमनुभूयते ।

६. नाहं प्रयत्ने स्वतन्त्रः यदि हरिः प्रयत्नं कारयिष्यति तर्हि कर्म करोमि । एवं च 'प्रयत्नो विधेयः' इति वचनमनर्थकम् इति ।

अत्र ब्रूमः- सर्वत्र फलं प्रति त्रितयं कारणमुच्यते- जीवयोग्यता, हरेरिच्छा, जैवप्रयत्नश्चेति । तथा च न केवलमीश्वरेच्छया फलं भवति । अपि तु जैवयोग्यतामवलम्ब्यैव तं प्रेरयतीति तत्र योग्यता आवश्यकी । नापि योग्यताऽस्तीत्येतावता फलं भवति । अपि तु यत्नोऽप्यावश्यकः । न गृहमध्ये कवाटनिक्षिप्तम् आम्रबीजमङ्कुरजनकं भवति । तत्राङ्कुरजननयोग्यतासत्त्वेऽपि तदभिव्यञ्जनार्थम् अन्या सामग्र्य अबादयोऽपेक्षिता एव । एवं च केवलेश्वरेच्छया सर्वं भवतु इति रिक्तं वचः । एवं च विध्यादिविषयत्वं प्रति पराधीनकर्तृत्वमेव प्रयोजकम् । तदस्ति जीव इति जीवः भवति कर्ता शास्त्रं च सार्थकमिति सर्वमनवद्यम् । तदुक्तं भगवत्पादाचार्यैः-

'प्रत्यक्षमेतत् पुरुषस्य कर्म तेनानुमेया प्रेरणा केशवस्य ।
स्वकर्म कृत्वा विहितं हि विष्णुना तत्प्रेरणेत्येव बुधोऽनुमन्यते ॥' (म.ता.नि. २२.७८)

भगवत्पादीयं वचनमिदं जीवस्य कर्तृत्वं स्फुटं प्रज्ञापयति ।

**अद्वैतरीत्या कर्तृत्वाधिकरणसारः**

तात्पर्यचन्द्रिकोक्तदिशा कर्तृत्वाधिकरणविमर्शः अत्र चिकीर्षितः । प्रथमतः अद्वैत-सिद्धान्तानुरोधेन अधिकरणरचनाक्रमः प्रदर्श्यते । अद्वैतनयानुरोधेन सप्तसूत्राणि - **कर्ता शास्त्रार्थवत्त्वात् (२.३.१.४.३३) विहारोपदेशात् ३४, उपादानात् ३५, व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ३६, उपलब्धिवदनियमः ३७,** शक्तिविपर्ययात् ३८, **समाध्यभावाच्च** ३९ इति ।

जीवस्य कर्तृत्व एव 'जुहुयाद्' 'दद्यात्' इत्यादिशास्त्रमर्थवद्भवतीति अङ्गीकार्यमेव कर्तृत्वम् । शास्त्रफलं प्रयोक्तरि (अनुष्ठातरि) तल्लक्षणत्वात् (प्रयोक्तृफलसाधनतालक्षणत्वात्) इति

जैमिन्युक्तेश्च । विहारोपदेशात्, 'प्राणान् गृहीत्वा' इति करणानामुपादानप्रतीतेश्च जीव एव कर्ता । जीवस्य कर्तृत्वं हि 'विज्ञानं यज्ञं तनुते' इति प्रसिद्धम् । न चात्र बुद्धिर्निर्दिष्टा । अन्यथा विज्ञानेनेति निर्देशविपर्ययः स्यात् । करणत्वेन क्लृप्तशक्तिकायाः बुद्धेः कर्तृशक्तिर्न सम्भावयितुं शक्या । कुठारादावदर्शनात् ॥

न च इष्टानुपलब्ध्यनिष्टोपलब्धिदर्शनात् न जीवः स्वतन्त्रः । तस्मान्न कर्तेति शङ्क्यम् । करणादीनि कर्ता उपयुञ्जन्नेव कर्म करोति । कचिदिष्टमभिप्रेप्सुरदृष्टवशात्तत्साधनविभ्रमेणानिष्टोपायं व्यापारयन्ननिष्टं लभते । न चैतावता स्वातन्त्र्याभावेऽपि कर्तृत्वं नास्तीत्यापन्नम् ।

यदि बुद्धिः कर्त्री तर्हि करणशक्तिर्हीयेत कर्तृशक्तिश्चापद्यते । बुद्धेः कर्तृशक्तौ तस्या एव अहंप्रत्ययविषयत्वमभ्युपेयं स्यात् । किञ्च 'आत्मा वारे द्रष्टव्यः' इत्यादौ य आत्मप्रतिपत्तिप्रयोजनः समाधिरुपदिष्टः वेदान्तेषु स च आत्मनोऽकर्तृत्वे अनुपपन्न एव भवति ।

तदुक्तम्— **जीवोऽकर्ताऽथवा कर्ता धियः कर्तृत्वसम्भवात् ।**
**जीवकर्तृतया किं स्यादित्याहुः साङ्ख्यमानिनः ॥ २८ ॥**

**करणत्वान्न धीः कर्त्री यागश्रवणलौकिकाः ।**
**व्यापारा न विना कर्त्रा तस्माज्जीवस्य कर्तृता ॥ २९ ॥**

(वैयासिकन्यायमाला - २.३.श्लो.२८,२९)

**यथा च तक्षोभयथा**

अभ्युपगतमात्मनः कर्तृत्वम् । न चैतत् स्वाभाविकम् । तथात्वे चानिर्मोक्षप्रसङ्गः । 'ध्यायतीव' 'लेलायतीव' 'नान्योतोऽस्ति द्रष्टा' इत्यादौ श्रुतिर्निर्विशेषचैतन्यावस्थानमेव मुक्तिमभिदधाति । यथा तक्षा वास्यादिकरणहस्तः कर्ता दुःखी च भवति, तद्विहीनश्चाकर्ता सुखी च भवति गृहे, तद्वत् जागरितस्वप्नयोरविद्योपस्थापितद्वैतसम्पृक्त आत्मा कर्ता दुःखी च भवति । तद्विहीनश्च सम्प्रसादोऽकर्ता सुखी च भवति । एवमेव मुक्तावपि विद्योदयेनाकर्ता सुखी तिष्ठति । तस्मान्न कर्तृत्वं स्वाभाविकम् ।

तदुक्तम्— **कर्तृत्वं वास्तवं किं वा कल्पितं वास्तवं भवेत् ।**
**यजेतेत्यादिशास्त्रेण सिद्धस्याबाधितत्वतः ॥ ३० ॥**

**असङ्गो हीति तद्बाधात्स्फटिके रक्ततेव तत् ।**
**अध्यस्तं धीचक्षुरादिकरणोपाधिसन्निधेः ॥ ३१ ॥**

(वैयासिकन्यायमाला - २.३.श्लो.३०,३१)

**परात्तु तच्छ्रुतेः**

रागात् लाके कृष्यादौ प्रवृत्तिर्दृष्टा । तस्माज्जीवस्य तावेव रागद्वेषौ प्रवर्तकौ भवताम् । ईश्वरस्य कारयितृत्वे तस्य वैषम्यादि प्रसज्यत इति जीव एव कर्तेति प्राप्ते निराचकार भगवान् पाराशर्यः- 'परात्तु तच्छ्रुतेः' इति । 'एष ह्येव साधु कर्म कारयति' इति श्रुत्या ईश्वरस्य कारयितृत्वमविद्यावस्थायामभ्युपेयमेवेति ।

न चैवमीश्वरस्य वैषम्यादीत्यत आह-

**'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैय्यर्थ्यादिभ्य इति ।**

अनादिकर्मप्रयत्नाद्यपेक्ष्य एवेश्वरः फलं ददातीति न तस्य वैषम्यादि ।

**रामानुजसिद्धान्तानुरोधेन कर्त्रधिकरणम्**

रामानुजीये तु कर्तृधिकरणं सूत्रसप्तकोपेतम् । ते हि 'उपादानात्' 'विहारोपदेशात् इति मिलित्वैकं सूत्रमामनन्ति ।

ततः परायत्ताधिकरणम् (६ अधिकरण) तत्र शाङ्कराणामिव द्वे सूत्रे विद्येते । अयमधिकरणसारः विशिष्टाद्वैतनये -

आत्मनो ह्यकर्तृत्वं गुणानां च कर्तृत्वमाध्यात्मशास्त्रे श्रूयते - 'न जायते म्रियते' इति । 'प्रकृतेः क्रियमाणानि' 'नान्यं गुणेभ्यः कर्तारं' ...... इति च । अतः पुरुषस्य केवलं भोक्तृत्वमेव न कर्तृत्वमिति । तत्र प्रतिविहितं - 'कर्ता शास्त्रार्थवत्त्वात्' इति । आत्मैव कर्ता न गुणः । 'यजेत स्वर्गकामः' इत्यादिशास्त्राणि भोक्तारमेव कर्तारं प्रतिपादयन्ति । अत एव शास्त्रास्यार्थवत्त्वम् । न चाचेतनस्य प्रधानस्य विधिनिषेधादिकमर्थवत् भवति । तदक्तं जैमिनीये- 'शास्त्रफलं प्रयोक्तरि' इति । आत्मनः कर्तृत्वनिषेधवचनानि तु केवलस्यात्मनः कर्तृत्वप्रतिषेधपराणीति न विरोधगन्धः।

**उपलब्धिवदनियमः**

आत्मनोऽकर्तृत्वे दोष उच्यते । प्रकृतेः कर्तृत्वे तस्याः सर्वपुरुषसाधारण्यात् सर्वाणि कर्माणि सर्वेषां भोगाय स्युः । नैव वा कस्यचित् । साङ्ख्यनये आत्मनां विभुत्वाभ्युपगात् सन्निधानमपि सर्वेषाम-विशिष्टम् ।

**शक्तिविपर्ययात्**

बुद्धेः कर्तृत्वे कर्त्रन्यस्य भोक्तृत्वानुपपत्तेः भोक्तृशक्तिरपि तस्या एव भवेत् । तथा च प्रमितमात्मनः भोक्तृत्वं न स्यात् । ततश्चात्मसद्भावे प्रमाणाभावः साङ्ख्यनाम् आपद्यते । 'पुरुषोऽस्ति भोक्तृभावात्' इति हि तेषामभ्युपगमः ।

**समाध्यभावाच्च**

बुद्धेः कर्तृत्वे मोक्षसाधनसमाधावपि सैव कर्त्रीति वाच्यम् । समाधिश्च प्रकृतेरन्योऽह-मस्मीत्येवमाकार अभ्युपगतः साङ्ख्यैः । न च प्रकृतेरन्योऽस्मीति प्रकृतिः समाधातुमलम् । अतोऽप्यात्मैव कर्ता ।

**यथा च तक्षोभयथा**

आत्मनः कर्तृत्वे सर्वदा कर्तृत्वं न भवति । इच्छायां सत्यां करोति । तदभावे न करोति च । यथा तक्षा वास्यादिकरणसम्पन्नोऽपि इच्छानुगुण्येन करोति तदभावे च न करोति । तथैवात्मापि वागादिकरणसम्पन्नोऽपि यदेच्छति तदा करोति । तदभावे च तदभावः ।

अचेतनायाः बुद्धेः कर्तृत्वे सर्वदा कर्तृत्वं स्यात् ।

**परात्तु तच्छ्रुतेः**

यो हि स्वबुद्ध्या प्रवृत्तिनिवृत्यारम्भकः स एव नियोज्य इति । कर्तृत्वं जीवस्य स्वातन्त्र्येणैवेति पूर्वपक्षिते परात्तु इत्यत्र तु शब्देन ईश्वराधीनमेव कर्तृत्वं जीवस्येत्याह सूत्रकारः । अत एवोक्तम्— 'अन्तः प्रविष्टः शास्ता जनानाम्' इति 'य आत्मानमन्तरो यमयति' 'सर्वस्य चाहं' 'ईश्वरः सर्वभूतानाम्' इति च ।

अत्रेदं रहस्यम्- पराधीनकर्तृत्वेऽपि जीवस्य परमात्मनः स्वतन्त्रकर्तृत्वेन तस्यैव फलभोक्तृत्वं

वैषम्यादिकञ्च दुर्वारम् । जीवस्य कदाचिदपि स्वातन्त्र्यानभ्युपगमे नैषा शङ्का दूरोत्सारिता भवति । अत एव समाधिरियं भविता - प्रथमप्रवृत्तौ जीवः ईश्वरदत्तस्वातन्त्र्येण कर्मणि प्रवर्तते । तदा तु नेश्वरः कर्ता कारयिता वा । अपि तु केवलमनुमन्ता उपेक्षकश्च । द्वितीयादिप्रवृत्तौ तु प्राक्तन-कर्मानुरोधेन फलदातृत्वात् नेश्वरस्य वैषम्यादि । तदुक्तम् -

**आदावीश्वरदत्तयेव पुरुषः स्वातन्त्र्यशक्त्या स्वयं**
**तत्तज्ज्ञानचिकीर्षणप्रयतनान्युत्पादयन् वर्तते ।**
**तत्रोपेक्ष्य ततोऽनुमत्य विदधत् तन्निग्रहानुग्रहौ**
**तत्तत्कर्मफलं प्रयच्छति ततः सर्वस्य पुंसो हरिः ॥** (तत्त्वसारः, २.३.६-पृ.९१) ॥ इति ।

**तत्त्वमार्ताण्डे स्वमतसमर्थनम्** - शास्त्रार्थवत्त्वाय हि जीवस्य कर्तृत्वं कल्प्यम् । तद्यदि प्रथमप्रवृत्तावपि परायत्तं तदा शास्त्रार्थवत्त्वं न सिद्ध्येत् । ईश्वरस्य फलभाक्त्वं च स्यात् । प्रेर्यभृत्यन्यायेन जीवस्य फलान्वयो न स्यात् । प्रथमप्रवृत्तौ जीवस्य स्वातन्त्र्ये ईश्वरस्यौदासीन्ये च न काचिदनुपपत्तिः । इच्छाशक्तिमत्त्वे सति तन्निवारणसामर्थ्यं (स्वातन्त्र्यं) जीवस्य विषान्न-भक्षणादिस्थले दृष्टम् । प्रथमप्रवृत्तावौदासीन्येऽपि ईश्वरस्य न स्वातन्त्र्यभङ्गः करणकलेवरादि-दानात् ।

न च द्वितीयादिप्रवृत्तावपीश्वरस्यौदासीन्यप्रसङ्गः । असन्निहितवस्तुसन्निधापनाय तत्रेश्वर-व्यापारावश्यम्भावात् । अन्यथा प्राचीनकर्मफलदातृत्वमीश्वरस्य न स्यात् । अतः प्रथम-प्रवृत्त्यनुगुणफलसिद्ध्यनुकूलतत्तदुपकारे भगवदभिसन्धिरावश्यक इति तत्रानुमन्तृत्वम् । प्रथम-प्रवृत्तावन्यफलदित्साभिसन्धिर्नास्तीति तस्यौदासीन्यम् ।

**तत्त्वमार्ताण्डे चन्द्रिकादूषणम्**

एकाधिकरण्यमयुक्तम् । कर्तृत्वसमर्थनानन्तरमेव पराधीनत्वविचारस्य सङ्गतत्वात् शास्त्रार्थवत्त्व विहितप्रतिषेधावैयर्थ्य इत्यनयोः पौनरुक्त्यं च । पूर्वपक्षश्चायुक्तः । कर्तृत्वमात्रसाधनेन शास्त्रार्थवत्त्वासिद्धेः । तदा हिताकरणादियुक्तिसाचिव्यासिद्धेर्न पूर्वपक्षस्य बलीयस्त्वम् । कथञ्चित् पूर्वपक्षसम्भवेऽपि कर्तेति परात्त्विति सूत्रयोः पौनरुक्त्यं दुर्वारम् ।

सिद्धान्तोऽप्ययुक्तः । परतन्त्रकर्तुर्विधिनिषेधाऽनन्वय एव भृत्यवत् । तक्षादिवच्चेत् अस्मदिष्टम् । तस्य तक्षणादौ स्वातन्त्र्याङ्गीकारात् । तादृशमेवेश्वरस्य प्रथमप्रवृत्तावौदासीन्यम् । प्रथम-प्रवृत्तेरुभयेच्छाजन्यत्वे फलस्योभयगामित्वं स्यात् तक्षयजमानयोरिव । सर्वस्येश्वरेच्छाप्रयोज्यत्वं सामान्याकारेणैव न तु विशेषाकारेणेति नास्माकं दोषः । राजेच्छाप्रयोज्यभृत्ययुद्धजन्यफलस्य राजगामित्वं तदिच्छाप्रयोज्यभृत्यभोजनजन्यतृप्तेर्भृत्यगामित्वं च दृष्टम् । माणवकादिस्थलेऽपि पितुः फलान्वयोऽस्ति । विष्टिस्थलेऽपि राजभृत्यस्य तथा । सूत्रविन्यासोऽपि न समीचीन इत्यादिदोषा अभिहिताः ।

अत्र चन्द्रिकाचार्याः-

१. प्रथमप्रवृत्तौ ईश्वरस्यौदासीन्यम् नोपपद्यते । 'स हि सर्वस्य कर्ता' 'न ऋते' इत्यादिश्रुति-विरोधात् । ईश्वरस्य फलभात्त्वप्रसङ्गो न । प्रयोजकत्वेऽपि ईश्वरस्य कर्मफलानन्वयाय प्रथमप्रवृत्तौ औदासीन्यकल्पनं न युक्तम् । प्रयोजकत्वेऽपि विध्यतीतत्वादेव तदुपपत्तेः । सर्वसंहारेऽपि यथा धर्मिग्राहकप्रमाणेन यथानिष्टफलं नास्ति तथा प्रथमप्रवृत्तिप्रेरकत्वेऽपि ।

२. जीवस्य प्रथमप्रवृत्तौ स्वातन्त्र्याभावे फलभात्त्वं नेति न । पराधीनकर्तुरपि विधिनिषेधविषयत्वदर्शनात् । तक्ष्णः ऋत्विजां च यथायोग्यफलवत्वस्य सर्वसम्मतत्वाच्च ।

३. प्रथमप्रवृत्तौ अदृष्टादेव विषयसन्निधानम् । तत्र ईश्वर उदासीनः । द्वितीयादिप्रवृत्तौ तु ईश्वर एव विषयसन्निधापक इत्युक्तम् । तदयुक्तम् । द्वितीयादिप्रवृत्तौ स एव विषयसन्निधापकः प्रथमप्रवृत्तिफलं चास्य दास्यामीत्याभिसन्धिमांश्च । प्रथमप्रवृत्ताविव द्वितीयादिप्रवृत्तावपि अदृष्टादेव विषयोपस्थिति-सम्भवे कुत ईश्वरः कल्प्यते ।

प्रथमप्रवृत्तौ प्राचीनकर्मफलतया अनुष्ठापयामीति ईश्वराभिसन्धिः द्वितीयादिप्रवत्तौ प्रथमप्रवृत्ति-फलतया फलान्तरदित्सया च अनुष्ठापयामीति ईश्वराभिसन्धिरित्युक्तम् । तत्र नियामकं किम्' ?

४. सम्पदादि विभज्य दातुः पितुः यथा कर्मफलं नास्ति तथा ईश्वरस्यापीत्युक्तम् । तन्न । पित्रा न ज्ञानपूर्वकं दीयते । ईश्वरेण तु ज्ञानपूर्वकमेव सर्वं दीयते । अतस्तस्य महानिष्टादवारणे दोषः स्यादेव नैर्घृण्यरूपः ।

५. प्रवृत्तप्रवर्तको ह्यनुमन्ता । एतादृशम् अनुमन्तृत्वं पितुर्नास्ति । ईश्वरस्य तु तदस्त्येवेति महानिष्टादवारणे दोषः भवत्येव । किञ्च पिता पुत्रप्रवृत्तिं प्रति न सामान्यतोऽपि हेतुः । ईश्वरस्तु जैवप्रवृत्तित्वावच्छिन्नं प्रति हेतुरतो तस्यानिष्टामापाद्यत एव ।

६. सार्वभौमन्यायोऽप्ययुक्तः । षष्ठांशहरत्वेन राज्ञोऽपि फलभाक्त्वात् ।

७. यदपि ईश्वरस्य घातकत्वापत्तिवाराणाय देहादिदानेन सामान्योपकारित्वात् न दोष इति समाहितम्, तदपि न । अजादिपालकस्य उपकर्तृत्वेऽपि घातुकत्वस्यापि दर्शनात् ईश्वरस्योपकर्तृत्वेऽपि घातुकत्वमनिवार्यमेव ।

८. नैर्घृण्यं स्यादिति प्रसङ्गवारणाय मोक्षप्रतिबन्धककर्मणाम् अनुभवैकनाश्यत्वात् दुःखादिदानं ईश्वरस्यापरिहार्यम् । वैद्य इव ईश्वरस्य दययैव प्रवृत्तिरित्युक्तम् । तदपि न । कर्मणामनुभवैक-नाश्यत्वस्य त्वयाङ्गीकारात् । तदधिगमसूत्ररीत्या प्रपत्तिं दत्वा कर्मनाशकरणसमर्थ ईश्वरः कर्मफलतया दुःखं ददाति चेत् नैर्धृण्यं दुर्वारमेव ।

९. ऐकाधिकरण्यमपि युक्तमेव । मुख्यं कर्तृत्वं प्रथमं प्रसाध्य तस्मिन्नेवाधिकरणे तद्धर्मभूतस्य पराधीनत्वस्य परात्त्विति गुणसूत्रेण समर्थने ऐकाधिकरण्यस्य नानुपपत्तिः ।

१०. साध्यप्रमेययोर्भिन्नत्वेन पौनरुक्त्यं नास्ति ।

११. यदपि 'कर्ता शास्त्रार्थवत्वात्' 'परात्तु' इति सूत्रयोः पौनरुक्त्यमिति, तदपि न । आद्यसूत्रे कर्तृत्वमात्रसमर्थनात् । परात्त्विति सूत्रे प्रथमसमर्थितकर्तृताया पराधीनत्वसमर्थनात् न पौनरुक्त्यम् ।

पराधीनकर्तुरपि फलभाक्त्वं लोके सिद्धमिति सिद्धान्तोऽप्युपपन्न एव ।

**महामहोपाध्याय श्रीमुष्णम् सुब्बरायाचार्यः ।**

अधुना लोकेशस्य लोकानां च करकमलयोः समर्प्यमाणाऽस्ति **भाष्यार्थसहितसूत्रार्थमणिमञ्जरी** । अत्र सूत्रभाष्ययोः प्रतिपदार्थः निरूपित इति महदस्ति वैशिष्ट्यम् । ग्रन्थस्यास्य प्रबन्धुः मूलपुरुषः श्रीनृसिंहाचार्यः । श्रीमुष्णाचार्य इति आर्याचार्य इति च तेषामेव व्यवहारनाम । माध्वव्याख्यातृप्रपञ्चे श्रीमुष्णाचार्याणां असाधारणं वैशिष्ट्यमस्ति । न्यायसुधादिप्रकृष्टप्रबन्धव्याख्यानेन अमी प्रसिद्धा आसन् । अनन्ताचार्य इति एतेषां पुत्रप्रवराः स्वीयगुरोः पितुश्च महिमानमेवमुपवर्णितवन्तः -

'अष्टौ तौळवाः कृष्णचरणाम्भोरुहार्चकाः ।
श्रीपादा रघुनाथस्य तथाऽन्ये चरणार्चकाः ॥
अन्ये च बहुदेशस्थाः मध्वशास्त्रं हि यन्मुखात् ।
शुश्रुवुस्तं सदाऽऽत्रेयगोत्रं ऋग्वेदिनं भजे ॥' (अनन्तवरप्रणीतः तारतम्यपारिजातः)

अस्यामेव परम्परायां सुब्बरायाचार्याः अतीव प्रथिताः । १८३८ क्रैस्तवत्सरे जनिमापन्ना आचार्याः राजमन्नारुगुडि प्रदेशे साहित्यशास्त्रमधीत्य नैजामराज्यस्थसुरपुरक्षेत्रे यलमेलि हयग्रीवाचार्याणां सविधे महाभाष्यान्तं समग्रं व्याकरणशास्त्रं अधीतवन्तः । ततः पण्डरपुरकृष्णाचार्य इति सुगृहीतनामधेयेषु विद्वत्प्रवरेषु, चतुश्शास्त्रनदीष्णेषु भिकुशास्त्रिषु न्यायव्याकरणशास्त्रक्रोडपत्राण्यधीत्य अनितरसाधारणं वैदुष्यमापुः । पुदुकोट्टा पुट्टस्वामिशास्त्रिषु मीमांसाशास्त्रं, उडुपि कृष्णापुरमठाधीशेषु श्रीविद्याधीशश्रीमच्चरणेषु समग्रं वेदान्तशास्त्रमधीत्य चतुश्शास्त्रपारावारपारीणा आसन् । न्यायशास्त्रे पूर्वपक्षवादे न्यायरत्नटिप्पणीकर्तृभिः राघुनाथशिरोमणिभिः साकं वाक्यार्थं विधाय विजयमापिरे । ट्रिवाङ्कोर् आस्थानविद्वद्भिः कुप्पुस्वामि ऐयङ्गार् महोदयैः तथा यलत्तूर्कृष्णचार्यैश्च नैकशास्त्रेषु वाक्यार्थमकुर्वन् । एतेषाम् असाधारणं शास्त्रवैदुष्यमनुलक्ष्य ब्रीटिश्सर्वकारीय एड्वर्डचक्रवर्ती 'महामहोपाध्यायः' इत्युपाधिप्रदानेन स्वात्मानं धन्यं मेने । श्रीमदुत्तरादिमठाधीशाः श्रीमत्सत्यध्यानतीर्थश्रीचरणा अपि एतेषां वैदुष्यमन्ववेक्ष्य सम्मानमकार्षुरिति विदितमेव विदुषाम् । एतेषां शिष्यप्रवराः महामहोपाध्याय बिरुदभाजः कृष्णमूर्तिशास्त्रि दण्डपाणि दीक्षित्, शतावधानि-लक्ष्मणाचार्य, झलकीकर् वामनाचार्य, आर्. वि. कृष्णमाचार्य, नदीतीरसेतुमेधवाचार्यप्रभृतयः नैके विद्वद्धौरेयाः समग्रेऽपि भारतदेशे पाठप्रवचनादिना अतुलां कीर्तिमापुः । एभिः प्रणीताः एते ग्रन्थाः विद्वज्जनैकाध्ययनयोग्या अपूर्वां तत्तच्छास्त्रविचारप्रणालीं प्रकटीकुर्वन्ति ।

१. सूत्रभाष्यार्थमणिमञ्जरी
२. परिभाषेन्दुशेखरव्याख्या
३. शब्देन्दुशेखरव्याख्या
४. गीताभाष्यव्याख्या
५. तन्त्रसारसङ्ग्रहव्याख्या

यद्यप्ययं ग्रन्थः भाष्यव्याख्यानार्थं प्रवृत्तोऽपि तत्त्वप्रकाशिका-चन्द्रिका-गुर्वर्थदीपिका-अभिनवचन्द्रिकादिव्याख्यानविशेषसङ्ग्राहकः, अपूर्वविचारप्रणालीप्रकाशनेन विदुषां विद्यार्थिनां चातीवोपयुक्त इत्यत्र न सन्देहगन्धः । भाष्यवचनानि असंयोज्य प्राक् मञ्जरीयं सुब्बरायाचार्यतनूजैः महामहोपाध्यायसेतुमाधवाचार्यैः १९०७मध्ये प्रकाशिताऽऽसीत् । तदनन्तरं प्रथमाध्याय एतेषामेव जामातृभिः विद्वत्प्रवरैः राममूर्तिशर्ममहाभागैः १९८३क्रैस्तवत्सरे तिरुपतितः प्रकाशितः । ग्रन्थस्यास्य विद्वज्जनोपयोगितां विचिन्त्य सर्वमूल-न्यायसुधा-तात्पर्यचन्द्रिकादिपाठप्रवचनकर्मणि बद्धादराः श्रीमदानन्दतीर्थ-सत्यतीर्थ-सुरोत्तमतीर्थपरम्पराभूषणायमानाः भण्डारकेरिमठाधीशाः श्रीमद्विद्येशतीर्थश्रीमच्चरणाः ग्रन्थस्यास्य प्रकाशनार्थं कृतसङ्कल्पाः मामादिशन् । राममूर्तितनूजैः श्रीनिवासमूर्तिभिः प्रदत्तां लिखितां मातृकां चान्ववेक्ष्य प्राङ्मुद्रितेषु ग्रन्थेषु विद्यमाना अक्षरदोषाः परिमार्जिताः । त्यक्तानि वाक्यानि अत्र प्रदत्तानि च । उदाहृतप्रमाणग्रन्थानाम् अध्यायादिविवरणं प्रदत्तम् । अक्षरदोषविहीनं सत् यथा विदुषां विद्यार्थिनां चोपकाराय भवेत् तथा प्रयतितम् । प्राग् एकवारम् श्रीअप्पूराव्, श्रीमाधवराव् इत्येताभ्यां अक्षरदोषपरिमार्जनार्थम् यत्नः विहितः । तदनन्तरम् अध्यायद्वयपर्यन्तं श्रीमद्विद्येशतीर्थश्रीमच्चरणविनेयेन विदुषा श्रीनिधिवासिष्ठेन बुद्धिप्रवेशपुरस्सरम् अक्षरदोषपरिमार्जनं विहितम् । तदनन्तरं पूर्णप्रज्ञसंशोधनमन्दिरे शोधकर्मणि बद्धादरेण विदुषा बि.एस् हयवदनाचार्येण चत्वारोऽध्यायाः बुद्धिप्रवेशपूर्वकम् अक्षरदोषपरिमार्जनेन च मुद्रणयोग्याः कृताः । मयाऽपि त्रिवारं ग्रन्थः आन्तमवलोकितः यथाशक्ति शोधितश्च । मदीयमतिदौर्बल्यात् अनवधानाच्च क्वचिद्दोषाः शिष्टा भवेयुः । विद्वांसः हंसक्षीरन्यायेन गुणग्रहपराः भवेयुरिति साञ्जलिबन्धं प्रार्थये ।

अस्मिन् प्रसङ्गे ब्रह्मविद्याप्रदानेन अनुग्राहकाणां मादृशानां चतुःशताधिकविद्यार्थिनाम् अन्न-वस्त्रप्रदानेन जीविकाप्रदानेन च सम्पोषकाणां श्रीपेजावरमठाधीशानां श्रीमद्विश्वेशतीर्थश्रीमच्चरणानां वात्सल्यातिशयं परमादरेण संस्मरन् तेषां चरणनलिनयोः प्रणतिततीः समर्पयामि । पूर्णप्रज्ञविद्यापीठे श्रीविद्येशतीर्थश्रीमच्चरणाः शास्त्राध्ययनमकार्षुः । अहमपि तेषां सहपाठी आसम् । तैरध्ययनम् अध्यापनं च सुष्ठु विहितम् । अत एव सन्तुष्टाः श्रीमदानन्दतीर्थभगवत्पादाचार्याः स्वीये विरक्तविज्ञानपीठे (सर्वज्ञसिंहासने) एतानभ्यषिञ्चन् श्रीमद्विद्यामान्यतीर्थश्रीमच्चरणद्वारा । सर्वदा श्रीमच्चरणाः पाठप्रवचनदीक्षिताः सन्तः पञ्चविंशाधिकप्रबन्धप्रणयनेन, सहस्राधिकविद्वज्जनसम्मानप्रदान-

सम्पोषणादिना भगवत्पादाचार्यचरणसेवां कुर्वन्तः राजन्तेतमाम् । अस्य प्रबन्धस्य अनुग्रहसन्देश-प्रदानव्याजेन सूत्राणाम् अपूर्वा एव अर्थविशेषाः श्रीचरणैः निरूपिताः विदुषामतीव तोषजनका इत्यत्र अध्येतॄणामनुभव एव प्रमाणम् । सर्वदा शास्त्राध्ययनव्याख्यानदीक्षिताः श्रीमच्चरणाः मामादिश्य विशेषानुग्रहं प्रकटीचक्रुरिति तेषामाधमर्ण्यं प्रणतिततिपुरस्सरमावेदयामि ।

ग्रन्थस्यास्य प्रकाशनार्थं मातृकाप्रदानेन महान्तमुपकारं श्रीश्रीनिवासमूर्तिमहोदया अकुर्वन् । भण्डारकेरिश्रीमच्चरणानामन्तेवासी विद्वान् नागेन्द्राचार्यः, एवं श्रीचरणाभिमानिनः समुचितवित्तप्रदानेन गुरुचरणसेवां व्यधुः । सर्वेषामपि कृतज्ञोऽयं जन इति साधुवादप्रदानेन समभिनन्दामि ।

ग्रन्थस्यास्य टङ्कणं अञ्जनाप्रसादमहोदयेन विहितम् । नैकवारम् अक्षरदोषपरिमार्जनं ग्रन्थसौन्दर्य-कारणीभूतं सर्वमपि कार्यजातं विदुषा व्यासराजजोशिमहोदयेन परमया श्रद्धया विहितम् । गुरुचरणा अस्मिन् कर्मणि व्यापृतान् सर्वानपि इतोऽपि शास्त्रसेवा निर्विघ्नं प्रवर्ततामिति समनुगृह्णन्त्विति क्रियासमभिव्याहारेण साञ्जलिबन्धमर्थयन् उपरमामि ।

**डा. ए.वि. नागसम्पिगे**

निदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु

# विषयानुक्रमणिका

| विषयाः | पृ.सं. |
|---|---|

## प्रथमाध्यायः

## द्वितीयाध्यायः

## द्वितीयाध्यायः

॥ श्रीगुरुभ्यो नमः ॥

॥ श्रीश्रीनिवासाय नमः ॥

॥ श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः ॥

अथ महामहोपाध्याय-श्रीमुष्णं-व्याकरण-सुब्बरायाचार्यविरचिता

# भाष्यार्थसहितसूत्रार्थमणिमञ्जरी

## श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमोऽध्यायः

श्रीमद्धनुमद्भीममध्वान्तर्गत-रामकृष्णवेदव्यासात्मक-लक्ष्मीहयग्रीवाय नमः ॥

(सूत्रार्थकथनप्रतिज्ञानम्)

नारायणं गुणैस्सर्वैरुदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥

॥ श्री गुरुभ्यो नमः ॥

# भाष्यार्थसहितसूत्रार्थमणिमञ्जरी

(मङ्गलाचरणम्)

विट्ठलं मध्वदेवेशम् [1]आर्याचार्यकरार्चितम् ।
रुग्मिणीसत्यभामाभ्यां सहितं प्रणमाम्यहम् ॥ १ ॥

यदीयास्याम्बुजाद् भाष्यं मोक्षादिपुरुषार्थदम् ।
आविर्भूतं तं नमामि श्रीमदाचार्यमादरात् ॥ २ ॥

श्रीमज्जयार्यमुख्यांश्च व्याख्यातॄन् मध्ववाक्ततेः ।
श्रीमदानन्दतीर्थार्यदासान् भक्त्या नमाम्यहम् ॥ ३ ॥

सत्सुधादिसकलं सुजनेभ्यो वर्णयन्तमिह विंशतिवारम् ।
श्रीनृसिंहगुरुराजमहं तं मध्वदासमखिलानतमीडे ॥ ४ ॥

---

१. आर्याचार्यशब्देनात्र नृसिंहाचार्यः विवक्षितः ।

विद्याप्रकाशविततं वासुदेवार्यनामकम् ।
[1]पूर्णबोधार्यवर्याणां पुत्ररत्नमहं भजे ॥ ५ ॥
ज्ञाने प्रवचने भक्तौ वैराग्ये च शमादिषु ।
यानाहुस्तत्समो नेति [2]विद्याधीशगुरून् भजे ॥ ६ ॥
आर्याचार्यकुलोत्तंसान् महाचार्या इति श्रुतान् ।
रामण्णाचार्यसत्संज्ञान् वन्देऽहं गुरुशेखरान् ॥ ७ ॥
श्रीमट्टीकादिकान् ग्रन्थान् आलोच्य सुसमाहितः ।
श्रीमुष्णसुब्बरायाख्यः कुर्वेऽहं गुर्वनुग्रहात् ॥ ८ ॥
श्रीमद्भाष्यार्थसहितां सूत्रार्थमणिमञ्जरीम् ।
पदार्थानां पदैर्लाभप्रकारस्य प्रदर्शिकाम् ॥ ९ ॥

अथ ब्रह्मसूत्राणि अन्यैः सूत्रकाराशयातिक्रमेण व्याख्यातानि यथाऽऽचार्याभिप्रायं व्याचिख्यासवः परमकारुणिकाः श्रीमदाचार्यवर्याः प्रारिप्सितभाष्यस्य कैवल्याद्यखिलफलसाधनतासिद्ध्यर्थं निरन्तरायपरिसमाप्त्याद्यर्थं च अवश्यं करणीयं विशिष्टेष्टदेवतागुरुनमस्काररूपं मङ्गलं स्वयमन्तरायविधुरा अपि शिष्यान् ग्राहयितुं कृतं ग्रन्थादौ ग्रथयन्ति, ग्रन्थारम्भं च प्रतिजानते- **नारायणमिति** ॥ 'नारा आपोऽयनं यस्य स नारायणः', 'पूर्वपदात्सञ्ज्ञायाम्'[3] इति णत्वम् । प्रलयार्णवशायीत्यवयवार्थसहकृतार्थस्य 'आपो नाराः' इति स्मृतौ प्रसिद्धत्वेऽपि प्रकृतोपयोग्यवयवार्थाः टीकायां प्रदर्शिताः । तत्र प्रथमः- अराः= दोषाः, तद्विरुद्धा गुणाः नाराः । अधर्म इत्यादाविव विरुद्धार्थनञा समासः, नाराणामयनं नारायणः, पूर्ववत् णत्वं, गुणपरिपूर्ण इति यावत् ।

**(अयनशब्दः पुंस्यपि भवति)**

यद्यप्यस्मिन् विग्रहे अयनशब्दस्य नपुंसकत्वेन 'परवल्लिंङ्गं द्वन्द्वतत्पुरुषयोः'[4] इति सूत्रेण नारायणशब्दस्यापि नपुंसकत्वेन भाव्यम्; तथापि ल्युटः टित्करणेन अधिकरणल्युडन्तस्य क्वचित् लिङ्गान्तरं स्वीक्रियते । अत एव माषवपनीत्यादौ स्त्रीत्वात् ङीप् । अत एव च 'यथामुख-संमुखस्य दर्शनः खः'[5] इति पाणिनिसूत्रप्रयोगे अधिकरणल्युडन्तः 'दर्शनः' इति पुल्लिङ्गमुपपद्यते । प्रकृते त्व नारायणशब्दस्य तद्घटकायनशब्दस्य वा पुल्लिङ्गत्वाङ्गीकारात् तथैव प्रयोगाच्च, 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इत्यनेन परवल्लिङ्गमित्यादेः महाभाष्ये प्रत्याख्यानाच्च, न दोषः ॥

---

१. मूलपुरुषस्य पौत्रवर्यः । २. उडुपि (रजतपीठपुर)श्रीकृष्णापुरयतीन्द्रः प्रसिद्धतमः ।
३. 'पूर्वपदात् सञ्ज्ञायामगः' इति ।(पा.सू. ८.४.३) ४. पा.सू. २.४.२६ ५. पा.सू. ५.२.६

(नारा इत्यत्र नलोपाप्रसक्तिः)

नन्वेवमपि नारा इत्यत्र 'नलोपो नञः'[१] इति नलोपे 'तस्मान्नुडचि'[२] इति नुटि अनरा इति प्राप्नोति; सत्यम्, नञ्समानार्थकनशब्देन समासाङ्गीकारेण नलोपाप्रसक्तिः । तस्य ञित्वाभावात् । अत एव 'नैकधा','नान्तरीयकम्', येन 'नाप्राप्ते', येन 'नाव्यवधानम्' इत्यादिप्रसिद्धप्रयोगाः सङ्गच्छन्ते ॥

टीकायां नञ्समासोक्तिस्तु नशब्दस्य निषेधार्थकत्वेऽपि विरुद्धाद्यर्थकत्वे मानाभावः, नञ्समासे कृतेऽपि उक्तदोषश्च नेत्यभिप्रायेणेति बोध्यम् । दोषोद्धारस्तु वृत्तिग्रन्थानुसारेण चन्द्रिकारीत्या 'नलोपो नञः' इति सूत्रे 'रात्रेः कृति'[३] इत्यतो विभाषापदानुवृत्त्या व्यवस्थितविभाषाश्रयणेन कचिन्नलोपो नेति कल्पनया बोध्यः । एवञ्च अनेनैव नैकधेत्यादिसिद्धौ नशब्देन समासाश्रयणमपि व्यर्थम्, निषेधार्थकनशब्दो नेति नवीनवैयाकरणमते एवमेवोपपत्तेर्व्यक्तत्वाच्च ॥

न चैवं सति 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या'[४] इति सूत्रं व्यर्थम्, व्यवस्थितविभाषयैव नभ्राडित्यादिसिद्धेरिति वाच्यम् । 'नासूया कर्तव्या यत्रानुगमः क्रियते' इति पङ्क्तिविंशतीति सूत्रमहाभाष्योक्तन्यायेन सूत्रेण अनिर्वाहस्थले, तन्निर्वाहार्थं कृतप्रयत्नेन सूत्रवैयर्थ्यापादनायोगात् । अत एव 'अवङ्स्फोटायनस्य'[५] इत्यस्य व्यवस्थितविभाषात्वेऽपि 'इन्द्रे च'[६] इति सूत्रं न व्यर्थम् । यदि च 'इन्द्रे च' इति सूत्रस्य वैयर्थ्यमिष्टम्, तर्हि तत् प्रकृतेऽप्यस्तु । अत एव 'आबाधे च'[७] इति सूत्रे 'नञो द्विर्वचनेन' इत्यत्र पूर्वनस्य लोपाभावं नलोपसूत्रे विभाषापदानुवृत्त्या व्यवस्थितविभाषास्वीकारेण च समाधाय 'नभ्राड्'[८] इति सूत्रं प्रपञ्चार्थं भवतीति शब्दरत्नोक्तं सङ्गच्छते ॥

न च अवङो व्यवस्थितविभाषया प्रवृत्तिः कचिदेवेति ज्ञापनार्थं 'इन्द्रे च' इति सूत्रमिति वाच्यम्, तस्य प्रकृतेऽपि समत्वात् ॥

न च वृत्तिग्रन्थे स्त्रैणार्थ इत्यत्र नञ्प्रत्ययनकारस्य लोपवारणाय विभाषापदानुवृत्तिरुक्ता, 'नलोपो नञः' इति सूत्रे उत्तरपदेन पूर्वपदाक्षेपात् पूर्वपदभूतस्य 'नञो लोप' इत्यर्थेन, स्त्रैणार्थ इत्यत्र नञः पूर्वपदत्वाभावात् नलोपवारणेन विभाषापदानुवृत्तिः व्यर्थेति वाच्यम् । उत्तरपदस्य पूर्वपदाक्षेपकत्वा-योगात् । पञ्चनावप्रिय इत्यादित्रिपदबहुव्रीहौ त्रिपदद्वन्द्वे च पूर्वपदस्य उत्तरपदपरकत्वाभावेन व्यभिचारात् ॥

---

१. पा.सू. ६.३.७३ २. पा.सू. ६.४.७४ ३. 'रात्रेः कृति विभाषा' इति पा.सू. ६.३.७२
४. पा.सू. ६.३.७५ ५. पा.सू. ६.१.१२३ ७. पा.सू. ६.१.१२४

न च यत्र समासे उत्तरपदं, तत्र नियमेन पूर्वपदमस्तीति व्याप्तेः अव्यभिचारेण पूर्वपदस्याक्षेप इति वाच्यम् । 'विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्लोपे दत्तः' इत्यादावुत्तरपदसत्वेऽपि पूर्वपदाभावेन व्यभिचारात् । पूर्वपदस्य आक्षेपेऽपि नञन्तपूर्वपदस्य नकारस्य लोप इत्यर्थेन उक्तस्त्रैणार्थ इत्यत्र लोपवारणाभावेन आक्षेपस्यानुपयोगाच्च ॥

(नग-नाकादिनिपातार्थविचारः)

न चैवमपि 'नग-नाकादिशब्दवद् अयं शब्दो ज्ञातव्यः' इति टीकया नारायणशब्दो 'नभ्राड्' इति सूत्रे पठनीय इति प्रतीयते, तद्विरोध इति वाच्यम् । उपायस्य उपायान्तरादूषकत्वात् । नगनाकादिशब्दा यथा सूत्रसिद्धाः तथा अयमपि शब्दः सूत्रनिष्पन्नो ज्ञातव्य इत्यर्थकत्वाच्च । नभ्राडितिसूत्रे अयमपि शब्दो वक्तव्य इत्यर्थकत्वे नगग्रहणवैयर्थ्याच्च ॥

केचित्तु- ''नभ्राडितिसूत्रं 'प्रकृत्या' इत्यन्तिमपदं विना पठित्वा एते नलोपाभावेन निपात्यन्त इत्यर्थकरणेन, 'नगोऽप्राणिषु'[१] इति सूत्रस्य नगशब्दो वा नलोपाभावेन निपात्यत इत्यर्थेन च, नभ्राडित्यादिरूपसिद्धौ 'प्रकृत्या' इति पदं योगविभागेन, अन्यत्राप्युत्तरपदे परे नलोपाभावाय, तेन 'नारायणो, नैकधा, स्त्रैणार्था' इत्यादि सिद्ध्यति ॥

न च 'एकादिश्चैकस्य चादुक्'[२] इत्याद्युत्तरसूत्रोदाहरणे एकान्नविंशतिरित्यादौ नञः प्रकृतिभावविधानाय तत्पदमिति वाच्यम् । 'इकोऽचि विभक्तौ'[३] इति सूत्रस्थमहाभाष्योक्तेन 'इहकिञ्चित्त्रपो' इति न्यायेन यथा तत्र अचीतिपदस्य 'तृतीयादिषु भाषित...'[४] इत्युत्तरसूत्रे उपयोगसत्वेऽपि 'इकोऽचि' इति सूत्रे तस्य वैयर्थ्येन 'न लुमता...'[५] इति निषेधाऽनित्यत्वज्ञापकत्वमुक्तं, तथा इहापि वक्तुं शक्यत्वात् । किञ्च एकान्नैकस्य चादुगिति सूत्रं कृत्वा एकशब्दात्परस्य नञो नलोपो न भवत्युत्तरपदे परे, एकशब्दस्य अदुगागमश्च, इत्यर्थकरणेन एकान्नविंशतिरित्यादिसिद्धौ प्रकृत्येति गुरुकरणं व्यर्थमेव'' इत्याहुः ॥

न च भाष्याविचारितप्रयोजनानां सूत्राक्षराणां पारायणादौ अदृष्टार्थत्वमेव, न तु ज्ञापकत्वादिकमिति शेखरोक्तेरिदमयुक्तमिति वाच्यम् । 'तत्प्रकृतवचने मयट्'[६] इति सूत्रे भाष्यानुक्तयोगविभागेन चिन्मयं ब्रह्मेत्यादौ अत्यन्तस्वार्थिकमयटः तेनैव ग्रन्थकारेणाङ्गीकृतत्वात् पूर्वोक्तस्यानादरणीय-

१. 'नगोऽप्राणिष्वन्यतरस्याम्' इति पा.सू. ६.३.७७ २. पा.सू. ६.३.७६
३. पा.सू. ७.१.७३ ४. 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति पा.सू. ७.१.७४
५. 'न लुमताङ्गस्य' इति पा.सू. १.१.६४ ६. पा.सू. ५.४.२१

त्वात् । व्यवस्थितविभाषाया असार्वत्रिकत्वबोधनाय 'इन्द्रे च'[1] इति सूत्रमिति तेनैवोक्तत्वाच्च । इदं च ज्ञापकं भाष्यानुक्तमेवेति बोध्यम् ॥

**गुणैरिति** ॥ आनन्दादिगुणैः । उदीर्णं= पूर्णम्, उत्पूर्वात् क्र्यादेः कॄधातोः क्तप्रत्यये श्युकः कितीति इडभावे 'ॠत इद्धातोः'[2] इति इत्वे, दीर्घे नत्वे णत्वे च रूपमेतत् ॥ **दोषेति** ॥ दोषाश्चिन्तादयः । **ज्ञेयं**= वैराग्यभक्तिसहितोपासनाजन्यापरोक्षज्ञानविषयम् । **गम्यं**= परमप्राप्यमित्यर्थः ॥

नन्वत्र 'नारायणं नत्वा सूत्रार्थ उच्यते' इत्येव वक्तव्ये 'गुणैरुदीर्णम्' इत्यादिविशेषणचतुष्टयोपादानं कुत इति चेत्, उच्यते । श्रोतॄणां सुखबोधार्थं वक्ष्यमाणमेव सूत्रार्थम् आदौ सङ्ग्रहेण प्रतिपादयितुम् । किञ्च नारायणपदं डित्थादिपदवत् सङ्केतमात्रेण भगवति न प्रयुज्यते, किन्तु अनितरसाधारणसर्वगुणपूर्णत्व-दोषवर्जितत्व-ज्ञेयत्व-परमप्राप्यत्वरूपधर्मैः निमित्तैः प्रयुज्यत इति ज्ञापयितुम् । किञ्च नारायण एव वन्द्य इति बोधयितुं विशेषणचतुष्टयोपादानमिति टीकायामेवोक्तम् । तत्प्रकारश्चोपपादित इति ॥

**(नारायणादिपदेनैव गुणपूर्णत्वाद्यर्थलाभेऽपि विशेषणचतुष्टयं सार्थकम्)**

ननु नारायणपदस्यैव गुणपूर्णाद्यर्थकत्वेन नारायणमित्यस्यैव गुणपरिपूर्णमित्यर्थः । ततश्च नारायणपदार्थे सर्वैर्गुणैरुदीर्णमित्यादेरन्वयो न स्यात् तद्धर्मप्रकारकोपस्थितिविशेष्ये, तद्धर्मप्रकारकोपस्थितिविशेष्यस्य अभेदान्वयस्य व्युत्पत्तिविरुद्धत्वात् । अत एव 'घटो घटः' इत्यादिवाक्यस्याप्रामाण्यम् । अन्यथा तदपि प्रमाणं स्यात् ॥

किञ्च नारायणपदेनैव सर्वगुणपरिपूर्णमित्यर्थलाभेन विशेषणचतुष्टयं व्यर्थमेव ॥

न च नारायणपदस्य गुणाश्रयत्वमेव प्रवृत्तिनिमित्तम्, न तु सर्वगुणाश्रयत्वम्, परन्तु तत्फलितं भवति । तथा च गुणाश्रयत्वप्रकारकोपस्थितिविशेष्ये सर्वगुणाश्रयत्वप्रकारकोपस्थितिविशेष्यस्य अभेदान्वयो नानुपपन्नः, विधेयकोटौ अधिकावगाहित्वात्, घटो रक्तघट इत्यादाविवेति वाच्यम् । एवमपि दोषवर्जितमित्यस्य दोषात्यन्ताभाववानित्यर्थेन नारायणपदस्यापि तादृशार्थकत्वेनान्वयाऽनापत्तेः ॥

न च नारायणपदे दोषाश्रयभिन्नत्वं प्रवृत्तिनिमित्तम्, दोषवर्जितेति पदे च दोषात्यन्ताभाव इति भेद इति वाच्यम् । तथा सति अघटो घटत्ववर्जित इति प्रयोगापत्तेः । न च स प्रयोग इष्ट एवेति

---

१. पा.सू. ६.१.२४ २. पा.सू. ७.१.१००

वाच्यम् । एवमपि नारायणपदार्थे ज्ञेयमित्यस्य अनन्वयापत्तेरिति चेन्न । नारायणपदस्य विषयतासम्बन्धेन ज्ञानाश्रयत्वं प्रवृत्तिनिमित्तम्, ज्ञेयपदस्य च ज्ञानविषयत्वमिति उभयोर्भेद एवेत्यदोषात् ॥

केचित्तु- वैयाकरणैः 'न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते' इति हरिकारिकानुसारेण 'स्वं रूपं शब्दस्याशब्दसंज्ञा'[1] इति सूत्रप्रत्याख्यानपरमहाभाष्यानुरोधेन च सर्वत्र पदार्थोपस्थितौ बोधकशब्दस्यापि प्रकारतया भानाभ्युपगमात्, 'घटः कलशः' इत्यादावभेदान्वयोऽस्त्येव । अत एव शब्दकौस्तुभे 'वृद्धिरादैच्'[2] इति सूत्रे 'विष्णुर्नारायणः कृष्णः'[3] इत्यादिकोशे अभेदान्वयः । अन्यथा उक्तकोशे विष्णुशब्दवाच्याभिन्नो नारायणशब्दवाच्य इत्यर्थाङ्गीकारे लक्षणाप्रसङ्गः । अत एव 'उद्भिदा यजेत' इत्यादौ उद्भिद्रूपायुधवता यागेनेत्यर्थे मत्वर्थलक्षणाप्रसङ्गेन नामधेयत्वं समर्थितं पूर्वतन्त्रे, इति चोक्तम् । तद्रीत्या नारायणशब्दस्य 'सर्वैर्गुणैरुदीर्णम्' इत्यस्य च भेदादभेदान्वयो नानुपपन्न इति वदन्ति ॥

अन्ये तु- गुणैस्सर्वैरुदीर्णमित्यादेः नारायणपदव्याख्यानरूपत्वेन परस्परमन्वयो नास्त्येवेति वर्णयन्ति ॥

अपरे तु- 'गुणैः सर्वैरुदीर्णम्' इत्यादेः तत्तदर्थकमित्यर्थः । नारायणपदस्य नारायणपदवाच्यमित्यर्थः । पदार्थैकदेशे नारायणपदे सर्वैर्गुणैरुदीर्णमित्यर्थकमित्यादेः अभेदेनान्वयः । इत्थं च सर्वगुणपरिपूर्णाद्यर्थवाचकनारायणपदवाच्यं विष्णुं नत्वा इत्यर्थ इत्याहुः ॥

एतेन नारायणपदेनैव गुणपूर्त्यादिलाभे सर्वैर्गुणैरुदीर्णत्वादिविशेषणचतुष्टयं व्यर्थमिति शङ्कापि परास्ता । गुणैस्सर्वैरुदीर्णमित्यादेर्व्याख्यानरूपत्वाच्चेति ॥

नारायणपदव्याख्यानस्य का प्रसक्तिः, सूत्रे तत्पदस्याश्रवणादिति चेत् । उच्यते- स्वेन प्रयुक्तस्यैव नारायणपदस्य स्वयं व्याख्यातव्यत्वात्, स्वपदव्याख्यानस्य भाष्यलक्षणत्वात् ॥

**गुरूनिति** ॥ व्यासानित्यर्थः । ननु गुरोर्नामनिर्देशः कुतो न कृत इति चेदुच्यते- 'गुरोर्नाम न गृह्णीयाच्छिष्यो भार्या पतेरपि' इति स्मृत्या तस्य निषेधादिति । गुरुत्वादेव बहुवचनम्, गुरुत्वोपपादकधर्मबाहुल्याद्वा ॥ चः समुच्चये, समुच्चयो नाम मिथोऽनपेक्षस्य पृथगुपस्थितपदार्थद्वयादेः एकधर्मावच्छिन्ने एकरूपेणान्वयः । अपिस्तु पृथङ्नतिसमुच्चयाभ्यां प्राप्ते स्वस्य गुरुदेवताभेदे

---

१. पा.सू. १.१.६८ २. पा.सू. १.१.१ ३. अमरकोशः, स्वर्गवर्गः

अरुचिसूचकः। अरुचिश्च तात्पर्याभावः। पृथङ्नतिस्तु विशेषानुग्रहार्थं, शिष्यशिक्षार्थं च। शिक्षा च स्वकर्तव्यताबुद्धिः, अस्ति च तेषां गुरुदेवताभेद इति ॥

(सूत्रागतिक्रमनिरूपणम्)

**सूत्रार्थ इति ॥** ब्रह्मसूत्रार्थ इत्यर्थः। प्रकृते सूत्रपदस्य निरुपपदत्वेन मुख्यसूत्राणामेव ग्रहणात् ॥ व्याख्येयसूत्राणां प्रामाण्यादिसूचनाय सूत्रागतिक्रममाहुः-

**(२) द्वापरे सर्वत्र ज्ञान आकुलीभूते तन्निर्णयाय ब्रह्मरुद्रेन्द्रादिभिरर्थितो भगवान्नारायणो व्यासत्वेनावततार।**

(२) **द्वापर इति ॥** वैवस्वतमन्वन्तरे महायुगेषु प्रथमद्वापरापेक्षया अष्टाविंशे द्वापरयुगे इत्यर्थः। द्वौ धर्मपादौ परौ अवशिष्टौ यस्मिन् युगे, द्वाभ्यां युगाभ्यां परस्मिन् युग इति वा विग्रहः। द्विशब्देकारस्याकारादेशः, पृषोदरादित्वात्। इदमुपलक्षणं गौतमशापाच्चेत्यस्यापि ॥ **सर्वत्र=** सार्वत्रिकपुरुषेषु। **ज्ञाने=** तत्वज्ञानभूतसगुणत्व-सर्वोत्तमत्व-भिन्नत्वादिधर्मप्रकारकविष्णुविशेष्यक-ज्ञाने। **आकुलीभूते=** इदं वा तत्वज्ञानम्, निर्गुणत्वादिज्ञानं वा तत्वज्ञानमिति सन्दिग्धे निर्गुणत्वादि-ज्ञानमेव तत्वज्ञानं, न तु सगुणत्वादिज्ञानमिति मिथ्याज्ञानपराभूते च। **तन्निर्णयाय=** तस्मिन् सगुणत्वादिज्ञाने, तत्वज्ञानत्वनिर्णयाय। **व्यासत्वेनावततार=** व्यासत्वविशिष्टावतारं कृतवान् ॥

**(३) अथेष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां तज्ज्ञापनार्थं वेदमुत्सन्नं व्यञ्जयंश्चतुर्धा व्यभजत्। चतुर्विंशतिधैकशतधा सहस्रधा द्वादशधा च तदर्थनिर्णयाय ब्रह्मसूत्राणि चकार।**

(३) **अथ=** तन्निर्णयायावतीर्णत्वात् अवतारानन्तरमिति वा। **तद्योगम्=** इष्टप्राप्त्यनिष्ट-परिहारोपायम्। **तद्ज्ञापनार्थम्=** उक्तोपायज्ञापनार्थम्। **उत्सन्नम्=** अपपाठादिना तिरोहितम्। **वेदं=** हयग्रीवादिरूपेण प्रागेव चतुर्धा विभक्तम्, ऋङ्निगदादिरूपमुपवेदम्। **व्यञ्जयन्=** स्वरादिमत्तया स्ववाचा सम्यगुच्चारयन्। **चतुर्धा=** एकैकस्मात् एकैको भाग इति मूलवेदराशेः सकाशात् विभक्तऋचस्सकाशात् ऋग्वेदम्, विभक्तनिगदात् यजुर्वेदमित्यादिक्रमेण चतुर्धा **व्यभजत्=** विभागं कृतवान्। **वेदम्=** एकैकमुक्तप्रकारेण चतुर्धा विभक्तं ऋग्वेदादिकम्। **चतुर्विंशत्यादिशाखाभेदेन** चतुष्प्रकारेण व्यभजदित्यर्थः ॥

**अत्रेदमवधेयम्-** अव्यक्त-ऋङ्-निगद-साम-अथर्वात्मकमूलवेदो गुणत्रयात्मकमूलप्रकृतिवत्

प्रलयेऽप्यासीत् । अत एव स नित्यः । 'वाचा विरूप नित्यया' इत्यादिप्रमाणाच्च । ततः कालान्तरे मूलप्रकृतितो गुणत्रयस्य पृथक्करणरूपसृष्टिमिव मूलवेदात् ऋङ्निगदादीनां चतुर्णामुपवेदानां सृष्टिं कृतवान् भगवान् हयग्रीवादिरूपेण । ततः कालान्तरे उद्धृतऋगाद्युपवेदसकाशात् ऋग्वेदाद्यवान्तरवेदं कृतवान्, कालान्तरे शाखाभेदं च कृतवान् भगवान् व्यासरूपेण । उपवेदादयस्त्रयः (ऋङ्निगदाद्यवान्तर-ऋग्वेदादिशाखाभेदरूपाः) कृत्रिमा इति भावदीपे ॥

### (वेदानां नित्यत्वप्रसाधनम्)

वेदो नाम क्रमविशेषविशिष्टवर्णाः न तु वर्णमात्रम्, वर्णानां पुराणादिपुरुषवाक्यादिसाधारण्येन तेषामपि नित्यत्वापत्तेः । वर्णानां नित्यत्वात् व्यापकत्वाच्च । अत्र नित्यत्वं नाम- आद्यन्तशून्यत्वम् ॥

ननु क्रमस्य पूर्वोत्तरकालोच्चारणरूपत्वेन पूर्वोत्तरकालोच्चारणानामनित्यत्वेन तदुपाधिको वेदः कथं नित्यः स्यात् ? न च ईश्वरबुद्ध्या क्रमस्य नित्यं विषयीकरणान्नित्यत्वमिति वाच्यम् । उच्चारणस्य प्रलयेऽभावेनाऽविद्यमानस्यापीश्वरबुद्ध्या विषयीकृतत्वमात्रेण नित्यत्वे पुराणादीनामपि नित्यत्वापत्तेः । तत्क्रमस्यापीश्वरबुद्ध्या सदा विषयीकरणात् । घटादीनामपि नित्यत्वापत्तेश्च । क्रमस्य प्रलयेऽभावेन क्रमाभावस्यैवेश्वरबुद्ध्या विषयीकरणाच्च ॥

न च श्रीः भगवत्स्तुत्यर्थं सदा वेदमुच्चारयतीति वाच्यम् । तत्र मानाभावात् । एकस्य वाक्यस्योच्चारणकाले अन्यस्योच्चारणाभावेन क्रमाऽनित्यत्वस्यापरिहार्यत्वाच्च । एतेन, 'ईश्वरः सदा सूक्ष्मतया वेदमुच्चारयतीति वेदो नित्यः' इति परास्तमिति चेदुच्यते ।

क्रमः त्रिविधः= कालिको, दैशिको, बौद्धश्चेति । तत्र कालिकक्रमः= पूर्वोत्तरकालोत्पत्तिकत्वरूपः। पूर्वोत्तरकालाभिव्यक्तिरूपश्च । दैशिकक्रमस्तु-पूर्वोत्तरदेशोत्पत्तिकत्वादिरूपः । बौद्धक्रमस्तु- पूर्वोत्तरकालेषु बुद्ध्या विषयीकृतत्वरूपः । यथा पूर्वो वर्ण उत्तरो वर्ण इति । ततश्च वेद ईश्वरबुद्ध्या विषयीकृतत्वरूपः क्रमः सदास्तीति नित्यत्वमिति ॥

न चैवमपि वेदस्य नित्यत्वं नोपपद्यते, अनित्यपूर्वोत्तरकालघटितत्वादिति वाच्यम् । पूर्वादिकालस्यानित्यत्वेऽपि तत्कृतपौर्वापर्यस्य पूर्वादिकालेषु बुद्ध्या विषयीकृतत्वस्य नित्यत्वसम्भवात् । यथा पूर्वोत्पन्नस्य ज्येष्ठत्वम्, पश्चादुत्पन्नस्य कनिष्ठत्वमिति व्यवस्था कालस्यानित्यतामात्रेण न विहन्यते, तथा इहापि वक्तुं शक्यत्वात् ॥

न चैवं पूर्वोत्तरकालोच्चार्यमाणत्वं क्रम इति पक्षोऽपि निर्वोढुं शक्य एवेति 'क्रमस्य कृतकत्वेऽपि'

इति तत्वनिर्णयटीकाविरोध इति वाच्यम् । कर्मतासम्बन्धेनोच्चारणस्यैव क्रमत्वमिति पक्षावलम्बेन टीकाप्रवृत्तेः ॥

न च पुराणादीनामपि नित्यत्वापत्तिः, तत्क्रमस्यापि सदा ईशबुद्धिविषयत्वादिति वाच्यम् । तत्क्रमस्य सादित्वेन सदा ईशबुद्धिविषयत्वाभावात् ॥

न च तत्क्रमस्य सादित्वेऽपीशबुद्धौ भविष्यद्विषयकत्वस्यापि सत्वेन तत्क्रमस्य सदेशबुद्धि-विषयत्वमस्त्येवेति वाच्यम् । अत्रेश्वरबुद्ध्या साक्षाद्विषयीकृतत्वस्य विवक्षितत्वेनादोषात् । पुराणादिभाविक्रमस्य 'अयमेवमुच्चारयिष्यति' इत्येवं विषयीकरणेन साक्षात् विषयीकृतत्वाभावात् ॥

ननु वेदस्य नित्यत्वे पुरुषाभिप्रायप्रवेशः कथमिति चेदुच्यते - यथा लक्ष्मीनारायणयोर्नित्यत्वेऽपि दाम्पत्यमनादिसिद्धम् । यथा वा ईशजीवयोः नित्यत्वेऽपि नियम्यनियामकभावोऽनादिसिद्धः, तथा ईशवेदयोर्नित्यत्वेऽपि ईशाभिप्रायपूर्वकत्वं वेदस्य अनादिसिद्धमिति ॥

वेदवत् सर्व-लौकिक-वैदिक-संस्कृतपदानां नित्यत्वं, 'वाचारम्भणं विकारः' इत्यादिश्रुति-सिद्धम् । इदं तत्वोद्योतादौ स्पष्टम् ॥

नन्वेवं वर्णानां पञ्चाशत्त्वेन सरःशब्दे स-इत्यस्मिन् पूर्वं बुद्ध्या विषयीकृतत्वस्य, र- इत्यस्मिन् पश्चाद्बुद्ध्या विषयीकृतत्वस्य च, सत्वेन रसशब्दे स्वोत्तरत्वस्य सत्वेन रसशब्देन सरसो बोधा-पत्तिः । एवं नदी-दीन इत्यादावपि वैपरीत्येन बोधापत्तिः । वर्णानामानन्त्ये त्वयं दोषः परिहर्तुं शक्यः, स पक्षो नाङ्गीकृत इति चेदुच्यते । यथाऽऽकाशस्य एकत्वेऽपि व्याप्तत्वेऽप्यंशभेदस्स्वीक्रियते, एवं नित्यत्वेऽपि पञ्चाशत्त्वेऽपि वर्णानामंशभेदः स्वीक्रियते । तथा च पूर्वं बुद्ध्या विषयीकृतत्त्वादेः भिन्नेष्वंशेष्वेव संभवात् 'नदी', 'दीन' इत्यादौ नातिप्रसङ्गः ॥

न चांशानां यावद्द्रव्यभावित्वेन अंशांशिनोः अत्यन्ताभेदात्, अंशानां च मिथः 'तदभिन्नाभिन्नस्य तदभिन्नत्वम्' इति न्यायेन अभेदाच्च उक्तदोषतादवस्थ्यमिति वाच्यम् । यथा देवेष्वंशांशिनो-रत्यन्ताभेदेऽपि इन्द्रार्जुनादौ अंशिनि सुखम्, अंशे तदभावः इत्यादिव्यवस्था ईश्वराचिन्त्याद्भुतशक्त्या निर्वहति, तथा प्रकृतेऽपीत्यदोषात् । यद्वा- वर्णांशानां परस्परं सविशेषाऽभेदाङ्गीकारेणादोषात् ॥

न चैवमपि प्रलये पदार्थानां तत्तद्रूपेणाभावात् वेदादिसंस्कृतशब्दानां नित्यत्वात् पदानां नैरर्थक्यं स्यात् । पदानाम् अर्थवत्वं च अर्थेन सम्बन्धः अर्थाभावे कथं सम्बन्धः स्यादिति वाच्यम् । प्रलये भगवन्मात्रवाचित्वाङ्गीकारात् । अयं चार्थः 'समाननामरूपत्वाच्चेति ।' (१-३-३०) सूत्रटीकाया-

मुक्तः, सृष्ट्यनन्तरं तु शब्दानां पूर्ववत् तत्तदर्थेष्वपि संबन्धं कल्पयति भगवान् तदनुरोधेन स्वाभिप्रायं निवेशयति । अत एव शब्दानां सदा भगवद्वाचित्वात् तत्र परममुख्यवृत्तिः, प्रलयातिरिक्तकाल एव जगद्वाचित्वात् तत्र मुख्यवृत्तिः । अस्मदादिद्वारा स्वसङ्केतितान्यबोधकत्वकल्पने गौणीवृत्तिरिति व्यवस्था सम्यगुपपद्यते ॥

न च शशशृङ्गादिपदानामिव अविद्यमानार्थमादाय अर्थवत्त्वं शब्दानां प्रलय इति वाच्यम् । 'एतेन सर्वे व्याख्याताः' इति (१-४-२९) नयोक्तरीत्या असदादिपदानामपि भगवद्वाचकत्वेनार्थवत्वम् । असति तु आधुनिकसङ्केतमात्रेण प्रवृत्तिरिति कल्पनया निर्वाहे अविद्यमानार्थेनार्थवत्वायोगात् ॥

न च शब्दानां घट आसीत्, घटो भविष्यतीत्यादौ भूतभविष्यदर्थमादायार्थवत्ववत् प्रलयेऽप्यस्तु तदिति वाच्यम् । सत्यां मतौ तथा कल्पनाऽयोगात् ॥

(अत एव समानेति सूत्रटीकायां अतीतादिविषयत्वादिसमाधाने अरुच्या भगवन्मात्रेति मुख्यं समाधानमुक्तम् । तत्रत्यचः वाऽर्थकोऽत्र कल्पे ।)

अनेन शब्दानां स्वस्वरूपमादाय अर्थवत्वमित्यपि परास्तम् । अनुकरणस्थल एव स्वस्वरूपमात्रार्थाङ्गीकाराच्च ।

न च वर्णानाम् ईश्वरबुद्धेश्च नित्यत्वात् सदा सर्ववर्णानां 'खले कपोत' न्यायेन ईश्वरबुद्धिविषयत्वात्, ईश्वरस्य कथं क्रमविशिष्टवर्णात्मकवेदज्ञानमिति वाच्यम् । 'यः सर्वज्ञः सर्ववित्' इत्यादिश्रुत्या ईश्वरस्य सामान्यज्ञानं विशेषज्ञानं चास्तीति निश्चीयते । तत्र सामान्यज्ञाने वर्णानां तत्तद्रूपेण भानम् । क्रमविशिष्टवेदस्य तु विशेषज्ञाने भानमित्यदोषात् । यद्यपि ईश्वरीयं ज्ञानं एकमेव, तथाऽपि अंशभेदमादाय व्यवस्था बोध्या, इति ॥

इदं तु बोध्यम्- लौकिकवाक्ये पदानामेव नित्यत्वम्, वेदे तु वाक्यस्यापीति विशेष इति ॥

केचित्तु नियतैकप्रकारत्वमेव नित्यत्वं वेदस्य, तादृशप्रकारकर्तुरप्रसिद्धेः अपौरुषेयत्वमिति वदन्ति । वेदस्य ईश्वरकृतत्वपक्षेऽपि सृष्ट्यादौ कृतस्योच्चारणस्येदानीमभावेऽपि तादृशप्रकारकत्वेनैव ईश्वरीयत्वव्यवहार उपपाद्यः, एवमाधुनिकप्रबन्धेऽपीति ज्ञेयम् ॥

**ब्रह्मसूत्राणीति ॥ ब्रह्म=** वेदः, तदर्थभूतपरब्रह्म वा, तस्य **सूत्राणि=** तदर्थनिर्णायकानि, तत्स्वरूपनिर्णायकानि वेत्यर्थः । इदं बोध्यम्- द्वापर इत्यादिभाष्येण ब्रह्मसूत्राणामाप्तिमूलत्वादिना

प्रामाण्यमुक्तं भवति। तथा हि- ज्ञाने आकुलीभूते तन्निर्णयाय इत्यनेन श्रोतुः प्रयोजनोद्देशेन प्रवृत्तिरूपप्रसङ्गानुकूल्यस्य, ब्रह्मरुद्रेन्द्रादिभिरित्यनेन वक्तृप्रीतिविषयत्वम्, तत्वज्ञानयोग्यता चेति श्रोत्रानुकूल्यस्य, तदर्थनिर्णयाय ब्रह्मसूत्राणि चकारेत्यनेन वक्त्रानुकूल्यैकदेशविवक्षायाः, भगवान्नारायणः इत्यनेन- विवक्षितार्थतत्वज्ञानस्य करणपाटवस्य च द्योतितत्वेन वक्तृ-श्रोतृ-प्रसङ्गानुकूल्यरूपाप्तिमूलकत्वात्, तदर्थनिर्णयायेत्यनेन सूचितश्रुतिमूलकत्वात् मीमांसारूपत्वेन युक्तिमूलकत्वाच्च प्रामाण्यमिति ॥

**(४) तच्चोक्तं स्कान्दे–**

**नारायणाद् विनिष्पन्नं ज्ञानं कृतयुगे स्थितम्।**
**किञ्चित् तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ॥**

**(भाष्यलक्षणम्)**

(४) 'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुकारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥'

इति वचनेन स्वपदव्याख्यानस्य भाष्यमुख्यलक्षणत्वेन तत्सिद्ध्यर्थं स्वोक्तार्थे विश्वासार्थं च 'द्वापरे' इत्यादिना, उक्तस्वपदानां प्रमाणवचनेन व्याख्यां कुर्वन्ति- **तच्चोक्तमित्यादिना ॥**

उक्तं तत्= प्रमेयजातम्, स्कान्द इत्यादि च स्कान्दस्थेत्यादिवचनप्रतिपाद्यम्, चेत्यर्थः। यद्वा तत्= निरूपितप्रमेयजातम्, स्कान्द इत्यादिना उक्तं च=उक्तमपीत्यर्थः। अत्र पक्षे इत्यादीति प्रथमा तृतीयार्थे।

**(आथर्वणभाष्यविरोधपरिहारः)**

ननु 'एको वेदः कृते ह्यासीत् त्रेतायां स त्रिधाऽभवत्।
स एव पञ्चधा जातो द्वापरं प्राप्य वै युगम् ॥
उत्सन्नः स कलिं प्राप्य वेदः प्रायेण सर्वशः ॥'

इत्याथर्वणभाष्यविरोधः उदाहृतस्कान्दवचनस्य इति चेन्न। तत्र भाष्ये कृतयुगे अव्यक्तमूलवेदराश्यपेक्षया वेदैकत्वस्य, त्रेतायां प्रायेण भगवत्पूजासाधनत्वेन वेदत्रैविध्यस्य, द्वापरे पौरुषेयभारतेन सह वेदपञ्चविधत्वस्य, कलौ तु सर्वप्रकारेण वेदोत्सादस्योक्तत्वात् ॥ अत्र तु विभक्तवेदेष्वपौरुषेयेषु वास्तवचातुर्विध्यस्य द्वापरेऽपपाठादिना तिरोधानरूपनाशस्य चोक्तेश्चेति विरोधपरिहारसम्भवाद् इति **भाष्यदीपिकायाम्** ॥

॥ ॐ ॥

भाष्यार्थचिन्तनासक्तसज्जनानां मुदे मया ।
श्रुतिस्मृतीनामर्थोऽत्र लिख्यते गुरुतुष्टये ॥

(४) **नारायणाद्विनिष्पन्नमित्यादि** ॥ **नारायणात्**= परमात्मनस्सकाशात्, **विनिष्पन्नं**= ब्रह्मादिद्वारोपदेशप्राप्तम्, **ज्ञानं**= सर्वोत्तमत्वप्रकारकं विष्णुविशेष्यकं तत्वज्ञानम्, **कृतयुगे**= अष्टाविंशे कृतयुगे, **स्थितं**= यथोपदिष्टं, तथैव स्थितमभूत् । **किञ्चित्**= कतिपयपुरुषे स्थितं, **तत्**= तादृशं ज्ञानम्, **त्रेतायां**= तन्नामके युगे, **अन्यथा**= इदमदो वेति सन्दिग्धं, अन्यदेवेति मिथ्यादृष्टिदुष्टं च, **जातं**= अभूत् । **द्वापरे**= तन्नामके युगे, **अखिलं**= सर्वपुरुषस्थं तत्वज्ञानम् अन्यथा जातम् ॥

**(व्यासत्वेन नारायणावतारः)**

**(५) गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते ।**
**सङ्कीर्णबुद्धयो देवाः ब्रह्मरुद्रपुरस्सराः ॥**
**शरण्यं शरणं जग्मुः नारायणमनामयम् ।**

(५) ननु कालबलेन पादद्वयपरिमितज्ञानभागस्य अन्यथात्वं युक्तं, न तु सर्वस्य, इत्यतो निखिलस्यान्यथात्वे विशेषकारणमाह- **गौतमस्येति** ॥ **शापात्तु**= शापाच्च, अखिलम् अन्यथाजातमित्यन्वयः । चेन द्वापरत्वहेतोर्ग्रहणम् । **ज्ञाने**= सर्वपुरुषस्थतत्वज्ञाने, **अज्ञानतां**= इदं मिथ्याज्ञानमिति प्रतीतिविषयताम् । इदं वा तत्वज्ञानं ऐक्यज्ञानं वा तत्वज्ञानमिति सन्देहगोचरतां च, **गते** सति, **सङ्कीर्णबुद्धयः**= अज्ञानादिमिश्रमतयः **ब्रह्मरुद्रपुरस्सरा देवाः** । चतुर्मुखस्य अज्ञवत् नटनमात्रम् । यद्वा- **सङ्कीर्णबुद्धयः**= अज्ञानादिमिश्रज्ञानवत्सु सज्जनेषु अनुक्रोशयुक्ताः **ब्रह्मरुद्रपुरस्सरा देवाः** । **शरण्यं**= शरणे साधुम्, तद्योग्यमिति यावत्, **अनामयं**= निर्दोषं, **नारायणं**, **शरणं जग्मुः**= प्रार्थयंश्च ॥

**(६) तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ॥**
**अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।**
**उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम् ॥**
**चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।**
**शतधा चैकधा चैव तथैव च सहस्रधा ॥**

**कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये।**
**चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा॥**

(६) **तैस्तु**= शरणागतैरेव देवैः, **विज्ञापितकार्यः**= निवेदितावतारादिकार्यवान्, **पुरुषोत्तमः**= क्षराऽक्षरपुरुषाभ्यामुत्तमः, **भगवान्**= नारायणः, **महायोगी**= मुनिरूपी सन्, **पराशरात्**= तन्नामक-ऋषेः, **सत्यवत्यामवतीर्णः**= प्रादुरभूत्। **भगवान् हरिः**= व्यासरूपी, **उत्सन्नान्**= अपपाठादिना तिरोहितान्, **वेदान्, स्वयं**= साक्षादेव, अन्योपदेशमन्तरेण इति यावत्, **उज्जहार**= उच्चारणेन व्यक्तीचकार॥ **तांश्च**= प्रागेव ऋगादिभेदेन चतुर्धा विभक्तान् वेदान्, **पुनश्चतुर्धा व्यभजत्**= ऋग्वेदादिभेदन चतुष्प्रकारेण विभागं कृतवान्, **कृष्णः**= व्यासः। पुनस्तांश्च ऋग्वेदादीन् चतुरो वेदानपि, **चतुर्विंशतिधा, शतधा च एकधा च**= एकशतधेति यावत्, **सहस्रधा च, द्वादशधा च, तथैव**= यथाक्रममेव व्यभजत्। चशब्दाः मिथः-समुच्चये। **पुनः**= अनन्तरं, **तस्य**= वेदस्य, **अर्थवित्तये**= अर्थज्ञानाय, **ब्रह्मसूत्राणि चकार**॥

वेदार्थनिर्णयाय सूत्रान्तरैरलं किमेभिरित्यत आह- **येषामिति**॥ **येषां**= ब्रह्मसूत्राणाम्, **अञ्जसा सूत्रत्वं**= सूत्रशब्दमुख्यप्रवृत्तिनिमित्तमस्तीति शेषः। वेदानुज्जहार तांश्चेति बहुवचनान्तशब्देन पूर्वं प्रतिपादनेऽपि, तस्येत्येकवचनान्तप्रयोगस्तु वेदानां बहुत्वेऽपि नार्थभेदश्शङ्कनीय इति भावेन कृतः।

**(सूत्रलक्षणम्)**

**(७) अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।**
**अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥**

(७) यदाञ्जस्यमुक्तम्, तत्सूत्रत्वम्, सूत्रशब्दप्रवृत्तिनिमित्तं किमिति चेत्तत्राह- **अल्पाक्षरमित्यादि**॥ **अल्पाक्षरत्वं च**=यावदक्षरतां विना विवक्षितार्थाऽसिद्धिः, ततोऽधिकाक्षरशून्यत्वे सति तावदक्षरवत्वम्। केचित्तु- अनुवृत्त्यावृत्तिज्ञापकार्थसिद्धपदशून्यत्वे सति तदतिरिक्तविवक्षितार्थबोधकपदवत्वं अल्पाक्षर-त्वमिति वदन्ति। तेन भाष्यपञ्चरात्रयोर्न्यावृत्तिः॥ **असन्दिग्धत्वं च**= एवमपि भवितुमर्हतीतिवचनानर्ह-त्वम्। **सारवत्वं**= अनन्यलभ्योत्तमार्थयुक्तत्वम्। **विश्वतोमुखत्वं च**= सर्वशाखागतस्य पदस्य वाक्यार्थस्य वा निर्णायकत्वम्, एकप्रयोजनं प्रति अपेक्षितकृत्स्नार्थप्रतिपादकत्वं वा। **अस्तोभत्वं**= निरर्थकगानभाग-पूरकाक्षररहितत्वम्, **अनवद्यत्वं च**= अपशब्दादिवैधुर्यम्। एवंरूप-षड्लक्षणोपेतं यच्च शब्दजातं तत् **सूत्रं**= सूत्रपदप्रतिपाद्यं, **विदुः सूत्रविदः**= सूत्रलक्षणज्ञाः। अत्र सर्वशाखानिर्णायकत्वं लक्षणं सूत्रस्य, तदेव सूत्रशब्दप्रवृत्तिनिमित्तम्। इतराणि तु स्वरूपकीर्तनपराणि। सर्वशाखानिर्णायकत्वलक्षणं ब्रह्मसूत्राणां मुख्यं, यावत्यश्शाखाः तावदर्थनिर्णायकत्वात्। अन्येषां सूत्राणां तु अमुख्यं, कतिपयशाखानिर्णायकत्वात्॥

न चैवं सर्वशाखानिर्णायकत्वरूपलक्षणमेव तेषां नेति वाच्यम् । कतिपयशाखानामेव संकुचित-सर्वत्वविवक्षया लक्षणसङ्क्रमनात् ।

(८) **निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ।**
**यथा व्यासत्वमेकस्य कृष्णस्यान्ये विशेषणात् ।**
**सविशेषणसूत्राणि ह्यपराणि विदो विदुः ॥**

(८) ब्रह्मसूत्राणामेव मुख्यसूत्रत्वमिति कुतो ज्ञायत इत्यत आह- **निर्विशेषितेति** ॥ **च**= यतः, **ब्रह्मसूत्रस्य च**= ब्रह्मसूत्राणामेव, **निर्विशेषितसूत्रत्वं**= विशेषस्याभावो निर्विशेषः, सोऽस्य संजातं निर्विशेषितं, सूत्रं= सूत्रशब्दो यस्य, तस्य भावः तत्वम्, निरुपपदसूत्रशब्दप्रतिपाद्यत्वमिति यावत् । अस्ति पुराणादौ, **अतोऽपि**= मुख्यसूत्रत्वमप्यस्ति । **यथा च**= यतः, **एकस्यैव कृष्णस्य**= पाराशर्यस्य **व्यासत्वम्** । वेद-विभागकर्तृत्वावच्छिन्नवाचकनिरुपपदव्यासशब्दप्रतिपाद्यत्वमस्ति, अतः कृष्णस्यैव व्यासत्वमपि सर्ववेद-विभागकर्तृत्वरूपं, मुख्यं व्यासपदप्रवृत्तिनिमित्तमस्ति, तथेति पूर्वेण सम्बन्धः । **यथा च**= यतः, **अन्ये**= पाराशर्यादन्ये द्रौण्यादयो वेदविभागकर्तारः अमुख्या इति शेषः । अमुख्या व्यासाः यत्किञ्चिद्वेद-विभागकर्तृत्वरूपामुख्यव्यासपदप्रवृत्तिनिमित्तवन्तः । अतो **विशेषणात्**= विशेषणमुपपदमपेक्ष्य व्यासाः सोपपदव्यासपदवाच्याः । तथा **हि**- यतः **अपराणि**=सूत्राणि अमुख्यानि यत्किञ्चित्सर्वशाखा-निर्णायकत्व-रूपसूत्रशब्दप्रवृत्तिनिमित्तवन्ति, अतः **सविशेषणसूत्राणि**= सोपपदसूत्रशब्दप्रतिपाद्यानीति **विदुः**, **विदः**= ज्ञानिनः ॥

(९) **मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः ।**
**इति वेदविदः प्राहुः शब्दतत्वार्थवेदिनः ॥**

(९) निरुपपद-तत्तच्छब्दप्रतिपाद्यत्वं यत्र, तत्र तच्छब्दीय-मुख्यप्रवृत्तिनिमित्तवत्वमिति व्याप्तौ प्रमाणमाह- **मुख्यस्येति** ॥ **मुख्यस्यैव**= तत्तच्छब्दीय-मुख्यप्रवृत्तिनिमित्तवत एव **निर्विशेषेण शब्दः** सहेति शेषः, उपपदाभावसहितशब्दवाच्यता, **अन्येषां**= तत्तच्छब्दीयामुख्यप्रवृत्तिनिमित्तवताम्, **विशेषतः शब्दः** उपपदसहिततत्तच्छब्दवाच्यता **इति प्राहुः शब्दतत्वार्थवेदिनः**= निरुपपदादिशब्दवाच्यार्थस्वरूपज्ञानवन्तः **वेदविदः**= वेदार्थज्ञाः । अनेन विशेषणेन वेदेष्वयं न्यायः पूर्ण इति सूचयति ॥

**(ब्रह्मसूत्राणामेव सर्वशाखानिर्णायकत्वम्)**

(१०) **सूत्रेषु येषु सर्वेऽपि निर्णयास्समुदीरिताः ॥**
**शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णयः ।**

(१०) सूत्रलक्षणतयोक्तं विश्वतोमुखत्वं ब्रह्मसूत्राणामस्तु, तत्रापि सूत्रान्तरैरेव वेदार्थनिर्णयसम्भवे किमेभिरिति शङ्कायाः कथमनेन परिहार इत्यत आह- **सूत्रेष्विति** ॥ **येषु सूत्रेषु**= ब्रह्मसूत्रेषु, **निर्णयाः**= निर्णेतव्याः, **सर्वेऽपि** अर्थाः, **समुदीरिताः**= निर्णीताः । यद्वा **निर्णयाः** ज्ञानानि तेषामुदीरणं च शब्द-द्वारा ॥

ननु ब्रह्मसूत्राणां सर्वशाखानिर्णायकत्वं न सम्भवति जैमिन्यादिसूत्रैः कतिपयशाखानां निर्णीतत्वात् । अन्यथा तद्वैयर्थ्यात्, अत आह- **शब्दजातस्येति** ॥ कर्तरि षष्ठी, सर्वेण शब्दजातेन जैमिन्यादिसूत्रसमूहेन क्रियमाणो **निर्णयः** = तत्वनिर्णयः, **यत्प्रमाणः** = यानि ब्रह्मसूत्राणि प्रमाणं यस्य सः, यादृशब्रह्मसूत्र-मूलकः ॥ एवं च जैमिन्यादिसूत्रादिना क्रियमाणनिर्णयस्य ब्रह्मसूत्रमूलकत्वेन तेषामेतद्व्याख्यान-रूपत्वेनावैयर्थ्यं, श्रुतिमूलकस्मृतिवत् ब्रह्मसूत्राणां सर्वशाखानिर्णायकत्वं च सिद्धम् ॥

**(११) एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः ।**
**ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ।**
**ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः ॥ इत्यादि ।**

(११) उपसंहरति- **एवंविधानीति**- मुख्यसूत्रत्ववन्ति । **कृत्वेति** ॥ चकारेत्युक्तस्यैव उपसंहारार्थमनुवाद इति न पौनरुक्त्यम् । **महायशाः**= उत्तमश्लोकः, **पुरुषोत्तमः भगवान्**= व्यासः, **ब्रह्मरुद्रादिदेवेषु**= देवत्वजात्याक्रान्तगन्धर्वान्तेषु, **मनुष्यपितृपक्षिषु**= **मनुष्याः**= मननशीलाः ऋषयः, **पाः**= चक्रवर्तिनः, **क्षि**शब्दः क्षि- क्षये इति धातुनिष्पन्नः अल्पायुजीवमनुष्योत्तमवाची । यद्वा मनुष्यादिपदं यथाश्रुतार्थ-परम् । अत्र पक्षे **पक्षिपदेन** जरितर्यादयो ग्राह्याः । तेषु **ज्ञानं**= तत्वज्ञानम्, **संस्थाप्य**= विशेषयुक्त्यादिभिर्दृढीकृत्य उत्पाद्य च **क्रीडत इति** ॥

**(हरिप्रीत्यर्थमेव ब्रह्मणाऽज्ञानादि प्रदर्श्यते)**

विरिञ्चस्य अप्राप्तलाभः विशेषयुक्त्यादिभिर्दृढीकरणं चास्ति, न तु तिरोहितलाभः तिरोधानाभावात् ॥

ननु- 'अज्ञानं च चतुर्वारं द्विवारं भयमेव च ।
शोकोऽपि तावान् नान्यत्र कदाचिद् ब्रह्मणो भवेत् ॥'

इति वचनेन चतुर्मुखस्य अज्ञानादिकं प्रतीयते, ततश्च चतुर्मुखस्य तिरोहितलाभः प्राप्त इति चेत् - न, भगवत्प्रीत्यर्थमेव अज्ञानादिप्रदर्शनात् । एवं श्रुतस्य पुनः पुनः श्रवणमपि भगवत्प्रीत्यर्थमेव । रुद्रादीनां तु तिरोहितलाभोऽप्यस्ति, ब्रह्मवरोपोद्धलितकल्यावेशेन ज्ञानतिरोधानस्य तात्पर्यनिर्णये दशमेऽध्याये उक्तेरिति ज्ञेयम् । अयमत्र प्रयोगः-

ब्रह्मसूत्राणि सूत्रशब्दमुख्यप्रवृत्तिनिमित्तवन्ति, निरुपपदसूत्रशब्दवाच्यत्वात् । यत् निरुपपदयच्छब्द-वाच्यम्, तत् तच्छब्दीयमुख्यप्रवृत्तिनिमित्तवत् । यथा बादरायणः निरुपपदव्यासशब्दवाच्यत्वात् व्यासशब्द-मुख्यप्रवृत्तिनिमित्तवान् । यत् यन्मुख्यप्रवृत्तिनिमित्तशून्यं, तत् निरुपपदशब्दवाच्यं न । यथा द्रौणिव्यासादयः मुख्यव्यासत्वशून्यत्वात् निरुपपदव्यासशब्दवाच्याः न, किन्तु सोपपदव्यासशब्दवाच्या एव इति ॥

यद्यपि ब्रह्मसूत्राणां सोपपद-ब्रह्मसूत्रवाच्यत्वमस्ति, तथापि निरुपपदसूत्रशब्दवाच्यत्वस्य न हानिः, अन्यसूत्राणां तु निरुपपदसूत्रशब्दवाच्यत्वं नास्त्येव, एवं दृष्टान्तेऽपि इति ॥

अत्र श्रूयमाणशब्दानां अनुवृत्त्यावृत्तिविपरिणामैरुक्तार्थः सिद्धः । एवमग्रेऽपीति नानुक्तार्थभाषणमिति ज्ञेयम् ॥

**(गोतमशापप्रकारः)**

गौतमशापप्रकारस्तु- दुर्भिक्षोपप्लुता ऋषयो गौतमतपःप्रभावसमृद्धतदाश्रमं प्राप्य चिरकालं तेन संमानिताः, तत्र सुखमुषित्वा, कालेन सुभिक्षस्वदेशं यियासवः, तदनुज्ञां याचमाना अपि अलब्धगौतमानुज्ञाः, शिवशिरस्थां सुरतरङ्गिणीं सपत्नीं निष्कासयन्त्या भवान्या चोदितेन विघ्नेश्वरेण उपदिष्टोपायाः, ज्ञानतपोबलेन गां तदाश्रमस्थ-सस्यग्रासिनीं विदधुः । तदा गौतमः, तामपक्रामयितुं कृतस्वप्रयत्नमात्रेण सहसा निपतितां गाम् अवलोक्य, परितप्तमना बभूव । तदैव लब्धान्तरा विप्राः'नायं गौतमो भोज्यान्नः' इत्युक्त्वा प्रतस्थिरे । ततो गौतमः चिरकालं चीर्णतपःप्रभावेन परितोषितहरशिरसः अवतारितया सुरसरिता गां परिषिच्य उज्जीवयामास । ततः किमेतदिति विचिन्त्य विप्रकृतं अक्रमादिसर्वं निश्चित्य, तान् 'ज्ञानहीना भवेयुरेते' इति शशाप- इति ॥

## १- अथ जिज्ञासाधिकरणम् ॥

### (ब्रह्मजिज्ञासा न कार्येति पूर्वपक्षः)

**(१२) ॐ ॐ अथातो ब्रह्मजिज्ञासा ॐ ॥ १ ॥**

**अत्र नये श्रुत्युक्तब्रह्मजिज्ञासायाः कर्तव्यत्वसमर्थनम् । एकसूत्रमधिकरणम् । अत्र टीकायां ब्रह्मजिज्ञासा न कर्तव्या विषयाभावात् इत्यादिः पूर्वपक्ष उक्तः ॥**

**ननु तत्र निर्विषयत्वादिति हेतुः स्वरूपासिद्धः, ब्रह्मजिज्ञासेति पक्षकोटिप्रविष्टत्वाद् विषयस्य, ब्रह्मविषयकत्वसहितजिज्ञासात्वस्यैव पक्षतावच्छेदकत्वात् ॥**

**न च ब्रह्मविषयकत्वेनाभिमता जिज्ञासेति पक्षनिर्देशः, अभिमानस्य भ्रमत्वेन तादृशजिज्ञासोद्देशेन सिद्धान्ते कर्तव्यताविधानायोगात्, घटादौ निर्विषयत्वसत्त्वेन अकर्तव्यत्वाभावेन हेतोर्व्यभिचाराच्च ।**

यद्यपि भवदभिमता जिज्ञासेति पक्षनिर्देशो वक्तुं शक्यः,तथा सति ब्रह्मविषयकत्वस्य पक्षतावच्छेदकत्वाभावान्नोक्तदोषः, तथाऽपि निर्विषयत्वं जिज्ञासायां बाधितमेव, विचारात्मकज्ञानस्य किञ्चिन्निष्ठविषयतानिरूपकत्वात् । स च विषयः, निश्चितो वाऽनिश्चितो वा भवतु ॥

न च जिज्ञासाविषयत्वं सन्दिग्धत्वं, तच्च स्वजन्यनिश्चय-निवर्तनीयसंशयविषयत्वं, प्रकृते संशयाभावाद् विशिष्टाभावः । एवं च ब्रह्मजिज्ञासायाः ब्रह्मविषयकत्वेऽपि उक्तनिर्विषयत्वमक्षतम् । किञ्च जिज्ञासात्व-समानाधिकरण-निर्विषयत्वस्य हेतुत्वान्न व्यभिचार इति वाच्यम् । एवं सति 'सति हि भूम्यादौ विषय' इति भूम्यादेर्विषयत्वपरसुधाग्रन्थेन विरोधापत्तेरिति चेन्न ।

उपजीव्यत्वं विषयत्वं उपजीवकतावच्छेदकसम्बन्ध एव हेतुतावच्छेदकसम्बन्धो जिज्ञासास्थले उपजीव्यं विषयत्वेनाभिमतम् । उपजीवकतावच्छेदकसम्बन्धस्तु स्वविषयकसंशयपूर्वकत्वम्, धर्मजिज्ञासादावुक्तसम्बन्धेन धर्मादिविषयमुपजीव्यैव कर्तव्यतादर्शनात् । कृष्यादौ भूम्यादिकं उपजीव्यमुपजीवकतावच्छेदक-सम्बन्धस्तु आधेयत्वम् ॥

तथा च धर्मजिज्ञासादिकं कर्तव्यम्, उपजीवकतावच्छेदकसम्बन्धेन उपजीव्यत्वात् । कृष्यादिवत् । ब्रह्मजिज्ञासा न कर्तव्या, उपजीवकतावच्छेदकसम्बन्धेन उपजीव्यविरहात् । समनस्केन्द्रियसन्निकृष्टस्फीतालोकमध्यवर्ति-घटविषयकजिज्ञासावद् इति प्रयोगः । प्रकृते जीवाभिन्नब्रह्मणोऽहमिति प्रत्यक्षसिद्धत्वात् संशयाभावात् उक्तसम्बन्धविरहः । अत उक्तसम्बन्धेन उपजीव्यविरह इति सर्वसामञ्जस्याद् इति । अधिकारिण उपजीव्यत्वेन प्रसिद्ध्यभावात्, तदभावस्य प्रत्येकं हेतुत्वमिति ध्येयम् । अकर्तव्यत्वं च प्रेक्षावदनुपादेयत्वम् । एतेन निर्विषयत्वेऽपि कर्तव्यत्वमस्तु, इच्छया कर्तव्यत्वसम्भवादिति परास्तम् ॥

(मोक्षजनकजनकज्ञानजनकत्वात् विष्णुजिज्ञासा कर्तव्या)

(१२) ॥ ॐ ॐ अथातो ब्रह्मजिज्ञासा ॐ ॥

अस्य विषयवाक्यानि 'तद्विजिज्ञासस्व' इत्यादीनि । '**अथ**'शब्दः स्वरूपतो मङ्गलार्थः वीणावेणुध्वनिवत् । वाच्यवृत्त्या आनन्तर्यार्थः । आनन्तर्यस्य प्रतियोग्याकाङ्क्षायामनुपस्थितस्य प्रतियोगित्वकल्पनापेक्षया कारणत्वेन उपस्थिताधिकारस्यैव प्रतियोगित्वकल्पनं युक्तमिति अधिकारलाभः ॥

(अधिकारनिरूपणम्)

अधिकारविचारः ॥ अधिकारश्च मुक्तियोग्यत्वरूपः । अयं चार्थः टीकापर्यालोचनया लब्धः । तत्र

हि- ब्रह्मविद्याधिकारिणो मुक्तियोग्यत्वं सामान्यलक्षणमुक्त्वा अधिकारो नोक्तः । अधिकारिण उक्तत्वेऽपि विशेषणतया अधिकारोऽप्युक्तो भवतीति चोक्तम् । मुक्तियोग्यत्वादिकमेव तत्र विशेषणतयोक्तम् । अध्ययनादिकं च नात्र पक्षेऽधिकारः, तस्य पक्षान्तरत्वोक्तेः । एवं च- अधिकार-रूपलक्ष्यतावच्छेदकलक्षणयोः एकत्वं प्राप्तम् । जातिघटितलक्षणस्थले तयोरेकत्वस्य अदोषत्ववत् प्रकृतेऽपि तयोरेकत्वस्य अदोषत्वं मन्तव्यम् । स त्रिविधः-उत्तममध्यमाधमभेदात् । तत्र उत्तमत्वं-देववृत्तित्वं, मध्यमत्वं- ऋष्यादिवृत्तित्वं, अधमत्वं-मनुष्योत्तमवृत्तित्वम् ॥

ननु मुक्तियोग्यत्वस्य मनुष्योत्तमत्वस्य च जिज्ञासायां प्रवृत्तेः पूर्वं दुर्ज्ञेयत्वेन कथं मुक्तियोग्योऽहं, मनुष्योत्तमोऽहं इत्यधिकारज्ञानपुरस्सरं मुमुक्षुः ब्रह्मजिज्ञासायां प्रवर्तेत ? न च स्वरूपत एव अधिकारः प्रवर्तकः, न तु ज्ञातस्सन्निति वाच्यम् । तथा सति अधिकारकथनस्यानुपयोगात् । किञ्च मुक्ति-योग्यत्वादेः नित्यसिद्धत्वेन तदानन्तर्यकथनस्यायोगाच्च । अयोग्यस्य विरोचनादेः ब्रह्मविद्यायां प्रवृत्तिदर्शनाच्च । योग्यस्य सच्छूद्रादेः प्रवृत्त्यदर्शनाच्च इति चेत् ।

अधिकारस्वरूपभूतमधिकारिणो लक्षणं प्रकारान्तरेण ब्रूमः । तथा हि- हरिभक्तिपूर्वकाध्ययन-वत्वम् अधिकारिसामान्यलक्षणम् । तत् त्रिविधम् । उत्तममध्यमाधमभेदात् ॥

तत्र- उत्तमत्वं च- हरिभक्तिपूर्वकाध्ययनेऽधिकारे स्वसामानाधिकरण्यस्वनिष्ठप्राचुर्य-निरूपितावधित्वोभयसम्बन्धेन वैराग्यपूर्वक-विष्णुपादैकसंश्रयत्ववत्वे सति सामानाधिकरण्य-सम्बन्धेन शमदमादिमत्त्वम् । एवं च सामानाधिकरण्य-स्वनिष्ठप्राचुर्यनिरूपितावधित्वोभयसम्बन्धेन वैराग्यपूर्वकविष्णुपादैकसंश्रयत्ववत्सामानाधिकरण्यसम्बन्धेन शमदमादिमच्च यत् हरिभक्तिपूर्वक-मध्ययनं, तद्वत्त्वं उत्तमाधिकारिलक्षणं फलितम् ॥

मध्यमाधिकारिणां हरिभक्तिपूर्वकाध्ययनविष्णुपादैकसंश्रयत्वयोः साम्यमभ्युपेत्य अयं परिष्कार इति अस्य लक्षणस्य मध्यमाधिकारिषु नातिव्याप्तिः ॥

मध्यमत्वं च हरिभक्तिपूर्वकाध्ययनेऽधिकारे स्वसामानाधिकरण्य-स्वनिष्ठप्राचुर्यनिरूपिताऽवधि-, त्वोभयसम्बन्धेन शमदमादिविशिष्टत्वे सति सामानाधिकरण्यसम्बन्धेन वैराग्यपूर्वकविष्णुपादैक-' संश्रयत्ववत्त्वम् ॥

अधमत्वं च हरिभक्तिपूर्वकाध्ययने स्वनिष्ठापकर्षनिरूपितावधित्वस्वसामानाधिकरण्योभय-सम्बन्धेन शमदमादिसम्पत्तिवैराग्यपूर्वकविष्णुपादैकसंश्रयत्ववत्त्वोभयवत्त्वम् । पूर्ववद् अधिकारिलक्षणं परिष्करणीयम् । तथा च विरोचनादेरयोग्यस्य अधिकारभ्रमात् ब्रह्मजिज्ञासायां प्रवृत्तिर्बोध्या ॥

ननु विष्णुभक्त्यादेः विचारसाध्यत्वेन ब्रह्मविचारात्पूर्वं विष्णुभक्त्यादिः कथं सिद्ध्येदिति चेत् - इत्थम् । विचारात्पूर्वं विष्णुभक्त्यादौ अत्यन्तदार्ढ्याभावेऽपि सामान्यतो वेदार्थज्ञाने भक्त्याद्युत्पत्तिः सेत्स्यतीति ॥

'अतः'शब्द एतच्छब्दप्रकृतिकपञ्चम्यन्तात् तसिल्प्रत्ययान्तः 'अन्वादेशविषये एतदोऽश् स्यात् । स चानुदात्तः त्रदसोः परतः' इत्यर्थक-'एतदस्त्रतसोस्त्रतसौ'[1] इति पाणिनीयसूत्रेण एतद् इत्यस्य स्थाने अश् आदेशः, तस्य शित्वात् सर्वादेशेन, अतस् इति जाते अत इति भवतीति ज्ञेयम् । एतच्छब्दः बुद्धिस्थ(उपस्थित)मोक्षादिफलपरः, मोक्षस्य- 'मोक्षार्थं ब्रह्मज्ञानं सम्पादनीयम्' इत्यर्थस्य, अधिकारान्तर्गतत्वेन 'अथ'शब्देन प्रतिपादनात् ॥

पञ्चम्यन्त -अशब्दप्रकृतिक -तसिप्रत्ययान्तश्च अतश्शब्दः । तत्र अशब्दो भगवत्प्रसादरूपकारणपरः, तथा प्रमाणसत्वात् । पञ्चम्यर्थो हेतुत्वं, तसिल्प्रत्ययः स्वार्थे, प्रमाणभाष्येऽपि 'अतश्शब्दो हेत्वर्थे समुदीरितः' इत्यनेन प्रकृतिभूत एतच्छब्दार्थविवरणं कृतम् । 'तद्धेतुत्वं वदन्' इत्यनेन तु पञ्चम्यर्थ-विवरणं कृतम् ॥

न चैवं 'तद्धेतुत्वं वदन्निति अनुवाद' इति टीकाविरोधः, 'तत्र हेत्वर्थे समुदीरित' इत्युक्तस्य अनुवादोक्तेरिति वाच्यम् । पञ्चमीप्रकृतेः हेत्वर्थत्वे पञ्चम्या हेतुत्वार्थकत्वं उक्तप्रायमेवेति 'तद्धेतुत्वं वदन्' इत्यस्य अनुवादत्वसम्भव इत्याशयात् ॥

न च एतच्छब्दस्य मोक्षादिफलपरत्वे दण्डेन घट इत्यादाविव विभक्त्यर्थहेतुत्वे प्रकृत्यर्थमोक्षादेः आधेयतासम्बन्धेन अन्वयो वाच्यः, स च प्रकृते नेष्ट इति वाच्यम् ।'अध्ययनेन वसति' इत्यादाविव विभक्त्यर्थहेतुत्वे प्रकृत्यर्थमोक्षादेः निरूपितत्वसम्बन्धेनान्वयाङ्गीकारात् । 'फलमपि इह हेतुः' इति वैयाकरणव्यवहारोऽपि, एवमन्वयाभिप्रायक एव । भाष्येऽपि- 'यतो नारायणप्रसादमृते न मोक्षः, न च ज्ञानं विनाऽत्यर्थप्रसादः, अतो ब्रह्मजिज्ञासा कर्तव्या' इत्यनेन मोक्षादेः विभक्त्यर्थहेतुत्वे निरूपितत्वसम्बन्धेन अन्वयो दर्शितः । अतश्शब्दस्य प्रसादपरत्वे पञ्चम्यर्थहेतुत्वे प्रकृत्यर्थप्रसादस्य आधेयत्वसम्बन्धेन अन्वयः ॥

### (ब्रह्मशब्दो गुणपूर्णवाची)

'ब्रह्म'शब्दः- बृह=वृद्धाविति धातोर्मनिन्प्रत्ययान्तः । वृद्धिः अपरिच्छेदः, परिच्छेदश्च त्रिधा सम्भवति -कालतः, देशतः, गुणतश्चेति । कालतः परिच्छेदः- यत्किञ्चित्कालवृत्तित्वम् । देशतः

१. पा.सू. २.४.३३

परिच्छेदः-यत्किञ्चिद्देशवृत्तित्वम् । गुणतः परिच्छेदः- यत्किञ्चिद्गुणवत्त्वम् । तदभावश्च अपरिच्छेदः । सर्वकालवृत्तित्व- सर्वदेशवृत्तित्व-सर्वगुणपरिपूर्णत्वरूपः । मनिन्प्रत्ययेन च उक्तधर्माश्रय उच्यते ॥

यद्यपि तुच्छेऽपि परिच्छेदत्रयशून्यत्वसम्भवात् कथं ब्रह्मशब्देन आत्मन एव ग्रहणम् ? कथं वा अपरिच्छेदः सर्वकालवृत्तित्वादिरूपः स्यात् ? इति शङ्का प्राप्नोति । तथाऽपि सत्वसमानाधिकरणा-परिच्छेदस्य धात्वर्थत्वात् नोक्तदोषः । एवमवयवार्थे स्थितेऽपि गुणपूर्णत्वार्थ एव प्रकृते विवक्षितः, तस्यैव विषयसाधकत्वात् । 'बृहन्तो ह्यस्मिन् गुणाः' इति श्रुत्या गुणपूर्णत्वस्यैव ब्रह्मशब्दमुख्य-प्रवृत्तिनिमित्तत्वाच्च । तस्माद् ब्रह्मशब्दो गुणपूर्णवाची ॥

**(जिज्ञासाशब्दार्थः)**

**'जिज्ञासा'**शब्दश्च- ज्ञाधातोरिच्छार्थसन्प्रत्यये टापि च निष्पन्नः ज्ञानेच्छापरो भवति । तथाऽपि- 'मानेर्जिज्ञासायाम्' इत्यनुशासने मीमांसाशब्दपर्यायत्वेन स्वीकारात् 'विचारे' रूढः । विचारश्च श्रवणमनननिदिध्यासनरूपज्ञानविशेषः, मननमात्रं वा । ब्रह्मणो जिज्ञासेति विग्रहे कर्मषष्ठ्यन्तेन समासः । 'षष्ठी'[1] इति सूत्रेण प्राप्तसमासस्य 'प्रतिपदविधाना षष्ठी न समस्यते'[2] इति निषेधप्रसक्तौ 'कृद्योगा च षष्ठी समस्यते'[3] इति प्रतिप्रसवात् । एवं च ब्रह्मकर्मिका जिज्ञासेति समासार्थो निष्पन्नः॥

एवं तर्हि लक्षणसाधनफलजिज्ञासानां कथं लाभ इति चेत्- लक्षणादिजिज्ञासां विना ब्रह्मस्वरूपजिज्ञासाया असम्भवात् तल्लाभः ॥

ननु तर्हि सम्बन्धसामान्यषष्ठ्यन्तेनैव समासः क्रियताम् । लक्षणादीनां तत्सम्बन्धित्वादेव लाभ इति चेन्न । विचारस्य सकर्मकत्वेन कर्माकाङ्क्षायां कर्मषष्ठ्या एवोचितत्वात् ॥

अत्र सूत्रे 'ओंकारश्चाथशब्दश्च' इति गारुडवचनेन आदौ ॐशब्दो लभ्यते । तदर्थस्तु- गुणपूर्ण इति, तदुक्तमनुव्याख्याने- 'ओतत्ववाची ह्योंकारो वक्त्यसौ तद्गुणोतताम्' इति । प्रवेशार्थक [4]'अव' धातोरधिकरणे कर्मणि वा 'मनिन्'प्रत्यये, प्रत्ययस्य टिलोपे निष्पन्न 'ओं' शब्दस्य योग्यतया प्रवेश-कर्तृत्वेन गुणेत्यस्य लाभेन गुणकर्तृकप्रवेशाधिकरणं, गुणकर्तृकप्रवेशकर्मेति वाऽर्थे शब्दतो लब्धे गुणपूर्ण इत्यर्थः फलतीति तदर्थः । एवं च सूत्रकृता सूत्रादौ ओंकारोऽसंहिततयोच्चारितः । असंहिततयोच्चारणं

१. पा.सू. २.२.८ २. पा.सू. २.२.१० सूत्रव्याख्यानसन्दर्भे तत्र सूचितं वार्तिकमिदम् (१३६०)

३. पा.सू. २.२.९सूत्रव्याख्यानसन्दर्भे तत्र सूचितं वार्तिकमिदम् (१३६०)

४. **अव**= रक्षण-गति-कान्ति-प्रीति-तृप्ति-अवगम-प्रवेश-श्रवण-स्वाम्यर्थ-याचन-क्रियेच्छा-दीप्ति- अवाप्ति-आलिङ्गन-हिंसा-दान-भाग-वृद्धिषु ॥

तु पाणिनितन्त्रे 'अङ्गस्य'[1] इत्याद्यधिकारसूत्रस्य, उत्तरत्र प्रतिसूत्रमनुवृत्त्यर्थं पृथगुच्चारणवत् प्रतिसूत्र-मनुवृत्त्यर्थमिति ध्येयम् ॥

मुमुक्षुभिः कर्तव्येति शेषः । यथायोग्यमावृत्तिः । तदयं सूत्रार्थः- मुमुक्षुभिः, **अथ**= अधिकार-सम्पत्त्यनन्तरं, **अतः**= भगवत्प्रसादरूपकारणसत्वात्, **अतः**= मोक्षकारणात्यर्थप्रसादकारणापरोक्ष-ज्ञानकारणत्वात्, **ॐ ब्रह्मजिज्ञासा**= गुणपूर्णस्य ब्रह्मणो विचारः श्रुत्युक्तः, कर्तव्येति । यद्वा **गुणपूर्णब्रह्मजिज्ञासा** कर्तव्येत्यर्थः । ॐ जिज्ञासा कर्तव्या- ब्रह्मजिज्ञासा कर्तव्या इत्यर्थ इति **भाष्यार्थमञ्जर्याम्** ॥

द्वितीयकल्पे गुणपूर्णत्वस्य जिज्ञासायामन्वयेऽपि ब्रह्मणि पर्यवसानमिति चन्द्रिका । अत्र पक्षे ॐ पदस्य योगार्थमात्रं ग्राह्यम् ॥

(सूत्रघटकपदानां दलकृत्यचिन्तनम्)

ननु कर्तव्येत्यध्याहारो मास्तु, ब्रह्मेति जिज्ञासेति च पृथक् पदे । जिज्ञासेति च कर्मप्रत्ययान्तं नित्यस्त्रीलिङ्गम् । एवं च मुमुक्षुणा, अथातो ब्रह्म जिज्ञासा=जिज्ञास्यम्, इत्यर्थेन निर्वाहादिति चेन्न । जिज्ञासापदस्य कर्मप्रत्ययान्तत्वेन जिज्ञासाविषय इत्यर्थलाभेऽपि विध्यर्थालाभात् । कर्तव्यपदस्य तु कृत्यप्रत्ययान्तत्वेन 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च'[2] इत्यनेन विधिविषयत्वलाभात् । एतेन यदुक्तं ब्रह्मजिज्ञासा अथारभ्यते इत्यर्थेन निर्वाहे कर्तव्येत्यध्याहारो मास्त्विति, तत् परास्तम् । आरभ्यत इत्यनेन ब्रह्मजिज्ञासा न कर्तव्येति पूर्वपक्षानिरासाच्च । अत्र निरधिकारिकत्वशङ्काव्यावृत्त्यर्थं मुक्त्यर्थिमात्रस्य ब्रह्मजिज्ञासायां प्रवृत्तिनिरासाय च- **अथेति** ॥ निष्प्रयोजनत्वशङ्कानिवृत्तये- **अत इति** ॥ निर्विषयत्वशङ्काव्यावृत्तये **ॐ इति ब्रह्मेति** चोक्तम् ॥

ननु ॐ जिज्ञासा कर्तव्या, ब्रह्मजिज्ञासा कर्तव्येति- तृतीयपक्षे वाक्यद्वयेनापि गुणपूर्णस्य ब्रह्मणो जिज्ञासा कर्तव्येति, एक एवार्थ उच्यते इत्यन्यतरवाक्यं व्यर्थमिति चेत्- उच्यते । यथा 'उपसर्गादृति धातौ'[3] इति पाणिनिसूत्रे धाताविति योगविभागेनाप्यवर्णान्तात् उपसर्गात् ऋकारादौ धातौ परे वृद्धिरेकादेशः स्यादिति तत्सूत्रसिद्धार्थस्यैव विधानेन एतत्सूत्रोदाहरणे 'उपार्च्छति' इत्यादौ वृद्धिरेव भवति, न तु 'ऋत्यक'[4] इति पाक्षिकोऽपि प्रकृतिभाव इति समानार्थकवाक्यद्वयप्रयोजनमुक्तम्, तथा प्रकृतेऽपि एकस्यैवार्थस्य वाक्यद्वयेन विधानं 'ब्रह्मज्ञानं ब्रह्मजिज्ञासयैव भवति, नान्येन' इति ज्ञापनार्थमिति ॥

---

१. पा.सू. ६.४.१ २. पा.सू. ३.३.१६३ ३. पा.सू. ६.१.९१ ४. पा.सू. ६.१.१२८

किञ्च- वाक्यद्वयेन एकस्यैवार्थस्य विधानं 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्याद्यनेकविषयवाक्यसूचनार्थम् । न च ॐपदेन कथं तत्सूचनमिति वाच्यं 'व्यर्थं सत् कञ्चिदर्थं ज्ञापयति' इति न्यायात् ॥

न च वैयर्थ्यात्, उदाहृतवाक्यं 'तद्विजिज्ञासस्व तद् ब्रह्म' इति वाक्यं चेति द्वयमेव विषयवाक्यं, न तु 'आत्मा वा अरे' इत्यादीति कुतो न स्यात् ? यद्युपलक्षणं, तर्ह्येकेनैव ब्रह्मशब्देन उपलक्षणेन निर्वाहे ओंपदवैयर्थ्यमेव ॥

किञ्च सूत्रस्य सर्वशाखानिर्णायकत्वं लक्षणमुक्तं, तेनैव अनेकविषयवाक्यलाभः, उपलक्षणत्वमपि नोपयुज्यते इति वाच्यम् - ज्ञापकयत्नं विना उपलक्षणत्वायोगात् । प्रथमसूत्रे उपलक्षणत्वस्य ज्ञापनीयत्वाच्च । अत एव आनन्दमयादिशब्देषु उपलक्षणत्वं युज्यते । प्रमितस्य ओंकारस्य त्यागायोगाच्च । सर्वशाखानिर्णायकत्वं सूत्रमुख्यलक्षणमिति ज्ञापनार्थत्वाच्च ॥

### (ओङ्कारः दृष्टादृष्टफलकः)

न च केवलादृष्टार्थ ॐकारः, 'स्रवत्यनोंकृतम्' इत्यादौ तथोक्तत्वादिति वाच्यम् । सम्भवति दृष्टफले तस्य त्यागायोगात् । इदं च पाणिनितन्त्रे ज्ञापकत्ववर्णनस्थले प्रसिद्धम् । पूर्वतन्त्रेऽपि, मन्त्राणां सति सम्भवे, प्रयोगसमवेतार्थस्मरणद्वारैव अदृष्टार्थत्वमुक्तम् । यत्र तु असम्भवः 'अनूक्साग्नि' तत्र केवलादृष्टार्थत्वम् । अत एव "अथातो धर्मजिज्ञासा" इत्यादौ वचनेन ओंकारसत्वेऽपि अर्थस्यासम्भवेन केवलादृष्टार्थत्वं ज्ञेयम् । एवं ओंपदार्थगुणपूर्णत्वावच्छिन्नस्य जिज्ञासायामन्वय इति द्वितीयपक्षेऽपि ॐपदस्य प्रयोजनमनुसन्धेयम् । ॐ ब्रह्मजिज्ञासा कर्तव्येति एकमेव वाक्यमिति प्रथमपक्षे ॐ पदार्थगुणपूर्णत्वावच्छिन्नस्य ब्रह्मपदार्थे अभेदसम्बन्धेनान्वयः ॥

### (ओङ्कारब्रह्मपदयोरन्वयक्रमनिरूपणम्)

न च ब्रह्मपदस्य वृत्त्येकदेशत्वात् कथं तदर्थे ओंपदार्थान्वयः ? तथा सति 'ऋद्धस्य राजमातङ्गः' इत्यादेरपि साधुत्वापत्तेरिति वाच्यम् । 'शिवभागवतः, परमगार्ग्यायणः' इत्यादौ तद्धितवृत्त्येकदेशार्थे भगवदादौ शिवाद्यभेदान्वयस्य दृष्टत्वेन तद्वत् क्वचित् साधुताऽभ्युपगमात् ॥

न चैवमपि उभयोर्गुणपूर्णार्थकत्वेन विरूपोपस्थित्यभावात् कथं अभेदान्वय इति वाच्यम् । 'वसन्तकाले सम्प्राप्ते काकः काकः पिकः पिकः' इत्यादाविव विरूपोपस्थित्यभावेऽपि अभेदान्वयदर्शनात् ॥

१. पा.सू. ८.२.३२

किञ्च 'दादेर्धातोर्घः'[१] इत्यत्र धातुपदस्य आवृत्त्या धातोर्धातोरित्यभेदान्वयं स्वीकृत्य, औपदेशिकदादेरित्यर्थलाभः इति प्राचीनग्रन्थेषु - दादेर्दादेरित्यावृत्त्या दादेर्दादेरित्यभेदान्वयं स्वीकृत्य औपदेशिकदादेरित्यर्थलाभ इति शब्दरत्ने च वैयाकरणैः विरूपोपस्थित्यभावेऽपि अभेदान्वयस्य प्रतिपादनात् ॥

किञ्च यजुर्वेदे (३अष्टके ७ प्रश्ने १ अनुवाके) "वायव्यां यवागूं निर्वपेत्" इत्युपक्रम्य श्रूयते- 'पयो वा ओषधयः, पयः पयः पयसैवास्मै पयोऽवरुन्धे' इति। अत्र तद्भाष्यम्- 'अतस्तद्दोषपरिहाराय वायुदेवताकां यवागूं निर्वपेत्। यवागूनिष्पादिका ओषधयः पय एव, क्षीरस्य गोभक्षिततृणजन्यत्वात्, पयस्तु स्वयमेव पयः, न तु तत्र उपचारोऽस्तीति। एवं च विरूपोपस्थित्यभावेऽपि पयः पयः' इत्यत्र अभेदान्वयो दृष्टः ॥

न च 'दादेर्धातोर्घ' इत्यत्र दादेर्दादेरित्यभेदान्वयः, औपदेशिकदादेरित्यर्थलाभार्थः, पयः पय इत्यत्र तथान्वयस्तु -पयसि मुख्यपयस्तत्वलाभार्थ इति वाच्यम्- प्रकृते गुणवति गुणवतोऽभेदान्वयोऽपि अप्राकृतापरिच्छिन्नानन्ताऽनारोपितगुणवत्वलाभार्थ इत्यङ्गीकारात् ॥

(जिज्ञासाशब्दो मननार्थकः)

'ॐ अथातो ब्रह्मजिज्ञासा' इति सूत्रे कर्तव्यत्वेन उक्ता जिज्ञासा- श्रवणमनननिदिध्यासनरूपा। भाष्ये त्रितयविषये प्रमाणोपन्यासात्। उपासनापादे- 'तन्निर्धारणार्थे' इति (३-३-४३) सूत्रे त्रितयकर्तव्यत्वस्योक्तेश्च ॥

न चैवं **सुधायाम्** मननमात्रं, जिज्ञासात्वेन कुतो गृहीतमिति वाच्यम्- श्रवणध्यानविषये भाष्योक्तादधिकस्य प्रतिपादनीयांशस्याभावेन मननमात्रस्य ग्रहणात्। तद्विषये वक्तव्यांशस्य सत्वात्। मनने एव जिज्ञासापदस्य स्वारस्याच्च। जन्मादिसूत्रैः सूत्रकृता मननस्यैव प्रदर्शितत्वाच्च।

(मननं नाम युक्त्यनुसन्धानेन जायमानम् इदमेतत्तात्पर्यकम्
इदमेतच्छक्तमित्यात्मकमधिकरणसिद्धान्तज्ञानम्)

तत्र श्रवणं नाम गुरुमुखात् नियमपूर्वकमुपदेशरूपं उपनिषदादिवाक्यार्थग्रहणम्। मननं नाम= श्रुतार्थविषये विप्रतिपत्त्यादिना प्राप्तशक्तितात्पर्यादिविषयक-संशय-विपर्ययाभ्यां श्रवणजन्यतत्वनिश्चये अप्रामाण्यज्ञाने प्रसक्ते तन्निवारणार्थं युक्त्यनुसन्धानेन जायमानं पूर्वोत्तरपक्षबलाबलनिर्णयरूपम् ॥

इदमेतत्तात्पर्यकम्, इदमेतत्प्रतिपादनयोग्यं वा, इदमेतच्छक्तं वा, इत्याद्यनुमित्यात्मकम् अधिकरणसिद्धान्तज्ञानम्। विचारेण निवर्तनीयसंशयस्तु अधिकरणसंशय एव। अधिकरणपूर्वपक्ष एव

निवर्तनीयो विपर्ययः । न हि युक्त्यनुसन्धानमात्रेण संशयविपर्ययनिवृत्तिर्भवति । किन्तु तज्जन्य-ज्ञानेनैव । तदुक्तं **यादुपत्ये**- "ननु विचारादिरपि न्याय एव, अतस्तत्र कथं न्यायोऽङ्गभूतः, आत्माश्रयत्वप्रसङ्गात् इत्यत उक्तम्- **युक्त्यनुसंधानात्मकेति** ॥ युक्तिभिरनुसन्धानं, पूर्वोत्तर-पक्षबलाबलचिन्तना तदात्मकेत्यर्थः यथाहुः-'पूर्वोत्तरपक्षबलाबलचिन्ता विचारः' इति । तथा च विचारशब्दोऽत्र न न्यायपर इति भावः" इति ॥

**सुधायामपि**- 'एतच्छास्त्रव्युत्पादनीयन्यायकरणिकायां जिज्ञासायां उभयविधव्यापारदर्शनात् विशेषादर्शनाच्च संशयः' इत्युक्तम् ॥

तथा च 'जन्माद्यस्य यतः' इत्यादिविचारपरसूत्रस्यायमर्थः - ब्रह्मशब्दो विष्णुतात्पर्यकः । विष्णु-प्रतिपादन एव योग्यो वा विष्णावेव शक्तो वा, जन्मादिकारणत्वश्रवणादित्यादिरिति ॥

**(सुधाविरोधपरिहारः)**

न चैवं **सुधायाम्**- 'ननु मीमांसाऽपि संभावनादिविषया कथमीश्वरविषया' इत्युक्तं, तद्विरोधः प्रदर्शितविचाररूपमीमांसायां विष्णोर्विषयत्वादिति वाच्यम् । तत्र विषयपदेन साक्षाद् विशेषण-विशेष्ययोरेव विवक्षितत्वेन, उक्तसूत्रार्थे भगवतः तदभावात् ब्रह्मशब्दो विष्णोरेव वाचक इत्यादिः सूत्रार्थ इति वेदकर्मकविचारतात्पर्येण सुधायां शङ्का कृता, ननु ब्रह्मशब्दवाच्यो विष्णुरेव, इत्याद्यर्थ इति ब्रह्मकर्मविचारतात्पर्येणेति विशेषः ॥

यद्यपि ब्रह्मपरवेदविचारोऽपि ब्रह्मविचार एव, एवं ब्रह्मविचारोऽपि ब्रह्मपरवेदविचार एव फलतः । तथाऽपि वेदविचारत्वेन ब्रह्मविचारत्वेन उद्देश्यत्वमिति भेद इति ज्ञेयम् ॥

एवं च श्रवणेन तत्वज्ञाने जातेऽपि विप्रतिपत्त्यादिना प्राप्त-संशय-विपर्ययाभ्यां ध्याने तद्द्वारा अपरोक्षज्ञाने च प्रतिरुद्धे सति मूलभूतसंशयादिनिरासद्वारा, ध्यानद्वारा च अपरोक्षज्ञानं मनन-फलम् । यद्यपि युक्त्यनुसन्धानमात्रस्य मननव्यवहारोऽस्ति शास्त्रे, तथापि प्रकृते कर्तव्यत्वेन विधित्सितं मननं उक्तरूपमेवेति ध्येयम् ॥

किञ्च तत्तत्पदैः तत्तच्छब्दप्रकारकोपस्थितिरेव भवतीति वैयाकरणैरङ्गीकारेण ॐपदेन ॐशब्द-प्रकारकोपस्थितिः, ब्रह्मपदेन ब्रह्मशब्दप्रकारकोपस्थितिरिति विरूपोपस्थितेः सत्त्वात् । अधिकांशस्तु विस्तरेण प्राङ् निरूपितः ॥

न च उभयोर्गुणपूर्णार्थकत्वेऽपि प्रकृते 'विशिष्टवाचकानाम्' इति न्यायेन ब्रह्मपदं विशेष्यमात्रपरम् इति वाच्यम् । तथा सति विषयसूचकत्वानुपपत्तेः । वस्तुतः ब्रह्मपदस्य परिच्छेदत्रयशून्यत्वं

प्रवृत्तिनिमित्तं, गुणपूर्णत्वं तु फलितम् । एवं ॐ पदस्य गुणकर्तृक-प्रवेशकर्मत्वं प्रवृत्तिनिमित्तम् । एवं च विरूपोपस्थितेः स्पष्टत्वात् अभेदान्वयो युक्त एवेति बोध्यम् ॥

इदमत्र तत्वम्- सूत्रकृता सूत्रादौ असंहिततयोच्चरित-ओङ्कारः, आवृत्त्यनुवृत्तिभ्यां प्रतिसूत्रमाद्यन्तयोरनुसन्धेयः । तत्र मानं तु- 'स्रवत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यते' इति श्रुतिः । अत्र श्रुतौ ब्रह्मशब्दो वेदपरः, ब्रह्मसूत्रपरश्च । 'नामैकदेशे नामग्रहणम्' इति न्यायात् ।

इत्थं च 'अथातो धर्मजिज्ञासा' इत्यादौ गारुडवचनेन आदौ ओङ्कारलाभेऽपि प्रतिसूत्रं ओङ्कारप्रसक्तिरेव नेति ॥ नन्वेवं चेत्- भाष्ये ओङ्कारार्थः कुतो नोक्त इति चेत्- उच्यते- उत्तरप्रस्थाने तदर्थस्य वक्ष्यमाणत्वात् इह नोक्त इति ॥

ननु गुणपूर्णस्य ब्रह्मणो जिज्ञासा कर्तव्येति सूत्रार्थवर्णने यद्यपि-'ब्रह्मशब्दश्च विष्णावेव' इति भाष्यं, 'ब्रह्मजिज्ञासा कर्तव्या' इति उक्तम् । तच्च ब्रह्म 'ब्रह्म पुच्छं प्रतिष्ठा' इति भाष्यं, 'स विष्णुराह हि तं ब्रह्मेत्याचक्षते' इति निरन्तरसूत्रद्वयेन सूत्रस्थब्रह्मशब्दस्य विष्णुपरत्वपरटीका एवंपरसुधा च 'तद्विजिज्ञासस्व', 'आत्मा वा अरे', 'नारायणोऽसौ परमो विचिन्त्यः', 'ओमित्येतदक्षरम्' इत्यादिविषयवाक्यानि च, जिज्ञासानयान्ते- 'यतो ब्रह्मशब्दो नारायणशब्दसमानार्थः, अतो ब्रह्मजिज्ञासा कर्तव्येति वाक्येन नारायणस्यैव जिज्ञासा विधीयते इति ज्ञायते' इति सुधा, ब्रह्मकर्मक-जिज्ञासाविधाने लक्षणादिजिज्ञासा न सम्भवतीत्याशङ्क्य, लक्षणादिजिज्ञासां विना ब्रह्मजिज्ञासाऽसम्भवपरसुधा च, ब्रह्मशब्देन विषयमिति चन्द्रिका, ओंपदार्थस्य ब्रह्मजिज्ञासेति वृत्त्येकदेशे ब्रह्मपदार्थे अन्वयो न स्यादिति कृत्वा जिज्ञासापदार्थे अन्वयमुक्त्वा, गुणपूर्णत्वस्य ब्रह्मणि पर्यवसानार्थं 'अङ्गावतार'न्यायोपन्यासपरचन्द्रिका च, एवंपरग्रन्थान्तराणि चानुकूलानि ।

(विधेयविशेषणस्य ब्रह्मणोऽप्राधान्यशङ्कापराकरणम्)

तथापि भावदीपे 'आत्मा वाऽरे' इति श्रुतिव्याख्यानटीकास्थ-'दर्शनार्थम्' इति प्रतीकं गृहीत्वा यदुक्तम्- एतेन 'ब्रह्मजिज्ञासा' इत्यत्र ब्रह्मज्ञानाय वेदार्थविषयकश्रवणमनननिदिध्यासनरूपा जिज्ञासा कार्येति वचनव्यक्तिः सूचिता । उक्तं च 'जिज्ञास्योऽयं विधीयते' इत्यत्रत्यसुधायां 'ज्ञानविधौ हि ब्रह्मणोऽप्राधान्यं स्यात् । ब्रह्मज्ञानोद्देशेन जिज्ञासाविधाने तु कुतोऽप्राधान्यम्' इति ॥ उक्तं च न्यायामृते तृतीयपरिच्छेदे 'ब्रह्मज्ञानाय ब्रह्मविचारः कर्तव्य इति न वचनव्यक्तिः तथा सति ब्रह्मणो विधेयविशेषणत्वापातात् । किन्तु ब्रह्मज्ञानाय वेदविचारः कर्तव्य इत्येव वचनव्यक्तिः' इति । यद्यपि ब्रह्मपरवेदविचार एव ब्रह्मविचारः तथापि न ब्रह्मविचाररूपेण विधानम् । किन्तु वेदविचाररूपेण,

तथा च श्रुतिः- 'तस्मादेनं सर्ववेदानधीत्य, विचार्य च, ज्ञातुमिच्छेत्' इत्यादि व्यक्तं चेदं सर्ववेदान्त(३-३-१)नयभाष्यादाविति तद्विरोधस्स्याद् इति चेन्न ।

पूर्वप्रस्थानरीत्या नारायणजिज्ञासा कर्तव्येति वचनव्यक्तिरित्यङ्गीकारात् ॥

अत्र कल्पे ब्रह्मणोऽप्राधान्यशङ्कापरिहारस्तु इत्थम्- अप्राधान्यं नाम नियम्यत्वं वक्तव्यं, तच्च विशेषणत्वमात्रेण न भवति । 'राजपुरुषः' इत्यादौ पुरुषापेक्षया राज्ञो विशेषणत्वेऽपि उक्ताप्राधान्यादर्शनात् । 'क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वात्' इत्यत्र ईश्वरस्य विधेयविशेषणत्वेऽपि उक्ताप्राधान्यादर्शनाच्च ॥

किञ्च 'अग्नीदग्नीन् विहर' इत्यादौ आमन्त्रणसत्वेन आमन्त्रणस्य विधिशक्तिप्रतिबन्धकत्वेन यथा न विधित्वम्, तथा 'तद्विजिज्ञासस्व, आत्मा वाऽरे' इत्यादौ आमन्त्रणसत्वेन विधित्वाभावमाशङ्क्य, प्रमाणान्तरेण विधित्वमभ्युपेयत इत्युक्तम् । तथा विधेयविशेषणत्वेन प्राप्ताप्राधान्यशङ्काया वारणसम्भवात् ।

तथापि अनुद्देशत्वरूपमप्राधान्यं दुष्परिहरमिति न च वाच्यम् । ब्रह्मज्ञानाय ब्रह्मविचारः कर्तव्य इत्यर्थेन उद्देशकोटावपि ब्रह्मणः प्रवेशाङ्गीकारात् । उत्तरप्रस्थाने तु एवमप्राधान्यशङ्कापरिहारापेक्षया यथाऽप्राधान्यशङ्का न स्यात्, तथा सूत्रार्थः शब्दमर्यादयैव लभ्यत इत्याशयेन तथा सूत्रार्थ उक्त इति ॥

**(प्रमेयाश्रितपूर्वपक्षपरिहारार्थं पूर्वप्रस्थाने प्रमाणाश्रितपूर्वपक्षनिरासार्थमुत्तराप्रस्थाने इति विवक्षाभेदेन सूत्रार्थः भिन्नः)**

किञ्च ब्रह्मजिज्ञासा न कर्तव्या विषयाद्यभावादिति प्रमेयाश्रितपूर्वपक्षपरिहारार्थं ब्रह्मजिज्ञासा कर्तव्येति सूत्रार्थ उक्तः पूर्वप्रस्थाने । उत्तरप्रस्थाने तु वेदविचारो न कर्तव्य इति प्रमाणाश्रित-पूर्वपक्षनिरासार्थं ब्रह्मज्ञानोद्देशेन वेदविचारः कर्तव्य इति सूत्रार्थ उक्तः ॥

किञ्च मन्दमध्यमाधिकार्यपेक्षया ब्रह्मज्ञानोद्देशेन ब्रह्मविचारः कर्तव्य इति सूत्रार्थः । तेषां मोक्षफलकब्रह्मज्ञानस्यैव उद्देश्यत्वात्, ब्रह्मणोऽनुद्देश्यत्वात् ॥ उत्तमाधिकार्यपेक्षया वेदविचारः कर्तव्य इति सूत्रार्थ उक्तः । अधिकारिभेदेन वाक्यार्थभेदस्य 'आत्मेत्येवोपासीत' इत्यादौ दर्शनात् । तत्र च एवकारः उत्तमाधिकारिणं प्रति अयोगव्यवच्छेदं बोधयति । अन्याधिकारिणं प्रति अन्ययोगव्यवच्छेदं बोधयतीति स्पष्टमुपासनापादे इति ॥

ननु ब्रह्मज्ञानाय वेदविचारः कर्तव्य इत्यर्थे ब्रह्मपदस्य वेदपरत्वेन तत्र ओंपदार्थान्वयः कथम् ?

कथं वा ब्रह्मशब्दस्य विषयसूचकत्वम् ? इति चेत्- उच्यते- अत्र कल्पे ओंपदस्य गुणपूर्णत्वप्रकारिकेत्यर्थः। तस्य च जिज्ञासायाम् अभेदेन अन्वयः। ततश्च गुणपूर्णत्वं विचार्ये वस्तुनि प्राप्तमिति विषयसूचकत्वम् ओंपदस्येति ॥

(अथशब्दः मङ्गलप्रयोजनकः, आनन्तर्यार्थश्च)

**(१४) 'अथ'शब्दो मङ्गलार्थोऽधिकारानन्तर्यार्थश्च।**

(१४) अथशब्दः ग्रन्थादौ मङ्गलाचरणस्य अवश्यकर्तव्यतासूचनार्थः, श्रुतितो मङ्गलपरतया मुक्त्यर्थिमात्रस्य ब्रह्मजिज्ञासायां प्रवृत्तिनिरासार्थम्, वाच्यवृत्त्या अधिकारानन्तर्यार्थतया च व्याचक्षते- **अथशब्द इति ॥ अधिकारानन्तर्येति॥** अथशब्दस्यानन्तर्यमात्रमर्थः, अधिकारस्य योग्यतया लाभः ॥

(प्रयोजनसत्त्वोपपादकोऽतःशब्दः)

**(१५) अतःशब्दो हेत्वर्थः।**

(१५) **अतश्शब्दं** ब्रह्मजिज्ञासायाः प्रयोजनशून्यताशङ्कानिवर्तकतया व्याचक्षते- **अतश्शब्द इति ॥ हेत्वर्थ इति ॥** प्रयोजनरूपार्थप्रतिपादक इत्यर्थः ॥

ननु अथातश्शब्दयोः प्रथममर्थ उक्तः, तयोः पूर्वं सूत्रे सत्त्वात्। वक्ष्यमाणाध्यायक्रमानुरोधेन विषयादिषु क्रमेण निर्देष्टव्येषु तं विना, अथातश्शब्दपूर्वकत्वं तत्तदारम्भसूत्राणां किन्निबन्धनम्? न च मङ्गलाद्यर्थप्रतिपत्तये तदिति वाच्यम्। मङ्गलादेः शब्दान्तरेणापि द्योतनसम्भवात्।

तथा हि- ब्रह्मजिज्ञासाऽतोऽथेति न्यासः, एवं धर्मजिज्ञासाऽतोऽथेत्यादिन्यासोऽन्यत्र। एवं च ब्रह्मणो धर्मादेश्च ग्रन्थप्रतिपाद्यवस्तुत्वात्, तत्प्रतिपादकब्रह्मशब्दादेः मङ्गलाचरणत्वसिद्धिः। यद्वा ब्रह्मणोऽथ जिज्ञासाऽतः ब्रह्मजिज्ञासा अतस्तत इति न्यासोऽस्तु, अत्र पक्षे मङ्गलोक्त्यादेरिति टीकायाः आदिभूतमङ्गलोक्तेरित्यर्थः। अन्यविषये शब्दान्तराभावात्। अन्यसूत्रविषये तत्तत्क्रमानुरोधेन सूत्रमस्त्विति। अतस्तत इति न्यासे ततःशब्दस्य आनन्तर्यार्थकत्वेन अधिकारलाभः।

यद्वा शब्दान्तरेणेत्यस्य शब्दानुपूर्वीभेदेनापीत्यर्थः। मङ्गलोक्त्यादेरित्यस्य यथाश्रुत एवार्थः। ('अतस्ततः' इति न्यास इति कल्पोऽपि व्यर्थः)

न च मङ्गलाचरणस्य शब्दान्तरेण सिद्धौ को लाभः, अथशब्देन तत्सिद्धौ का हानिः? तथा च मङ्गलाद्यर्थम् अथाऽतश्शब्दपूर्वकत्वं सूत्राणां युक्तमिति वाच्यम्। ब्रह्मपदस्य पूर्वं प्रयोगे बीजस्य दर्शितत्वात्।

(१६) **उक्तं च गारुडे—**

(१६) वेदव्याख्यानेषु सर्वेष्वपि आद्यसूत्रेषु ऐकरूप्येण अथाऽतश्शब्दपूर्वकत्वदर्शनेन तत्र च कारणविरहादिति शङ्काम्, सौत्राथातश्शब्दयोः उक्तोऽर्थ एव कुतः ? अन्योऽर्थः कुतो न स्यादिति शङ्कां च, पुराणवचनैरेव परिहरन्ति- **उक्तं चेति** ॥ उक्तं चेत्यावर्तते, चशब्दोऽनुक्तसमुच्चये । अयमर्थः- **उक्तम्=** अथशब्दो मङ्गलार्थ इत्यादिप्रमेयम्, **चात्** सूत्राणां अथातःशब्दपूर्वकत्वं च, **गारुडे** इत्यनेनोक्तं च प्रतिपादितमपीति । तथा च परभाष्य इव स्वोत्प्रेक्षितार्थो नोक्तः, किन्तु प्रमित एवार्थ उक्त इति भावः ।

इदमत्रावधेयम्- ब्रह्माथातःशब्दानाम् अवश्यवक्तव्यार्थत्वोत्तमार्थत्वसाम्येऽपि ब्रह्मशब्दापेक्षया स्वरूपोत्तमत्वात् अथातःशब्दयोः प्रथमं प्रयोग इति ॥

**(गरुडपुणोक्तदिशा ओमथादिशब्दार्थनिरूपणम्)**

(१७) **अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि ।**
**प्रारभन्ते नियत्यैव तत्किमत्र नियामकम् ॥**

(१८) **कश्चार्थश्च तयोर्विद्वन्कथमुत्तमता तयोः ।**
**एतदाख्याहि मे ब्रह्मन् यथा ज्ञास्यामि तत्वतः ॥**
**एवमुक्तो नारदेन ब्रह्मा प्रोवाच सत्तमः ।**

(१७) **अथातःशब्दपूर्वाणीति** ॥ **सूत्राणि** इति बहुवचनं बहुसूत्रघटितसमुदायद्योतकम्, **निखिलानीति** तु तादृशानेकसमुदायपरम् । अयमर्थः- हे **विद्वन्** आदिकवे **ब्रह्मन्** चतुर्मुख ! **निखिलान्यपि=** व्यासजैमिन्यादिकृतानि सर्वाणि सूत्राणि वेदार्थनिर्णायकविधिसूत्राणि तत्तत्सूत्रसमुदायानीति यावत्, **नियत्यैव=** नियमेनैव, कल्पान्तरेऽपीति यावत् । **अथातश्शब्दपूर्वाण्येव=** अथातश्शब्दपूर्वावयवकान्येव **प्रारभन्ते=** कुर्वन्ति । तत्तत्सूत्रकारा इति शेषः । यद्वा निखिलान्यपि सूत्राणि, विधिसूत्रेषु आदिसूत्राणि अथातःशब्दपूर्वाणि **प्रारभन्ते=** अथातःशब्दपूर्वकत्वविषयकाऽऽद्यकृतिविषयान् कुर्वन्तीत्यर्थः । ॐ इति, सूत्रस्य प्राथमिकत्वेऽपि अथातःशब्दपूर्वकत्वाभावेऽपि न दोषः, तस्य अधिकारसूत्रत्वात् । **तत्=** तथारम्भाद्धेतोः, **अत्र=** तयोः प्रथमप्रयोगे **नियामकं=** प्रयोजकं वाच्यम्, तत्प्रयोजकं **किम्** ? नियामकाभावे तथा प्रयोगनैयत्यं न स्यादिति भावः (अयं प्रश्नः) । इति स्वकृतप्रश्नस्य प्रथमप्रयोगे निमित्तं च

अवश्यवक्तव्यार्थत्वं, स्वरूपोत्तमत्वम्, अर्थत आधिक्यं चेति सामान्यत उत्तरं भवेदिति मनसि कृत्वा अवश्यवक्तव्यार्थं पृच्छति- (१८) **कश्चेति** ॥ **तयोः**= अथातःशब्दयोः, **अर्थः**= अवश्यवक्तव्यार्थः, **कः**? स्वरूपोत्तमत्वमाक्षिपति- **कथमिति** ॥ चकारद्वयबलात् आवृत्त्या वाक्यद्वयं कल्प्यम् । **तयोः**= अथातःशब्दयोः **उत्तमता**= स्वरूपोत्तमत्वम्, **कथं**= केन प्रकारेण स्यात्? न केनापि प्रकारेणेति भावः। (अयमाक्षेपः) । तयोः अथातःशब्दयोः **उत्तमता**= अर्थतः उत्तमत्वम्, **कथम्** ? अयं तु प्रश्नः । **एतत्**= प्रश्नाक्षेपविषयीभूतं नियामकम्, अहं **यथा तत्वतः ज्ञास्यामि**, तथा **मे आख्याहि** । **एवं नारदेन**, **उक्तः**= पृष्टः, आक्षिप्तश्च **सत्तमः**= सज्जीवोत्तमः **ब्रह्मा**= चतुर्मुखः **प्रोवाच** ॥

(१९) **आनन्तर्येऽधिकारस्य मङ्गलार्थे तथैव च ।**
**अथशब्दस्त्वतश्शब्दो हेत्वर्थे समुदीरितः ।**
**परस्य ब्रह्मणो विष्णोः प्रसादादिति वा भवेत् ॥**
**स हि सर्वमनोवृत्तिप्रेरकस्समुदाहृतः ॥**

(१९) **आनन्तर्ये इत्यादि** ॥ **'तथा-च'शब्दौ** परस्परसमुच्चये, **अथशब्दः अधिकारस्य आनन्तर्ये** वाच्ये अर्थे **मङ्गलार्थे एव**= स्वस्वरूपत्वेन प्रसिद्धे मङ्गलार्थे च **समुदीरितः** । सूत्रकारैरिति शेषः । **अतःशब्दो हेत्वर्थे समुदीरितः**= हेतुरत्र अनुमापक-जिज्ञासाकर्तव्यताविधेयकानुमितिजनकम् अपरोक्षज्ञानप्रसाद-मोक्षरूपप्रयोजनाख्यम् । अत एव 'अत इत्यमुना फलम्' इति चन्द्रिकोक्तं सङ्गच्छते । **परस्य ब्रह्मणो विष्णोः प्रसादात् इति वा**= इत्यर्थकश्च **भवेत्** । परस्येति विशेषणं तु विष्णोरपरब्रह्मत्वव्यावृत्त्यर्थम् । अत्र पक्षे विष्णुवाचक**'अ'**शब्दात् तसिप्रत्ययान्तोऽयं 'अतः'शब्दः, तत्प्रसादपर इति ज्ञेयम् । अकारवाच्यात् विष्णोः तत्प्रसादात् तज्जिज्ञासादिकं कार्यमिति ।

अतःशब्दार्थो भवेदिति टीकायां विशिष्टार्थवर्णनं तु प्रसादघटितसूत्रार्थस्य भाष्यकारैरनुक्तेः तद्वर्णन-परम्, इतरान्वितस्वार्थबोधनपरं वा । न तु अतःशब्द एव विशिष्टार्थपरः । तथा सति सूत्रघटकातःशब्दस्यैव विशिष्टार्थपरत्वेन शेषवैयर्थ्यापत्तेः ।

**स हीति** ॥ **हि**= यतः **सः**= विष्णुप्रसादः, प्रसन्नो विष्णुर्वा **सर्वमनोवृत्तिप्रेरकः**= **सर्वेषाम्**= धिकारिणाम्, **मनोवृत्तेः**= मनःप्रावण्यस्य, जिज्ञासारूपस्य **प्रेरकः**=नियामकः **समुदाहृतः** अत आवश्यकादिति शेषः । अस्य प्रसादादित्यत्रान्वयः ।

**(२०) सिसृक्षोः परमाद् विष्णोः प्रथमं द्वौ विनिःसृतौ ॥**
**ओङ्कारश्चाथशब्दश्च तस्मात् प्राथमिकौ क्रमात् ।**
**तद्धेतुत्वं वदंश्चापि तृतीयोऽत उदाहृतः ॥**

(२०) ननु अवश्यवक्तव्यानन्तर्याद्यर्थस्य शब्दान्तरेणापि प्रतिपादनसम्भवात् कथं तन्नियमः प्रदर्शितहेतुकः स्यादिति शङ्कावारणाय, कथं स्वरूपोत्तमत्वम् ? इत्याक्षेपस्य समाधानमाह- **सिसृक्षोरिति ॥ च**= यस्मात् **सिसृक्षोः**= स्रष्टुमिच्छोः, **परमात्**= उत्तमात्, **विष्णोः, प्रथमं**= शब्दान्तरोत्पत्तेः पूर्वम् **ॐकारश्च अथशब्दश्चेति द्वौ विनिःसृतौ**= कण्ठं भित्वा विनिर्यातौ, **तस्मात्**= स्वरूपोत्तमाविति शेषः, अतः **क्रमात् प्राथमिकौ**= ॐकारः प्रथमं प्रयोज्यः- अथशब्दश्च अनन्तरं प्रथमं प्रयोज्यः **च**= यस्मात्, **तद्धेतुत्वं**= तस्य विष्णुप्रसादस्य **हेतुत्वं**= जिज्ञासाकारणत्वम्, तस्य जिज्ञासादेः मोक्षकारणत्वं च **वदन्**= हेत्वर्थे समुदीरितः इति पूर्वोक्तमेव अनुवदन् **अतः**= अतश्शब्दः **तृतीय उदाहृतः**= तृतीयत्वेन विष्णुनोच्चरितः, अतः स्वरूपोत्तम ओङ्काराथशब्दातिरिक्तशब्दापेक्षया उत्तमः ॥ **तस्मात्** अतः- अतश्शब्दः तृतीयप्रथम उदाहृतः- तृतीयतया प्रथमं प्रयोज्यः । अयमत्र प्रयोगः- ओङ्कारादयस्त्रयः स्वरूपोत्तमाः, सृष्टिकाले हरेः सकाशात् सजातीयापेक्षया प्रथमं निःसृतत्वात् । यः सृष्टिकाले हरेः सकाशात् यज्जातीयापेक्षया प्रथमं निस्सरति, सः तज्जातीयेषु उत्तमः, यथा देवजातीयेषु प्रथमोत्पन्नः चतुर्मुखः तज्जातीयेषु उत्तम इति ॥

अत्रायं विवेकः- ओङ्कारप्राथम्यविषये हेतुः- सजातीयेषु प्रथमं निस्सृतत्वम्, अथशब्दविषये तु- ओङ्कारातिरिक्तशब्दापेक्षया प्रथमं निस्सृतत्वम्, अतश्शब्दविषये तु- ओङ्काराथशब्दातिरिक्तशब्दापेक्षया प्रथमं निस्सृतत्वम् इति ॥ एवं साध्यविषयेऽपि परिष्कारात् न कश्चिद्दोषः ॥

**(२१) अकारस्सर्ववागात्मा परब्रह्माभिधायकः ।**

(२१) अथ उत्तमार्थत्वं कथमिति तृतीयप्रश्नस्य उत्तरमाह- **अकार इति ॥ च**= यतः तयोः अथातश्शब्दयोः, **अकारः, सर्ववागात्मा= सर्ववाक्**= सर्ववागर्थः, तत्तच्छब्दप्रवृत्तिनिमित्तभूतगुणवत्त्वम्, तत्तद्वाक्यार्थभूतगुणवत्त्वं चेति गुणपरिपूर्णत्वरूपोऽर्थः, **आत्मा**= स्वरूपं यस्य सः, तथा सर्ववागर्थभूतगुणपूर्णत्वाभिधायक इति यावत् ॥ अत्र वाच्यवाचकयोः ऐक्यव्यपदेशः, **अतः परब्रह्माभिधायकः**, गुणवाचकाकारस्य गुणिभूतपरब्रह्मवाचकत्वं गुणगुणिनोरभेदात् युज्यते ॥

**(२२) तथौ प्राणात्मकौ प्रोक्तौ व्याप्तिस्थितिविधायकौ ॥**

(२२) **तथौ**= एतद्घटक-त-थकारौ **प्राणात्मकौ**= विष्णुवायू आत्मानौ= स्वरूपे, ययोस्तौ प्राणात्मकौ प्राणौ विष्णुवाचकौ वायुदेवताकौ ॥ अत्र वाच्यस्य विष्णोः, वाचक-त-थयोश्च ऐक्यव्यपदेशः 'अयं वै लोकः प्रथमा महानाम्नी' इत्यादाविव । महानाम्नी ऋक्त्रयम् । अभिमानिनो वायोः अभिमन्यमान-तथयोश्च ऐक्यव्यपदेशो 'महतश्चतुर्मुखात्' इत्यादाविव ॥ **व्याप्तिस्थितिविधायकौ** तनु- विस्तारे, ष्ठा-गतिनिवृत्ताविति धातुनिष्पन्नत्वात् देशकालव्याप्तेः अविकारेण स्थितेर्वाचकौ । अत्रापि **गुणगुणिनोरभेदादेव** गुणद्वारा भगवद्वाचकत्वम् ॥

यद्यपि सूत्रे अथशब्दस्यैव प्राथमिकत्वात् 'थतौ' इति वक्तव्यम्, तथाऽपि लोकप्रसिद्ध्यनुरोधेन **'तथौ'** इत्युक्तम् ।

ननु सूत्रघटकातःशब्दस्य सर्वनाम-एतच्छब्दप्रकृतिक-तसिल्प्रत्ययान्तत्वेन अथशब्दस्य अखण्डप्रातिपदिकत्वेन च अवयवार्थाभावेन कथं एवंविधार्थवर्णनं युक्तम् ? न च असर्वनाम-अतःशब्दाकारादेः एवमर्थवर्णनमिति वाच्यम् । अवश्यवक्तव्यार्थकथनावसरे तस्योक्तत्वात् तत्र अकारे तादृशार्थाभावाच्च इति चेन्न । पदसमन्वयपक्षे एतद्गुणवत्त्वेनैव समन्वयात् तादृशार्थवाचकत्वस्वरूपयोग्यावयवकत्वेन उत्तमत्वे तात्पर्यात् ।

(२३) **अतश्च पूर्वमुच्चार्यास्सर्व एते सतां मताः ।**
**अथातश्शब्दयोरेवं वीर्यमाज्ञाय तत्वतः ।**
**सूत्रेषु तु महाप्राज्ञास्तावेवादौ प्रयुञ्जते ॥' इति ।**

(२३) **अतश्च पूर्वमुच्चार्या** इति ॥ **अतश्च**= भगवद्वाचकाऽकारादिघटितत्वाच्च, ओङ्कारस्य भगवन्मात्रवाचकत्वाच्च, **एते**= प्रसक्ता ओङ्कारादयः **सर्वे** स्वरूपोत्तमा **अतश्च पूर्वमुच्चार्याः**, **सतां मताः**= सूत्रेषु प्रथमं प्रयोज्यत्वेन सतामनुमताः ॥

उपसंहरति- **अथातःशब्दयोरिति** ॥ तयोः शब्दयोः **एवं**= उक्तप्रकारेण, **वीर्यं**= स्वरूपाधिक्यादि-सामर्थ्यम् **आज्ञाय**= तत्वतो विज्ञाय, **तावेव**= 'अथातः'शब्दावेव, **सूत्रेषु**= विचारविधायकसूत्रेषु, **आदौ**= प्रथमं **प्रयुञ्जते**= असंहिततया उच्चारयन्ति **महाप्रज्ञाः**= व्यासादय इति ॥ **ओङ्कारस्य असंहिततया** प्रथमं प्रयोज्यत्वं 'स्रवत्यनोङ्कृतम्' इत्यनेन स्पष्टमुक्तमिति 'अथातःशब्दपूर्वाणि' इत्युपक्रमे **'अथातः-**शब्दयोरेवं तावेवादौ प्रयुञ्जते' इत्युपसंहारे च ओङ्कारो नोपात्तः । असंहिततया प्रथमप्रयोज्यत्वज्ञापनार्थं स्वरूपोत्तमत्वकथनावसरे ओङ्कारश्चाथशब्दश्चेति ओङ्कार उपात्त इति तत्वम् ॥

**(२४) अधिकारश्चोक्तो भागवततन्त्रे—**

(२४) **अधिकारश्च कीदृशः? कतिविधश्चेति शङ्कायामाहुः-अधिकारश्चेति ॥ ब्रह्मविद्यायामिति शेषः । अत्र अधिकारपदेन अधिकारसामान्यलक्षणम्, तद्विशेषलक्षणं च विवक्षितम् । वक्ष्यमाणप्रमाणेषु उक्तसर्वस्यापि सत्त्वात् । यद्यपि- 'त्रिविधा ह्यधिकारिणः' इत्यधिकारित्रैविध्यमेवोक्तम्, तथापि- विशेषणतया अधिकारत्रैविध्यमप्युक्तमिति ज्ञेयम् ॥**

**(जाति-गुणकृताधिकारित्रैविध्यनिरूपणम्)**

**(२५) मन्दमध्योत्तमत्वेन त्रिविधा ह्यधिकारिणः ।**
**तत्र मन्दा मनुष्येषु य उत्तमगणा मताः ॥**
**मध्यमा ऋषिगन्धर्वा देवास्तत्रोत्तमा मताः ।**

(२५) **मन्दमध्योत्तमत्वेनेति ॥** अस्यार्थः- मुक्तियोग्या इति शेषः । ये मुक्तियोग्याः ते तत्र ब्रह्मजिज्ञासायामधिकारिणः । तेऽधिकारिणः **मन्दमध्योत्तमत्वेन त्रिविधाः**= मन्दत्व-मध्यमत्वोत्तमत्वाभिन्नविभाजकधर्मान्यतमवन्तः **हि**= प्रसिद्धाः । **मनुष्येषु** मध्ये **ये उत्तमगणाः**, ते **तत्र**= ब्रह्मजिज्ञासायां **मन्दाः**= मन्दाधिकारिण इति । अयं भावः- मनुष्याः तत्सञ्ज्ञका जीवाः त्रिविधाः । उत्तममध्यमाधमभेदात् । तत्र उत्तमा अपि त्रिविधाः, उक्तभेदात् । अत्र गणपदप्रयोगात् त्रिविधमनुष्योत्तमानां ग्रहणमिति ॥ **ऋषिगन्धर्वा इति ॥** ऋषयः गन्धर्वाश्च, बहुवचनेन- पितरः चक्रवर्तिनश्च **तत्र**= ब्रह्मजिज्ञासायां **मध्यमाः** अधिकारिणः, **देवाः तत्र**= ब्रह्मजिज्ञासायाम् उत्तमाधिकारिणो **मताः** ।

**(२६) इति जातिकृतो भेदस्तथाऽन्यो गुणपूर्वकः ॥**

(२६) **इति**= एवं प्रकारेण **जातिकृतः**= मनुष्योत्तमत्वादिप्रयुक्तो **भेदः**= अधिकारिणां विभाग इति- इति शेषः । अनेन मुक्तियोग्यत्वं सामान्यलक्षणम्, देवत्वादिकं विशेषलक्षणम् उक्तं भवति ।

अस्य सामान्यलक्षणस्य सच्छूद्र-धर्मव्याधादौ अतिव्याप्तिः, तेषां मुक्तियोग्यत्वात्, ब्रह्मजिज्ञासायाम् अनधिकारित्वाच्च ॥ न च धर्मव्याधादेर्जन्मान्तरे विप्रदेहसम्भवेन जिज्ञासाधिकारित्वमिति वाच्यम् । एतद्देहावच्छेदेन जिज्ञासायां प्रवृत्तौ जन्मान्तरीयस्य अनुपयोगाद् अतो लक्षणान्तरमाह- **तथेति ॥ गुणपूर्वकः**= भक्तिज्ञानादिगुणनिमित्तकः, **अन्यः**= पूर्वोक्ताद् इतरश्च, **भेदः**= अधिकारिविभागः, अस्तीति शेषः । 'मन्दमध्योत्तमत्वेन त्रिविधा ह्यधिकारिणः' इति वर्तते । एकवचनान्तत्वेन विपरिणम्यते । पूर्ववदर्थः ॥

(२७) **भक्तिमान् परमे विष्णौ यस्त्वध्ययनवान्नरः ।**
**अधमः शमादिसंयुक्तो मध्यमस्समुदाहृतः ।**
**आब्रह्मस्तम्बपर्यन्तमसारं चाप्यनित्यकम् ।**
**विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रयः ।**
**स उत्तमोऽधिकारी स्यात् सन्न्यस्ताखिलकर्मवान् ॥ इति ।**

(२७) **कर्मवानिति ॥** इत्यनेनाधिकार उक्त इति **सम्बन्धः** ॥

(२७) क्रमेण अधिकारिणो दर्शयति- **भक्तिमानित्यादि ॥ यो नरः**= जीवः, **परमे**= सर्वोत्तमे **विष्णौ-भक्तिमान्, अध्ययनवांश्च, सः,** तत्र ब्रह्मजिज्ञासायाम् **अधमः** अधिकारी **समुदाहृतः**, प्रामाणिकैरिति शेषः । **यः शमादिसंयुक्तो नरः** स **मध्यमाधिकारी** समुदाहृतः । **आब्रह्मस्तम्बपर्यन्तं**= चतुर्मुखादारभ्य तृणजीवपर्यन्तजीवजातम्, **असारम्**= असर्वोत्तमम्, मोक्षात् अवरपदादिमच्च **अनित्यकं च**= अनित्य-देहादिमच्च, ब्रह्म तु सर्वोत्तमं नित्यं चेति **विज्ञाय**= सम्यग् ज्ञात्वा **जातवैराग्यः**= तत्तज्जीवीयैश्वर्यादिषु उत्पन्नविरक्तिमांश्च **विष्णुपादैकसंश्रयः**= विष्णुपाद एव एकसंश्रयः मुख्याश्रयः मम गतिरिति ज्ञानं यस्य सः तथोक्तः **सन्न्यस्ताखिलकर्मवान्**= भगवति समर्पितसर्वाकाम्यकर्मवान्, भगवत्पूजारूपत्व-भगवत्कृतत्वप्रकारकज्ञानविषयाखिलकर्मवांश्च वा, **स उत्तमोऽधिकारी ॥ इति- अनेन प्रमाणेन** हरिभक्तिपूर्वकाध्ययनवत्वं ब्रह्मजिज्ञासायामधिकारिणः सामान्यलक्षणमुक्तं भवति ॥

नन्वत्र अवैष्णवस्य वेदाधिकाराभावेन अध्ययनवत्वमात्रस्य लक्षणत्वेऽपि अतिव्याप्तिवारणेन हरिभक्ति-पूर्वकत्वविशेषणं व्यर्थमिति चेन्न । अन्यायेन आर्जिताध्ययनवति वैष्णवे अतिव्याप्तिवारणार्थत्वात् ॥ प्रथमविभागवाक्ये बहुवचनेन लक्ष्यनिर्देशः, द्वितीये तु एकवचनेन लक्ष्यनिर्देशः, इति भेद इच्छयैव कृतः, न तु तात्पर्यविशेषेण ॥

**आब्रह्मेत्यत्र-** आ= आरम्भो ब्रह्मा यस्य तत्- आब्रह्म 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरः पदलोपः'[१] इत्यनेन समासः (आरम्भेत्यत्र उत्तरपदलोपश्च) स्तम्बः पर्यन्तो यस्य तत् - आब्रह्म च तत् स्तम्बपर्यन्तं चेति विग्रहः । यद्वा अभिव्याप्त्यर्थकाऽऽङा अव्ययीभावः । ततः कर्मधारयः । भिन्ने पदे वा इति बोध्यम् ॥

---

१. वार्तिकम् (पा.सू. २.२.२४)

**(२८) 'अध्ययनमात्रवतः' (ब्र.सू.३—४—१२) । 'नाविशेषात्' (ब्र.सू.३—४—१३) इति चोपरि । 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत्' (बृ.उ.४—४—२३) ।**

(२८) ननु उदाहृतप्रमाणे ब्रह्मविद्यायामित्यनुक्तेः अधिकारित्रैविध्यं कथं ब्रह्मविद्याविषयकम् ? इत्यत आहु-: **अध्ययनमात्रवतः (३-४-१२) इति ॥**

अधिकारितारतम्ये मानमाहुः- **नाऽविशेषात् (३-४-१३) इति ॥ उपरि=** तृतीये चतुर्थपादे **'अध्ययनमात्रवतः' 'नाऽविशेषात्'** इत्यनेन अधिकार उक्त इत्यर्थः । वक्ष्यत इति शेषो वा । शान्त्यादिकं ब्रह्मविद्यायाम् अधिकार इत्याहुः- **शान्त इति ॥**

(२८) **अध्ययनमात्रवतः** ॥ (३-४-१२) अस्यार्थः- यथाशक्ति कृत्स्नाध्ययनवतो ब्रह्मजिज्ञासाधिकारिता इति ॥ **नाऽविशेषात्** (३-४-१३) अस्यार्थः- ब्रह्मजिज्ञासाऽधिकारिता अविशेषात्= साम्यात् न, किन्तु तारतम्येनैव इति ॥ **शान्तो दान्त इति** (बृह. ४.४.२३) अस्यार्थः- अस्य पूर्ववाक्यम् 'एवं वित्' इति । **एवंवित्**= हरेः संसारमोचकत्वज्ञानी, **शान्तः**= भगवन्निष्ठबुद्धिमान्, **दान्तः**= निगृहीतेन्द्रियः, **उपरतः**= विषयालम्बुद्धिमान्, समीपस्थविष्णौ रत इति वा, **तितिक्षुः**= शीतोष्णादिद्वन्द्वसहिष्णुः, **समाहितः**= यथावस्तुज्ञानादिमान्, **समे**= हरौ चित्तवृत्तिमान् वा, भूत्वा, **आत्मनि**= स्वहृदये, स्थितमिति शेषः, **आत्मानं**= विष्णुं **पश्येत्**= विचारयेत् इति ॥ अत्र आत्मनि पश्येदित्युक्त्या अस्य मध्यमाधिकारित्वं सूचितम् । बृहदारण्यके- 'आत्मन्येवात्मानं पश्यति' इति पाठो दृश्यते, तथापि 'पश्येत्' इति तदर्थानुवाद इत्यदोषः । शाखान्तरं वा ॥

**(२९) परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । (मु.उ.१—२—१२)**

(२९) सारासारविवेकोऽपि ब्रह्मविद्यायामधिकार इति श्रुत्याऽऽहुः- **परीक्ष्येति ॥**

(आथ. १.२.१२) अयमर्थः- **ब्राह्मणः**= ब्रह्मज्ञानयोग्यः, **लोकान्**= विष्णुलोकेतरान्, **कर्मचितान्**= काम्यकर्मसम्पादितान्, अत एव असारानित्यत्वेन **परीक्ष्य**= निश्चित्य, **निर्वेदं**= काम्यकर्मणि, तत्फले च वैराग्यम्, **आयात्**= प्राप्नुयात्, यतः **अकृतः**= नित्यपुमर्थः मोक्षः, **कृतेन**= अनित्यफलककाम्यकर्मणा,

**नास्ति**= न सिद्ध्यति । किन्तु ज्ञानेनैवेति शेषः । **तत्**= तस्मात्, **सः**= पूर्वोक्तो विरक्तः, **तद्विज्ञानार्थं**= ब्रह्मविषयकविशेषज्ञानार्थम्, **समित्पाणिः**= समिद्युक्तहस्तवान्, सम्पुटीकृतहस्तवान् वा सन्, **श्रोत्रियं**= वेदाध्ययनपूर्वकतद्विहितकर्मानुष्ठातारं **ब्रह्मनिष्ठमेव गुरुम् अभिगच्छेत्**= उपसीदेत्, गुरुमेवाभिगच्छेदिति वा एवकारसम्बन्धः । अत्र विज्ञानार्थमित्युक्त्या अस्य उत्तमाधिकारिदेवादिविषयत्वं सूचितम् ॥

**(३०) 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' (क.उ.२.२३)।**
**'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥' (श्वे.उ.६.२३)**
**इत्यादि श्रुतिभ्यश्च (भिश्च) ॥**

(३०) विष्णुभक्तिरपि उक्तविद्यायामधिकार इति श्रुत्या प्रतिपादयन्ति- **यमेवैष इति ॥ (कठोप. २.२३)** भक्तिश्च तारतम्योपेतैव ब्रह्मविद्योपयोगिनीत्याहुः- **यस्येति ॥ (श्वेताश्व. ६.२३) श्रुतिभिश्चेति ॥** अधिकार उक्त इति सम्बन्धः । श्रुतिभ्यश्चेति पाठे तु करणस्य कर्तुर्वा हेतुत्वविवक्षया पञ्चमी ॥

(३०) **यमेवैष** इति ॥ एष **आत्मा, यं**= अधिकारिणं **वृणुते**= तदीयभक्त्या स्वीकरोति **तेनैव** अधिकारिणा **लभ्यः**= प्रसन्नीकर्तुं शक्यः । तस्मै प्रसीदतीति यावत् । **एष आत्मा, तस्य**= उक्तप्रसादविषयस्य **स्वां तनूं**= स्वस्वरूपं **वृणुते**= तदीयश्रवणादित्रिषयं करोतीत्यर्थः ॥ एवं च भक्तिः, अवान्तरप्रसादश्च ब्रह्मजिज्ञासायां कारणमित्युक्तं भवति । **यस्य देवे इति** ॥ अस्यार्थः- **यस्य**= अधिकारिणः, **देवे**= क्रीडादिगुणविशिष्टे हरौ, **परा**= निरवधिका भक्तिरस्ति, **देवे**= चतुर्मुखादिदेवेषु, **यथा**= तत्तद्योग्या भक्तिः, **गुरौ तथा**= गुरुष्वपि तत्तद्योग्या भक्तिरस्ति, **तस्य**= तादृशभक्तिमतः महात्मनः अधिकारिणः, **कथिताः**= गुरुणा उपदिष्टाः, पूर्ववाक्येन उक्ता वा, एते **अर्थाः प्रकाशन्ते**= तत्सम्बन्धिप्रकाशविषया भवन्ति । यद्वा- अनुक्ता अप्यर्थाः प्रकाशन्त इत्यर्थः । भक्तिवशात् स्फूर्तिविषया भवन्तीति भावः ॥

**(त्रिवर्णेतरेषां मोक्षसाधननिरूपणम्)**

**(३१) व्योमसंहितायां च–**

**अन्त्यजा अपि ये भक्ता नामज्ञानाधिकारिणः ।**
**स्त्रीशूद्रब्रह्मबन्धूनां तन्त्रज्ञानेऽधिकारिता ॥**

**(३१) ननु अध्ययनविधुराणां त्रिवर्णेतरेषां ज्ञानाभावप्रसङ्गेन मोक्षाभावः स्यादिति शङ्कां प्रमाणेन परिहरन्ति- व्योमसंहितायां चेति ॥**

**अन्त्यजाः**= वर्णबाह्याः चण्डालादिपुल्कसान्ताः **ये भक्ताः**= विष्णुभक्तिमन्तो मुक्तियोग्याः **तेऽपि**= ते तु भक्ताः, **नामज्ञानाधिकारिणः**= नाम च ज्ञानं चेति द्वन्द्वः, **नाम्नि**= भाषात्मकप्रबन्धाध्ययने, **ज्ञाने**= तज्जन्यब्रह्मज्ञाने च अधिकारिणः ॥ **भाष्यदीपिकायां** तु- अन्त्यजाः=त्रिवर्णबाह्याः शूद्रादिपुल्कसान्ता इत्यर्थमुक्त्वा तत्र न्यायदीपिकाग्रन्थः प्रमाणत्वेन उपन्यस्तः ॥ **स्त्रीशूद्रब्रह्मबन्धूनां, स्त्रियः**= ब्राह्मणादिस्त्रियः, **शूद्राः**= तज्जातीयाः, **ब्रह्मबन्धवः**= ब्राह्मणबन्धुत्वेन प्रख्याता ब्राह्मणाभासाः ।

**(३२) एकदेशे परोक्ते तु न तु ग्रन्थपुरस्सरे ।**
**त्रैवर्णिकानां वेदोक्ते सम्यग्भक्तिमतां हरौ ॥**
**आहुरप्युत्तमस्त्रीणामधिकारं तु वैदिके ।**
**यथोर्वशी यमी चैव शच्याद्याश्च तथाऽपरा ॥ इति ।**

**(३२) तथाऽपरा इतीति ॥** इत्यनेन अधिकार उक्त इति सम्बन्धः ॥ ननु- वेदविचारात्मक- एतच्छास्त्रीयाधिकारिप्रकरणे तन्त्रादिज्ञानाधिकारिकथनस्य का सङ्गतिः ? न च विचारस्य मोक्ष- फलकत्वात् मोक्षस्य उपस्थितौ एतच्छास्त्रानधिकारिस्त्रीशूद्रादीनां मोक्षोपायत्वात् तन्त्रादिजिज्ञासायाः, तदर्थमेतत् अधिकारिकथनमिति वाच्यम् । तन्त्रादिजिज्ञासाम् अविधाय, अधिकारिकथनस्य तज्जिज्ञासायाम् अप्रवर्तकत्वेन वैयर्थ्यात् ॥

न च तन्त्रादिज्ञानाधिकारिकथनस्य अस्माभिः तन्त्रादिश्रवणरूपा जिज्ञासा कर्तव्येति शूद्रादीनां ज्ञानजननद्वारा तन्त्रादिविचारकर्तव्यताविधौ पर्यवसानं भविष्यतीति वाच्यम् । शूद्रादीनाम् एतद्ग्रन्थाध्ययनाभावेन, अत्रोक्तार्थस्य तैर्ज्ञातुमशक्यत्वादिति चेत्- उच्यते । एतद्ग्रन्थाध्येतृभिः शूद्रादीन् प्रति तन्त्रादिश्रवणरूपविचारः कर्तव्य इत्युपदेष्टुम् एतदधिकारकथनस्योपयोगात् । अन्यथा तन्न स्यादिति ॥

यद्वा, 'त्रैवर्णिकानां वेदोक्ते सम्यग्भक्तिमतां हरौ ।
आहुरप्युत्तमस्त्रीणाम् अधिकारं तु वैदिके ॥'

इति वचनम् उत्तमस्त्रीणां वेदविचारेऽधिकारबोधकम् । अत्र पूर्वोक्तवचनैः उत्तमस्त्रीणामधिकारो न प्राप्त इति बोधनार्थं 'स्त्रीशूद्र' इति वचनोपन्यासस्य आवश्यकत्वात् न पूर्वोक्तचोद्यावकाशः । 'अन्त्यजा अपि' इति वचनोपन्यासस्तु प्रासङ्गिक इति ॥

परे तु- 'ब्रह्मजिज्ञासा कर्तव्या' इत्युक्ते केनेति कारणाकाङ्क्षायाम्, वेदेन तदनुसारिग्रन्थेन चेत्यर्थाल्लभ्यते। ततश्च उभयकरणकजिज्ञासा सूत्रेण विहिता भवति। तत्र सामान्यतोऽधिकारे उक्ते अथशब्देन अधिकारविशेषप्रतिपादनार्थं भाष्यं प्रवृत्तम्, ततश्च नामज्ञानाद्यधिकारकथनमपि प्रकृतमेवेति वदन्ति ॥

नन्वेवं संसारिसज्जीवमात्रस्य ब्रह्मजिज्ञासायामधिकारसम्भवेन मुक्तियोग्यत्वरूपाधिकारसामान्यलक्षणस्य कथं सच्छूद्रादौ अतिव्याप्तिरिति चेन्न। भक्तिरूपाधिकारशून्यशूद्रपशुपक्ष्यादिसज्जीवेष्वेव अतिव्याप्तेरुक्तत्वात्। वेदकरणकजिज्ञासायामेव मुक्तियोग्यत्वं सामान्यलक्षणमिति अभिप्रायेण वा अतिव्याप्तेरुक्तत्वात् ॥

न चैवमपि 'अध्ययनमात्रवतः' इति सूत्रविरोधः, अपशूद्राधिकरणविरोधश्च। आद्येऽध्ययनवतामेव ब्रह्मज्ञानेऽधिकारोक्तेः, द्वितीये शूद्रस्य ब्रह्मज्ञानाधिकारनिषेधादिति वाच्यम्। वैदिकज्ञाने एव अध्ययनमात्रवत इत्यनेन सूत्रेणाधिकारोक्तेः तत्रैव शूद्रस्य अपशूद्राधिकरणेनाधिकारनिषेधात्। टीकायां तथैवोक्तेश्च ॥

न चैवमपि वेदकरणकजिज्ञासां कर्तव्यत्वेन प्रतिज्ञाय जन्मादिसूत्रादिना यथा स विचारः कृतः, तथा तन्त्रादिकरणकजिज्ञासाया उत्तरत्राकरणात् नासौ सूत्रार्थ इति वाच्यम्। अथ= अधिकारसम्पत्त्यनन्तरम्, अतः=मोक्षादिफलसद्भावात् तन्त्रादिकरणिका ब्रह्मजिज्ञासा, अथ=अनन्तरम् एतद्ग्रन्थाद्बहिरेवेति यावत्, कर्तव्या अधिकारिविशेषैरित्यपि सूत्रार्थाङ्गीकारेण उक्तदोषानवकाशात् ॥

(३२) तेषाम् **एकदेशे**= तन्त्रग्रन्थेषु एकदेशभूतवेदभागामिश्रित इति यावत्। **परोक्ते**= ब्राह्मणादिपरोद्देश्यकप्रवचनविषये **तन्त्रज्ञाने तु**= पञ्चरात्रादितन्त्रजस्य ब्रह्मज्ञाने एव, न तु वैदिके **अधिकारिता**= अधिकारः। एकदेशे परोक्ते इत्यनयोः तन्त्रज्ञान इत्येकदेशतन्त्रपदार्थेऽन्वयः **ग्रन्थपुरस्सरे**= परोद्देशेन प्रवृत्तावपि स्वस्य ग्रन्थावलोकनपूर्वके, अस्य ग्रन्थस्य अयमर्थ इत्यादिरूपे वा उक्ततन्त्रजन्यज्ञाने अधिकारिता, **न तु**= नैव। ननु तर्हि वैदिके केषामधिकार इत्यत आह- **त्रैवर्णिकानामिति** ॥ सर्वत्रैवर्णिकानामधिकारो नेत्याह- **सम्यगिति** ॥ **हरौ सम्यग्भक्तिमताम्, त्रैवर्णिकानां**= ब्राह्मणक्षत्रियवैश्यानां वेदोक्तज्ञानेऽधिकारमाहुः। उत्तमस्त्रीणामपि वैदिकेऽधिकारमाहुः, उत्तमस्त्रिय उदाहरति- **यथेति** ॥ **यमी**= यमपत्नी, **चेन**= उमाद्या गृह्यन्ते। **शच्याद्या** इत्याद्यपदेन सर्वदेवस्त्रियः। **चेन** मनुष्यकुलोत्पन्नदेवस्त्रियो गृह्यन्ते। **अवराः**= ऋषिपत्न्य इत्यर्थः ॥

**(विष्णुप्रसादमृते न मोक्षः)**

**(३३) यतो नारायणप्रसादमृते न मोक्षः, न च ज्ञानं विनाऽत्यर्थप्रसादः अतो ब्रह्मजिज्ञासा कर्तव्या।**

**(३३) एवम् अथशब्दं सङ्क्षेपविस्ताराभ्यां व्याख्याय सङ्क्षेपतः 'अतःशब्दो हेत्वर्थः' इत्युक्तम् अतःशब्दार्थं व्यञ्जयन्ति- यत इत्यादिना ॥ प्रसादमृते न मोक्ष इति ॥** 'अन्यारादितर' इति (पा.सू. २.३.२९) **सूत्रेण ऋते-शब्दयोगे पञ्चमीविधानेऽपि** 'ततोऽन्यत्रापि दृश्यते' (वार्ति. १४.४४) **इति वचनेन द्वितीयापि भवति । तथा च 'ऋते द्वितीया च' इति चान्द्रं सूत्रं 'फलति पुरुषाराधनमृते' इति प्रयोगश्च सङ्गच्छते । इदं च 'अन्यारादितर' इति सूत्रे तत्त्वबोधिन्यां स्पष्टम् । ऋतेशब्दार्थः= अभावः, तस्य प्रयोज्यतासम्बन्धेन नञर्थे मोक्षाभावेऽन्वयः । नारायणप्रसादाभावप्रयोज्यो मोक्षाभाव इति शाब्देऽर्थे स्थिते प्रयोजकाभावप्रतियोगिप्रयोज्यत्वं प्रयोज्याभावप्रतियोगिनि भासत इति प्रसादो मोक्षकारणमिति पर्यवसितम् । एवमुत्तरवाक्येऽपि । यत इति पञ्चम्यर्थोऽविवक्षितः ॥**

**एवं च मोक्षकारणनारायणात्यर्थप्रसादकारणं ज्ञानमिति यद् अतः तन्निरूपितकारणत्वात् ब्रह्म-जिज्ञासा कर्तव्येति समुदितार्थः । क्वचित् भाष्यपुस्तके 'न च ज्ञानं विनाऽत्यर्थप्रसादः' इत्यनन्तरं 'न च जिज्ञासां विना ज्ञानम्' इति पठ्यते । तत्पक्षे अतः इत्यस्य जिज्ञासायाः कारणत्वादित्यर्थः । 'तद्विजिज्ञासस्व' इति विषयवाक्यं तु उत्तरसूत्रे उदाहरिष्यमाणत्वादत्र नोदाहृतम् ॥**

**(सूत्रे 'कर्तव्या' इति पदमेवाध्याहार्यम्)**

## (३४) यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् ।
## वाक्यं वेति सतां नीतिः सावकाशे न तद्भवेत् ॥ इति बृहत्संहितायाम् ।

**(३४) ननु सूत्रे 'कर्तव्या' इति पदं न श्रूयते, यद्यध्याहारः तर्हि 'न कर्तव्या' इत्यध्याहार एवास्तु इति मनसि कृत्वा कर्तव्येति पदाध्याहारे मानमाहुः- यत्रेति ॥ बृहत्संहितायामिति ॥ अत्र 'अध्याहार्यम्' इति शेषः । कर्तव्येत्यनुवर्तते, अनुवर्तमानं शब्दस्वरूपपरम् । अयमर्थः- बृहत्संहितायामित्युक्तेः अत्र कर्तव्येति पदम् अध्याहार्यमिति ॥ न कर्तव्येत्यध्याहारेऽधिकारादि-कथनवैयर्थ्यं स्यादिति भावः ॥**

**(३४) यत्रानवसर इति ॥** यत्र वाक्ये यत्पदं विना **अन्यत्र**= अर्थान्तरे **अनवसरः**= अर्थान्तरस्य अघटना,' यद्वाक्यस्थयत्पदाभावप्रयुक्तः, अर्थान्तरानुयोगिक-तादृशवाक्यघटकपदार्थप्रतियोगिकाऽऽकाङ्क्षानिवर्तका-न्वयाभावः यत्पदाभावप्रयुक्तं तद्वाक्यस्थपदार्थान्तरस्य वैयर्थ्यं वा, **तत्र** वाक्ये तदेव **पदं प्रतिष्ठितम्**= अध्याहारप्राप्तं भवेत्, नान्यत् ।

यथा 'इको गुणवृद्धी' (१.१.३) इति पाणिनीये सूत्रे- 'यत्र, तत्र, विधीयेते, उपतिष्ठते' इति चतुर्णां

पदानामध्याहारः । तत्र- 'यत्र तत्र' इत्यनध्याहारे वाक्यद्वयं व्यर्थम् । 'विधीयेते उपतिष्ठते' इत्यनयोरनध्याहारे वाक्यद्वयेऽपि अन्वयाभावः । किञ्च यत्र महावाक्ये यद्वाक्यम् अवान्तरवाक्यं विना **अन्यत्र**= अर्थान्तरे, **अनवसरः**= तद्वाक्यार्थस्यानन्वयः, **तत्र**= महावाक्ये तदेव वाक्यम्, **प्रतिष्ठितं भवेत्** ।। यथा गीताभाष्ये- 'किमिति न त्वेवाहम्' इति महावाक्ये किमित्यतः परं न त्वेवाहमित्यतः पूर्वं 'नित्यत्वात् कुतोऽनित्यत्वम्' इति वाक्यस्याध्याहारः, तदर्थस्तु तत्रैवोक्तः ।। **सावकाश इति** ।। यत्र वाक्ये महावाक्ये वा यत्पदं वाक्यं विनाऽपि **सावकाशे**= अर्थान्तरं घटनावति सति, तत्र वाक्ये महावाक्ये वा, **तत्**= पदम्, वाक्यं वा **प्रतिष्ठितं**= नियमेनाध्याहृतं **न भवेदिति सतां नीतिः**= न्याय इत्यर्थः । यथा- 'ससर्ज भगवानादौ त्रीन् गुणान् प्रकृतेः परः'[१] इत्यादौ अध्याहारो नेति ।

अत्र वाक्यपदेन वाक्यार्थबोधतात्पर्येणोच्चरितः शब्दः गृह्यते । तेन गच्छति इत्याद्येकपदप्रयोगेऽपि शब्दाध्याहारवादे देवदत्त इत्यादेः अध्याहारः सिद्धः । अर्थान्तरे अघटनेत्यत्र च अर्थान्तरं च, अस्यामवस्थायाम् अध्याहरिष्यमाणपदाभावाद् अनुपात्तमेव भवेत् ।। क्वचिद् अर्थस्यानुपात्तत्वेन असत्त्वेऽपि तादृशार्थानुयोगिकान्वयाभावः प्रसिद्ध्यत्येव अभावप्रसिद्धेः प्रतियोगिप्रसिद्ध्यनपेक्षणात् सिद्धान्ते ।।

**(३५) 'तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते'**

**(तै.आ.३–१२) ।**

**(३५) प्रसादस्य मोक्षकारणत्वे मानमाहुः- तमेवेति ।।**

(३५) तै.आ. (३.१३.४०) अयमर्थः- **इह**= अधिकारिवर्गे, **तं**= पुरुषशब्दितं विष्णुम् **एवं**= सहस्रशीर्षत्वादिप्रकारेण **विद्वान्**= परोक्षज्ञानद्वारा अपरोक्षतो जानन् **अमृतः**= मुक्तः भवति । **अयनाय**= मोक्षाय, **अन्यः**= ज्ञानातिरिक्तः, कर्मादिः **पन्थाः**= साक्षादुपायः **न विद्यते** इति । अत्र 'ज्ञानान्मोक्षः' इत्यनेन प्रसादः आक्षिप्तो बोध्यः । तस्य प्रसादं विना मोक्षाजनकत्वात् ।

**(ज्ञानस्य प्रसादकारणत्वे प्रमाणोदाहरणम्)**

**(३६) 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।'(भ.गी.७–१७)**

**'यमेवैष वृणुते तेन लभ्यः ।'(क.उ. २–२३)**

**'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'**

**( बृ.उ.६–५–६–) इत्यादिश्रुतिस्मृतिभ्यः ।।**

---

१. मणिमञ्जरी (सर्ग.१, श्लो.२)

(३६) **ज्ञानस्य प्रसादकारणत्वे मानमाहुः- प्रियो हीति ।। प्रसादस्य मोक्षकारणत्वं न आर्थिकम्, किन्तु श्रुतं चेत्याहुः- यमिति ।। ज्ञानस्य जिज्ञासासाध्यत्वे मानमाहुः- आत्मेति ।। श्रुतिस्मृतिभ्य इति ।। ज्ञाप्यत्वं पञ्चम्यर्थः । एतदिति शेषः । एतत्= नारायणप्रसादम् ऋते न मोक्ष इत्यादिप्रमेयजातं श्रुतिस्मृतिज्ञाप्यमित्यर्थः ।।**

(३६) **प्रियो हीति ।।(गीता ७.१७)** अयमर्थः-**अहं ज्ञानिनः अत्यर्थम्**=अत्यन्तं **प्रियः हि-** प्रसिद्धम् । **स च**= अपरोक्षज्ञान्यपि **मम प्रियः**= मत्प्रीतिविषय इति । भगवद्वाक्यमेतत् । **यमेवैष इति ।। (काठक. १.२.२३)** अयमर्थः- **एषः**=परमात्मा **यं**= अधिकारिणं **वृणुते**=स्वीकरोति **तेनैव लभ्यः**=प्राप्य इति । वरणस्य प्रसादमन्तरेण अयोगात् प्रसादलाभ इति - **भावदीपे, सुधायां च** ।।

केचित्तु प्रसादस्य मोक्षकारणत्वं श्रुतं चेति टीकानुरोधेन श्रुत्यर्थमेवमाहुः- एष परमात्मा एष इच्छारूपः सन् प्रसन्नः सन्निति यावत्, यं= अधिकारिणं वृणुते= स्वीयत्वेन स्वीकरोति, तेनैव लभ्य इति ।। पक्षद्वयेऽपि तस्यैष आत्मेति वाक्यस्य अयमर्थः- यत **एष आत्मा**= परमात्मा, **तस्यैव**= प्रसादयोग्यस्यैव **स्वां तनुं**= स्वस्वरूपं **विवृणुते**= अपरोक्षतः प्रकाशयति अत इति पूर्वेणान्वयः । एकमेवेदं वाक्यं तात्पर्यभेदेन प्रसादस्य मोक्षकारणत्वे, भक्तेः जिज्ञासाकारणत्वे च मानमिति बोध्यम् ।

**आत्मेति ।। (बृ. ६.५.६)** मैत्रेयीं प्रति याज्ञवल्क्यवाक्यमेतत् । अयमर्थः- **अरे**= मैत्रेयि, **आत्मा**= परमात्मा **द्रष्टव्यश्चेत्**= मोक्षार्थमपरोक्षीकर्तव्यश्चेत्, **निदिध्यासितव्यः**= ध्यानविषयः कर्तव्यः, तदर्थं **मन्तव्यः**= युक्तिभिरनुचिन्तनीयः, मन्तव्यश्चेत् **श्रोतव्यः**= गुरुमुखाद्वाक्यार्थग्रहणं श्रवणं, तद्विषयः कर्तव्य इति ।

**(प्रसादतारतम्येन फलभेदः)**

**(३७) कर्मणा त्वधमः प्रोक्तः प्रसादः श्रवणादिभिः ।**
**मध्यमो ज्ञानसम्पत्त्या प्रसादस्तूत्तमो मतः ।।**
**प्रसादात् त्वधमाद्विष्णोः स्वर्गलोकः प्रकीर्तितः ।**
**मध्यमाज्जनलोकादिरुत्तमस्त्वेव मुक्तिदः ।।**
**श्रवणं मननं चैव ध्यानं भक्तिस्तथैव च ।**
**साधनं ज्ञानसम्पत्तौ प्रधानं नान्यदिष्यते ।**
**न चैतानि विना कश्चिज्ज्ञानमाप कुतश्चन ।। इति नारदीये ।**

**(३७) ननु प्रसादेन मोक्षश्चेत्, तदर्थं ज्ञानं नावश्यकं 'तत्कर्म हरितोषं यत्' इति स्मृत्या कर्मणोऽपि प्रसादकारणत्वोक्तेः, अत आहुः- कर्मणेति ॥ नारदीये इति ॥ अस्य इति स्मृतीति पूर्वत्र स्मृतिपदार्थेऽन्वयः ।**

**(३७) कर्मणेत्यादि ॥** अयमर्थः- **कर्मणा=** काम्येनाकाम्येन च कर्मणा, **जन्य** इति शेषः, **प्रसादः=** विष्णुप्रसादः **अधमः प्रोक्तः,** महद्भिरिति शेषः **श्रवणादिभिः जन्यः** प्रसादो मध्यमः प्रोक्तः, **ज्ञानसम्पत्त्या=** अपरोक्षज्ञानपरिपाकेन जन्यः प्रसादः **उत्तमः** प्रोक्तः ।

ततः किमित्यत आह- **प्रसादादिति ॥ विष्णोरधमात् प्रसादात् स्वर्गलोकः प्रकीर्तितः ।** उपलक्षणमेतत् । काम्यफलसामान्यस्य चित्तशुद्धिद्वाराऽपरोक्षज्ञानस्य च । अत्र काम्यकर्मजप्रसादेन स्वर्गादिकाम्यफलम् । अकाम्यकर्मजप्रसादेन अपरोक्षज्ञानं भवतीति विवेकः ॥ **मध्यमाद्** विष्णुप्रसादात् **जनलोकादिः** प्रकीर्तितः । जनलोकादिरित्यत्र- जनतपःसत्यलोकानां ग्रहणम् । जनलोकस्य आदिरिति तत्पुरुषेण **महर्लोकस्य** ग्रहणम् । **उत्तमो** विष्णुप्रसाद एव **मुक्तिदः** प्रकीर्तितः ।

ननु उत्तमप्रसादस्य ज्ञानसाध्यत्वेऽपि न ज्ञानार्थं जिज्ञासापेक्षा, कर्मणामपि ज्ञानसम्भवाद् इत्यत आह- **श्रवणमिति ॥ भक्तिस्तथा=** भक्तिरिव **श्रवणं मननं चैव, ध्यानेमव च, ज्ञानसम्पत्तौ=** अपरोक्षज्ञानोत्पत्तौ **प्रधानं=** मुख्यं **साधनं=**करणम्, **इष्यते । अन्यत्=** कर्मादिकं साधनं **न प्रधानम्** इष्यते ।

ननु कर्मैव प्रधानसाधनम्, श्रवणादिकम् अमुख्यमिति किं न स्यात्, इत्यत आह- **न चेति ॥ च=** यतः, **कश्चन=** कोऽपि, **एतानि विना=** श्रवणादीनि विना **कुतश्चन=** कर्मादिना **ज्ञानं नाप** । अत इति पूर्वेण सम्बन्धः ।

ननु अधमात् प्रसादात् स्वर्गलोक उक्तः, सर्वात्मना भगवत्प्रसादहीनस्य दुर्योधनादेः स्वर्गः प्रमाणेनोच्यते, तत्कथं सङ्गच्छेत इति चेत् - उच्यते- **'आचार्याणां तु तेजसा यान्ति स्वर्गम्, ततः, क्षिप्रं तमोऽन्धं प्राप्नुवन्ति च'** इति गीतातात्पर्यवचनाद् इति ऋत्विजां भागवताचार्याणां माहात्म्येन स्वर्गलोकप्राप्तिः, तादृशा-चार्यशून्यानां तमोयोग्यानां तु स्वर्गो नास्त्येव । अत्र स्वर्गलोक इति लोकग्रहणेन प्रसिद्धः स्वर्गलोक एव विवक्षितः । न तु स्वर्गप्रतिनिधित्वेन कल्पितः साङ्कल्पिको दैत्येन्द्रलोकः ।

ननु महर्लोकादेः ज्ञानसाध्यत्वमुक्तमन्यत्र, तत्कथं श्रवणादिसाध्यप्रसादसाध्यत्वम् ? इति चेत् - उच्यते, श्रवणादेरपि ज्ञानत्वात् ज्ञानसाध्यत्वम् । किञ्च महरादिलोकेषु पुनरावृत्तिभागः, अपुनरावृत्तिभाग इति द्वौ भागौ । तत्र अपुनरावृत्तिभागः ज्ञानिप्राप्यः, पुनरावृत्तिभागस्तु मध्यमप्रसादवत् प्राप्य इति ।

(ब्रह्मशब्दः विष्णुप्रतिपादकः)

**(३८) ब्रह्मशब्दश्च विष्णावेव ।**

**'यमन्तः समुद्रे कवयोऽवयन्ति तदक्षरे परमे प्रजाः ।**

**यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम् ॥' इत्युक्त्वा ।**

(३८) ननु ब्रह्मजिज्ञासाविषये नारायणप्रसादम् ऋते न मोक्ष इत्यादिकथनमयुक्तम्, ब्रह्मप्रसादम् ऋते न मोक्ष इति हि युक्तम्, अत आहुः- **ब्रह्मशब्दश्चेति** ॥ मुख्यः, युक्तम्, इति शेषः । अध्याहृतं 'एतत्' इत्येतदनुवर्तते ॥ चो हेतौ । अत्र विष्णुग्रहणेन 'स विष्णुराह हि, तं ब्रह्मेत्याचक्षते' इति साङ्कर्षणकाण्डस्थसूत्रद्वयं सूत्रस्थब्रह्मपदार्थस्य विष्णुत्वे मानं बोधितम् । विष्णुब्रह्मशब्दयोः त्रिविधपरिच्छेदराहित्यार्थकत्वेन समानार्थत्वादिति भावः । ब्रह्मशब्दस्य विष्णौ मुख्यत्वे मानमाहुः- **यमन्तरिति** ॥ **इत्युक्त्वेति** ॥ प्रवृत्ता इति शेषः ।

(३८) **यमन्तरिति** ॥ (महाना. १) अयमर्थः- **कवयः**= ज्ञानिनः **समुद्रेऽन्तः**, स्थितमिति शेषः, **यं**= विष्णुम् **अवयन्ति**= ईषदेव जानन्ति, अवगच्छन्ति वा, **वयन्ति**= वाञ्छन्ति वा, **यदक्षरे**= यस्मिन् अविनाशिनि, **परमे**= विष्णौ, **प्रजा अधि**= अधीनाः, तदाधारा वा, सन्ति - **जगतः प्रसूती**= जननी महालक्ष्मीः, **यतः**= विष्णोः **प्रसूता**= उत्पन्ना= सृष्टौ अभिमुखी बभूव, प्रादुर्भूता वा, पुरा अधीनविशेषं प्राप्ता वा । **यच्च**= विष्णुरूपं वस्तु **तोयेन**= जीवकर्मणा, स्ववीर्येण वा, तोयोपलक्षितपञ्चभूतेन वा (तोयमिश्रितभूतेन वा) **भूम्यां**= पृथिव्यादिलोकेषु, **जीवान्** । **व्यससर्ज**= विविधं ससर्ज । अत्र अडागमः छान्दसः । आडो ह्रस्वो वा । क्वचित्तु 'व्यससर्जेतदक्षरः' इति पठ्यते । इत्युक्त्वा इत्यनेन मध्ये वाक्यान्तरमस्तीति सूचितम् । तच्च 'यदोषधीभिः' इत्यादि ॥

**(३९) 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम् ।' इति (म.ना.उ.१–३,६.) हि श्रुतिः ।**

(३९) **तदेवर्तमित्यादि** ॥ **तदेव**= विष्ण्वाख्यवस्त्वेव **ऋतं**= यथार्थज्ञानरूपम्, शश्वदेकप्रकारं वा, **तदु**= तदेव **सत्यं**= यथार्थज्ञानपूर्वकक्रियावत्, अबाधितं वा, साधुगुणोपेतं वा, **तदेव कवीनां** मते **परमं**= मुख्यं **ब्रह्म** इति ॥

**(४०) 'तन्नो विष्णुः' इति (म.ना.उ.३–१६) वचनाद्विष्णुरेव हि तत्रोच्यते । न चेतरशब्दात् तत्प्राप्तिः ।**

**(४०) अन्तः समुद्रे इत्यादौ तच्छब्दस्य विष्णुपरत्वमेव, इत्यत्र मानमाहुः- तन्न इति ॥ (महाना. ३.१६) तन्नेति ॥ 'यमन्तः समुद्रे' इत्यादिश्रुतावित्यर्थः ।**

**ननु 'तन्नो रुद्रः' इत्यादिवचनात् रुद्रादयोऽपि प्रतिपाद्यन्तामित्यत आहुः- न चेति ॥ चो= हेतौ, इतरशब्दात् 'तन्नो रुद्रः' इत्यादिश्रुतौ इतरेषां रुद्रादीनां वाचकरुद्रादिशब्दसत्त्वात्, तत्प्राप्तिः= तेषां रुद्रादीनां मुख्यब्रह्मत्वप्राप्तिः ॥**

(४०) तन्न इति ॥ 'नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्' इति श्रुत्याकारः । अयमर्थः- यस्माद्वयं **नारायणाय**= नारायणं **विद्महे**= जानीमहे, **वासुदेवाय**= वासुदेवं **धीमहि**= ध्यायेम तत्= तस्मात् नः= अस्मान्, तच्छुभं प्रति, **विष्णुः प्रचोदयात्**= प्रेरयतु इति ॥

## (४१) 'नामानि विश्वाऽभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम् ।
## नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति ॥'

**इति भाल्लवेयश्रुतिः ॥**

**(४१) अथ तत्र विष्णोरेव वाच्यत्वे अन्येषाम् अवाच्यत्वे च मानान्तरमाहुः- नामानीति ॥ भाल्लवेयश्रुतिरिति ॥ वक्तीति शेषः ।**

(४१) **नामानीति ॥ अनृतस्य**= ऋतशब्दितविष्णोर्भिन्नस्य जगतः **सर्वं** नामप्रवृत्तिनिमित्तं **यत्**= यस्मात् **आविरासीत्**= उत्पन्नम्, तस्मात् उत्पन्नप्रवृत्तिनिमित्तकाद्धेतोः **विश्वा** सर्वाणि **नामानि लोके**= रुद्रादिजगति **अभि**= मुख्यतः **न सन्ति । सर्वाणि नामानि, यम्**= आ= मुख्यतो **विशन्ति, तम्**= परमात्मानं देशकालापरिच्छिन्नप्रवृत्तिनिमित्तकम् । इदं हेतुगर्भविशेषणम् । **विष्णुं वै**= विष्णुमेव **उदाहरन्ति** विद्वांस इति शेषः ॥

## (४२) 'यो देवानां नामधा एक एव तं सम्प्रश्नं भुवना यन्त्यन्या'
## (ऋ.सं.१०—८२—३) इत्येवशब्दान्नान्येषां सर्वनामता ।

**(४२) ननु अनया श्रुत्या विष्ण्वादिशब्दानामेव अन्यपरत्वं कुतो न स्यादित्यत आहुः- यो देवानामिति ॥ सर्वनामतेति ॥ सर्वाणि नामानि यस्य, तस्य भावः सर्वनामता= सर्वशब्दप्रतिपाद्यता ।**

(४२) **यो देवानामिति** ॥ (ऋ. १०.८२.३) अस्यार्थः- **यः**= विष्णुः **एक एव देवानां**= ब्रह्मादीनां, **नामधा**= नामधारकः, न त्वन्ये **तं प्रश्नं**= प्रष्टारम् **अन्या भुवना**= अन्यानि भुवना लोका **संयन्ति**= मुक्तौ प्रलये च संयान्तीति ॥

**(४३) 'अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः'**
**इति (ऋ.स.१०–८२–६) विष्णोर्हि लिङ्गम् ।**

(४३) ननु 'यो देवानाम्' इति श्रुतौ यच्छब्दस्य विष्णुपरत्वे मानाभाव इत्यत आहुः-**अजस्येति ॥ तस्थुरितीति ॥** इति वाक्यप्रतिपाद्यं पद्मनाभत्वं **विष्णोर्हि**= विष्णोरेव **लिङ्गम्** ॥ 'यो देवानाम्' इत्यत्र यच्छब्दप्रतिपाद्यत्वे गमकम् । यद्वा विष्णोरेव लिङ्गम् असाधारणधर्म इत्यर्थः । यद्यप्यस्यां श्रुतौ विश्वकर्मश्रुतिबलात् पद्मनाभत्वलिङ्गम् अन्यनिष्ठं भवितुमर्हति- तथापि श्रुतेर्योगेन सावकाशत्वात् लिङ्गं बलीय इति भावः ॥

(४३) अजस्येति ॥ (ऋ. १०.५२.६) अयमर्थः- **अजस्य**= अजन्यस्य पुरुषस्य, **नाभौ एकं**= वस्तु **अर्पितं**= उद्भूतं **यस्मिन् विश्वा भुवनानि**= चतुर्दशलोकाः **अधितस्थुः**= अधिष्ठिताः । इति ।

**(४४) न च प्रसिद्धार्थं विनाऽन्योऽर्थो युज्यते ॥ 'अजस्य नाभाविति यस्य नाभेरभूत् श्रुतेः पुष्करं लोकसारम् । तस्मै नमो व्यस्तसमस्तविश्वविभूतये विष्णवे लोककर्त्रे' इति स्कान्दे ।**

(४४) ननु अजस्येति श्रुतिप्रतिपाद्यं लिङ्गं पद्मनाभत्वमेवेति कुतो निश्चीयते ? अन्य एव धर्मः किं न स्यात् ? किञ्च पद्मनाभत्ववांश्च विष्ण्वन्य एव कुतो न स्यादित्यत आहुः- **न चेति ॥ अर्थः**= नाभ्यर्पितलोकाधारः पदार्थः **प्रसिद्धार्थं**= नाभिस्थत्वेन लोकाधारत्वेन च प्रसिद्धपद्माख्यं पदार्थं **विना अन्योऽर्थो न युज्यते**= कल्पयितुं न युक्तो भवति ॥

किञ्च- **प्रसिद्धार्थं** पद्मनाभत्वरूपधर्मवत्वेन प्रसिद्धविष्ण्वाख्यमर्थं **विना, अन्योऽर्थः**= तादृश-प्रसिद्धिशून्यविश्वकर्मादिरूपोऽर्थः **न युज्यत** इत्यर्थः ॥ **स्कान्द इति ॥** स्कान्दे इत्युक्तेरित्यर्थः ।

(४४) **अजस्य नाभावितीति** ॥ अयमर्थः- **यस्य**= पुरुषस्य **नाभेः**= तत्सकाशात् **लोकसारं**= लोकाधारम्, **पुष्करं**= पद्मम्, **अभूत्**= उत्पन्नमिति **अजस्य नाभाविति** श्रुतेः ज्ञायते **तस्मै व्यस्तसमस्तविश्वविभूतये**- **व्यस्ताः** जीवादौ विस्तृता **समस्ताः**= जडे सङ्क्षिप्ताः **विश्वविभूतयः**= जगत्सृष्ट्यादयः येन, तस्मै **लोककर्त्रे**= लोकस्वामिने **विष्णवे नमः** ॥ इति ॥

**(४५) 'परो दिवा पर एना पृथिव्या' (ऋ.सं.१०–८२–५) इति समाख्याश्रुतौ ॥**

(४५) समाख्ययाऽपि 'यो देवानाम्' इति श्रुतिः विष्णुपरा इत्याहुः - **परो दिवेति ॥ एना**

**पृथिव्येति ॥** एना पृथिव्येत्यनेन विश्वकर्मसूक्तस्थेन समानार्थकाम्भ्रणीसूक्तस्थ'परो दिवा पर एना पृथिव्या' इति श्रुतावित्यर्थः ॥

(४५) **परो दिवा इति ॥** (ऋ. १०.७२.५) विश्वकर्मसूक्ते 'परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति' इति पठ्यते । अयमर्थः- **दिवा**= दिवः श्रियः, **परः**= उत्तमः, **एना**= एतस्याः **पृथिव्याः**= भूम्याश्च **परः देवेभिः**= देवेभ्यः **असुरैः**= असुरेभ्यः **परः** ॥ किं बहुना **यदस्ति** तस्मादपि पर इति ॥ समाख्यायां तु 'परो दिवा पर एना पृथिव्यैतावती महिना सम्बभूव' इति पठ्यते । अयमर्थः- स विष्णुः **दिवः परः एना पृथिव्या**= अस्याः पृथिव्याः **परः** । अहं तु **महिना**= महिम्ना **एतावती** परिमिता **सम्बभूव** इति । लक्ष्मीवाक्यमेतत् ॥

## (४६) 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्' इत्युक्त्वा 'मम योनिरप्स्वन्तः समुद्रे' (ऋ.सं.१०–१२५–५,७) इत्याह ।

(४६) **ननु समाख्यारूपाम्भ्रणीसूक्तेऽपि कुतोऽन्यः प्रतिपाद्यो न भवतीत्यतो वाक्यशेषमुदाहरन्ति- यं कामय इति ॥ एवमपि लक्ष्म्या एव समाख्याश्रुतिप्रतिपाद्यत्वं स्यात्, न विष्णोः, इत्यतो वाक्यान्तरं चोदाहरन्ति- मम योनिरिति ॥ समाख्याश्रुतौ रुद्रादेः रमाधीनत्वोक्त्या अन्तः समुद्रे स्थितस्य लक्ष्मीकारणत्वोक्त्या च विश्वकर्मश्रुतिप्रतिपाद्यो विष्णुरेवेति भावः ॥ आहेति ॥ लक्ष्मीरिति शेषः ।**

(४६) **यं कामय इति ॥** (ऋ. १०.१२५.५) अयमर्थः- **अहं यं यं**= रुद्रपदयोग्यं जीवम् **उग्रं**= रुद्रं कर्तुं **कामये**= इच्छेयम्, **तं तमुग्रं कृणोमि**= करोमि, यं तत्तत्पदयोग्यं **ब्रह्माणम् ऋषिं सुमेधां**= सुमेधसं वा कर्तुं कामये तं **ब्रह्माणं, तम् ऋषिं, तं सुमेधां- कृणोमि**=करोमि । इति । **इत्युक्त्वेति ॥** अनेन मध्ये वाक्यान्तरमस्तीति ज्ञायते । **मम योनिरिति ॥** ऋ.१०.१२५.७) अयमर्थः-**मम योनिः**=कारणम् । **समुद्रेऽन्तः**= अप्स्वन्तः **अस्ति** आधिक्यं कम्पस्वरार्थः । नारायण इति वक्तव्ये तदर्थकशब्दप्रयोगः- पतिनामग्रहणं स्त्रीभिर्न कार्यमिति नीतिसूचनाय ॥

## (४७) उग्रो रुद्रः । समुद्रेऽन्तर्नारायणः । प्रसिद्धत्वात् सूचितत्वाच्चास्यार्थस्य ।

(४७) **ननु समाख्याश्रुतौ अन्तः समुद्रे स्थितत्वेन उक्तो रुद्र एव किं न स्यात् ? उग्रशब्दश्च क्रूरस्य वाचकः किं न स्यात् ?** इत्यत आहुः- **उग्रो रुद्र इति ॥** समाख्याश्रुताविति वर्तते । **अयमर्थः- समाख्याश्रुतौ उग्रः= उग्रशब्दवाच्यो रुद्र एव स्यात्, प्रसिद्धत्वात्** 'उग्रः कपर्दी श्रीकण्ठः'[1] इत्यादौ

१. अमरकोशः ।

उग्रशब्दवाच्यत्वेन रुद्रस्यैव प्रसिद्धत्वात् । **सूचितत्वाच्च** ॥ उग्र इति वर्तते, विपरिणम्यते च तृतीयया, उग्रेण= उग्रशब्देन **अस्यार्थस्य**= रुद्रशब्दयोगार्थप्रवृत्तिनिमित्तस्य= रोदनप्रयोजकक्रूरत्वरूपधर्मस्य रूढ्यर्थप्रवृत्तिनिमित्तभूतदेवतात्वव्याप्यशिवत्वरूपधर्मवत्वस्य च बोधनाच्च ॥ इदमुपलक्षणम्- 'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे' इत्युक्त्वा रुद्रस्य लक्ष्मीनिग्राह्यत्वादित्यस्य, तथा समाख्याश्रुतौ समुद्रेऽन्तःस्थत्वेन उक्तो नारायण एव स्यात्, प्रसिद्धत्वात् समुद्रशायित्वेन 'महोदधिशयोऽन्तकः'[१] इत्यादौ तस्यैव प्रसिद्धत्वात्, **समुद्रेऽन्तः**, समुद्रे स्थितत्वकथनेन **अस्यार्थस्य** 'आपो नारा इति प्रोक्ताः'[२] इति स्मृत्युक्तनारायणपदप्रवृत्तिनिमित्तभूतसमुद्रजलशायित्वरूपधर्मस्य बोधनाच्च इति ॥

**(४८) न चाविरोधे प्रसिद्धः परित्यज्यते । उक्तन्यायेन च श्रुतय एतमेव वदन्ति ।**

(४८) ननु प्रसिद्ध्यादिसद्भावेऽपि तत्परित्यागेन अन्यस्वीकारे किं बाधकमित्यत आहुः- **न चेति** ॥

नन्वत्र उग्रशब्देन रुद्रग्रहणे 'विश्वाधिको रुद्रः' इत्यादिश्रुतिविरोधः, अत आहुः- **उक्तेति** ॥ 'नामानि विश्वा' (भा.श्रु.) इत्याद्युक्तन्यायेन, 'वेदे रामायणे चैव' इति वक्ष्यमाणन्यायेन चेत्यर्थः ॥ **एतमेवेति** ॥ विष्णुमित्यर्थः । उग्रादिशब्दविचारसत्त्वात् विष्णुप्रसक्तेः विच्छिन्नत्वेन नारायणस्य विधेयत्वेन कश्चिद्धर्मं विधातुमुपात्तत्वाभावेन च अन्वादेशत्वाभावान्न एनादेशः कृतः ॥

**(४९) 'वेदे रामायणे चैव पुराणे भारते तथा ।**
**आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥' इति हरिवंशेषु ॥**
**न चेतरग्रन्थविरोधः ।**
**'एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति ।**
**त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥**
**अतथ्यानि वितथ्यानि दर्शयस्व महाभुज ।**
**प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु ॥' इति वाराहवचनात् ।**

(४९) **हरिवंशेष्विति** ॥ तत्र इत्युक्तेरित्यर्थः । अस्य वचनस्य हरिवंशीयखिल-अखिल-पारिजातेति स्थलत्रयगतत्वसूचनाय बहुवचनम् । समाख्याश्रुतौ 'उग्रो रुद्रः' इति वर्तते, 'न चेतरग्रन्थविरोधः' इत्यपकृष्यते । यथेष्टं विपरिणामः । अयमर्थः- च= यतः, उक्तन्यायेन श्रुतयः एतमेव

१. विष्णुसहस्रनाम्नि  २. हरिवंशे

**वदन्ति, अतः, हरिवंशेषु इत्युक्तेश्च, समाख्याश्रुतौ उग्रशब्देन रुद्रग्रहणे इतरग्रन्थविरोधः 'विश्वाधिको रुद्रः' इत्यादिश्रुतिसन्दर्भविरोधः न इति ॥ तथापि पाशुपतादिशास्त्रविरोधः, तत्र रुद्रादीनां सर्वोत्तमत्वाद्युक्तेः इत्यत आहुः- न चेतरति ॥ इतरग्रन्थविरोधश्च= पाशुपतादिग्रन्थविरोधोऽपि नास्तीत्यर्थः । तत्र हेतुः- वचनादिति ॥**

(४९) **वेदे रामायण इति** ॥ पूर्वार्धं स्पष्टार्थकम् ॥ **आदौ**= उपक्रमे, **अन्ते**= उपसंहारे **सर्वत्र**= सर्वप्रमाणेषु **विष्णुः गीयते**= प्रतिपाद्यत इत्यर्थः ॥ **एष मोहमिति** ॥ अयमर्थः- **एषः**= अहं **मोहम्**= मुह्यतेऽनेनेति विग्रहः । नटनं वञ्चनं वा **सृजामि**= करोमि । अविद्यमानाऽऽकारप्रदर्शनं नटनम् । अविद्यमानार्थकथनं वञ्चनमिति भेदः । **यः**= मोहः **जनान् आशु मोहयिष्यति** अज्ञानं मिथ्याज्ञानं च प्रापयिष्यति **हे महाबाहो रुद्र, त्वं मोहशास्त्राणि कुरु**= कारय च, दधीच्यादिभिरिति शेषः **हे महाभुज**= महाभक्षक, महाकुटिलेति वा रुद्र, **अतथ्यानि**= अविद्यमानानि लिङ्गमूलान्वेषणादीनि **वितथ्यानि**= विरुद्धानि, विष्णुनिष्ठ-सर्वोत्तमत्वादीनां रुद्रनिष्ठतया प्रतिपादनं विरोधः तेष्विति शेषः । तेषु मोहशास्त्रेषु **दर्शयस्व, आत्मानं**= भवन्तं **प्रकाशं**= प्रकाशवन्तं कुरु मां तु **अप्रकाशं**= तिरोहितं कुरु इति रुद्रं प्रति विष्णुवाक्यमेतत् ।

**(५०) शैवे च स्कान्दे –**

**'श्वपचादपि कष्टत्वं ब्रह्मेशानादयः सुराः ।**
**तदैवाच्युत यान्त्येव यदैव त्वं पराङ्मुखः ॥' इति ।**

(५०) **शैवे चेति** ॥ शिवोत्कर्षप्रतिपादनार्थं प्रवृत्तेऽपि इत्यर्थः ॥ **पराङ्मुख इति** ॥ अत्र वचनादिति सम्बद्ध्यते ।

(५०) **श्वपचादिति** ॥ अयमर्थः- **हे अच्युत त्वं यदैव**= यदि च, **पराङ्मुखः**= अनुग्रहं न करोषि, तदा= तर्हि **ब्रह्मेशानादयः सुराः, श्वपचादपि**= नीचादपि **कष्टत्वं**= क्लेशयुक्तत्वं कष्टं वा **यान्त्येव** इति ॥

**(५१) ब्राह्मे च ब्रह्मवैवर्ते–**

**'नाहं न च शिवोऽन्ये च तच्छक्त्येकांशभागिनः ।**
**बालः क्रीडनकैर्यद्वत् क्रीडतेऽस्माभिरच्युतः ॥' इति ।**

**न च वैष्णवेषु तथा । 'तथैष मोहम्' इत्युक्तम् ॥**

**॥ इति जिज्ञासाधिकरणम् ॥ १ ॥**

(५१) **ब्राह्मे इति ॥ ब्रह्मविषयके इत्यर्थः । अच्युत इति ॥ अत्रापि वचनादिति सम्बद्ध्यते । ननु शिवस्य अधमत्वे वैष्णवपुराणादिविरोध इत्यत आहुः- न च वैष्णवेषु तथेति ॥ यथा शिवाद्युत्कर्ष-प्रतिपादनार्थं प्रवृत्तेषु शैवादिग्रन्थेषु विष्णूत्कर्षप्रतिपादनम्, तथा विष्णूत्कर्षप्रतिपादनार्थं प्रवृत्तेषु वैष्णवेषु विष्ण्वपकर्षप्रतिपादनं प्रायो नास्तीत्यर्थः । वैष्णवेषु तादृशवचनं च दृश्यत इत्यत आहुः-तथैव इति ॥ वैष्णवेषु शिवोत्कर्षप्रतिपादकवचनं 'एष मोहम्' इत्यनेन प्रत्युक्तमित्यर्थः । अत इति शेषः ।**

**ततश्चायं विशिष्टवाक्यार्थः-**

**अतः प्रत्युक्तत्वात्, ब्रह्मवैवर्ते अच्युत इति वचनात्, स्कान्दे पराङ्मुख इति वचनात्, वाराहवचनात्, समाख्याश्रुतौ उग्रशब्देन रुद्रग्रहणे इतरग्रन्थविरोधो न अतः, यतः उक्तन्यायेन श्रुतय एतमेव वदन्ति अतः, हरिवंशेषु इत्युक्तेश्च, इतरग्रन्थविरोधः 'विश्वाधिको रुद्रः' इत्यादिश्रुतिविरोधो न, तस्मात् यतोऽविरोधे प्रसिद्धो न परित्यज्यते अतश्च, प्रसिद्धत्वादस्यार्थस्य सूचितत्वाच्च, समाख्याश्रुतौ उग्रो रुद्रः, समुद्रेऽन्तर्नारायणः तस्मात्, नारायणपराम्भ्रणीसूक्तसमाख्यानात्, स्कान्दे इत्युक्तेश्च, विष्णोरेव लिङ्गम् । तस्मात् विष्णुलिङ्गात् एवशब्दाच्च अन्येषां सर्वनामता नास्ति । अत्र लिङ्गस्य 'यो देवानाम्' इत्यत्र'यत्'शब्दस्य विष्णुपरत्वबोधनद्वारा अन्येषां सर्वनामत्वाभावे हेतुत्वं बोध्यम् ॥ तस्मादन्येषां सर्वनामत्वाभावात् 'न चेतरशब्दात् तत्प्राप्तिः विष्ण्वादिशब्दानां रुद्रादि-वाचकत्वप्राप्तिः नास्ति, अतो भाल्लवेयश्रुतिरिति वक्तीति हेतोः इतरशब्दात् रुद्रादिशब्दात्तत्प्राप्तिः, तेषां रुद्रादीनां मुख्यब्रह्मत्वप्राप्तिर्नास्ति तस्मात्, 'तन्नो विष्णुः' इति वचनाच्च, विष्णुरेव तत्रोच्यते, तस्माद् ब्रह्मशब्दश्च विष्णावेव मुख्यः, तस्मात् एतन्नारायणप्रसादमृते न मोक्ष इत्याद्युक्तप्रमेयजातं युक्तमिति ॥**

**अत्र यतोऽतस्तस्मादित्यर्थलाभस्तु चशब्दहिशब्दादिना सिद्धः । यत्र न श्रूयते चो हिर्वा, तत्रानु-वर्तते । अन्येऽप्यर्था अनुवृत्त्याऽऽवृत्तिविपरिणामाऽपकर्षैः साधनीयाः ॥ एवं च नारायण एव जिज्ञास्यतया विवक्षितः सूत्रकृता इति सिद्धम् ॥ १ ॥ अ. १ ॥**

**॥ इति जिज्ञासाधिकरणम् ॥**

(५१) **नाहं न चेति ॥** अयमर्थः- **ना=** पुरुषो जीव इति यावत् **अहं ना, शिवश्च अन्ये च** नराः **तच्छक्त्येकांशभागिनश्च=** परमात्मसामर्थ्यैकदेशं भजन्तोऽपि **न** भवामः । तथापि **यद्वद् बालः क्रीडनकैः=** क्रीडासाधनैः **क्रीडते** तद्वत् **अच्युतः** हरिः **अस्माभिः क्रीडते** । सृष्ट्यादिकं करोतीति ॥१॥अ.१ ॥

**॥ इति जिज्ञासाधिकरणम् ॥**

## २. जन्माधिकरणम्

### (१) ब्रह्मणो लक्षणमाह ।

(१) अत्र **नये** श्रुत्युक्तब्रह्मणः विष्णुत्वसमर्थनम् ॥ (१सू.अ.) ॥ **लक्षणमाहेति** ॥ सूत्रकार इति शेषः । 'ब्रह्माणि जीवाः सर्वेऽपि' 'बृह-जातिजीव' इत्युक्तरूढिशक्त्या ब्रह्मशब्देन जीवग्रहणे बाधकं श्रुत्युक्तं लक्षणमाह सूत्रकार इत्यर्थः । लक्षणमिति जात्येकवचनम्, लक्षणानीत्यर्थः ।

**(सृष्ट्याद्यष्टकर्तृ ब्रह्म)**

### (२) ॥ ॐ जन्माद्यस्य यतः ॐ ॥ १—१—२ ॥

(२) **ॐ जन्माद्यस्येति** ॥ **जन्म आदिः**= आद्यावयवः यस्य तत्= **जन्माद्यष्टकम्** । तद्गुणसंविज्ञानबहुव्रीहिः । बहुव्रीहौ तद्गुणसंविज्ञानत्वं च- स्वार्थान्वय्यन्वितार्थकावयवकत्वम् । यथा लम्बकर्णमानयेत्यादौ लम्बमानकर्णविशिष्टपुरुषान्वयिनि आनयनकर्मत्वे अन्वितलम्बत्वविशिष्ट-कर्णबोधककर्णादिपदवत्त्वम् ।

प्रकृते च निरूपकतासम्बन्धेन जन्माद्यष्टकसमुदायान्विते, यन्निष्ठहेतुत्वे तेन सम्बन्धेन अन्वित-जन्मबोधक-जन्मपदवत्त्वम्, जन्मादीति बहुव्रीहौ अस्तीति- तद्गुणसंविज्ञानत्वम् । ब्रह्मेत्येकदेशो वर्तते । यच्छब्दबलात् 'तत्' इति लभ्यते । अयमर्थः- **अस्य**= प्रत्यक्षादिप्रमाणसिद्धस्य, चराचरात्मक-जगतः, **यतः**= यतस्सकाशात् **जन्मादि**= उत्पत्तिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षाख्याष्टकं भवति, तत् **ब्रह्म**= श्रुत्युक्तं ब्रह्मेति, ब्रह्मपदवाच्यमिति वा, तल्लक्षणकं ब्रह्म इति वा, इति ॥

### (३) सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षा यतः ।

(३) **सृष्टीति** ॥ यद्यपि सृष्टिः= उत्पत्त्यनुकूलो व्यापारः संहारः= अदर्शनानुकूलो व्यापारः, नियमनं= प्रेरणा । एते प्रयोजकभगवन्निष्ठाः । तथापि सृष्ट्यादिपदैः प्रयोज्यजगन्निष्ठोत्पत्त्यदर्शननियम्यत्वानि लक्षणया ग्राह्याणि । लाक्षणिकपदप्रयोगे प्रयोजनं च, उत्पत्तिकर्तृत्वमेव ईश्वरस्य, न तु उपादानत्वमिति बोधनम् । यतो बन्धमोक्षाः भवन्ति तद्ब्रह्म इति शेष इत्यन्वयः ।

**(४) 'उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः ।**
**बन्धमोक्षौ च पुरुषाद्यस्मात् स हरिरेकराट्' ॥ इति स्कान्दे ।**

**(४) उक्तलक्षणाष्टकस्य विष्ण्वेकनिष्ठत्वे स्पष्टस्मृतिमाहुः- उत्पत्तीति ॥ अनेन वचनेन अष्टौ लक्षणान्युक्तानि । यद्यप्येकेन लक्षणेनालम्, तथापि-**

**'सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनान् ।**
**मोक्षं च विष्णुतश्चैव ज्ञात्वा मुक्तिर्न चान्यथा ॥' (श्री म.भा.ता.नि. १.८४)**

**इति वचनाल्लक्षणाष्टकत्वेन भगवज्ज्ञानस्य मोक्षकारणत्वाद् अष्टौ उक्तानीति ज्ञेयम् ॥**

(४) **उत्पत्तीति ॥** अस्येति शेषः । अयमर्थः- **अस्य** जगतः **उत्पत्तिस्थितिसंहाराः, नियतिः**= नियम्यत्वम्, **ज्ञानं**= सम्यग्ज्ञानादिकम्, **आवृतिः**= अज्ञानम्, **बन्धः**= संसारः, **मोक्षः**= तत्तद्योग्या मुक्तिः **यस्मात् पुरुषात्** भवन्ति, **स हरिः एकराट्**= स्वतन्त्र इति ॥

## (५) 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद् ब्रह्मेति ॥' (तै.उ.३—२)

**(५) अथ जिज्ञासावाक्ये लक्षणानि न श्रूयन्त इत्यत आहुः- यत इति ॥ लक्षणानि पूर्ववाक्ये श्रूयन्त इति भावः ॥**

(५) **यतो वा इति ॥** (तै.उ. ३.१) अयमर्थः- **इमानि**= परिदृश्यमानानि **भूतानि**= चेतनाचेतनात्मकभूतानि **यतो जायन्ते**= यद्धेतुकजननवन्ति, हेतुत्वं चात्र कर्तृत्वरूपम् । 'द्यावा पृथिवी जनयन् देव एकः' इत्यादिश्रुत्यन्तरात्, **जातानि भूतानि, येन जीवन्ति**= यद्धेतुकजीवनाश्रयाः यन्निष्ठप्रयोजकव्यापारजन्यजीवनवन्तीति यावत् । **यत्प्रयन्ति ॥** यत इति वर्तते, प्रलये इति शेषः । प्रलये यत् प्रति यतो यान्ति, यत्कर्मक-यद्धेतुक-प्रलयकालिकगमनवन्तीति शब्दार्थे स्थिते, यदधिकरणक-यत्कर्तृकलयवन्तीति फलति ॥ **अभीति ॥** यत् यतः वर्तते । मुक्ताविति शेषः, **वै**= प्रसिद्धौ, **भूतानि**= चेतनात्मकभूतानि, मुक्तौ **यत्**= वस्तु, **अभि**= स्वेच्छया **यतो विशन्ति**= यद्धेतुकसम्यक्प्रवेशवन्ति, **तदेव**= तद्वस्त्वेव, **विजिज्ञासस्व, तदेव ब्रह्मेति** ।

**(जन्मादिकर्तृत्वं प्रत्येकलक्षणम्)**

## (६) 'य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ।' (ऋ.सं.१—१५४—५)

**(६) जन्मादिकर्तृत्वं प्रत्येकलक्षणमिति भावेन स्थितिकर्तृत्वस्य तदेकनिष्ठत्वे मानमाहुः- य उ इति ॥**

(६) **य उ त्रीति** ॥ (ऋ. १.१५४.४) **यः**= विष्णुः, **एक उ**= एक एव, **त्रिधातु**= प्रकृतिपुरुषकालधारकः, **पृथिवीं**= भूमिम्, **द्यामुत**= श्रियमपि **विश्वा भुवनानि**= सर्वाणि भुवनानि **दाधार**= (अभ्यासह्रस्वाभावश्छान्दसः) दधार इत्यर्थः ॥

**(७) 'चतुर्भिस्साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत् ।'**

**(ऋ.स.१–१५५–६)**

(७) **चतुर्भिरिति च ॥ इदं नियमनकर्तृत्वस्य तदेकनिष्ठत्वे मानम्** ॥

(७) **चतुर्भिरिति** ॥ (ऋ. १.१५५.६) **स** इति शेषः । स बृहच्छरीरो मूलरूपी विष्णुः **नामभिश्च**= नाममात्रैः, स्वरूपभेदशून्यैः **चतुर्भिः**= वासुदेव-सङ्कर्षण-प्रद्युम्न-अनिरुद्धैः, **साकं नवतिं**= नवतिसङ्ख्याकान् **व्यतीन्**= विशेषेण अधिकान् देवान् किमुत अन्यान् **वृत्तं चक्रं न**= वर्तुलचक्रमिव **अवीविपत्**= पर्यवर्तयत्, विप- परिवर्तने इति धातुः । अत्रत्यव्यतिशब्दो देवेषु योगरूढः । **अष्टौ** वसवः, एकादश रुद्राः, विष्णुव्यतिरिक्ता एकादश आदित्याः, हिरण्यगर्भेण सह दश प्रजापतयः, प्रधानवायुना सह पञ्चाशत् मरुत इति नवतिः । **तत्त्वप्रदीपे** तु-

> **'आदित्या वसवो रुद्राः मरुतश्चाश्विनावपि । बृहस्पतिश्च कामश्च मनुर्दक्षो विनायकः ॥**
> **भृगुश्चैवानिरुद्धश्च धर्मो निर्ऋतिरेव च । कुबेरसहिता देवा नवतिः सम्प्रकीर्तिताः ॥**
> **अनन्तो गरुडो वायुश्चत्वारो ब्रह्मणा सह ॥'**

इति प्रमाणानुसारेण चतुरधिकनवतिरुक्ता ॥

**(८) 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।**
**न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप ॥'**

**(ऋ.स.७–९९–१२)**

(८) **पर इति ॥ इदमुक्तलक्षणरूपमहिमानः तदेकनिष्ठा इत्यत्र मानम्** ॥

**परो मात्रयेति** ॥ (ऋ. ७.९९.१.२) **तन्वा**= स्वमूर्त्यैव न तु कीर्तिमात्रेण, **वृधान**= अपिरिच्छिन्न हे **विष्णो** त्वं यतो **मात्रया**= मितेः **परः**= विलक्षणः, अपरिमित इति यावत् । असि अतः **ते महित्वं**= जगत्सृष्ट्यादिमाहात्म्यम्, केऽपीति शेषः= मुक्ताः अमुक्ताश्च **नाश्नुवन्ति**= न प्राप्नुवन्ति, नानुभवन्तीति वा । वर्तमानकाले निषेधेऽपि भूतभविष्यकालयोः त्वन्महिमप्राप्तः पुरुष उपलभ्येत इत्यत आह- **न ते**

**इति ।।** हे **विष्णो देव महिम्नः**= रमादिमहिम्नः, **परमन्तं**= सीमानं महिमतारतम्यं परावधिभूतं **ते महित्वं** महिमानं **जायमानो यथा नाप्नोति** तथेति शेषः, **जातो नाप** । उपलक्षणमेतत्, जनिष्यमाणो नाप्स्यतीत्यर्थः ।।

## (९) 'यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा' (ऋ.स.१०–८२–३) इत्यादि च ।। २ ।।

**।। इति जन्माधिकरणम् ।। २ ।।**

(९) **यो न इति ।। इदमविकारित्वेन कारणत्वमिति बोधनार्थम् । इत्यादि चेति ।। स्कान्द इति वचनम्, ब्रह्मेति इति वचनम्, इत्यादिवचनं च लक्षणमाहेत्यन्वयः ।। यतो ब्रह्मणो विष्णोः लक्षणमाह- अतो विष्णुरेव जन्मादिकर्ता इति शेषः ।। २ ।। अधि. २ ।।**

**।। इति जन्माधिकरणम् ।। २ ।।**

**(९) यो न इति (ऋ. १०.८२.३) यो नः**= अस्माकं **जनिता पिता,** न तु पालकपिता **यो विधाता**= धारकः, पोषकश्च कर्ता वा **विश्वा भुवनानि धामानि**= तद्गतगृहाणि, जीवस्वरूपाणि च वेद इत्यर्थः । **इत्यादि** इत्यादिना 'द्यावा पृथिवी जनयन् देव एकः' इत्यादिकं ग्राह्यम् ।। २ ।। अधि. २ ।।

**।। इति जन्माधिकरणम् ।। २ ।।**

## ३. शास्त्रयोनित्वाधिकरणम्

### (१) अनुमानतोऽन्ये न कल्पनीयाः ।

(१) **अत्र नये** जन्मादिकारणत्वस्य अन्यनिष्ठतानिराकरणम् (१-सू.अ.) ॥ अधिकरणपूर्वपक्ष-प्रापकमाहुः- **अनुमानत इति** ॥ 'विमतं सकर्तृकम्, कार्यत्वात्, घटवत्' इत्यनुमानेनेत्यर्थः । अनेन सामान्यतः कर्तरि सिद्धे, स च कर्ता रुद्रादिरेव भवेत् संहारकर्तृत्वेन, सृष्टिकर्तृत्वेन च रुद्रादेरेव प्रसिद्धत्वात् 'नैषा तर्केण' इति श्रुत्या विष्णोः आनुमानिकत्वनिषेधान्न विष्णुः । अनुमानेनेति उपलक्षणं शैवाद्यागमस्यापि । **अन्ये=** रुद्रादयः कारणत्वेनेति शेषः । **न कल्पनीयाः=** जगत्कारणत्वविधेयकानुमितिविशेष्या न भवन्ति ।

**(शास्त्रैकसमधिगम्यं ब्रह्म)**

### (२) ॥ ॐ शास्त्रयोनित्वात् ॐ ॥ १–१–३ ॥

(२) अत्र हेतुत्वेन सूत्रमुपन्यस्यन्ति- **ॐ शास्त्रेति** ॥ कारणत्वविशिष्टस्य **शास्त्रयोनित्वात्** न कल्पनीया इत्यन्वयः । केचित्तु- जगत्कारणत्वं नानुमितिविधेयम् शास्त्रयोनित्वात् इति पक्षसाध्ये अध्याहृत्य अर्थमुक्त्वा 'अन्ये न कल्पनीयाः' इति भाष्यं फलितार्थपरमित्याहुः । यद्यपि 'विष्णुः जगत्कारणं शास्त्रे तथा प्रतिपादनात्' इत्यनुमितिविधेयत्वं प्राप्नोति, तथापि शास्त्राननुगृहीतानुमिति-विधेयताशून्यत्वस्य विवक्षितत्वात् न दोष इति ज्ञेयम् ॥

**शास्त्रमेव=** ऋग्यजुस्सामाथर्व-भारत-पञ्चरात्र-मूलरामायणान्येव **योनिः=** ज्ञप्तिकारणं यस्य, तस्य भावः तस्मात्= शास्त्रैकसमधिगम्यत्वादिति यावत् । आदि अस्येति वर्तते । हेतुबलात् नानुमानिकमिति धर्मादिवदिति च लभ्यते । आदिपदं कारणत्ववत्परम् । अयमर्थः- अस्य= जगतः, आदि= जगन्निरूपितकारणत्ववद्वस्तु आनुमानिकं= अनुमानगम्यं (निश्चेयं) न भवति, शास्त्रयोनित्वात् धर्मादिवत् इति ॥ न च हेतुसाध्ययोरैक्यम्, व्यापकाभावो हेतुः व्याप्याभावः साध्य इति भेदात् । इदमुक्तं भवति- 'रुद्रादयो जगत्कर्तारः तथा प्रसिद्धत्वात्' इत्यनुमानस्य अप्रयोजकत्वम्, बाधितविषयत्वं वा अनेन बोधितम् । इति ॥

### (३) 'नावेदविन्मनुते तं बृहन्तं सर्वानुभुमात्मानं साम्पराये ।' (तै.ब्रा. ३-१२-९)

(३) उक्तहेतौ प्रमाणमाहुः- **नावेदेति** ॥ **औपनिषद इति च** ॥ **श्रुतिभ्य इति** ॥ ज्ञाप्यत्वं पञ्चम्यर्थः, श्रुतिज्ञाप्यशास्त्रयोनित्वादित्यर्थः । ननु स्वातन्त्र्याद्यनुमानेन पूर्णत्वादिसिद्धिवत् अनुमानेनापि

**जगत्कारणत्वसिद्धिः किं न स्यादित्यत आहुः- न चानुमानस्येति ॥** नियतप्रामाण्यं स्वातन्त्र्येण **अदृष्टार्थनिश्चायकत्वम् । उक्तार्थे मानमाहुः- श्रुतीति ॥ इत्यादि कौर्मे इति ॥ इत्यादीति लुप्तपञ्चम्यन्तम् । कौर्मे इत्याद्युक्तेरित्यर्थः ॥**

(३) **नावेदविदिति** ॥ (तै.उ. ३.१२.९) **तं**= पूर्वप्रकृतम्, **बृहन्तं**= पूर्णम्, **सर्वानुभुम्**= सर्वज्ञम्, सर्वस्यानुभावयन्तम् उत्पादयन्तं वा, सर्वकर्तारमिति यावत् । **आत्मानं**= सर्वस्वामिनम्, **साम्पराये**= सम्यक् परप्राप्तिरूपमोक्षाय, **अवेदवित्**= वेदार्थाज्ञानी, **न मनुते**= न जानाति, किन्तु वेदविदेव जानातीत्यर्थः । तथा च वेदैकसमधिगम्यं कारणमात्मेति भावः ॥

## (४) 'औपनिषदः पुरुषः' इत्यादिश्रुतिभ्यश्च ॥

(४) **औपनिषद इति ॥ पुरुषः**= जगत्कर्ता 'जगृहे पौरुषं रूपम्' इत्युक्तेः । उपनिषदेकवेद्य इत्यर्थः । **आदिना** 'सर्वे वेदा यत्पदमामनन्ति' (का.उ. १.२.१५), 'वेदा ह्येव' इति भाल्लवेयम्, 'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृ. ५.९.२६) इत्यादि गृह्यते ।

### (शुष्कतर्कं तु वर्जयेत्)

## (५) न चानुमास्य नियतप्रामाण्यम् ॥

**'श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् ।**
**निश्चयात् साधयेदर्थं प्रमाणान्तरमेव च ॥**

(५) **श्रुतिसाहाय्येति ॥ सहायः**= अनुग्राहकः, स एव साहाय्यः । श्रुतिस्मृतिरूपसहायेन रहितमनुमानं यथा- 'ईश्वरो न सर्वज्ञः, चेतनत्वात्' इति । **श्रुतिसाहाय्यरहितं प्रमाणान्तरं**= प्रत्यक्षम्, यथा रामकृष्णादिषु दोषग्राहि प्रत्यक्षं च । **निश्चयात्**= स्फुटम् । **कुत्रचित्**= अदृष्टे विषये **अर्थं**= साध्यमर्थम्, यथावस्थितं च **न साधयेत्**= न ज्ञापयेत् । तर्हि कीदृशानुमानादेरदृष्टार्थनिश्चायकत्वम्, अत आह- **श्रुतिस्मृतीति** ॥

**(६) श्रुतिस्मृतिसहायं यत् प्रमाणान्तरमुत्तमम् ।**
**प्रमाणपदवीं गच्छेन्नात्र कार्या विचारणा ॥**
**पूर्वोत्तराविरोधेन कोऽत्रार्थोऽभिमतो भवेत् ।**
**इत्याद्यमूहनं तर्कः शुष्कतर्कं तु वर्जयेत् ॥' इत्यादि कौर्मे ॥**

(६) **श्रुतिस्मृतिसहायम्**= श्रुत्याद्यनुग्रहसहितः **तर्कः**= अनुमानम्, 'यथा विष्णुः स्वतन्त्रः पूर्णत्वात्' इति

श्रुत्यादिसहायोपेतम् । अत एव **उत्तमम्, यत्प्रमाणान्तरं**= प्रत्यक्षम्, यथा यज्ञोदादिप्रत्यक्षम् । तदपि **प्रमाणपदवीं**= प्रमाणस्य= यथार्थज्ञानस्य, पदवीं= मार्गत्वम्, तत्कारणत्वमिति यावत् । **गच्छेत्**= प्राप्नुयात् । **अत्र विचारणा**= संशयः **न कार्य** इति ॥ तर्कपदार्थमाह- **पूर्वोत्तरेति ॥ अत्र**= विप्रतिपन्नवाक्ये, **पूर्वोत्तराविरोधेन**= उपक्रमोपसंहारानुगुण्येन, **कोऽर्थः**=अन्यतराद्यर्थः, **अभिमतः**=तात्पर्यविषयः **भवेत्** । **इत्याद्यं**= इत्यादिरूपम्, **ऊहनं**= ऊहः= उपक्रमादिलिङ्गैः अयमेवार्थः तात्पर्यविषयः, इत्यादि यथार्थज्ञानजनकलिङ्गमेव इति यावत्, **तर्कः**=प्रकृते तर्कपदार्थः प्रमाणपदवीं गच्छेदित्यन्वयः। निगमयति- **शुष्केति** ॥ तस्मात् **शुष्कतर्कं** तु=श्रुत्यादिसहायरहितानुमानं तु **वर्जयेत्**=अदृष्टेऽर्थे प्रमाणत्वेन न स्वीकुर्यादित्यर्थः ॥

**(७) शक्यत्वाच्चानुमानानां सर्वत्र ।**
**सर्वत्र शक्यते कर्तुमागमं हि विनाऽनुमा ।**
**तस्मान्न सा शक्तिमती विनागममुदीक्षितुम् ॥' इति वाराहे ॥**

(७) केवलानुमानस्य अदृष्टार्थनिश्चायकत्वे अतिप्रसङ्गं चाहुः- **शक्यत्वाच्चेति ॥ अनुमानानामिति ॥** अनुमानामिति पाठे तु माधातोः 'आतश्चोपसर्गे' (पा.सू. ३.३.१०६) इति करणे बाहुलकाद् अङ्प्रत्ययः । 'आगमं हि विनाऽनुमा' इति तथा पाठदर्शनात् प्रमाणभाष्ये । **सर्वत्र**= शशादीनां विषाणित्वादौ । रुद्रादीनां- 'रुद्रो न जगत्कर्ता चेतनत्वात्' इति जगत्कर्तृत्वाभावे च ॥ अत्रैव स्मृतिमाहुः- **सर्वत्रेति ॥ वाराहे इति ॥** वाराहे इत्युक्तेरित्यर्थः । कौर्मे इत्याद्युक्तेः, वाराह इत्युक्तिज्ञाप्यात् सर्वत्र अनुमानानां शक्यत्वाच्च, न नियतप्रामाण्यमित्यन्वयः ॥

(७) **सर्वत्रेति ॥ हि**= यस्मात् **आगमं विनाऽनुमा**= आगमाननुगृहीतम् अनुमानं **सर्वत्र**= ईश्वरजगत्कर्तृत्वाभावादौ, **कर्तुं**= प्रयोक्तुम्, **शक्यते । तस्मात् आगमं विना**= आगमाननुगृहीता सा= अनुमा, अर्थमिति शेषः, **उदीक्षितुं**= ज्ञापयितुमिति यावत् । **शक्तिमती** नेत्यर्थः ।

**(नास्तिक्यवादः न युक्तः)**

**(८) 'रेतो धातुर्वटकणिका घृतधूमाधिवासनम् ।**
**जातिस्मृतिरयस्कान्तः सूर्यकान्तोऽम्बुभक्षणम् ॥**
**प्रेत्य भूताप्ययश्चैव देवताभ्युपयाचनम् ।**
**मृते कर्मनिवृत्तिश्च प्रमाणमिति निश्चयः ॥'**

**इति मोक्षधर्मवचनान्न नास्तिक्यवादो युज्यते । दर्शनाच्च तप आदिफलस्य ।**

**(८) ननु अतीन्द्रियार्थानामभावेन शास्त्रस्य अप्रमाणत्वेन, कथं तेन जगत्कारणसिद्धिरिति शङ्कां परिहरन्ति- रेत इति ॥ वचनादिति ॥ इदं शिष्यान् प्रति उक्तम्, न तु नास्तिकं प्रति, तेन उक्तवचनप्रामाण्यानङ्गीकारात् । नास्तिकं प्रति तु वचनप्रतिपाद्ययुक्तिर्वाच्या । तथा च वचनोक्तयुक्तिजालादित्यर्थो बोध्योऽत्र पक्षे । नास्तिक्यवाद इति ॥ नास्ति परलोक इति मतिर्यदा स नास्तिकः तस्य भावः= नास्तिक्यम्, तत्पूर्वो वाद इत्यर्थः । नास्तिक्यवादनिराकरणे हेत्वन्तरमाहुः- दर्शनाच्चेति ॥ तप आदेर्यत्फलं शास्त्रोक्तम्, तस्यानुभवसिद्धत्वाच्चेत्यर्थः । अत्र तपः= स्वाध्याय-ब्रह्मचर्यादि तस्य फलं= तेजस्वित्वादिकम्, तस्य देवतोद्देश्यकत्वाभावात्, देवताभ्युपयाचनापेक्षया पृथग्ग्रहणम् । आदिना अत्युत्कटपापं गृह्यते ।**

**(८) रेत इति ॥** रेतः प्रसिद्धम् **धातुः**= पित्तादिधातुविकारः, **वटकणिका**= वटबीजम्, **घृतं**= प्रसिद्धं **धूमाधिवासनं**= पुष्पाद्यर्थं धूमेन क्रियमाणो वृक्षसंस्कारः, **जातिस्मृतिः**= साधनविशेषेण जायमानपूर्वजन्मस्मरणम् । **अयस्कान्तः**= तन्नामकशिला, **सूर्यकान्तः**= तन्नामकशिला, **अम्बुभक्षणं**= जलपानम्, **प्रेत्य भूताप्ययश्चैव- प्रेत्य**= जीवभावं विहाय, स्थितस्येति शेषः, देहस्य भूतेषु लयश्च, **देवताभ्युपयाचनं**= देवताप्रार्थनम् । **मृते** शरीरे **कर्मनिवृत्तिः**= चेष्टानिवृत्तिश्च प्रमाणम् । अतीन्द्रियार्थे अनुमानादिप्रामाण्ये च गमकमिति निश्चय इत्यर्थः । तत्प्रकारस्तु- रेतः-शरीरयोः, अपथ्यपित्तादिधातु-विकारयोः, वटबीजतद्वृक्षयोः, घृतपीनत्वयोः, धूमाधिवासनपुष्पादिसम्पत्योः साधनविशेषजातिस्मृत्योः, अयस्कान्तायोभ्रमणयोः, सूर्यकान्ताग्निजननयोः, अम्बुभक्षणतृषानिवृत्त्योः, मृतदेहसम्बन्धिभूताप्यययोः देवताभ्युपयाचनसम्पत्प्राप्त्योः मृतदेहचेष्टानिवृत्त्योश्च कार्यकारणभावोऽस्ति । न चासौ प्रत्यक्षः किन्तु अन्वयव्यतिरेकित्वाद् अनुमानगम्यः, ततश्चानुमानप्रामाण्यसिद्धिः । मृतशरीरे सिक्तं रेतः न परिणमति, किन्तु जीवाधिष्ठिते एव इति जीवसिद्धिः वन्ध्यायाः सजीवत्वेऽपि तत्र सिक्तस्य अकार्यत्वात् अदृष्ट-सिद्धिः, तत्प्रेरकेश्वरसिद्धिः, तत्प्रतिपादकाऽऽगमसिद्धिश्च । एवं पित्तादिधातुः अपथ्यादिना जीवच्छरीरे विक्रियते, न मृतशरीरे, नापि जीवत्सर्वशरीरे । वटकणिकातो वटो जायते, न भर्जिताभ्यः, नाप्यभर्जिताभ्यः सर्वाभ्यः । घृतेन पीनता जायते, न मृतशरीरे, नापि जीवत्सर्वशरीरे । धूमाधिवासनेन वृक्षे पुष्पसम्पत्तिर्जायते, न शुष्के, नापि अशुष्के सर्ववृक्षे । साधनविशेषेण जातिस्मृतिर्भवति, केषाञ्चिदेव, न सर्वेषाम् । अयस्कान्तेन अयः भ्रमति । सूर्यकान्तेन अग्निर्जायते । न च चेष्टकत्वम्, अग्निजननशक्तिश्चाचेतने दृष्टम्, नापि सर्व-चेतने । अम्बुभक्षणे जीवच्छरीरे अम्बु पच्यते, न मृतशरीरे, नापि जीवत्सर्वशरीरे । (एवं तृषानिवृत्तिः) मरणे देहस्य भूतेषु लयो भवति, न जीवतः, नापि स्वेच्छया । देवताभ्युपयाचनेन केषाञ्चिदेव सम्पदादिकं

भवति न सर्वेषाम् । मृते कर्मनिवृत्तिर्भवति, न पुरा, न स्वेच्छया, इति जीवादृष्ट-तत्प्रेरकेश्वरादिसिद्धिरिति ॥

**(शास्त्रशब्दव्यपदेशभाजः)**

**(९) 'ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम् ।**
**मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥**
**यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।**
**अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत् ॥' इति स्कान्दे ॥**

(९) ननु अनुमानस्य असाधकत्वेन शास्त्रस्यैव उक्तार्थे मानत्वेऽपि पाशुपतादिशास्त्रेण रुद्रादेः जगत्कारणत्वं स्यात्, अतः शास्त्रपदार्थमाहुः-**ऋगिति ॥ स्कान्दे इति ॥** स्कान्दे इत्युक्तेरित्यर्थः ।

(९) ऋग्यजुरिति ॥ अथर्वेति अकारान्तम् । **मूलरामायणम्** इत्यनेन अवान्तररामायणव्यावृत्तिः । अभिधीयत इत्यन्तं स्पष्टम् । **एतस्य**= ऋगादेः, **यच्चानुकूलं**= अविरुद्धार्थकं मनुस्मृत्यादिकं, **तच्च**= तदपि **शास्त्रं प्रकीर्तितं**= प्रामाणिकैरिति शेषः । **अतः**= ऋगादेः, तदनुकूलाच्च, **अन्यः**= विरुद्धः, उदासीनश्च यः **ग्रन्थविस्तारः**= पाशुपतादिरूपः तत् नैव शास्त्रम्, **कुवर्त्म**= कुत्सितज्ञानोपाय इत्यर्थः ॥

**(१०) 'सांख्यं योगः पाशुपतं वेदारण्यकमेव च' इत्यारभ्य वेदपञ्चरात्रयोरैक्याभिप्रायेण पञ्चरात्रस्यैव प्रामाण्यमुक्तमितरेषां भिन्नमतत्वं प्रदर्श्य मोक्षधर्मेष्वपि ॥**

(१०) पाशुपतादीनाम् अप्रामाण्ये प्रमाणान्तरं चाहुः- **साङ्ख्यमिति ॥ इत्यारभ्येति ॥** प्रवृत्तेन वचनेनेति शेषः ।

'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।
ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद् विशिष्यते ॥'

इति वचनेनेति तदर्थः । तर्हि वेदारण्यकस्य अप्रामाण्यं प्राप्तम् अत आहुः- **वेदपञ्चरात्रयोरिति ॥ पञ्चरात्रस्यैवेति ॥** न तु साङ्ख्यादेरित्यर्थः । एवं च पञ्चरात्रप्रामाण्योक्तौ पञ्चरात्रस्य वेदारण्यकमूलकत्वात् मूलभूतवेदारण्यकस्यापि प्रामाण्यमुक्तप्रायमिति भावः । **इतरेषां**= साङ्ख्यादीनाम् । **भिन्नमतत्वं**= परस्परविरुद्धार्थकत्वं **प्रदर्श्य** ।

'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा ॥'

इति वचनेन उक्त्वा । मोक्षधर्मेष्वपि बहुवचनं धर्मबाहुल्यात् । यतः, अतः पाशुपतादिकम्, अप्रमाणमिति शेषः । तथा च मोक्षधर्मेष्वपीत्यारभ्य इतरेषां भिन्नमतत्वं प्रदर्श्य, वेदपञ्चरात्रयोः ऐक्याभिप्रायेण पञ्चरात्रस्यैव प्रामाण्यमुक्तं यतः, अतः पाशुपतादिकम् अप्रमाणमिति योजना ।

(१०) **साङ्ख्यं योग इति** ॥ भगवदवतारादन्यकपिलकृतं शास्त्रम्, **योगः**= हिरण्यगर्भोक्तः पातञ्जलश्च, **पाशुपतं**= पशुपतिना प्रोक्तम् । **वेदारण्यकमेव च**= अरण्ये निर्जने अध्येतव्यम् आरण्यकम् उपनिषदुच्यत इति पदार्थविवरणम् ॥

**(विश्वकर्तृत्वे न शास्त्रनिर्मातृत्वं कारणम्)**

**(११) शास्त्रं योनिः प्रमाणमस्येति शास्त्रयोनिः ॥ ३ ॥**

**॥ इति शास्त्रयोनित्वाधिकरणम् ॥**

(११) शास्त्रयोनित्वादित्यत्र 'शास्त्रस्य योनिः' इति विग्रह इति भ्रमवारणाय आहुः- **शास्त्रं योनिरिति** ॥ **प्रमाणं**= ज्ञानकारणम् । **अस्येतीति** ॥ इत्यर्थकं शास्त्रयोनीति पदमित्यर्थः ॥

ततश्चायं विशिष्टार्थः- अनुमानतोऽन्ये कारणत्वेन न कल्पनीयाः, कारणस्य शास्त्रयोनित्वात्, यतोऽनुमानस्य नियतप्रामाण्यं नास्ति अतः, यतो नास्तिक्यवादो न युज्यते अतः, यतः पाशुपतादिकम् अप्रमाणम् अतश्चेति ॥

नन्वत्र नये पूर्वपक्षे पाशुपतादिकम् उपष्टम्भकतया उपात्तम् । सिद्धान्ते तु पाशुपतादेः अप्रामाण्यमुक्तम् । ततश्चानेन नयेन पाशुपतादेः अप्रामाण्यसिद्ध्या द्वितीयाध्याये स्मृत्यधिकरणे (१.१) पाशुपताद्युपष्टम्भेन पूर्वपक्षोत्थितिः कथं स्यात् ? किञ्चानेन नयेन जगत्कारणत्वलक्षणस्य अतिव्याप्तिरुच्यते, स्मृत्यधिकरणे त्वसम्भव उच्यते, ततश्च असम्भवस्य प्रबलदोषत्वेन तस्यैव प्रथमं वक्तव्यत्वात् तदनुक्तिश्च कथमिति चेत्- न । वेदप्रामाण्यमङ्गीकुर्वाणः सन् पाशुपतादिप्रामाण्यवादी अत्र नये पूर्वपक्षी । वेदप्रामाण्यस्य सिद्धान्तिभिरङ्गीकारेण तद्वादिनोऽन्तरङ्गत्वेन शीघ्रमुपस्थितेः तदनुरोधेन अल्पस्यापि अतिव्याप्तिदोषस्य प्रथममुद्भावनम् । अत एव पाशुपतादेरप्रामाण्यमपि अत्र शास्त्रानुसारेणैव उच्यते । स्मृत्यधिकरणे तु वेदाप्रामाण्यवादी पूर्वपक्षी, केवलपाशुपतादिना पूर्वपक्षकरणात् । अत

**एव तस्य अनन्तरोपस्थितिः पाशुपतादेरप्रामाण्यमपि युक्त्यैवोच्यत इति युक्तिपादेऽन्तर्भावस्तस्य । एवं च वादिभेदेन अन्तरङ्गबहिरङ्गभावेन च एतद्वादिना शास्त्रानुसारिणां प्रामाण्याङ्गीकाराच्च सर्वस्य उपपन्नत्वाद् इति ॥ ३ ॥ अ. ३ ॥**

**॥ इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥**

अत्र ज्ञानानि भिन्नानीति श्रूयते, **भिन्नानि**= भिन्नविषयाणीति तदर्थः ॥ ३ ॥ अ. ३ ॥

**॥ इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥**

## ४ समन्वयाधिकरणम्

### (१) अज्ञानां प्रतीयमानमपि नेतरेषां शास्त्रयोनित्वम्- कुतः?

(१) अत्र नये ब्रह्मणो जगत्कारणत्वेन शास्त्रयोनित्वसमर्थनम् ॥ (१ सू.अ.) पूर्वपक्षनिराकरण-पूर्वकं सिद्धान्तमाहुः- **अज्ञानामिति** ॥ रुद्रादिः जगत्कारणत्वेन वेदादिवेद्य इति पाशुपताद्युक्तिः तात्पर्यग्राहकोपक्रमादिलिङ्गाज्ञानैतदुभयजन्यभ्रमवतामित्यर्थः । **प्रतीयमानमपि**= 'विश्वाधिको रुद्रः' इत्यादिवेदजन्याऽऽपातप्रतीतिविषयमपि, **अपिना** पाशुपताद्युक्तिसिद्धमिति ग्राह्यम् । **इतरेषां**= रुद्रादीनाम्, **शास्त्रयोनित्वं**= जगत्कारणत्वेन शास्त्रजन्यज्ञानविषयत्वमित्यर्थः । अज्ञानां प्रतीयमानमपि शास्त्रयोनित्वमितरेषां न, इति सम्बन्धः ॥

ननु उक्तशास्त्रयोनित्वं पाशुपतादिसिद्धं भवेत्, न तु शास्त्रप्रतीतम्, शास्त्रे 'विश्वाधिको रुद्रः' इत्येवोक्तत्वात् विश्वाधिकत्वेन वेदवेद्यः रुद्रादिः, इत्यनुक्तत्वाच्च । अतः प्रतीयमानमिति कथमुक्तम्? न चाज्ञानां 'विश्वाधिको रुद्रः' इत्यादिवेदेषु तात्पर्यग्राहकोपक्रमादिज्ञानहीनानां प्रतीयमानं पाशुपताद्युक्त्या भासमानमपि शास्त्रयोनित्वं नेतरेषामित्यर्थान्न दोष इति वाच्यम्- पाशुपतादिशास्त्रोक्तं प्रतीयमानमपि नान्येषां शास्त्रयोनित्वमित्यादिटीकाविरोधापत्तेरिति चेत्- न, प्रतीतमपीत्यस्य प्रतीतिप्रयोज्यमपि इत्यर्थाङ्गीकारेण अदोषात् ॥ अस्ति च वेदादिवेद्यो रुद्रादिरिति शास्त्रयोनित्वे 'विश्वाधिको रुद्रः' इत्यादिजन्यप्रतीतेः प्रयोजकत्वम् ॥

यद्यपि पूर्वनये पाशुपतादेः अप्रामाण्यमुक्तं तथापि विश्वाधिको रुद्र इत्यादिवेदजन्याऽऽपात-प्रतीतार्थसंवादित्वेन पाशुपतादेः प्रामाण्यमङ्गीकृत्य पूर्वपक्षः कृत इति ज्ञेयम् । उक्तेऽर्थे हेतुं पृच्छन्ति- **कुत इति** ॥ प्रतीतमपि शास्त्रयोनित्वं **कुतः** कस्मात् मानाद् इतरेषां नेत्युच्यत इत्यर्थः ।

**(परममुख्यवृत्त्या कृत्स्नवेदप्रतिपाद्यो विष्णुः)**

### (२) ॥ ॐ तत्तु समन्वयात् ॐ ॥ १–१–४ ॥

(२) तत्र हेतुकथनाय सूत्रमुपन्यस्यन्ति- **ॐ तत्तु समन्वयात् ॐ इति** ॥ आदि, अस्य, शास्त्र-योनीति वर्तते । आदीति भावप्रधानम्, लुप्ततृतीयाकम्, शास्त्रेति लुप्तसप्तम्यन्तं सम् इति भिन्नपदं च । अन्वय इत्यत्र कर्मणि, करणे च 'एरच्' (पा.सू. ३.३.५३) इति अच्प्रत्ययान्तः । यथायथम् आवृत्तिविपरिणामौ । **अयमर्थः**- शास्त्रे= वेदादिशास्त्रे, **अन्वयात्**= उपक्रमादिश्रुत्यादितात्पर्यलिङ्गैः, समन्वये सति सम्यग्विचारिते सति तत्तु= ब्रह्मैव, अस्य= जगतः, आदित्वेन= कारणत्वेन,

संशास्त्रयोनि= जगत्कारणत्वप्रतिपादकसमस्तशास्त्रवेद्यम् । किञ्च संशास्त्रयोनि= परममुख्यवृत्त्या सर्वगुणवत्त्वात् समस्तशास्त्रप्रतिपाद्यमिति ।। तथा च जगत्कारणत्वस्य उपक्रमादिसहितप्रमाणेन विष्ण्वेकनिष्ठत्वावगमात् नातिव्याप्तिरिति भावः ।।

(तात्पर्यनिर्णायकलिङ्गानि)

**(३) अन्वय उपपत्त्यादि लिङ्गम् । उक्तं च बृहत्संहितायाम् ।**

**(४) 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' इति ।।**

(३) अन्वयपदार्थमाहुः- **अन्वय इति** ।। उपपत्त्यादिलिङ्गम् अन्वयपदार्थ इत्यर्थः । ननु कानि उपपत्त्यादीनि ? कुत्र लिङ्गम् ? इत्याकाङ्क्षायामाहुः- **उक्तं चेति** ।। **बृहत्संहियामिति** ।। उपपत्त्यादि-लिङ्गमिति वर्तते । बृहत्संहितायामिति वचनेन उपपत्त्यादिः **लिङ्गं**= वाक्यतात्पर्यनिश्चायकम् । **उक्तं च**= निश्चायकत्वेन उक्तमपीत्यर्थः ।।

(उपक्रमादीनां सोदाहरणं निर्वचनम्)

(४) तत्र प्रकरणस्य आदिः **उपक्रमः** । यथा 'जन्म' (१.१.२) नये 'तद्विजिज्ञासस्व, तद् ब्रह्म' इत्यत्र 'यतो वा इमानि भूतानि' इत्युपक्रमेण अर्थनिर्णयः ।। १ ।।

ननु अन्वयः उपक्रमादिलिङ्गमिति वक्तव्ये उपपत्त्यादीति कथम् (किमर्थम्) उक्तमिति चेत्- उच्यते- उपक्रमादिषु उत्तरोत्तरप्राबल्यसूचनाय तथोक्तम् । तथा च उपपत्तेः सर्वतो बलवत्त्वेन अभ्यर्हितत्वात् प्रथमं निर्देशः । अत्र 'शब्दादेव' (१.३.२४) इति सूत्रे वक्ष्यमाणश्रुत्यादिषट्कमपि तात्पर्यनिर्णायकत्वेन ग्राह्यम् । श्रुतिलिङ्गे विना उपक्रमादीनां तात्पर्यनिर्णायकत्वायोगात् ।

प्रकरणस्य अन्तः- **उपसंहारः** ।। यथा 'प्रथमे श्रवणात्' (३.१.५) इति नये 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्युपसंहारेण उपक्रमस्थश्रद्धापदस्यार्थनिर्णयः ।। २ ।।

एकप्रकारासकृदुक्तिः- **अभ्यासः** ।। यथा 'आनन्दमय' (१.१.६) नये 'असद् ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद' इति ब्रह्मशब्दाभ्यासेन 'तस्यैष एव शारीर आत्मा' इत्युपंसहारस्थजीवलिङ्गबाधेन अर्थनिर्णयः ।। ३ ।।

स्वबोधनीय-पुरुषगताज्ञानादिविरोधि-स्वानुपजीवि यन्मानान्तरं तदप्राप्तार्थबोधकत्वम्- **अपूर्वता** ।। यथा 'इतरव्यपदेशात्' (२.१.२२) इति नये-

'जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः ।
जीवे तु लयमृच्छन्ति न जीवात्कारणं परम् ॥'

इत्यत्र उपक्रमोपसंहाराभ्यासबाधेन जीवशब्दस्य मुख्यभूतविष्णुपरत्वनिर्णयः अपूर्वत्वेन । जीवे यत्किञ्चित्कारणत्वस्य प्रत्यक्षसिद्धत्वेन तद्विषये अपूर्वत्वाभावात् । अत्र मानान्तराप्राप्तत्वम् अपूर्वत्वमित्येवोक्तौ- ईश्वरप्रत्यक्षप्राप्तत्वं शाखान्तरप्राप्तत्वं चादायासम्भवः स्यात् । तद्वारणाय स्वबोधनीयेति विशेषणम् । ईश्वरस्य वेदबोधनीयत्वाभावात् शाखान्तरस्य स्वशब्दोपात्तसमन्वेतव्य-शाखाबोधनीय-पुरुषमताज्ञानविरोधित्वाभावात् तत्प्राप्तत्वेऽपि नापूर्वत्वहानिरिति नासम्भवः । स्वानुपजीवीत्यनुपादाने स्मृत्यादिसिद्धत्वमादाय असम्भवोऽव्याप्तिर्वा भवेत् । तद्वारणाय तद्विशेषणम्, स्मृत्यादेः वेदोपजीवित्वान्न दोषः ॥ ४ ॥

फलवदर्थप्रतिपादकं **फलम्** ॥ यथा 'असदिति चेन्न' (२.१.४) इति नये, सत उत्पत्तिविधायकत्वेनापूर्वता युक्ता । 'असद्वा इदमग्र आसीत्', 'ततो वै सदजायत' इति श्रुतिबाधेन ब्रह्मणः कारणत्वप्रतिपादकत्वेन फलवदर्थक-'सदेव सोम्येदमग्र आसीत्' इति वाक्येनार्थनिर्णयः । अस्य फलवत्त्वं कथमति चेत्- उच्यते- अनेन विष्णुः जगत्कर्ता इति ज्ञानं जायते । तज्ज्ञानस्य गुणोत्कर्षज्ञानरूपत्वेन तज्ज्ञानवते प्रसीदति, ततो मोक्षं ददाति विष्णुरिति 'न तादृशी प्रीतिरीड्यस्य विष्णोः गुणोत्कर्षज्ञातरि यादृशी स्यात्' इति श्रुत्यादौ प्रसिद्धमेवेति । एवमपूर्वादपि अभेदवाक्यात् सकलभेदवाक्यस्य फलवदर्थकस्य प्राबल्यम् । ऐक्यज्ञानस्य दुःखहेतुत्वं भेदज्ञानस्य सुखहेतुत्वं च- 'घातयन्ति हि राजानो राजाऽहमिति वदन्तम् । ददति हि सर्वस्वं गुणोत्कर्षं वदते ॥' इति न्यायात् सिद्धम् । ततश्च भेदवाक्यस्य फलवत्त्वसिद्धिः ॥ ५ ॥

विधिशेषत्वम्, अर्थवादत्वेन अभियुक्तव्यवहारविषयत्वं वा- **अर्थवादत्वम्** ॥ स चतुर्विधः- **स्तुतिः, निन्दा, परकृतिः, पुराकल्पश्चेति** ॥ तत्र **स्तुतिर्यथा**- 'उत्क्रमिष्यत एवं (१.४.२२) इति सूत्रे स्वर्गादिफलक-काम्यकर्मप्रतिपादकवाक्यबाधेन 'कर्मणा ज्ञानमातनोति, ज्ञानेनैवामृतीभवति' इति ज्ञानस्तुत्या काम्यकर्माननुष्ठानरूपार्थनिर्णयः । कर्माकरणं च कर्मसन्निधौ उक्तफले अनुद्देश्यत्वमेव, न तु कर्माकरणम् । ततश्च अकामेनैव कर्म कर्तव्यमिति ज्ञेयम् । तदुक्तं गीतायाम्- 'मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि' (२.४७) इति ।

**निन्दा यथा** 'प्लवा ह्येतेऽदृढा यज्ञरूपाः' (आथ. २.६) इति काम्यकर्मनिन्दया, अकाम्य-

कर्मकर्तव्यत्वनिर्णयः ॥ 'स एषोऽश्माखण' (छा. १.२.८) इति मुख्यप्राणमहिमघ्नविरोधिनिन्दया मुख्यप्राणमहिमघ्नस्य पूजा, मुख्यप्राणस्याधिक्यं च निर्णीतं भवति ॥

कर्तृनामनिर्देशपूर्वकः, एककर्तृको वा इतिहासः- **परकृतिः** ॥ यथा 'जनको ह वैदेह आसाञ्चक्रे' (बृ.५.१.१) इत्यादिः । कर्तृनामनिर्देशरहितः बहुकर्तृको वा इतिहासः **पुराकल्पः** ॥ यथा 'त्रय उद्गीथे कुशला बभूवुः'(छा. १.८.१) इत्यादिः । अनयोरर्थनिर्णायकत्व-मन्यत्रोक्तं ग्राह्यम् ॥ ६ ॥

**लिङ्गम्**= उपपत्तिः । तस्याः सर्वमूलत्वाद् अर्थवादादपि बलवत्वम् । यथा 'पृथगुपदेशात्' (२.३.२८) इति नये 'भिन्नोऽचिन्त्यः परमो जीवसङ्घात्' इत्यत्र अचिन्त्यशक्तिरूपलिङ्गयुक्तभेदश्रुतेः उपक्रमादिषड्विधतात्पर्यलिङ्गोपेतादपि 'तत्त्वमसि' इत्याद्यैक्यवाक्यात् प्राबल्यम् ॥ ७ ॥

एवं प्रत्येकम् उपक्रमादेर्निर्णायकत्वमुक्तम् ॥ अथ यथासम्भवं मिलितस्य उच्यते । यथा 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्युपक्रमेण, 'एतमन्नमयमात्मानमुपसङ्क्रामति' इत्युपसंहारेण, ब्रह्मशब्दाभ्यासेन, चान्नमयादिपञ्चकस्य विष्णुत्वनिर्णयः ॥ तदुक्तम्- 'मान्त्रवर्णिकमेव च गीयते' (१.१.१५) 'अस्मिन्नस्य च तद्योगं शास्ति' (१.१.१९) 'आनन्दमयोऽभ्यासात्' (१.१.१२) इति ॥

समग्रस्यापि मिलितस्य यथा 'द्वासुपर्णा' इत्यत्र उपक्रमादिभिः सर्वैः जीवेशयोः भेदनिर्णयः ॥

**(श्रुत्यादीनां स्वरूपकथनम्)**

श्रुत्यादयस्तु श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्याः षट् । येषु पूर्वपूर्वप्राबल्यं स्वभावतः । तत्र वाचकः शब्दः- **श्रुतिः** ॥ यथा वामननये (१.३.७अ.) 'मध्ये वामनमासीनं विश्वेदेवा उपासते' इत्यत्र वामनश्रुत्या मध्यमत्वादिलिङ्गबाधेन अर्थनिर्णयः ॥ १ ॥

असाधारणधर्मबोधकवाक्यम्- **लिङ्गम्** ॥ यथा दहरनये (१.३.५) दहराकाशस्य साक्षात् सर्वाधारत्वप्रतिपादक 'किं तदत्र विद्यते उभेऽस्मिन् द्यावापृथिवी' इत्यस्य वाक्यस्य बाधेन अपहत-पाप्मत्वादिलिङ्गेन अर्थनिर्णयः ॥ २ ॥

निराकाङ्क्षपदानि- **वाक्यम्** ॥ यथा 'ज्योतिर्दर्शनात्' (१.३.४०) इति नये जीवस्य ज्योतिष्ट्व-साधक-'हृद्यन्तर्ज्योतिः' इति जीवप्रकरणबाधेन 'कतम आत्मा' इति प्रश्नरूपवाक्येन विष्णोः ज्योतिष्ट्वरूपार्थनिर्णयः ॥ ३ ॥

एकप्रमेयप्रतिपादकानेकवाक्यानि- **प्रकरणम्** ॥ यथा षट्प्रश्नरूपसमग्रोपनिषद् ईश्वरपरत्व-

साधकस्थानबाधनेन 'आत्मत एष प्राणो जायते' इति खण्डरूपप्रकरणेन स्वस्य मुख्यप्राणपरत्वनिर्णयः ॥ ४ ॥

अनेकप्रमेयप्रतिपादकैकार्थतात्पर्यकवचनम्- **स्थानम्** ॥ यथा अन्नमयादिशब्दानां कोशपरत्वसाधकान्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमया मे शुद्ध्यन्तामिति स्थलान्तरोक्तयाज्ञिकसमाख्याबाधनेन विष्णुपरानेकवाक्यसन्दर्भरूपस्थानेन स्वस्य विष्णुपरत्वनिर्णयः ॥ ५ ॥

समानोक्तिः- **समाख्या** ॥ सा द्विविधा- अर्थतः शब्दतश्चेति ॥ आद्या यथा 'वैश्वानर'नये (१.२.७) पुरुषसूक्तसमाख्यया वैश्वानरस्य विष्णुपरत्वनिर्णयः ॥ द्वितीया यथा 'जिज्ञासा'नये अग्रणीसूक्तसमाख्यया विश्वकर्मसूक्तस्थाजशब्दस्य विष्णुत्वनिर्णयः ॥ ६ ॥

उपक्रमादीनां मध्ये स्वभावतः प्रबलस्यापि स्वभावदुर्बलेन निरवकाशेन बाधः । यथा- आकाशनये (१.१.८) निरवकाशपरोवरीयस्त्वादिलिङ्गेन सावकाशाकाशश्रुतेर्बाधः । निरवकाशेन बाधस्थले बाध्यस्य योगेन अन्यार्थवाचकत्वकल्पनम्, यथा समनन्तरोक्ताऽऽकाशशब्दस्य आ समन्तात् काशमान इति व्युत्पत्त्या विष्णुपरत्वम् । स्वभावप्रबलेन बाधस्थले तु बाध्यस्य लक्षणया अर्थान्तरकल्पनम्, यथा- 'इति तु पञ्चम्यामाहुतावापः' (छा. ५.९.१) इत्युपसंहारानुरोधेन उपक्रमस्थ-'श्रद्धां जुह्वति' इति श्रद्धापदस्य उदकपरत्वं लक्षणया इति भेदः ॥

## (५) उपक्रमादितात्पर्यलिङ्गैः सम्यङ्निरूप्यमाणे तदेव शास्त्रगम्यम् ।

(५) सूत्रं योजयन्ति- **उपक्रमादीति** ॥ शास्त्रे इति शेषः । **तदेव**= ब्रह्मैव, **शास्त्रगम्यम्**= समस्तशास्त्रेण सम्यक् प्रतिपाद्यमित्यर्थः ।

## (६) 'मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम् ।
## इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन ॥' (११-२१-४३) इति हि भागवते ॥

ननु विष्णोः कथं समस्तशास्त्रप्रतिपाद्यत्वम् ? कर्माभिधायकश्रुतीनामपि सत्त्वात्, इत्यत आहुः- **मां विधत्ते इति** ॥ **इति भागवते इति** ॥ भागवते इत्युक्तेरित्यर्थः । **शास्त्रे**= वेदादिशास्त्रे उपक्रमादिलिङ्गैः, सम्यङ् **निरूप्यमाणे**= विचार्यमाणे सति, तदेव शास्त्रगम्यमित्यन्वयः ॥ ४ ॥ अ. ४ ॥

॥ इति समन्वयाधिकरणम् ॥

**(६) मां विधत्ते इति ॥ (भा. ११.२१.४२)** यद्यपि इदानीनन्तनभागवतपुस्तकेषु 'इत्यस्या हृदयं लोके' इति, पूर्वोत्तरार्धयोर्वैपरीत्येन च पाठो दृश्यते। तथापि अन्यकल्पीयोऽयं पाठ इत्यदोष इत्याचार्याः। उद्धवं प्रति श्रीकृष्णवाक्यमेतत्। अयमर्थः- श्रुतिः 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादिकर्मविधात्री **श्रुतिः माम्** उद्दिश्य, मत्पूजात्वेन कर्म **विधत्ते।** इन्द्राद्यभिधात्री श्रुतिरपि **मामभिधत्ते**= मामेव अपरिच्छिन्न-गुणवत्त्वेन प्रतिपादयति। **अहमेव विकल्प्यः**= 'चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥' (ऋ. १.१६४.४५) इत्यादिश्रुत्या चतुःसङ्ख्याकवासुदेवादिविविधरूपतया विधेयः। **अहमपोह्यः** 'न सुरां पिबेत्' इत्यादि(श्रुति-वचने) नाऽप्रियात् निषेध्यः, सुरापानं मदप्रीतिकरत्वात् निषिध्यत इति अप्रियद्वारा निषेध्य इति यावत्। यद्वा 'सुरा हरेर्गुणास्ते मे स्युः' इति चिन्तनं सुरापानम्, तन्न कुर्यादिति निषेध्यः। **इत्यस्याः**= 'वसन्ते वसन्ते', 'न सुरां पिबेत्' इत्यादिरूपायाः श्रुतेः, **इति हृदयम्**= एवं रूपं तात्पर्यम्, **अहमेव वेद, मदन्यः कश्चन**= कोऽपि **न वेद** इति ॥ अत्र श्लोके श्रुतानि विनाऽन्यानि पदानि अध्याहारलब्धानि। **चत्वारि वाक्** इति श्रुत्यर्थस्तु- वाक्= वाक्शब्दितहरेः यानि **परिमितानि**= स्थानापेक्षया परिच्छिन्नानि **चत्वारि**= चतुःसङ्ख्याकानि **पदानि** वासुदेवादिरूपाणि, **तानि** रूपाणि **ये मनीषिणः ब्राह्मणाः** ते **विदुः। वाचः**= हरेः हृदयगुहायां **निहितानि त्रीणि** वासुदेवादिरूपाणि, **मनुष्याः**= साधारणाः **नेङ्गयन्ति**= न जानन्ति, **तुरीयं** पदम्= अनिरुद्धाख्यं **वदन्ति**= जानन्ति इति ॥ ४ ॥ अ. ४ ॥

**॥ इति समन्वयाधिकरणम् ॥ ४ ॥**

## ५. ईक्षत्यधिकरणम्

### (१) ननु 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ।' (तै.उ.२–४–५)

(१) अत्र नये ब्रह्मणो वाच्यत्वसमर्थनम् ॥ (७सू.अ.) पूर्वपक्षप्रापकश्रुतीः उदाहरन्ति- **यतो वाच इत्यादि ॥** एतच्छ्रुत्युपन्यासस्तु यतःपदेन ब्रह्मणो ग्रहणपक्षे । आनन्दस्य ग्रहणपक्षे तु, न प्रकृते उपयुक्त इति बोध्यम् । **(४) इत्यादिभिरिति ॥** तत् ब्रह्मशब्दगोचरं शब्दवाच्यं नेति चेत्- नेत्याह सूत्रकार इत्यर्थः । यद्वा शब्दगोचरं नेति न, किन्तु शब्दगोचरमेवेत्याह इत्यर्थः । तृतीयार्थो ज्ञाप्यत्वम् । गोचरशब्दस्य 'त्रयी न श्रुतिगोचरा' इति स्त्रीलिङ्गप्रयोगाद् अनियतलिङ्गत्वेन नपुंसकत्वं च युक्तम् ॥ पुंसि सञ्ज्ञायामित्यत्र 'पुंसि' इति कथनं तु प्रचुरप्रयोगाभिप्रायकम् ॥

**(१) यतो वाच इति ॥** (तै. २.४.५) **यतः**= ब्रह्मणः सकाशात् **वाचः**= वेदाः, वागिन्द्रियाणि च, **मनसा सह**= मनोरूपेन्द्रियेण सह, तम् **अप्राप्य**= अज्ञात्वैव **निवर्तन्ते, तस्य ब्रह्मण आनन्दं विद्वान्** (जानन्) न बिभेतीत्यर्थः ॥

### (२) 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्' ।

**(क.उ. १.३.१५)**

**(२) अशब्दमिति ॥** (क. १.३.१५) **यद् अशब्दं**= शब्दावाच्यं शब्दाख्यगुणशून्यं शब्दभिन्नं च, **अस्पर्शं**= प्राकृतस्पर्शगुणशून्यम्, स्पर्शानुमेयत्वशून्यं स्पर्शगुणभिन्नं च । **अरूपं**= प्राकृतशून्यम्, तद्भिन्नं च, **तथा अरसं**= प्राकृतरसशून्यम्, तद्भिन्नं च **अगन्धं**= प्राकृतगन्धशून्यं तद्भिन्नं च **नित्यं**= स्वरूपतो नाशरहितम्, **अव्ययं**= देहतो नाशशून्यमित्यर्थः । अशब्दमित्यादिना पञ्चभूतवैलक्षण्यं तन्मात्रा(गन्धादि-गुण)-वैलक्षण्यं चोक्तमिति बोध्यम् । अत्र पूर्वपक्षप्रापकार्थस्तु- शब्दावाच्यत्वरूपः ॥

### (३) 'अवचनेनैव प्रोवाच'(बाष्कलश्रुतिः) ।

**(३) अवचनेनेति ॥** (बाष्कलश्रुतिरेषा) वचनवृत्तिं विना लक्षणया ब्रह्मस्वरूपं गुरुः शिष्याय **प्रोवाच**= उपदिदेश इति पूर्वपक्षेऽर्थः । सिद्धान्ते तु- साकल्येन प्रतिपादनं विना उपदिदेश इति । अन्यासां तु 'अप्रसिद्धेः' इत्यादिना भाष्यकारैरेव वक्ष्यते ।

### (४) 'यद्वाचाऽनभ्युदितम् । येन वागभ्युद्यते ॥ यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम्'(के.उ.१) इत्यादिभिर्न तच्छब्दगोचरम् । नेत्याह–

(४) **यद्वाचा इति** ॥ (के.उ. १) **यत् वाचा**= वागिन्द्रियेण, तज्जन्यशब्देन, **अनभ्युदितम्**= अनुक्तम्, **येन वागभ्युद्यते**= उच्चार्यते, **यत्**= विष्ण्वाख्यम्, **श्रोत्रेण न शृणोति** पुरुषः, **येनेदं श्रोत्रं श्रुतम्** इत्यर्थः । 'तदेव ब्रह्म त्वं विद्धि' इत्युत्तरत्रान्वयः । **आदिना** एवंजातीयकं श्रुत्यन्तरं ग्राह्यम् ।

**(ज्ञानविषयत्वाद् ब्रह्म नावाच्यम्)**

## (५) ॥ ॐ ईक्षतेर्नाशब्दम् ॐ ॥ ५ ॥

(५) **ईक्षतेः** इति धातुनिर्देशः, श्तिपा सहयोगात् 'इक्श्तिपौ धातुनिर्देशे' (वार्तिकम्) इत्यनुशासनात् । तेन च ज्ञानं, ज्ञानविषयत्वं वा लक्ष्यते । आद्ये हेतुतावच्छेदकसम्बन्धो विषयत्वं, द्वितीये तु स्वरूपम् । न विद्यते शब्दो वाच्यत्वेन यस्मिन् (यस्य) तद् **अशब्दं**= वाच्यतासम्बन्धावच्छिन्नशब्दत्वावच्छिन्नप्रतियोगिताकाभाववत् शब्दावाच्यमिति यावत् । तत्, तु इति वर्तते । अयमर्थः- तत्= ब्रह्म, अशब्दं= शब्दावाच्यं न; ईक्षतेः= विषयतासम्बन्धेन ज्ञानवत्त्वात्, स्वरूपसम्बन्धेन ज्ञानविषयत्वाद् वा इति । यत्तु- ईक्षधातुरेव स्ववाच्य-ज्ञानविषयत्वसम्बन्धेन हेतुरिति- तन्न सम्यक्, भाष्योदाहृते 'आत्मन्येवात्मानम्' इत्यादौ ईक्षधातोरभावेनोदाहरणासङ्गतेः । यद्यपि अवाच्यत्वमप्रसिद्धम्, तथापि प्रतिवादिरीत्या प्रसक्तस्य निषेध इति बोध्यम् ॥

**(६) 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' । (षट्.उ.५–५)**

**(७) 'आत्मन्येवात्मानं पश्येत् ।', 'विज्ञाय प्रज्ञां कुर्वीत ।' (बृ.उ.६–४–२३, ६–४–२१) इत्यादिवचनैरीक्षणीयत्वाद्वाच्यमेव । औपनिषदत्वान्नावचनेनेक्षणम् ॥**

(६-७) हेतौ श्रुतीराहुः-**स इत्यादि** ॥ **इत्यादिवचनैरिति** ॥ तृतीयार्थो ज्ञाप्यत्वरूपहेतुत्वम् । ईक्षणीयत्वादित्यत्र अन्वेति । 'ईक्षणीयत्वावगतेः' इति टीका तु फलितार्थाभिप्राया । ईक्षणीयस्य प्रत्यक्षादिवेद्यत्वाभावे युक्तिमाहुः- **औपनिषदत्वादिति** ॥ **अवचनेन**= वचनभिन्नप्रत्यक्षेण, अनुमानेन वा ।

(६) **स एतस्मादिति** ॥ (षट्. ५.५) चतुर्मुखलोकं प्राप्तः प्रणवोपासकः जीवः, **जीवघनात्**= जीवश्रेष्ठात्, **एतस्मात्**= चतुर्मुखात्, तदुपदेशेनेति यावत् । **परात्परम्**= उत्तमादुत्तमम्, **पुरिशयं**= सकल-देहान्तर्गतम्, **पुरुषं**= पूर्णं वासुदेवम्, **ईक्षते**= जानातीत्यर्थः ॥ यद्यपीदं षट्प्रश्नटीकायाम् अपरोक्ष-ज्ञानपरतया व्याख्यातम् । तथापि प्रकृतभाष्यानुरोधेन ज्ञानसामान्यपरमिति बोध्यम् ॥

(७) **आत्मन्येवेति** ॥ (बृ. ६.४.२३) **आत्मन्येव**= स्वस्मिन्नेव स्थितमिति शेषः, **आत्मानं**= परमात्मानम्, **पश्येद्** इत्यर्थः ॥ **विज्ञायेति** ॥ (बृ. ६.४.२९) **ब्राह्मणः**= ब्रह्मनिष्ठो धीरः, तं परमात्मानम्, एवं शास्त्रेण आचार्याद्वा, **विज्ञाय**= परोक्षतो ज्ञात्वा, **प्रज्ञां**= प्रकृष्टमपरोक्षज्ञानम्, **कुर्वीत**= सम्पादयेदित्यर्थः ॥ **आदिना** 'आत्मा वा अरे' (बृ. ३.५.६) इत्यादेः परिग्रहः ।

**(वाच्यत्वं श्रुतिस्मृतिसिद्धम्)**

**(८) 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति '(क.उ.२–२५) ॥**

**(९) 'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्'(भ.गी.१५–१५)**
**इत्यादिश्रुतिस्मृतिभ्यश्च ॥ अवाच्यत्वादिकं त्वप्रसिद्धत्वात् ॥**

(८-९) ननु 'यतो वाच' इत्यादिश्रुतिसिद्धम् अवाच्यत्वं कथम् अनुमानमात्रेण बाध्येत इत्यत आहुः- **सर्वे वेदा इत्यादि** ॥ **श्रुतिस्मृतिभ्यश्चेति** ॥ एतदर्थज्ञाप्यत्वस्य वाच्यमेवेत्यत्रान्वयः । श्रुत्या वाच्यत्वेन प्रतिपादनादिति भावः ॥

ननु अवाच्यत्वश्रुतीनां का गतिः ? इत्यत आहुः- **अवाच्यत्वादिकमिति** ॥ अवाच्यत्वादिव्यपदेश इत्यर्थः । **अप्रसिद्धत्वात्**= साकल्येन अगोचरत्वात् । ब्रह्मण इति शेषः ॥

ननु श्रुत्यादौ वेद्यत्वमुक्तम्, न तु वाच्यत्वम्, तच्च वेद्यत्वं लक्षणयैव, न शक्त्या, 'यतो वाच' इत्यादिश्रुत्यनुरोधादिति चेन्न- वाचो निवृत्तिर्नाम अप्रतिपादकत्वम् । सा च लक्षणाङ्गीकारेऽपि न सिद्ध्यति, तयापि प्रतिपादितत्वात् ॥

न चावाचकत्वमेव अप्रतिपादकत्वमिति वाच्यम् । 'गङ्गायां घोषः' इत्यादौ गङ्गापदं तीर-प्रतिपादकमिति अबाधितव्यवहारेण तस्य ज्ञानजनकत्वरूपत्वात् ॥

न च 'यतो वाच' इति श्रुतौ 'अप्राप्य' इत्यस्य कर्माऽऽकाङ्क्षायां धर्मानिति पूरणीयम् । तथा च धर्माभावेन शक्यतावच्छेदकविरहात् शक्तिर्नेति सिद्धमिति वाच्यम् । लक्षणाया अपि लक्ष्यता-वच्छेदकाभावे अयोगात् ॥

न च आरोपितधर्ममादाय लक्षणा, शक्तिस्तु न तथा सम्भवति (तथा सति) पटादौ घटादिपदस्यापि शक्तिरित्यापत्तेरिति वाच्यम्- एवं सति ब्रह्मशब्दस्य अपरिच्छिन्नत्वं लक्ष्यतावच्छेदकम् आरोपितमिति

प्राप्तम् । तदभाववत्येव तदारोपात् तन्नास्तीति च । एवं च अपरिच्छिन्नत्वाभावस्य परिच्छिन्नत्व-रूपत्वेन ब्रह्मणो नश्वरत्वापत्तेः ।।

न च अपरिच्छिन्नत्वम् न परिच्छिन्नत्वाभावः, किन्तु सर्वकालवृत्तित्वादिरूपः, तदभावो ब्रह्मण्यङ्गीक्रियते । न हि सर्वकालवृत्तित्वाद्यभावे यत्किञ्चित्कालवृत्तित्वं नियतम्, तुच्छे तदभावादिति वाच्यम्- एवं सति सर्वकालवृत्तित्वादेः क्वाप्यभावेन तत्प्रकारकभ्रमे तस्य प्रातिभासिकत्वापत्तेः ।।

किञ्च धर्मारोपो नाम सप्रकारकभ्रमः, तत्र विशेष्यता, विशेष्यतावच्छेदकं च वक्तव्यम् । तदङ्गीकारे धर्मान्तरेण किमपराद्धम् ? तयोरपि आरोपश्चेत्- अनवस्था ।।

न च स्वरूपमात्रे लक्षणेति वाच्यम्, अस्य सूत्रकृता 'गतिसामान्यात्' (१.१.१०) इति सूत्रेण निराकरिष्यमाणत्वात् । तन्मात्रे शक्त्यङ्गीकारेऽपि बाधकाभावाच्च । युक्तिविरुद्धमिति चेत्- लक्षणा-विषयेऽपि युक्तेः साम्यात् । एवं च वाच्यत्वस्वीकारे का हानिः ? लक्ष्यत्वस्वीकारे को लाभः ? शब्दप्रतिपाद्यत्वसाम्यात् । 'यतो वाच' इत्यादिश्रुतिरपि व्यर्था भवेत् (निष्फलस्य शक्तिनिषेधस्य प्रतिपादकत्वात्) ।। न च धर्मसामान्याभावः फलमिति वाच्यम्- लक्षणाङ्गीकारेऽपि धर्मप्राप्तेरुक्तत्वात् । अस्माकं तु साकल्येनाप्रतिपादनेन अनन्तगुणलाभः श्रुतिफलमिति बोध्यम् ।।

किञ्च ब्रह्मादिपदानां वाच्याप्रसिद्ध्या शक्यसम्बन्धमूलकलक्षणायोगः । अपरिच्छिन्नत्वं ब्रह्मपदशक्यतावच्छेदकमिति व्यवहारापलापश्च । 'यतो वाच' इत्यादिश्रुतौ 'अप्राप्य' इत्यस्य कर्माकाङ्क्षायाम् 'इयत्ताम्' इति पूर्यते । इयत्ताम् अप्राप्य वाचो निवर्तन्त इत्यर्थसामञ्जस्यात् । एवं 'अशब्दम्' इत्यादिश्रुतावपि साकल्येन शब्दादिगोचरत्वाभावोऽर्थः ।। न च तत्र साकल्येनेति अश्रुतकल्पनम् । 'शक्त्या' इत्यस्यापि अश्रुतत्वात् ।

तथा च वेदानुपजीविप्रत्यक्षानुमानावेद्यत्वे सति ईक्षणीयत्वादिति हेतुशरीरं फलितम् ।।

ननु यशोदाप्रत्यक्षादेः, स्वतन्त्राद्यनुमानस्य च वेदोपजीवित्वात् तद्विषयत्वेऽपि तदितर-प्रत्यक्षाविषयत्वमादाय समन्वयः कार्यः, स च न सम्भवति (वेदानुपजीवी) ईश्वरप्रत्यक्षविषयत्वात् (तस्य) । तथा च असिद्धो हेतुः, वेदोपजीवि-प्रत्यक्षादिविषयत्वमादाय ईक्षणीयत्वस्य उपपत्तेः अर्थापत्तेरभावाच्च, इति चेन्न- 'स एतस्मात्' इति श्रुतौ अधिकारिविशेषस्य उपादानेन तदीय-प्रत्यक्षादेरेव ग्रहणम् । तथा च स्ववृत्ति-वेदानुपजीवि-प्रत्यक्षाद्यवेद्यत्व-स्ववृत्तिज्ञानविषयत्वोभय-सम्बन्धेन किञ्चिद्विशिष्टत्वस्य हेतुत्वेन उक्तदोषानवकाशात् । अयं हेतुः वाच्यत्वं विनाऽनुपपन्नः ।

(७) **आत्मन्येवेति** ॥ (बृ. ६.४.२३) **आत्मन्येव**= स्वस्मिन्नेव स्थितमिति शेषः, **आत्मानं**= परमात्मानम्, **पश्येद्** इत्यर्थः ॥ **विज्ञायेति** ॥ (बृ. ६.४.२१) **ब्राह्मणः**= ब्रह्मनिष्ठो धीरः, तं परमात्मानम्, एवं शास्त्रेण आचार्याद्वा, **विज्ञाय**= परोक्षतो ज्ञात्वा, **प्रज्ञां**= प्रकृष्टमपरोक्षज्ञानम्, **कुर्वीत**= सम्पादयेदित्यर्थः ॥ **आदिना** 'आत्मा वा अरे' (बृ. ३.५.६) इत्यादेः परिग्रहः ।

**(वाच्यत्वं श्रुतिस्मृतिसिद्धम्)**

## (८) 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति '(क.उ.२–२५) ॥

## (९) 'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्'(भ.गी.१५–१५) इत्यादिश्रुतिस्मृतिभ्यश्च ॥ अवाच्यत्वादिकं त्वप्रसिद्धत्वात् ॥

(८-९) ननु 'यतो वाच' इत्यादिश्रुतिसिद्धम् अवाच्यत्वं कथम् अनुमानमात्रेण बाध्येत इत्यत आहुः- **सर्वे वेदा इत्यादि** ॥ **श्रुतिस्मृतिभ्यश्चेति** ॥ एतदर्थज्ञाप्यत्वस्य वाच्यमेवेत्यत्रान्वयः । श्रुत्या वाच्यत्वेन प्रतिपादनादिति भावः ॥

ननु अवाच्यत्वश्रुतीनां का गतिः ? इत्यत आहुः- **अवाच्यत्वादिकमिति** ॥ अवाच्यत्वादिव्यपदेश इत्यर्थः । **अप्रसिद्धत्वात्**= साकल्येन अगोचरत्वात् । ब्रह्मण इति शेषः ॥

ननु श्रुत्यादौ वेद्यत्वमुक्तम्, न तु वाच्यत्वम्, तच्च वेद्यत्वं लक्षणयैव, न शक्त्या, 'यतो वाच' इत्यादिश्रुत्यनुरोधादिति चेन्न- वाचो निवृत्तिर्नाम अप्रतिपादकत्वम् । सा च लक्षणाङ्गीकारेऽपि न सिद्ध्यति, तयापि प्रतिपादितत्वात् ॥

न चावाचकत्वमेव अप्रतिपादकत्वमिति वाच्यम् । 'गङ्गायां घोषः' इत्यादौ गङ्गापदं तीर-प्रतिपादकमिति अबाधितव्यवहारेण तस्य ज्ञानजनकत्वरूपत्वात् ॥

न च 'यतो वाच' इति श्रुतौ 'अप्राप्य' इत्यस्य कर्माऽऽकाङ्क्षायां धर्मानिति पूरणीयम् । तथा च धर्माभावेन शक्यतावच्छेदकविरहात् शक्तिर्नेति सिद्धमिति वाच्यम् । लक्षणाया अपि लक्ष्यता-वच्छेदकाभावे अयोगात् ॥

न च आरोपितधर्ममादाय लक्षणा, शक्तिस्तु न तथा सम्भवति (तथा सति) पटादौ घटादिपदस्यापि शक्तिरित्यापत्तेरिति वाच्यम्- एवं सति ब्रह्मशब्दस्य अपरिच्छिन्नत्वं लक्ष्यतावच्छेदकम् आरोपितमिति

प्राप्तम् । तदभाववत्येव तदारोपात् तन्नास्तीति च । एवं च अपरिच्छिन्नत्वाभावस्य परिच्छिन्नत्व-रूपत्वेन ब्रह्मणो नश्वरत्वापत्तेः ॥

न च अपरिच्छिन्नत्वम् न परिच्छिन्नत्वाभावः, किन्तु सर्वकालवृत्तित्वादिरूपः, तदभावो ब्रह्मण्यङ्गीक्रियते । न हि सर्वकालवृत्तित्वाद्यभावे यत्किञ्चित्कालवृत्तित्वं नियतम्, तुच्छे तदभावादिति वाच्यम्- एवं सति सर्वकालवृत्तित्वादेः क्वाप्यभावेन तत्प्रकारकभ्रमे तस्य प्रातिभासिकत्वापत्तेः ॥

किञ्च धर्मारोपो नाम सप्रकारकभ्रमः, तत्र विशेष्यता, विशेष्यतावच्छेदकं च वक्तव्यम् । तदङ्गीकारे धर्मान्तरेण किमपराद्धम् ? तयोरपि आरोपश्चेत्- अनवस्था ॥

न च स्वरूपमात्रे लक्षणेति वाच्यम्, अस्य सूत्रकृता 'गतिसामान्यात्' (१.१.१०) इति सूत्रेण निराकरिष्यमाणत्वात् । तन्मात्रे शक्त्यङ्गीकारेऽपि बाधकाभावाच्च । युक्तिविरुद्धमिति चेत्- लक्षणा-विषयेऽपि युक्तेः साम्यात् । एवं च वाच्यत्वस्वीकारे का हानिः ? लक्ष्यत्वस्वीकारे को लाभः ? शब्दप्रतिपाद्यत्वसाम्यात् । 'यतो वाच' इत्यादिश्रुतिरपि व्यर्था भवेत् (निष्फलस्य शक्तिनिषेधस्य प्रतिपादकत्वात्) ॥ न च धर्मसामान्याभावः फलमिति वाच्यम्- लक्षणाङ्गीकारेऽपि धर्मप्राप्तेरुक्तत्वात् । अस्माकं तु साकल्येनाप्रतिपादनेन अनन्तगुणलाभः श्रुतिफलमिति बोध्यम् ॥

किञ्च ब्रह्मादिपदानां वाच्याप्रसिद्ध्या शक्यसम्बन्धमूलकलक्षणायोगः । अपरिच्छिन्नत्वं ब्रह्मपदशक्यतावच्छेदकमिति व्यवहारापलापश्च । 'यतो वाच' इत्यादिश्रुतौ 'अप्राप्य' इत्यस्य कर्माकाङ्क्षायाम् 'इयत्ताम्' इति पूर्यते । इयत्ताम् अप्राप्य वाचो निवर्तन्त इत्यर्थसामञ्जस्यात् । एवं 'अशब्दम्' इत्यादिश्रुतावपि साकल्येन शब्दादिगोचरत्वाभावोऽर्थः ॥ न च तत्र साकल्येनेति अश्रुतकल्पनम् । 'शक्त्या' इत्यस्यापि अश्रुतत्वात् ।

तथा च वेदानुपजीविप्रत्यक्षानुमानावेद्यत्वे सति ईक्षणीयत्वादिति हेतुशरीरं फलितम् ॥

ननु यशोदाप्रत्यक्षादेः, स्वतन्त्राद्यनुमानस्य च वेदोपजीवित्वात् तद्विषयत्वेऽपि तदितर-प्रत्यक्षाविषयत्वमादाय समन्वयः कार्यः, स च न सम्भवति (वेदानुपजीवी) ईश्वरप्रत्यक्षविषयत्वात् (तस्य) । तथा च असिद्धो हेतुः, वेदोपजीवि-प्रत्यक्षादिविषयत्वमादाय ईक्षणीयत्वस्य उपपत्तेः अर्थापत्तेरभावाच्च, इति चेन्न- 'स एतस्मात्' इति श्रुतौ अधिकारिविशेषस्य उपादानेन तदीय-प्रत्यक्षादेरेव ग्रहणम् । तथा च स्ववृत्ति-वेदानुपजीवि-प्रत्यक्षाद्यवेद्यत्व-स्ववृत्तिज्ञानविषयत्वोभय-सम्बन्धेन किञ्चिद्विशिष्टत्वस्य हेतुत्वेन उक्तदोषानवकाशात् । अयं हेतुः वाच्यत्वं विनाऽनुपपन्नः ।

**किञ्च परेण ब्रह्मणः प्रत्यक्षानुमानावेद्यत्वाङ्गीकारेण (ईक्षणीयत्वस्य अङ्गीकृतत्वेन च) तद्रीत्या तं प्रति दूषणं सूत्रकृता उक्तमिति (असिद्धरूपो) न दोषः ॥**

(८) **सर्वे वेदा इति ॥ (का. १.२.१५) सर्वे वेदाः, यत्पदं**= यस्य ब्रह्मणः स्वरूपम्, **आमनन्ति**= मुख्यवृत्त्या स्वतात्पर्यविषयं प्रतिपादयन्ति । **यत्**= ब्रह्म, उद्दिश्येति शेषः, **सर्वाणि तपांसि** द्वितीयान्तमेतत्, **वदन्ति**= सर्वे वेदा इत्यर्थः ॥

(९) **वेदैश्चेति ॥ (गीता. १५.१५) सर्वैर्वेदैरहमेव वेद्यः**= मुख्यतया प्रतिपाद्यः । **अहं वेदान्तकृत्**= ब्रह्मसूत्रकृत्, **वेदवित्**= वेदार्थज्ञानीत्यर्थः । **आदिना** 'अथ कस्मादुच्यते ब्रह्मेति', 'नामानि सर्वाणि' इत्यादि गृह्यते ॥

**(१०) 'न तदीदृगिति ज्ञेयं न वाच्यं न च तर्क्यते ।**
**पश्यन्तोऽपि न पश्यन्ति मेरो रूपं विपश्चितः ॥' इतिवत् ॥**

(१०) अप्रसिद्धत्वात् अवाच्यत्वादिकं कुत्र दृष्टमित्यत आहुः- **न तदिति ॥ इतिवत् इति ॥** इत्यत्रेवेत्यर्थः । इति वाक्ये अप्रसिद्धत्वादवाच्यत्वादिव्यवहारो यथा, तथा अत्रापीति भावः ।

(१०) **न तदिति ॥** यस्मात् **विपश्चितः मेरो रूपं पश्यन्तोऽपि ईदृगिति** साकल्येन, **न पश्यन्ति**= न जानन्ति । अनेनाप्रसिद्धत्वहेतुः सूचितः । तस्माद् अप्रसिद्धत्वाद्धेतोः, **तत् मेरो रूपं न ज्ञेयम्**= प्रत्यक्षं न । **न वाच्यं**= शब्दप्रतिपाद्यं न भवति । **न तर्क्यते च**= अनुमानेन वेद्यमपि नेत्युच्यत इत्यर्थः ॥

**(११) 'अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तितः ।**
**अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेवं परं स्मृतम्' इति गारुडे ॥**

**(प्रधानस्याश्रौतत्वं न परवादिसिद्धम्)**

**न चाशब्दत्वमितरसिद्धम् ॥ ५ ॥**

(११) उक्तार्थे मानमाहुः- **अप्रसिद्धेरिति ॥ गारुडे इति ॥** गारुडे इत्युक्तेः अवाच्यत्वादिकम् अप्रसिद्धत्वादित्यन्वयः । अथ परेण यद्व्याख्यानं कृतम्- 'सदेव सोम्येदमग्र आसीत्' इति श्रुत्युक्तं जगत्कारणत्वं साङ्ख्यरीत्या प्रधानस्येति प्राप्ते- प्रधानं न श्रौतजगत्कारणम्, ईक्षतेः 'तदैक्षत' इति ईक्षतिकर्तृत्वश्रवणात् । अशब्दं हि तद् इति (अशब्दमिति हेतुगर्भम्, अश्रौतत्वादिति तदर्थः) । तद्व्याख्यानं प्रत्याचक्षते- **न चाशब्दत्वमिति ॥** अत्र यथेष्टम् आवृत्तिविपरिणामौ, इतरेति पृथक्

पदं च। चशब्दः अनुक्तस्य ईक्षितृत्वस्य समुच्चये, हेतौ इत्यर्थे, किञ्च इत्यर्थे च। च= यतः, इतरस्य= ब्रह्मेतरस्य प्रधानस्य, **अशब्दत्वम्**= अश्रौतत्वम्, **इतरसिद्धम्**= इतराभ्यां मिथो भिन्नमताभ्यां साङ्ख्यमायिभ्यां निश्चितं नेत्यर्थः। उभाभ्यामपि प्रधानस्य 'अजामेकाम्' इति श्रुतिप्रतिपाद्यत्वाङ्गीकारादिति भावः ॥ १ ॥

किञ्च **इतरस्य**= प्रधानेतरस्य ब्रह्मणः, **अशब्दत्वम्**= अश्रौतत्वम्, **इतरसिद्धं**= मायिसिद्धं न इत्यर्थः। तेन ब्रह्मणो वाच्यत्वानङ्गीकारादिति भावः ॥ २ ॥

किञ्च **इतरस्य** ब्रह्मण ईक्षितृत्वं च **इतरसिद्धं**= मायिसिद्धं न इत्यर्थः। ब्रह्मण ईक्षतिस्वरूपत्वादिति भावः ॥ ३ ॥

किञ्च **इतरस्य** प्रधानेतरस्य मायावच्छिन्नस्य ईक्षितृत्वं 'तदैक्षत' इति श्रुत्युक्तेक्षणाश्रयत्वं न इत्यर्थः। जिज्ञास्यस्य शुद्धस्यैव कारणवाक्यप्रतिपाद्यत्वौचित्यादिति भावः ॥ ४ ॥

किञ्च **इतरस्य** प्रधानेतरस्य शुद्धस्य ईक्षितृत्वम् **इतरेण**= मायाख्येन, **सिद्धं**= उत्पन्नं नेत्यर्थः। तथा सति दृश्यत्वादेरपि उत्पत्त्यापत्तेरिति भावः ॥ ५ ॥

किञ्च **इतरस्य** शुद्धब्रह्मण ईक्षितृत्वं **सिद्धम्**= आरोपेण **सिद्धं** न इत्यर्थः। तथा सति प्रधानेऽपि तदारोपोपपत्तेरिति भावः ॥ ६ ॥

अतः कारणात् **इतरसिद्धम्**= इतरेण= मायावादिना निश्चितसूत्रार्थरूपं प्रमेयम्, **अशब्दत्वं**= सूत्रघटकशब्दप्रतिपाद्यत्वशून्यमित्यर्थः ॥ ७ ॥ अत्र पक्षे न विद्यते शब्दत्वं= शब्दप्रतिपाद्यत्वं यस्येति विग्रहः ॥ सू.५ ॥

(११) **अप्रसिद्धेरिति** ॥ परं=गुणपूर्णम्, तत्=ब्रह्म, **अप्रसिद्धेः**=साकल्येन अगोचरत्वात्, अवाच्यम्। एवम् अप्रसिद्धेः, **अज्ञेयम्**= अप्रत्यक्षम्, **अतर्क्यम्** इति चोच्यत इति शेषः, **सर्वागमोक्तितः**= सर्ववेदप्रतिपाद्यत्वात् वाच्यम्। एवं प्रसिद्धेः ज्ञानविषयत्वाद् ज्ञेयं तर्क्यं च भवतीति स्मृतमित्यर्थः ॥सू.५॥

**(शबलं वाच्यं, न निर्गुणमिति शङ्कानिरासः)**

## (१२) ॥ ॐ गौणश्चेन्नात्मशब्दात् ॐ ॥ ६ ॥

(१२) आत्मनः शब्दः-आत्मशब्दः= आत्म-ब्रह्म-पुरुषशब्दाः तस्मात्, सूत्रे समुदायैकवचनम्। 'ईक्षतेः, तत्तु' इति वर्तते। उच्यत इति शेषः। यथायथम् आवृत्तिविपरिणामौ। अयमर्थः- ईक्षतौ

'स एतस्मात्' इत्यादीक्षणश्रुतौ, **गौणस्तु**= गुणबद्धो जीव एवोच्यते, न तु निर्गुणं ब्रह्म इति चेन्न- ईक्षतौ **आत्मशब्दात्** ईक्षणीये वस्तुनि 'स एतस्माज्जीवघनात्,' 'आत्मन्येवात्मानम्', 'ब्रह्म ततमम् अपश्यत्' (ऐ.आ. ३.४.१) इत्यादौ पुरुष-आत्म-ब्रह्मशब्दश्रवणादिति ॥ यद्वा 'आत्मशब्दात्' इति नोपलक्षणम्, किन्तु षष्ठीसमासेन इतरग्राहकम् । उत्तरसूत्रे आत्मशब्दस्यैव विष्णुपरत्वोक्तेः । (अन्यत् सर्वं पूर्ववत्) एकत्र ईक्षणीयस्य हेतुना विष्णुत्वे सिद्धे, तद्बलात् सर्वत्र (पुरुषादिपदघटिते) ईक्षणीयस्य तत्सिद्ध्यति ॥

यद्यपि सुधायां गौणपदं शबलब्रह्मपरतया व्याख्यातम्, तथाप्यत्र निर्गुणस्य वाच्यत्वाभाव एव तात्पर्यम् । वाच्यं शबलं जीवो वा भवतु तेषां ग्रन्थे, उभयथाऽपि प्रतिपादनात् । 'स एतस्मात्' इति श्रुतौ 'पुरिशयम्' इति गुहावृत्तित्वलिङ्गेन श्रुत्युक्तो जीव इति पूर्वपक्ष्याशयः ॥

**(१३) न च गौण आत्मा दृश्यो वाच्यश्च न निर्गुण इति युक्तम्, आत्मशब्दात् ।**

(१३) सूत्रार्थमाहुः- न चेत्यादि ॥ आत्मशब्दात्= विष्णुवाचक-आत्मशब्दश्रवणादित्यर्थः ॥

**(१४) 'यो गुणैः सर्वतो हीनः यश्च दोषविवर्जितः ।**
**हेयोपादेयरहितः स आत्मेत्यभिधीयते ॥**
**एतदन्यस्वभावो यः सोऽनात्मेति सतां मतम् ।**
**आनात्मन्यात्मशब्दस्तु सोपचारः प्रयुज्यते ॥' इति वामने ॥**

**(१५) 'द्वे वाव ब्रह्मणो रूपे आत्मा चैवानात्मा च ।**
**तत्र यः आत्मा स नित्यः शुद्धः केवलो निर्गुणश्च ।**
**अथ ह योऽनीदृशः सोऽनात्मा' इति तलवकारब्राह्मणम् ।**
**न च मुख्ये सत्यमुख्यं युज्यते ॥ ६ ॥**

(१४.१५) आत्मशब्दस्य मुख्यतः विष्णुवाचकत्वे मानमाहुः- **यो गुणैरिति** ॥ **वामन इति** ॥ तत्रेत्युक्तेरित्यर्थः । **युज्यत इति** ॥ विष्णुपरादिति शेषः । अयमर्थः- वामन इत्युक्तेः यतः तलवकारब्राह्मणमित्यस्ति, अतः, च= यतः **मुख्ये सति अमुख्यं न युज्यते** अतश्च, विष्णुपरात् आत्मशब्दात् न युक्तमिति ॥ ६ ॥

(१४) **यो गुणैरिति ॥ गुणैः**= सत्त्वादिभिः, **सर्वतः**= सर्वप्रकारेण, **हीनः**= रहितः, **यः दोषविवर्जितश्च,** चात्- स्वरूपाऽऽनन्दादिगुणयुक्तः, **यः हेयोपादेयरहितः**= हेयत्वोपादेयत्वरहितः, उपादेय एवेति यावत्, पूर्णकामत्वाद् उपादेयरहितोऽनिष्टाभावात् हेयरहित इति वा (अन्यश्चार्थः तत्वोद्योतटीकायामभिहितः) **सः**= एवंगुणकः, **आत्मेत्यभिधीयते**= आत्मशब्दमुख्यप्रतिपाद्यो भवति । **यः एतदन्यस्वभावः**= उक्तविरुद्धस्वभाववान्, **स अनात्मा**= आत्मशब्दप्रतिपाद्यो नेति **सतां मतम्** । **अनात्मनि**= आत्मशब्दाप्रतिपाद्ये जीवे, **आत्मशब्दस्तु सोपचारः**= अमुख्यवृत्तिसहितः सन् प्रयुज्यत इत्यर्थः ॥

(१५) **द्वे वावेति ॥ ब्रह्मणः**= परब्रह्मणः **आत्मा**= आत्मशब्दमुख्यवाच्यः स्वरूपभूतः **अनात्मा**= आत्मशब्दमुख्यावाच्यः प्रतिमास्थानीय-जीवाख्यश्चेति **द्वे रूपे** । **तत्र**= रूपद्वयमध्ये **सः**= प्रसिद्धः **य आत्मा**= आत्मशब्दमुख्यार्थो विष्णुः **स नित्यः**= देहहान्यादिरहितः **शुद्धः**= कर्मलेपविधुरः, **केवलः**= जडामिश्रः **निर्गुणः**= सत्त्वादिगुणहीनः, **वा-व**= प्रसिद्धम् ॥ (अनात्मस्वरूपमाह- **अथेति**) अथेति अर्थान्तरे, **योऽनीदृशः**= नित्यत्वादिगुणरहितः **ह** प्रसिद्धः **सोऽनात्मा**= आत्मशब्दामुख्यार्थः प्रतिमारूपजीव इत्यर्थः ॥ ६ ॥

**(आत्मशब्दः न गौणपरः)**

## (१६) ॥ ॐ तन्निष्ठस्य मोक्षोपदेशात् ॐ ॥ ७ ॥

**न हि गौणात्मनिष्ठस्य मोक्षः ।**

(१६) ननु आत्मशब्दो मुख्यतः गौणपरः किं न स्यात् ? इति शङ्कावारणाय सूत्रम्- **ॐ तन्निष्ठस्येति ॥** न, गौणः, आत्मशब्दाद् इति वर्तते । मुख्य इति शेषः । **तस्मिन्**= आत्मशब्दवाच्ये निष्ठा यस्य सः, तस्य । यथायथं विपरिणामः । अयमर्थः- आत्मशब्दः गौणे जीवे मुख्यो न, **तन्निष्ठस्य**= आत्मज्ञानिनः **मोक्षोपदेशात्**= 'यस्यानुवित्त' इति श्रुतौ मोक्षप्रतिपादनाद् इति ॥

**(१७) 'यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन् सन्देहे गहने प्रविष्टः ।**
**स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव ॥'**
**(बृ.उ.६–४–१३) इत्यात्मनिष्ठस्य मोक्ष उपदिश्यते ।**

**(१८) 'अयमात्मा ब्रह्म' (मा.उ.१–२–.बृ.उ.४–५–१९),**
**'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ।' (भाग.१–२–११)**

(१७-१८) **सौत्रहेतुबोधकश्रुतिमाहुः- यस्यानुवित्त इति ॥ आत्मशब्दः विष्णावेव मुख्यः, न जीवे इत्यत्र स्पष्टश्रुतिस्मृतीः उदाहरन्ति- अयमात्मेत्यादि ॥**

(१७) **यस्यानुवित्त इति ॥** (बृ. ६.४.१३) **हि**= यस्मात् **सः**= विष्णुः । **सर्वस्य कर्ता**, तस्मादेव, **विश्वकृत्**= वायुकर्ता **प्रतिबुद्धः**= स्वतः सर्वज्ञः । **अस्मिन् सन्दोहे**= मध्यदेहे, स्थित इति शेषः । **गहने**= गम्भीरे हृदयगुहास्थाने **प्रविष्टः स आत्मा**= विष्णुः **यस्य**= येनोपासकेन **अनुवित्तः**= सम्यक् ज्ञातः, तस्य अधिकारिणः उ= प्रधानः, **तस्य**= विष्णोः **यो लोकः**, स एव लोको भवतीत्यर्थः ॥

(१८) **अयमात्मेति ॥** (मा.उ. १.२; बृ. ४.५.१९) **अयं**= रमाब्रह्मादि-आदानकर्तृत्वेन स्थितः, **आत्मा ब्रह्म**= विष्णुरेव इत्यर्थः ॥ **ब्रह्मेति ॥** (भाग. १.२.११) अस्य पूर्वार्धम्- 'वदन्ति तत्तत्वविदः तत्त्वं यज्ज्ञानमद्वयम् ।' इति ॥ **तत्त्वविदः**= ज्ञानिनः **अद्वयं**= समाधिकरहितं **ज्ञानं**= ज्ञानस्वरूपं **यत्तत्वं वदन्ति, तत्**= देशकालाद्यपरिच्छिन्नत्वात् **ब्रह्मेति**, सर्वान्तर्यामित्वात् **परमात्मेति**, ऐश्वर्यादिगुणवत्वात् **भगवानिति, शब्द्यते**= अभिधीयत इत्यर्थः ॥

**(आत्मशब्दः विष्णुवाची)**

## (१९) 'दत्तं दूर्वाससं सोममात्मेशब्रह्मसम्भवान् ।'(भाग.४–१–१५)

(१९) **सम्भवानिति ॥** इति भागवते इति शेषः । **पाद्मे इति ॥** तत्र इत्युक्तेरित्यर्थः । **अन्वयस्तु वक्ष्यते ॥ ७ ॥**

(१९) **दत्तमिति** ॥ (भाग. ४.१.१५) अस्य पूर्वार्धम्- 'अनसूया तथैवात्रेः जज्ञे पुत्रानकल्मषान्' इति । अनसूयाख्या अत्रिभार्या, अत्रेः सकाशात्, **आत्मेशब्रह्मसम्भवान्**= **आत्मा**= विष्णुः, **ईशः**= रुद्रः, **ब्रह्मा**= चतुर्मुखः, तैः सह सम्भवन्तीति तथा, तान् **अकल्मषान्**= अपापान्, **दत्तं**= दत्ताख्यं भगवद्रूपम्, **दुर्वाससम्, सोमं**= चन्द्रम्, एतान् पुत्रान् **जज्ञे**=जनयामास इत्यर्थः । ब्रह्मावेशेन सह चन्द्र उत्पन्न इति साहित्यं चास्ति । विष्णुरुद्रांशयोः दत्तदुर्वाससोः विषये तु साहित्यम्, उपपत्तिश्च गौणे इति विवेकः । यद्यपीदानीन्तनभागवतपुस्तके 'अत्रेः पत्न्यनसूया त्रीन् जज्ञे सुयशसः सुतान्' इति पूर्वार्धपाठो दृश्यते । तथापि अनुव्याख्यानसुधयोः पूर्वोक्तपाठस्यैव उक्तत्वेन, अयं पाठः कल्पान्तरीय इति ज्ञेयम् ॥

**(२०) 'चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो ।**
**जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः ॥**
**इतरेष्वात्मशब्दस्तु सोपचारः प्रयुज्यते ।**
**तस्याऽत्मनो निर्गुणस्य ज्ञानान्मोक्ष उदाहृतः ॥**

**सगुणास्त्वपरे प्रोक्तास्तज्ज्ञानान्नैव मुच्यते ।**
**परो हि पुरुषो विष्णुस्तस्मान्मोक्षस्ततः स्मृतः ॥' इति पाद्मे ॥ ७ ॥**

(२०) **चेतनस्त्विति ॥ हे प्रभो, चेतनः जीवः आत्मेति द्विधा प्रोक्तः**, तत्र जीवाः- **ब्रह्मादयः प्रोक्ताः, आत्मा तु**= आत्मशब्दमुख्यवाच्यस्तु **जनार्दनः**= विष्णुः **एक एव प्रोक्तः** । **इतरेषु**= चतुर्मुखादिषु, **आत्मशब्दः, सोपचारः**= हीनवृत्तियुक्तः **प्रयुज्यते** । तस्यैव आत्मशब्दमुख्यवाच्यत्वे हेतुमाह-**तस्येति** ॥ यतः **तस्य निर्गुणस्य आत्मनः (विष्णोः) ज्ञानान्मोक्ष उदाहृतः** ॥ 'यस्यानुवित्तः' (बृ.उ. ६.४.१३) इत्यादिश्रुतौ भवतीत्युक्तः । **अपरे**= ब्रह्मादयः **सगुणाः प्रोक्ताः, तज्ज्ञानात् नैव मुच्यते** अधिकारी । गुणनिवृत्तिरूपो मोक्षः सगुणज्ञानान्न भवतीति हृदयम् (विष्णोरेव मोक्षदत्वमित्याह) **पर इति ॥ हि**= यतः **विष्णुः परः** स्वतन्त्रः, सर्वोत्तमो वा, **पुरुषः**=पूर्णः, **तस्मात्**=ततो विष्णुसकाशात् **मोक्षः स्मृतः** इत्यर्थः। अत्र जीवपदेन अस्वतन्त्रचेतनवाचकेन श्रीतत्वस्यापि ग्रहणम् । **ब्रह्मादय** इति ब्रह्मपदेनापि । यद्वा- बन्धमोचकयोरेव विचार्यत्वेन श्रीतत्वविचारो न कृत इति ॥ ७ ॥

**(अहेयत्ववचनात् मोक्षकारणत्वाच्चात्रात्मा न गौणः)**

## (२१) ॥ ॐ हेयत्वावचनाच्च ॐ ॥ ८ ॥

(२१) **युक्त्यन्तरेण आत्मशब्दस्य गौणपरत्वनिराकरणाय सूत्रम्- ॐ हेयत्वेति ॥** हेयत्वं च मोक्षार्थं प्राधान्येन यत् ज्ञेयत्वं मोक्षकारणज्ञानविषयत्वम्, तच्छून्यता, तस्य अवचनम् । अवचनमित्यत्रत्यनञर्थस्य हेयत्वेऽन्वयः । असमर्थसमासः । चशब्दः- श्रुत्युक्तस्य मोक्षकारणत्वस्य, हेयत्ववचनस्य च समुच्चायकः । तत्तु, आत्मशब्दः, न मुख्यः, गौण इति वर्तते । तदिति पदं षष्ठ्या विपरिणम्यते ॥ **अयमर्थः**- आत्मशब्दः गौणे न मुख्यः, हेयत्ववचनात्, 'अन्या वाचो विमुञ्चथ' इत्यन्येषां हेयत्वप्रतिपादनात्= ज्ञानविषयत्वशून्यत्वकथनात् । तस्य तु= आत्मशब्दवाच्यस्य तु, हेयत्वावचनात्= ज्ञानविषयताशून्यत्वाकथनात्, प्रत्युत 'तमेवैकं जानथ' इति अहेयत्वप्रतिपादनात्= ज्ञानविषयत्वकथनात्, मोक्षकारणत्वाच्च= 'अमृतस्यैष सेतुः' इति मोक्षकारणत्वश्रवणाच्चेति ॥

**(२२ 'तमेवैकं जानथ आत्मानम् अन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः' (मु.उ.२–२–५) इत्यन्येषां हेयत्ववचनादस्याहेयत्ववचनात्, न गौण आत्मा ॥ ८ ॥**

(२२) **तमेवेत्यादि ॥** सौत्रहेतुबोधकश्रुतिरियम् ॥ **आत्मेति ॥** आत्मशब्दमुख्यार्थ इत्यर्थः । एवं

सूत्रद्वयभाष्ययोः एकवाक्यतयाऽन्वयः । हि= यतः गौणात्मनिष्ठस्य= सत्त्वादिगुणबद्धजीवज्ञानिनः, मोक्षः= सत्त्वादिगुणनिवृत्तिरूपो मोक्षः, न युज्यते, यतस्तन्निष्ठस्य मोक्ष उपदिश्यते, यतः 'अयमात्मा ब्रह्म' इति श्रुतिरस्ति अतः, भागवते इत्युक्तेः, पाद्मे इत्युक्तेश्च, अन्येषां हेयत्ववचनात्, अस्य आत्मशब्दवाच्यस्य अहेयत्ववचनाच्च, चेन मोक्षकारणत्वश्रवणाच्च- गौणो जीव आत्मा न भवतीति ॥

ननु गौणश्चेदित्यादिसूत्रत्रयस्य ईक्षतौ ईक्षणीयश्रुतौ गौण एवोच्यत इति चेत् - न - आत्मशब्दात्, तन्निष्ठस्य मोक्षोपदेशात्, हेयत्वावचनाच्च इत्येवार्थः कुतो नोक्तः ? साध्यस्य एकत्वे लाघवात्, 'यस्यानुवित्तः', 'तमेवैकम्' इति श्रुत्योरपि ईक्षणश्रुतित्वादिति चेन्न- आत्मशब्दात् इत्येव निर्वाहे, उत्तरसूत्रद्वयस्य वैयर्थ्यापत्तेः । आत्मशब्दस्य जीवेऽपि प्रयोगेण असाधकत्वशङ्कावारणाय सूत्रद्वयमिति चेत्- तर्हि आत्मशब्दार्थनिर्णयार्थमेव सूत्रद्वयं प्रवृत्तमिति- भाष्योक्तार्थ एव सूत्रद्वयतात्पर्यस्य पर्यवसानात् न कोऽपि विशेषः ॥

ननु एतत्सूत्रद्वयेन सूत्रकृतैव आत्मशब्दमुख्यार्थस्य उक्तत्वात्, 'गौणश्चेन्नात्मशब्दात्' इति सूत्रे भाष्यकारैः 'यो गुणैः सर्वतो हीनः' इत्यादिप्रमाणोपन्यासः कुतः कृत इति चेत्- उच्यते, उत्तरसूत्रे सूत्रकृता निर्णेष्यमाणस्यार्थस्य पूर्वमेव प्रमाणान्तरेण निर्णये कृते सति बोद्धुः तात्कालिकाऽऽकाङ्क्षानिवृत्तिर्भवेदिति श्रोतृबुद्धिसौकर्याय, तथा उपन्यासः कृतः । अत एव जिज्ञासानये- उत्तरसूत्रे निर्णेष्यमाणब्रह्मशब्दार्थे प्रमाणमुपन्यस्तम् 'यमन्तः समुद्रे' इत्यादिना इति ॥ ८ ॥

(२२) **तमेवैकमिति** ॥ (मु.उ. २.२.५) हे ऋषयः **आत्मानमेव**= विष्णुमेव, **एकं**= प्रधानं **जानथ**= जानीध्वम् । **अन्याः**= जीवविषयिणीः **वाचः**, **विमुञ्चथ**= त्यजथ । विष्णिवतरान् प्राधान्येन न जानीध्वम् । **अमृतस्य**= मुक्तवर्गस्य, **एषः**= विष्णुः, **सेतुः**= मुख्याश्रय इत्यर्थः । जानथ आत्मेत्यसन्धिस्तु आत्मनः अत्यन्तविलक्षणत्वज्ञापनार्थः ॥ जानथेति रूपं छान्दसम् ॥ ८ ॥

**(न हि गौण आत्मनि निर्गुणस्य लयः)**

## (२३) ॥ ॐ स्वाप्ययात् ॐ ॥ ९ ॥

(२३) युक्त्यन्तरेण वाच्यत्वसमर्थनाय सूत्रम्- **ॐ स्वाप्ययात् इति** ॥ शास्त्रयोनित्वात्, तत्तु, न, अशब्दम्, इति वर्तते । स्वस्य अप्ययः= लयः- **स्वाप्ययः** । तेन तच्छ्रवणं लक्ष्यते । स्वस्येति षष्ठ्यर्थः- सम्बन्धित्वम्, अनुयोगित्वं च । यथायोग्यम् आवृत्तिविपरिणामौ । अयमर्थः- तद् निर्गुणं नाशब्दं= वाच्यम्, शास्त्रयोनित्वात्= 'पूर्णमद' इत्यादिशास्त्रविशेषप्रतिपाद्यत्वात् । तदन्यथाऽनुपपत्त्येति यावत् । शास्त्रयोनित्वात्= 'पूर्णमद' इत्यादिशास्त्रविशेषप्रतिपाद्यम्, तत्तु निर्गुणमेव, शास्त्रे=

'पूर्णमद' इत्यदिश्रुतौ, 'स आत्मनः' इति श्रुतौ च **स्वाप्ययात्**= 'यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतिज्ञाप्यगौणावृत्तित्वसहितस्वसम्बन्धि-स्वानुयोगिकलयश्रवणात् पूर्णत्वाच्चेति ॥ स्वाप्ययस्य वाच्यत्वं प्रति साक्षादहेतुत्वात् चशब्दाभावः । स्वाप्ययाच्चेति सूत्रकरणे पूर्वं प्रसक्ताऽऽत्मशब्दस्य गौणविषये मुख्यत्वाभावे हेत्वन्तरत्वशङ्काऽवकाशाच्च ॥

ननु समन्वयनये (१.१.४) सर्वशब्दप्रतिपाद्यत्वे समर्थिते अवाच्यस्य कथं सम्यक् प्रतिपाद्यत्वमिति शङ्कावारणाय इदमधिकरणमारब्धम् । अत्र शास्त्रप्रतिपाद्यत्वं वाच्यत्वे हेतुश्चेद् अधिकरणयोः अन्योन्याश्रयता इति चेत्- न - अस्मिन्नये वाच्यत्वे शास्त्रविशेषप्रतिपाद्यत्वमेव हेतुः, न तु समस्तशास्त्रप्रतिपाद्यत्वमिति अन्योन्याश्रयानवकाशात् ॥

**(२४) 'पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।**
**पूर्णस्य पूर्णमादाय पूर्णमेवाशिष्यते ॥' (बृ.उ.५–१–१)**

**(२५) 'स आत्मन आत्मानमुद्धृत्याऽऽत्मन्येव विलापयत्यथात्मैव भवति ।'**

**(२६) 'स देवो बहुधा भूत्वा निर्गुणः पुरुषोत्तमः ।**
**एकीभूय पुनः शेते निर्दोषो हरिरादिकृत्' इति स्वस्यैव स्वस्मिन्नप्ययवचनात् ।**
**न हि गौणात्मनि निर्दोषस्य लयः ॥ ९ ॥**
**न च कासुचिच्छास्त्रास्वन्यथोच्यते ।**

(२४-२६) अप्ययश्रुतिस्मृती आहुः- **पूर्णमद इत्यादि ॥ आदिकृदितीति ॥** इति वचनद्वयेनेत्यर्थः । अस्य अप्ययवचनादित्यत्रान्वयः । **स्वस्यैवेति ॥** प्रतियोगित्वं षष्ठ्यर्थः । **स्वस्मिन्निति ॥** अनुयोगित्वं सप्तम्यर्थः । उभयोरपि अप्ययेऽन्वयः । अप्ययवचनात्= लयप्रतिपादनात् ।

ननु उक्तस्वाप्ययवान् गौण एवास्तु 'नैवाग्रे किञ्चनाऽऽसीत्' इति श्रुत्या निर्गुणः गौणे लीयत इति चास्तु- इत्यत आहुः- **न हीति ॥** 'यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतिपर्यालोचनया निर्गुणस्य गौणे लयो नोपपद्यत इति भावः । वाच्यमेवेति वर्तते । हि= यतः गौणे आत्मनि निर्दोषस्य लयो नास्ति, किन्तु 'पूर्णमद' इत्यादिशास्त्रविशेषप्रतिपाद्यत्वसमर्थनद्वारा । अतो भाष्यसूत्रयोः चशब्दाभावः । निर्गुणस्येति वक्तव्ये निर्दोषस्येत्युक्तिः अत्र नये उक्तं निर्गुणत्वं हेयगुणरूपदोषराहित्यमेव । न तु धर्मसामान्याभावरूपमिति द्योतयितुम् ॥

**अप्रसिद्धशाखासु अन्योऽपि कारणत्वेन प्रतिपाद्यताम्, तासाम् आनन्त्येन अन्यो न प्रतिपाद्यत इति निर्णयायोगात् । ततश्च कारणत्वलक्षणम् अतिव्याप्तम्, एवं च समस्तशास्त्रप्रतिपाद्यत्वमपि न सम्भवतीति शङ्कन्ते- न चेति ॥ कासुचित् शाखासु= अप्रसिद्धशाखासु अप्रसिद्धिश्च अल्पज्ञैरनुपलभ्यमानत्वम् । अन्यथा= अन्योऽपि कारणत्वेन उच्यते इति न च वाच्यमित्यर्थः ॥**

(२४) **पूर्णमद इति** ॥ (बृ.उ. ९.१.१) **अदः**= मूलरूपम्, **पूर्णम्** । **इदम्**= अवताररूपं च **पूर्णम्** । **पूर्णम्**= अवताररूपं **पूर्णात्** मूलरूपात् **उदच्यते**= उद्गच्छति सृष्टिकाले । प्रलये मूलरूपं (कर्तृ) **पूर्णस्य** स्वस्य, **पूर्णम्**= अवताररूपम्, **आदाय**= स्वीकृत्य एकीभूय **पूर्णमेव**= अन्यत्र अलीनमेव सत् स्वयम् **अवशिष्यते** इत्यर्थः ॥

(२५) **स आत्मन इति** ॥ इदं श्रुत्यन्तरम् । **आत्मनः**= स्वस्मात् मूलरूपात् **सः** विष्णुः । **आत्मानं**= स्वावताररूपम्, **उद्धृत्य**= सृष्टिकाले पृथक् व्यक्तीकृत्य, प्रलये **आत्मनि**= स्वस्मिन्नेव, **विलापयति**= एकीभावयति । **अथ**= अनन्तरम्, **सः** विष्णुः **आत्मैव**= मूलरूप्येव, **भवति**= अवशिष्यत इत्यर्थः ॥

(२६) **स देव इति** ॥ इदं स्कान्दवचनम् । **देवः**= क्रीडादिगुणवान्, **निर्गुणः**= सत्त्वादिगुणरहितः, अत एव **निर्दोषः**, **पुरुषोत्तमः** क्षराक्षराभ्याम् उत्तमः । **आदिकृत्**= विश्वस्योत्पत्तिकृत्, आदिकर्ता वा, सः श्वेतद्वीपगो हरिः, **बहुधा भूत्वा** आदिसृष्टौ वराहादिरूपाणि सृष्ट्वा **पुनः** प्रलये, **एकीभूय**= मूलरूपेण तानि एकतां प्रापय्य **शेते**= अहिपतौ योगनिद्रां करोतीत्यर्थः ॥ ९ ॥

**(सर्वशाखास्वेकविधं ब्रह्म प्रतिपाद्यते)**

**न च कासुचिच्छाखास्वन्यथोच्यते ।**

**(२७) ॥ ॐ गतिसामान्यात् ॐ ॥ १० ॥**

**(२८) 'सर्वे वेदा युक्तयः सुप्रमाणा ब्राह्मं ज्ञानं परमं त्वेकमेव ।**
**प्रकाशन्ते न विरोधः कुतश्चिद्वेदेषु सर्वेषु तथेतिहासे ॥'**
**इति पैङ्गिश्रुतेर्गतेर्ज्ञानस्य साम्यमेव ॥ १० ॥**

(२७-२८) कुतो न वाच्यमिति हेत्वाकाङ्क्षायां हेतुत्वेन सूत्रं पठन्ति- **ॐ गतिसामान्यात् ॐ ॥ इति ॥ जन्माद्यस्य, तत्तु, शास्त्रयोनि, सम्, इति वर्तते । गति** इति **पृथक्पदम् । आदीत्यावर्तते भिन्नं पदं च । विपरिणामश्च यथेष्टम्- अयमर्थः- शास्त्रयोनेः= समस्तशास्त्रजन्यायाः गतेः= ज्ञानस्य सामान्यात्=** समानत्वात् 'सर्वे वेदाः' इति **शास्त्रेण एकविषयकत्वावगतेरिति** यावत् । तत्तु

**ब्रह्मैव, अस्य जगतो जन्मादेः आदिः= कारणम् इति । कारणस्य भेदे उदाहृतश्रुतिविरोधः स्यादिति भावः ॥ साम्यप्रतिपादकश्रुतिमाहुः- सर्वे वेदा इति ॥ साम्यमेवेति ॥ एकविषयकत्वमेवेत्यर्थः । सामान्येति प्रकृत्यर्थविवरणमिदम् । अवगम्यत इति शेषः । सामान्यादिति पञ्चम्यर्थस्तु स्पष्टत्वात् नोक्तः ।**

**किञ्च- 'ननु पूर्वसूत्रे शास्त्रविशेष-प्रतिपाद्यत्वान्यथाऽनुपपत्त्या ब्रह्म वाच्यमित्युक्तं यत् तन्न । लक्षणया शास्त्रप्रतिपाद्यत्वस्योपपत्तेः, अतो ब्रह्मणः वाच्यत्वं न सिद्ध्यति' इति शङ्कावारणपरतयाऽपीदं सूत्रं योजनीयम् । तथा हि- मीयतेऽनेनेति= मानम्= परिच्छेदकम्, व्यावर्तकधर्म इति यावत् । तेन सहितं= समानम्, तस्य भावः= सामान्यम्, तस्मात् । ततूशब्दात् गौण इति वर्तते । यथायथम् आवृत्तिविपरिणामौ । शब्दाद् इति पञ्चम्यर्थः जन्यत्वम्, तस्य मतावन्वयः ॥ अयमर्थः- शब्दात् मतेः= शब्दजन्यज्ञानस्य, सामान्यात्= सप्रकारकत्वात्, तन्नियमादिति यावत् । तत् ब्रह्म शब्दस्य गौणं= गौणार्थः लक्षणया स्वरूपमात्रेण प्रतिपाद्यं न भवतीति ॥ एवं च एतस्मिन्नधिकरणे एतत्सूत्रनिवेशः समन्वयसूत्रस्य संशब्दावृत्त्या सर्वशास्त्रवेद्यत्वमित्यर्थः इत्यर्थसूचनायेव एतदर्थसूचनाय च इति ज्ञेयम् । एतेन- तत्त्वमस्यादिवाक्येन लक्षणया स्वरूपमात्रविषयकं निर्विकल्पकं ज्ञानं जायत इति प्रवादोऽपि निरस्तः ॥ १० ॥**

(२९) **सर्वे वेदा इति ॥** यतः **सर्वे वेदाः**= असङ्कुचितसर्वत्वविशिष्टाः श्रुतयः, **सुप्रमाणाः**= सुष्ठु मूल-प्रमाणयुक्ताः **युक्तयः**, **'तथेतिहासे'** इति उपसंहारबलेन इतिहासाश्च, **ब्राह्मं**= ब्रह्मैकविषयकम् । **एकमेव**= एकविधमेव, परमार्थविषयत्वात् **परमम्**= उत्तमं **ज्ञानं प्रकाशन्ते**= उत्पादयन्ति । अतः सर्वेषु वेदेषु, युक्तिषु, इतिहासे च **कुतश्चित्**= कश्चित्= विषयकृतो वा प्रकारकृतो वा **विरोधो न** इत्यर्थः ॥ १० ॥

### (न निर्गुणं ब्रह्मावाच्यम्)

## (३०) ॥ ॐ श्रुतत्वाच्च ॐ ॥ ११ ॥

(३०) **युक्त्यन्तरेण वाच्यत्वसमर्थनाय सूत्रम्- ॐ श्रुतत्वात् ॐ ॥ इति ॥** तत्, न, अशब्दमिति वर्तते । यथायथम् आवृत्तिविपरिणामौ । भावप्राधान्यं च । **अयमर्थः**- तत्= निर्गुणं ब्रह्म, न अशब्दं= न अवाच्यम्, किन्तु वाच्यमेव, तेन निर्गुणत्वेन श्रुतत्वाच्च= 'एको देवः' इत्यादि श्रुतिप्रतिपाद्यत्वात्, श्रुतिघटकनिर्गुणशब्दप्रतिपाद्यत्वादिति यावत् इति । न हि निर्गुणशब्दप्रतिपाद्यं सगुणं भवति, न च शब्दावाच्यम् श्रूयते । अतो ब्रह्म वाच्यमिति भावः ॥

**(३१) 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।**
**कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥'**

**(श्वे.उ.६६—११) इति ।**

**(ब्रह्मणः सर्वशब्दवाच्यत्वे लक्षणया बोधः न भवति)**

**न ह्यशब्दः श्रूयते । न चाप्रसिद्धं कल्प्यम् । सर्वशब्दावाच्यस्य लक्षणाऽयुक्तेः ॥ ११ ॥**

**॥ इति ईक्षत्यधिकरणम् ॥ ५ ॥**

(३१) श्रुतिमाहुः- **एक इति ॥ निर्गुणश्चेति ॥** अस्य 'श्रुतत्वाच्च' इति सूत्रेऽन्वयः ॥ श्रुतत्वेऽप्यशब्दः किं न स्यात् ? अत आहुः- **न हीति ॥ अशब्द इति ॥** अवाच्य इत्यर्थः । **श्रूयत इति ॥** श्रुत्या न प्रतिपाद्यत इत्यर्थः । वाच्यमेवेति वर्तते । ननु लक्षणया श्रुतत्वमुच्यत इति चेत्तत्राहुः- **न चेति ॥ अप्रसिद्धं=** क्वाप्यदृष्टम् अवाच्यस्य लक्ष्यत्वम् । ननु गङ्गापदावाच्यस्यापि तीरस्य, गङ्गापदलक्ष्यत्वं दृष्टमत आहुः- **सर्वशब्दावाच्यस्येति ॥** केनापि शब्देनावाच्यस्येत्यर्थः । यथा 'त्यदादीनि सर्वैर्नित्यम्' (पा.सू. १.२.७२) इत्यत्र सर्वैरित्यस्य=केनापि सहोक्तौ इत्यर्थः, न तु सर्वैः सहोक्तौ इति । सर्वसहोक्तेः बाधात् इत्युच्यते, तथाऽत्रापीति ज्ञेयम् ॥ **लक्षणाऽयुक्तेरिति ॥** लक्षणाया अयुक्तेः अनुमानविरुद्धत्वादित्यर्थः । इदमनुमानशरीरम्- 'ब्रह्म न लक्ष्यम्, केनापि शब्देन अवाच्यत्वात्, व्यतिरेकेण तीरवत्' इति ॥ तथा च विशिष्टार्थः- सर्वशब्दावाच्यस्य लक्षणाऽयुक्तेः अप्रसिद्धं न कल्प्यं च तस्मात्, हि= यतोऽशब्दो न श्रूयते अतः, इति श्रुतत्वाच्च, वाच्यमेवेति ॥ ११ ॥ अ. ५ ॥

**॥ इति ईक्षत्यधिकरणम् ॥ ५ ॥**

(३१) **एक इति ॥** (श्वे. ६.११) **एकः**= प्रधानः, स्वावयवगुणादिभिः भेदरहितो वा, **देवः**= क्रीडादिगुणवान् । **सर्वभूतेषु**= सर्वप्राणिषु, **गूढः**= गुप्ततया स्थितः । **सर्वव्यापी च**= देशतः कालतः गुणतश्च, सर्वव्याप्तिमान्, **सर्वभूतान्तरात्मा**= सर्वभूतानाम् अन्तःस्थित्वा नियमनकर्ता, सम्यङ् माता वा, आदानादिकर्ता वा, **कर्माध्यक्षः**= कर्माधिपतिः, कर्मविषयकेन्द्रियवान् वा । **सर्वभूताधिवासः**= सर्वप्राणिनामाश्रयः, **साक्षी**= सर्वस्य साक्षात् द्रष्टा, **चेता**= ज्ञानरूपः, **केवलः**= जडामिश्रः, समाभ्यधिकशून्यो वा, **निर्गुणश्च**= सत्त्वादिगुणहीनः, प्राकृतगुणरहितो वा, इत्यर्थः ॥ ११ ॥ अ. ५ ॥

**॥ इति ईक्षत्यधिकरणम् ॥ ५ ॥**

## ६. आनन्दमयाधिकरणम्

**(अन्यत्रप्रसिद्धशब्दसमन्वयः प्रथमाध्यायप्रथमपादे)**

**(१) तमेव समन्वयं प्रकटयत्यानन्दमयोऽभ्यासादित्यादिना समस्तेनाध्यायेन प्रायेण ।**

(१) अध्यायार्थं सङ्गतिपूर्वकं दर्शयन्ति- **तमेवेति** ॥ 'तत्तु समन्वयात्' इत्युक्तमेव **समन्वयम्**= उपक्रमादिप्रमाणक-शक्तितात्पर्यलक्षणसम्बन्धम् **प्रकटयति**= शास्त्रीयशब्दानां तत्तद्वाक्यग्रहणेन प्रकाशयतीत्यर्थः । अन्यथा प्रतिज्ञातमात्रस्य असाधकत्वाद् अन्यदेव प्रतिपाद्यमिति सम्भाव्येतेति भावः ॥ **समस्तेनेति** ॥ समस्तपादावच्छिन्नेनेत्यर्थः । एतेन चतुर्थपादेऽपि समन्वय एव क्रियत इत्युक्तं भवति । देवताधिकरणे (१.३.८) समन्वयाभावात् तद्व्यावृत्तये- **प्रायेणेति** ॥ प्रायेणेत्यनेनैकस्मिन् पादे क्वचित् समन्वयाभावेऽपि सम्पूर्णपादे समन्वयाभावोऽनुचित इति बोधितम् ॥

**(२) प्रायेणान्यत्र प्रसिद्धानां शब्दानां परमात्मनि समन्वयः प्रदर्श्यतेऽस्मिन् पादे । नान्यथा तददृष्टेः ।**

(२) एतत्पादार्थं दर्शयन्ति- **प्रायेणेति** ॥ 'अन्तस्थत्वनये' (१.१.७ अ.) लिङ्गसमन्वयात् तद्व्यावृत्तय इदम् । **अन्यत्र प्रसिद्धानामिति** ॥ लोकतोऽन्यत्र प्रसिद्धानामित्यर्थः । लोकतोऽन्यत्र प्रसिद्धत्वं च- उपक्रमादिप्रमाणकतात्पर्यानवधानकालिकान्यवृत्तित्वमात्रप्रकारकज्ञानविशेष्यत्वम् ॥ **शब्दानामिति** ॥ नामात्मकानामित्यर्थः । रूढिशक्त्या अर्थोपस्थापकानामिति यावत् । उत्तरपादे लिङ्गात्मकानामित्युक्त्याऽयमर्थो लब्धः ॥

परोक्तपादोपाधिं निरस्यन्ति- **नान्यथेति** ॥ उक्ताद् अन्यप्रकारेण प्रथमपादे स्पष्टब्रह्मलिङ्गानाम्, द्वितीय-तृतीययोः अस्पष्टब्रह्मलिङ्गानाम्, समन्वय इत्यादिः पादोपाधिः नेत्यर्थः ॥ **तददृष्टेरिति** ॥ उत्तरपादेऽपि तदुदाहृतवाक्येऽमृतत्वोभयत्वादिरूपस्पष्टब्रह्मलिङ्गानां सत्त्वेन तन्नियमादर्शनाद् इत्यर्थः।

अत्र नये लोकतोऽन्यत्र प्रसिद्धाऽऽनन्दमयादिनाम्नां विष्णौ समन्वयसमर्थनम् ॥ ८ सू.अ. ॥

**(३) ब्रह्मजिज्ञासा कर्तव्येत्युक्तम् । तच्च ब्रह्म 'ब्रह्म पुच्छं प्रतिष्ठा' (तै.उ. २.५२) इत्यानन्दमयावयवरूपं प्रतीयते । न ह्यवयविनं विना अवयवमात्रस्य ज्ञेयतेत्यत आह–**

**(३) जिज्ञासानयेन सङ्गतिमाहुः- ब्रह्मेति ॥ कर्तव्येतीति ॥ अयुक्तमिति शेषः । तच्च= जिज्ञास्यत्वेन कथितं च ॥ ब्रह्म पुच्छमिति ॥ अत्र ब्रह्मपदसत्त्वाद् इयं जिज्ञास्यब्रह्मणः अवयवत्वप्रतिपादिका भवतीति एषा श्रुतिरुपन्यस्ता । अवयवमात्रस्येति ॥ अवयवावयविनोः भेदात् अवयवस्य अप्रधानत्वात् फलदत्वायोग इति भावः । ज्ञेयतेति ॥ अयमर्थः- च= यतः, तत्= आनन्दमयावयवरूपं प्रतीयते, यतश्च अवयविनं विना अवयवमात्रस्य ज्ञेयता न, अतः कर्तव्येत्युक्तम् अयुक्तम् । अतः श्रुत्युक्तजिज्ञासासिद्ध्यर्थम् 'आनन्दमयोऽभ्यासात्' इत्याह सूत्रकार इति ॥**

(३) **ब्रह्म पुच्छमिति** ॥ (तै.उ. २.५.२) 'तस्माद्वा एतस्माद्विज्ञानमयाद् अन्योऽन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा' इति श्रूयते । **अयमर्थः- तस्मात्**= आत्मशब्दोदितात्, **एतस्मात्**= जीवशरीरगतात्, **विज्ञानमयात्**= विज्ञानपूर्णत्वेन विज्ञानमयशब्दवाच्यात्, **अन्यः आनन्दमयः**= आनन्दपूर्णत्वेन तत्पदवाच्यः **आत्मा अन्तरः**= विज्ञानमयान्तस्थः **तेन**= आनन्दमयेन **एषः**= विज्ञानमयः **पूर्णः**= निच्छिद्रतया पूरितः, **स एषः**= आनन्दमयः, **पुरुषविध एव**= पुरुषाकार एव, **तस्य**= आनन्दमयस्य, **पुरुषविधताम्** । **अनु**= अनुसृत्य, **अयं**= विज्ञानमयः **पुरुषविधः**, तस्मादुद्भूतः । **तस्य**= आनन्दमयस्य, **प्रियमेव**= श्रवणोत्थम् उपकारोत्थं वा सुखमेव **शिरः**= शिरोरूपावयवः, **मोदः**= दर्शनोत्थम् अप्रकृष्टविषयोत्थं वा सुखं **दक्षिणः पक्षः**= बाहुः । **प्रमोदः**= भोगोत्थं प्रकृष्टविषयोत्थं वा सुखम् **उत्तरः पक्षः**= वामबाहुः । **आनन्दः**= स्वरूपभूतं सौषुप्तिकं वा सुखम् **आत्मा**= मध्यदेहः । **ब्रह्म** तु **प्रतिष्ठा पुच्छमिव**= पादाख्यावयव इति ॥

एवं प्रतीतार्थघटकाऽऽनन्दमयशब्दवाच्यश्चतुर्मुखादिरिति पूर्वपक्षी मन्यते । तन्मते चतुर्मुखादेः प्रियशिरस्कत्वादिकं साक्षात्, अभिमन्यमानदेहद्वारा वा युज्यते ॥ अभिमन्यमानदेहास्तु- अन्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमया इति पञ्च समानाकाराः । तत्रान्नमयः परिदृश्यमानो देहः । तदन्तर्गतः प्राणमयः । तदन्तर्गतो मनोमयः । तदन्तर्गतो विज्ञानमयः । तदन्तर्गत आनन्दमयः । एते एव पञ्चकोशा इत्युच्यन्ते । **सिद्धान्ते तु-** विज्ञानमयशब्दवाच्यो विज्ञानमयकोशस्थस्तन्नियामको वासुदेवः । आनन्दमयः तन्नामककोशस्थस्तन्नियामको नारायणः । अन्यः- अनन्योऽपि अन्यशब्दवाच्यः । **प्रियं**= पूर्वोक्तप्रियस्थितभगवत्सुखम्, एवं मोदादिष्वपि ज्ञेयम् । **ब्रह्म-** तन्नामकौ पादौ ब्रह्माख्यप्रधानवायौ तिष्ठत इति पदार्थमादाय पूर्ववदेवार्थो वर्णनीय इति ॥

(आनन्दमयः विष्णुः ब्रह्मशब्दाभ्यासात्)

## (४) ॥ ॐ आनन्दमयोऽभ्यासात् ॐ ॥ १२ ॥

(४) **ॐ आनन्देति** ॥ आनन्दमयशब्देन लक्षणया 'अन्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमयशब्दवाच्याः' गृह्यन्ते । अन्नमयस्याल्पाक्षरत्वेऽपि श्रुतावादित्वेऽपि, आनन्दमयेन साकं सङ्गतिसम्भवाद् आनन्दमयशब्दस्य ग्रहणं सूत्रे । आनन्दमयशब्दस्य माङ्गलिकत्वाच्च । 'तद्धेतु-व्यपदेशाच्च' (१.१.१४) इत्यादेः तत्रैव सम्भवाच्च । अन्नमयादिशब्दाश्च अन्नमयादिकोशेषु लोकतः प्रसिद्धाः । तथा व्यवह्रियन्ते च, 'अन्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमया मे शुद्ध्यन्ताम्' (तै.आ. ४.७१.५७) इति शुद्धिप्रार्थनामन्त्रे । अभ्यासो नाम= एकार्थबोधकशब्दानाम् एकप्रकरणे (एकप्रकारा) असकृदुक्तिः । असकृदुक्तिरूपाभ्यासस्येत्यभ्यासस्वरूपानुवादेन- आनन्दमयनये उदाहृतः- **चन्द्रिकायाम्** । एकप्रकारेत्यस्येहानुपयोगादनुक्तिरिति प्रकाशे समन्वयनये । अभ्यासश्च प्रकृते सन्निहितस्यैव वाच्यम् । सन्निहितं च- इह द्वे= उद्देश्यमानन्दमयरूपम्, विधेयं ब्रह्म चेति । तत्र न उद्देश्यस्य अभ्यासो ग्राह्यः । आनन्दमयशब्दवाच्य एव विवादेन तदभ्यासेन तन्निर्णया-योगात् । किन्तु विधेयब्रह्मण एव अभ्यासो ग्राह्यः, तस्य सम्यङ् निर्णायकत्वसम्भवात् । एवं च ब्रह्मधर्मशब्दादेरभ्यासादिति फलितम् ॥

स च अभ्यास आनन्दमये, विज्ञानमये च प्रकरणे ब्रह्मशब्दद्वयरूपः । प्राणमये, मनोमये च 'अन्योऽन्तर आत्मा' इत्यात्मशब्दः । 'असन्नेव' इति श्लोके ब्रह्मशब्द इति, ब्रह्माऽऽत्मशब्दद्वयरूपः। अन्नमये ब्रह्मशब्दघटितभूतकारणत्वाभ्यासरूप इति विवेकः ॥

अभ्यासशब्दः कर्मघञन्तोऽपि । तत्तु इति वर्तते । यथायथम् आवृत्तिविपरिणामौ ॥ अयमर्थः- **आनन्दमयः**= आनन्दमयादिशब्दवाच्यः, **तत्तु**= विष्णुरेव, तस्मिन् विष्णौ अभ्यासस्य= आवर्तितस्य, तत्र प्रसिद्धस्येति यावत्, ब्रह्मशब्दादेः **अभ्यासात्**= अभ्यस्यमानब्रह्मशब्दादिसत्त्वादिति यावदिति ॥

अत्र **अभ्यासः**= अभ्युच्चयः । ब्रह्मशब्दस्यैव हेतुत्वेऽपि बाधकाभावात् । अत एव उत्तरसूत्रे टीकायाम्- 'यदा खलु ब्रह्मशब्दाद् आनन्दमयस्य ब्रह्मतामसाधयत् सूत्रकारः, तदा ब्रह्मशब्दवताम् अन्नादीनां च ब्रह्मतामनुजज्ञे' इति । भाष्येऽपि 'येऽन्नम्' इत्यादिब्रह्मशब्दात् इत्युक्तम् ॥

**(५) आनन्दमयो ब्रह्मादिः प्रकृतिर्विष्णुर्वा ।**

(५) अवयवावयविनोः भेदाभिप्रायेण अवयविनं विना अवयवमात्रस्येत्युक्तम् । तत्रावयवावयविनोर्भेदपक्षे श्रुतिस्थाऽऽनन्दमयशब्दवाच्यं पूर्वपक्ष्यभिप्रेतम् अर्थम्, सूत्रार्थं च वक्तुं शङ्कामुत्थापयति- **आनन्दमयो ब्रह्मादिरित्यादिना ॥** आनन्दमयः- अन्यः ? विष्णुर्वा ? इति संशयस्तु नोल्लिखितः । पूर्वपक्षसिद्धान्तयुक्तिश्रवणे विशिष्यतत्तद्धर्मपुरस्कारेणैव संशयजननात् । यत्र तु विष्णुः? अन्यो वा ? इति संशयाकार उल्लिख्यते तत्र बुद्ध्या तत्तद्धर्मविवेको बोध्यः । ब्रह्मादीत्यादिना सर्वजीवाः, प्रकृतिपदेन चिदचित्प्रकृती, ग्राह्याः । **विष्णुर्वेति ॥** अनेनाधिकरणस्य विषयो दर्शितः । इति शङ्कायाम्, यद्यपीति शेषः ॥

## (६) ब्रह्मशब्दाद्धिरण्यगर्भस्य प्राप्तिः शतानन्दनाम्ना च ।

(६) पूर्वपक्षमाहुः- **ब्रह्मशब्दादित्यादि ॥ प्राप्तिरिति ॥** आनन्दमयशब्दवाच्यत्वप्राप्तिरित्यर्थः ॥ 'सर्वं वाक्यं सावधारणम्' इति न्यायेन हिरण्यगर्भस्यैव प्राप्तिः, इत्यादिक्रमेण वादिभेदेन पूर्वपक्षभेदाः ज्ञेयाः । एवकारव्यावर्त्यस्तु- विष्णुः, मतभेदेन हिरण्यगर्भाद्यन्यो वा ।

ननु पुंलिङ्गब्रह्मशब्दस्यैव हिरण्यगर्भवाचित्वात् 'असद् ब्रह्मेति', 'अस्ति ब्रह्म' (तै.उ. २.१२) इत्युभयत्रापि ब्रह्मशब्दस्य नपुंसकत्वात् कथं तेन हिरण्यगर्भनिश्चयः ? न चोभयत्र ब्रह्मशब्दः पुंलिङ्ग इति वक्तुं शक्य इति वाच्यम् । असच्छब्दसामानाधिकरण्येन, एकत्र नपुंसकत्वनिश्चयेन, तत्समभिव्याहाराद् अन्यत्रापि तन्निश्चयादिति चेत्- न - असच्छब्दस्य विधेयसमर्पकत्वेन तदनुरोधित्वस्य विशेष्ये वक्तुमशक्यत्वात् ॥ 'तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते' इत्यादिश्रुत्यन्तरे हिरण्यगर्भवाचकब्रह्मशब्दस्यापि नपुंसकत्वदर्शनाच्च ॥

ननु ब्रह्मशब्दस्य विष्णुसाधारणत्वात् कथं तेन चतुर्मुखनिश्चयः ? इत्यत आहुः- **शतानन्दनाम्ना चेति ॥** वाच्यत्वाद् इति शेषः । आनन्दमयशब्दसमानार्थकशतानन्दशब्देन वाच्यत्वादित्यर्थः । चतुर्मुखः आनन्दमयपदवाच्यः, एतत्समानार्थकशतानन्दशब्दवाच्यत्वात् । यद्वा- आनन्दमयशब्दः चतुर्मुख-वाचकः, तद्वाचकशतानन्दशब्दसमानार्थकत्वात्, इत्युक्तं भवति ॥ किञ्च- शतानन्दशब्दस्य योगरूढत्वेन योगेन शतसङ्ख्याकाऽनन्दवत्वं वा, 'दशप्रमतिम्' इत्यादौ दशशब्दस्येव शतशब्दस्य पूर्णार्थकत्वेन पूर्णाऽनन्दवत्वं वाऽर्थ इति शतानन्दशब्देन प्रचुरामन्दत्वमेवोक्तमिति भावः ॥

न च शतानन्दशब्दस्य केवलरूढत्वमेवास्त्विति वाच्यम् । योगशक्यतावच्छेदकरूढिशक्यतावच्छेदकयोः सामानाधिकरण्ये सम्भवति सति योगशक्यतावच्छेदकस्य त्यागायोगात् । अत

एव नारायणादिपदस्य योगार्थकथनं सिद्धान्ते सङ्गच्छते । अत एव चानेकनामसम्भवः हरौ, तत्तद्गुणानुरोधेनैव तत्तन्नामप्राप्तेः ॥

## (७) अष्टमूर्तित्वात् सूर्ये प्रोक्तत्वाच्च रुद्रस्य । एवमन्येषामपि ।

(७) **अष्टमूर्तित्वादिति ॥**

'सूर्यो जलं मही वह्निर्वायुराकाशमेव च ।
दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः क्रमात् ॥'

इति विष्णुपुराणोक्ताष्टशरीरवत्त्वादित्यर्थः ॥ तथा च सूर्यस्यापि तनुत्वेन तत्र स्थितत्वमिति भावः ॥ ननु सूर्ये स्थितत्वं कथं रुद्रत्वनिश्चायकम् ? अत आहुः- **सूर्ये प्रोक्तत्वादिति ॥** आनन्दमयस्य 'यश्चासावादित्ये' इति श्रुतौ सूर्ये स्थितत्वोक्तेरित्यर्थः ॥ **रुद्रस्येति ॥** प्राप्तिरिति वर्तते ॥ **अन्येषामिति ॥** आनन्दतारतम्ये परिगणितानाम् इन्द्रबृहस्पत्यादीनामित्यर्थः । एतेषां सूर्यापेक्षया उत्तमत्वेन नियामकत्वेन 'अन्तरादित्ये मनसा चरन्तम्' इत्यनेन च सूर्ये प्रोक्तत्वं ज्ञेयम् ॥

## (८) 'मम योनिर्महद् ब्रह्म'(भ.गी.१४-३) इति ब्रह्मशब्दाद् बहुभावाच्च प्रकृतेः ।

(८) **मम योनिरिति ॥** इदं च चित्प्रकृतेरानन्दमयत्वप्रापकम् । बहुभावादिति वक्ष्यमाणं लिङ्गं तु अभिमानित्वेन चित्प्रकृतेरानन्दमयत्वे, साक्षाद् अचित्प्रकृतेरानन्दमयत्वे च लिङ्गमिति बोध्यम् । **बहुभावाच्चेति ॥** 'सोऽकामयत बहु स्यां प्रजायेयेति' (तै.उ. २.१४) आनन्दमयस्य बहुभावश्रवणादित्यर्थः । चित्प्रकृतेः तदभिमानत्वात् प्राप्तिः ॥

(८) मम योनिरिति ॥ (गी. १४.३) महद् ब्रह्म= महालक्ष्मीः, मम योनिः= गर्भाधानार्थं भार्या, तस्मिन्= ब्रह्मणि, अहं गर्भं दधामि इत्यर्थः ॥ भगवद्वाक्यमेतत् ॥

## (९) 'बृह-जातिजीवकमलासनशब्दराशिष्विति' ब्रह्मशब्दादेव सर्वजीवानाम् । अन्नमयत्वादेश्च ।

(९) **बृहजातीति ॥** अयं पाठो व्याकरणान्तरे । न च पाणिनीये नायं पाठो दृश्यत इति वाच्यम् । तत्र बृहधातोरुपलभ्यमानत्वात् । न चैवमर्थनिर्देशो नास्तीति वाच्यम् । अर्थनिर्देशस्य आधुनिकत्वेन अनार्षत्वात् । तत्र उक्तार्थस्य उपलक्षणत्वाच्च । अत एव 'धातूनामनेकार्थत्वम्, सत्ताद्यर्थनिर्देशश्च उपलक्षणम्' इति वैयाकरणसिद्धान्तश्च सङ्गच्छते ॥

न च जात्यादीनां क्रियात्वाभावात् कथं तद्वाचकस्य धातुत्वमिति वाच्यम् । 'बिदि= अवयवे, मडि= वदनैकदेशे, खर्द= दन्दशूके, चिति= स्मृत्याम्, इष= इच्छायाम्, णश= अदर्शने, णभ= अभावेऽपि' इत्यादौ- द्रव्यगुणाभावार्थकानामपि सत्त्वेन - तन्नियमाभावात् ॥

न च तत्र वदनैकदेशादिनिष्ठक्रिया अर्थ इति क्रियावाचकत्वमिति वाच्यम् । स्मरतीत्यादौ स्मरणनिष्ठक्रियाया वक्तुमशक्यत्वात् ॥ प्रकृतेऽपि जात्यादिनिष्ठक्रियाया धात्वर्थतया वक्तुं शक्यत्वाच्च ॥ वस्तुतः धातुसञ्ज्ञाप्रयोजकं क्रियात्वं पारिभाषिकमेव द्रव्यादिसाधारणं (स्वीक्रियते)। तच्च- 'कालान्वययोग्यत्वे सति असत्त्वरूपम्' इति नवीनवैयाकरणग्रन्थे स्पष्टम् । गण्ड इत्यादौ कृदन्तस्थले यथा व्यापारत्यागेन स्वार्थे, तादृशव्यापाराश्रये वा, प्रत्ययः स्वीक्रियते । तद्वत् ब्रह्मशब्देऽपि स्वीकर्तुं शक्य एव ॥

किञ्च मनिन्प्रत्ययप्रकरणे उणादिवृत्तौ 'बृंहेर्नोऽच्च' (उणादि.सू. ५७५) इति सूत्रेण ब्रह्मशब्दनिष्पत्तिमुक्त्वा,

'ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः'

इति ब्रह्मशब्दार्थः प्रदर्शितः कौमुद्याम् । अत्रापि जातिपदेन विप्रः, कमलासनपदेन प्रजापतिः, शब्दराशिपदेन वेदः, विवक्षित इति उभयोरेकार्थत्वमेव । एवं च- बृह-जातीत्यत्र उक्तार्थचतुष्टयमध्येऽर्थत्रयस्य पाणिनितन्त्रे तदीयैरङ्गीकृतत्वेन एकदेशानुमित्या जीवोऽपि बृहधात्वर्थत्वेन अङ्गीकृत एवेति ज्ञेयम् ॥ एतेनापाणिनीयोऽयं पाठ इति चोद्यं निरस्तम् । **अन्नमयत्वादेश्चेति** ॥ अन्नमयादीनाम् अन्नादिविकाराभिमानित्वेन जीवत्वात्, तत्प्रायपठिताऽनन्दमयेऽपि जीवानां प्राप्तेरित्यर्थः ॥ विष्णुस्तु न आनन्दमयशब्दवाच्यः तत्पुच्छत्वाद् इति प्रागेवोक्तम् । एवं च ब्रह्मशब्दमात्रं न पूर्वपक्षसाधकम्, तस्य विष्णावपि प्रयोगादिति लिङ्गमप्युपात्तम् । विष्णौ श्रुतिमात्रसत्त्वेऽपि उक्तलिङ्गाभावाद् विष्णुः नानन्दमय इति पूर्वपक्ष इति ध्येयम् ॥ एतदन्तेन ग्रन्थेनानन्दमयादिशब्दोऽत्र विषय इत्यपि बोधितम् ॥ ब्रह्मशब्दस्य हरौ, तदितरत्र च प्रयोगदर्शनं च सन्देहबीजमिति बोध्यम् ॥ अत्र कोशस्यापि प्राप्तिरानन्दमयशब्दस्य तत्रापि रूढत्वादिति च ग्राह्यम् ॥

**(१०) तथापि न त आनन्दमयशब्देनोच्यन्ते । किन्तु विष्णुरेव । 'तदेव ब्रह्म परमं कवीनाम्' (म.ना.उ.१–६) 'एतमेव ब्रह्मेत्याचक्षते' (ऐ.आ. ३.२.३.१२)-**

**'ब्रह्मशब्दः परे विष्णौ नान्यत्र कचिदिष्यते ।**
**असम्पूर्णाः परे यस्मादुपचारेण वा भवेत् ॥'**
**'ब्रह्मेति परमात्मेति भगवानिति कथ्यते ।'**
**'वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः ॥'**

**इत्यादिषु तस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासात् ॥ १२ ॥**

(१०) सिद्धान्तमाहुः- **तथापीति ॥ न ते इति ॥** ते= हिरण्यगर्भादयः । **आनन्दमयशब्देनेति ॥** 'तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः' इति आनन्दमयशब्देनेत्यर्थः । ब्रह्मशब्दस्य विष्णौ मुख्यत्वे मानमाहुः- **तदेवेत्यादि ॥ तस्मिन्नेव**= विष्णुविषय एव, तद्वाचकत्वेनेति यावत् । **प्रसिद्धस्य**= एषु वाक्येषु सयुक्तिकं निर्णीतस्य, **ब्रह्मशब्दस्य अभ्यासात्**= आनन्दमयमधिकृत्य प्रवृत्ते- 'असद् ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद' इति श्लोके 'ब्रह्म-ब्रह्म' इति असकृत् श्रुतेरित्यर्थः ॥

एवं च प्रकृत्यादीनां ब्रह्मशब्दमुख्यार्थत्वाभावान्न प्राप्तिरिति सूत्राशय इति बोध्यम् ॥ १२ ॥

(१०) **तदेवेति ॥** (महाना. १.६) (व्याख्यातम् ४२पुटे) **एतमेवेति ॥** (ऐआ. ३.२.३) **एतमेव**= पृथिव्यादिस्थमेव **ब्रह्मेति**= विष्णुरिति **आचक्षते**= वदन्ति ज्ञानिन इत्यर्थः ॥

**ब्रह्मशब्द इति ॥** यतो विष्णुः पूर्णः, अतः **परे**= पूर्णे **विष्णौ, ब्रह्मशब्दः**= मुख्यतयेति शेषः । **इष्यते । यस्मात् परे**= अन्ये चतुर्मुखादयः **असम्पूर्णाः**, तस्मात् **अन्यत्र कचित्** ब्रह्मादिषु विरिञ्चादिषु मुख्यतया **नेष्यते,** ब्रह्मशब्दः **अन्यत्र उपचारेण**= अमुख्यवृत्त्या **भवेत्**= प्रयुक्तो भवेदित्यर्थः ॥ **ब्रह्मेतीति ॥ वासुदेवात्मकमिति** ॥ अस्य पूर्वार्धम्-

**'बुद्ध्याऽविहिंसन् पुष्पैर्वा प्रणवेन समर्चयेत् ॥'** इति ॥

अस्या व्यासस्मृतेरयमर्थः-

**यतिः बुद्ध्या**= मनसा, **अविहिंसन्**= कस्यापि हिंसामकुर्वन्, **पुष्पैः**= पुष्पाद्यैर्वा, **प्रणवेन वा**= ओङ्कारेण वा, **मूलमन्त्रेण**= अष्टाक्षरेण वा, **वासुदेवात्मकं**= कृष्णाख्यं **ब्रह्म, समर्चयेत्**= पूजयेत् ॥ इति ॥ **आदिना-** 'अथ कस्मादुच्यते ब्रह्मेति' इत्यादिकं ग्राह्यम् ॥ १२ ॥

(प्राचुर्यार्थकोऽत्र मयट्शब्दः)

## (११) ॥ ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ ॥ १३ ॥

(११) उक्तस्यैव शङ्कासमाधानाभ्यां स्थिरीकरणाय सूत्रम्- **ॐ विकारेति ॥** आनन्दमयः तत्तु इति वर्तते । विकारः परिणामः, तस्य शब्दः- विकारवाचकमयट्शब्दः । यथायथम् आवृत्तिविपरिणामौ ॥ **अयमर्थः**- आनन्दमयः= आनन्दमयादिशब्दवाच्यः, न तत्= न विष्णुः, आनन्दमये= आनन्दमयादिशब्दे, **विकारशब्दात्**= विकारार्थकमयट्शब्दसत्त्वात्, **इति चेत्, न**- आनन्दमये= तस्मिन् शब्दे, **प्राचुर्यात्** शब्दात्= प्राचुर्यार्थकमयट्शब्दसत्त्वाङ्गीकारात् । इति ॥

## (१२) विकारात्मकत्वात्तदभिमानित्वाच्च युज्यते प्रकृत्यादीनां मयट्शब्दः । न तु परमात्मन इति मा भूत् ।

(१२) सूत्रार्थमाहुः- **विकारात्मकत्वादित्यादिना ॥** अचित्प्रकृतेर्विकारयोग्यस्वरूपकत्वात्, चित्प्रकृतेः तदभिमानित्वात्, विरिञ्चादिदेवानां विकारयोग्य-स्वभावक-महदाद्यभिमानित्वात्, तत्तज्जीवानां तु विकृतस्वरूपदेहाद्यभिमानित्वाच्चेत्यर्थः ॥ **मयट्शब्द इति ॥** विकारार्थक-मयडन्ताऽऽनन्दमयशब्द इत्यर्थः ॥ **न तु परमात्मन इति ॥** अविकारित्वात्, तदनभिमानित्वाच्चेति भावः । **मा भूदिति ॥** शङ्का इति शेषः ॥

ननु- 'मयड्वैतयोर्भाषायाम् अभक्ष्याच्छादनयोः' (पा.सू. ४.३.१४३) इति सूत्रेण लौकिके प्रयोगे एव विकारे मयटो विधानात्, अस्य च प्रयोगस्य छान्दसत्वेन (विकारे मयटो दुर्लभत्वेन) कथमत्र शङ्का कृता ?- 'द्व्यचश्छन्दसि' (पा.सू. ४.३.१५०) इत्यनेन मयट् इति न च वाच्यम् । आनन्द-शब्दस्य द्व्यच्त्वाभावात् । बाहुलकेन (काचित्केन) शङ्काकरणायोगात् । आनन्दमयकोशे तत्प्रयोगस्तु-रथन्तरादिशब्दस्य सामविशेषे इव केवलरूढ्यैव । वैदिके प्रयोगे तु बाहुलकान्मयट्, आनन्दस्य अन्त्यावयवित्वेन विकारायोगाच्च- इति चेत्- न- आनन्दमयशब्दोपलक्षितान्नमयादिशब्दवाच्यत्व-समर्थने तात्पर्यात् ।

तथा हि- उक्तरीत्या आनन्दमयशब्दे मयटो विकारार्थत्वाभावेन सूत्रं व्यर्थम् । न चाधिकरणमेव व्यर्थमिति वाच्यम्- विकारार्थकान्नमयादिसाहचर्याद् ब्रह्मणः पुच्छत्वोक्तेश्चानन्दमयोऽपि योगार्थाविचारेण विष्णोरन्यत्रैवेति प्राप्ते तन्निवारणार्थत्वात् । इत्थं च 'व्यर्थं सत् कञ्चिदर्थं ज्ञापयति' इति न्यायेन अन्नमयादिशब्दवाच्योऽपि विष्णुरेवेति ज्ञापयति । ज्ञापिते त्वस्मिन् अन्नमय-प्राणमय-मनोमयेषु अन्नादिशब्दानां द्व्यच्त्वात् 'द्व्यचश्छन्दसि' इत्यनेन विहितस्य मयटो विकारार्थकत्वेन,

अन्नविकारस्य च जीवादावेव सम्भवेन- न तद्वाच्यो विष्णुरिति प्राप्ते, तत्रापि प्राचुर्यार्थकत्वेन अन्नमयादिशब्दसमन्वयसमर्थनार्थत्वात् सूत्रस्य इति स्वांशे चारितार्थ्यम् ॥

इदं च ज्ञापकवर्णनं पाणिनिप्रणीतव्याकरणेनैव शब्दसाधुत्वं मन्वानाः, 'तादात्म्यार्थे, विकारार्थे, प्राचुर्यार्थे, मयट् त्रिधा' इति महाव्याकरणवचनमनङ्गीकुर्वाणाश्च ये, तान् प्रति कृतम् । अत उत्तरग्रन्थविरोधो नेति ज्ञेयम् ॥

न चैवमपि पूर्वपक्षफलं विष्णोरकारणत्वं वक्तव्यम्, तच्च न सम्भवति- विष्णोरानन्दमयशब्दावाच्यत्वे निर्विकारत्वं हेतुरिति पूर्वपक्षिणाऽङ्गीकृतम् । तच्च किञ्चिदनुपादानकत्वम्, तथा च नित्यत्वं सिद्धम् । आनन्दमयस्य तु जन्यत्वमस्ति, जन्यस्य जनकाऽऽकाङ्क्षायां नित्यमेव जनकं वक्तव्यम्- 'सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपयुज्यते' इति न्यायात् । एवं च विष्णोः कारणत्वमेव सिद्धमिति वाच्यम्- नित्यत्वे सिद्धेऽपि पूर्ववृत्तित्वमात्रेण कारणत्वायोगात् । न हि घटात् पूर्ववर्तिनः कुड्यादेर्घटं प्रति कारणत्वम् । किन्तु अनन्यथासिद्धस्यैव, प्रकृते चानन्देनान्यथासिद्धो विष्णुः । स च आनन्दो जडो विष्णोरन्य एवेति पूर्वपक्ष्याशयात् ॥

## (१३) प्रचुरानन्दत्वाद्धि आनन्दमयः । न तु तद्विकारत्वात् ।

(१३) तत्र हेतुमाह-**प्रचुरानन्दत्वाद्धीति ॥ आनन्दमय इति ॥** प्रचुर आनन्दोऽत्रेति विग्रहः । हि यतः प्रचुरानन्दत्वाद्धेतोरानन्दमयशब्दवाच्यः, न तु तद्विकारत्वाद्धेतोः, अत इति शङ्का मा भूदित्यन्वयः ॥ अत्र च श्रुतिसूत्रस्थाऽऽनन्दमयपदे मयट्शब्दस्य प्राचुर्यवदर्थवाचकत्वम्, प्रकृत्यर्थापेक्षया विशेष्यार्थकत्वं च स्वीकृत्य तदनुरोधेन आनन्दप्रचुरत्वादित्युक्तौ, यथा 'ब्राह्मणप्रचुरो ग्रामः' इत्यादौ स्वसमानाधिकरणविजातीयशूद्रादेरल्पत्वं भासते, तथा- अत्रापि आनन्दसमानाधिकरणविजातीयदुःखादेरल्पत्वं भासेत । 'प्रचुरानन्दः' इत्युक्तौ तु यथा 'प्रचुरप्रकाशो रविः' इत्यादौ रविप्रकाशव्यधिकरण-सजातीयनक्षत्रादिगतप्रकाशाल्पत्वं द्योतते, तथा- स्वव्यधिकरण-स्वजातीयजीवगताऽऽनन्दाल्पत्वं द्योतते, इत्याशयेन ईश्वरे दुःखादिलेशसम्भवशङ्कावारणार्थम् एवमुक्तमिति बोध्यम् ॥

ननु तर्हि श्रुत्यादिस्थाऽऽनन्दमयशब्दानुगुण्यं कथमिति चेत्- उच्यते- 'तत्प्रकृतवचने मयट्'[१] इति प्राचुर्यार्थे मयड्विधायकसूत्रस्य स्वार्थिकप्रकरणस्थत्वेन तद्विहितप्रत्ययस्य स्वार्थिकत्वात्,

---

१. पा.सू. ५.४.२१

स्वार्थिकानां प्रत्ययानां द्योतकत्वेन द्योत्यार्थानां प्रकृत्यर्थं प्रति विशेषणत्वाद् आनन्दमयशब्देनापि प्रचुरानन्द इत्यर्थस्यैव प्रतीतिः ॥ 'अन्नमयो यज्ञः' इत्यादावपि स्वव्यधिकरणान्नाल्पत्वमेव द्योतते एतादृशमन्नम् अन्यत्र नास्तीति, न तु अन्नातिरिक्तस्य अन्नविजातीयस्य अल्पत्वमिति, न तत्प्रयोगानुपपत्तिरिति ॥

वस्तुतः प्राचुर्यस्य विशेषणत्वे स्वव्यधिकरण-स्वसजातीयाल्पत्वं भासते, विशेष्यत्वे स्वसमानाधिकरण-विजातीयाल्पत्वं भासत इति नियमो नास्त्येव । 'ब्राह्मणप्रचुरो ग्रामः' इत्यादौ प्राचुर्यस्य विशेष्यत्वेऽपि 'ब्राह्मणमयो ग्रामः' इत्यादौ मयटः द्योतकत्वपक्षे प्राचुर्यस्य विशेषणत्वेऽपि, प्रचुरब्राह्मणो ग्राम इत्यादौ प्राचुर्यस्य तत्वेऽपि स्वसमानाधिकरण-विजातीयाल्पत्वस्यैव भानात्, 'प्रचुरप्रकाशः सविता', 'प्रकाशमयः सविता', इत्यादौ प्राचुर्यस्य विशेषणत्वेऽपि 'प्रकाशप्रचुरः सविता' इत्यादौ विशेष्यत्वेऽपि स्वव्यधिकरणनक्षत्रादिगतसजातीयप्रकाशाल्पत्वस्यैव भानात्, स्वसमानाधिकरणविजातीयान्धकारलेशस्य अभानाच्च, शब्दमर्यादया स्वव्यधिकरणाद्यर्थरूपविशेषस्य उपस्थित्यभावात्, तत्तदर्थविशेषस्य प्रमाणान्तरगम्यत्वाच्च ।

टीकायां प्राचुर्यस्य विशेषणत्वे दुःखलेशशङ्का नास्ति, विशेष्यत्वे सा स्यादिति प्रतिपादनं तु परोक्तनियमाभिप्रायेण कृतम् । भाष्येऽपि निर्विवादप्रयोगेणोपपत्तौ सविवादप्रयोगो मास्त्वित्यभिप्रायेण प्रचुरानन्दत्वादित्युक्तम् । अत एवोक्तं **सुधायाम्**- 'यथा विरुद्धार्थप्रतीत्यवकाशो न भवेत्, तथा अन्नमयादिशब्दतात्पर्यार्थानाह- **महाभोक्तेति**' **इति** ॥ 'प्राचुर्यस्य विशेषणत्वे विरुद्धधीर्नेति परैरप्यङ्गीकारात्, विशेषणतया तात्पर्यार्थानाह इत्यर्थः' इति व्याख्यातं **परिमळे** । एवं च आनन्दप्रचुरत्वादित्यपि वक्तुं शक्यम् ॥

न च मयटो द्योतकत्वेन प्राचुर्यस्य विशेष्यतया भानं न स्यादिति वाच्यम्- 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इत्यनुशासने विकारसाहचर्यात् प्राचुर्यमपि मयटो वाच्यमेवेति अङ्गीकारेण विशेष्यत्वसिद्धेः । एवं च अनुशासनद्वयानुरोधेन मयटः प्राचुर्यद्योतकत्वम्, तद्वाचकत्वं च, यथाप्रयोगमाश्रयणीयमिति बोध्यम् ॥

**(१४) अन्नादीनां च प्राचुर्यमेव । 'अद्यतेऽत्ति च' इति (तै.उ. २–२) व्याख्यानात् तत्प्राचुर्यं च युज्यते ।**

(१४) ननु सूत्रकृता उक्तमेव प्राचुर्ये मयडिति, अथापि प्रायपाठविरोधस्तु न परिहृत एव । न चाभ्यासः प्रायपाठापेक्षया बलवानिति वाच्यम्- बलवत्वे हेत्वभावात् ।

न च प्रायपाठस्य कथं प्रमाणत्वमिति चेत्- एकस्मिन् प्रकरणे पूर्वोत्तरयोः पदयोः अन्यतरस्य वा कस्मिंश्चिदर्थेऽवश्यं स्वीकर्तव्ये, तत्सहचरितस्य तज्जातीयस्य स एवार्थो युक्तः, इति युक्तिरेव प्रमापकत्वे बीजमिति वक्तव्यम् । एवं च एकप्रकरणगताभ्यासेनार्थनिर्णये प्रकरणान्तरगतप्रायपाठो न प्रतिबन्धक इति- प्रकृते प्रायपाठापेक्षया अभ्यासो बलवानिति वाच्यम्- तथा सति अन्नमयादि-प्रकरणेऽपि अभ्याससत्त्वात् अन्नमयादिशब्दवाच्योऽपि विष्णुरेव भवेदित्यापत्तेः इति चेत् इष्टापत्त्या समादधते- **अन्नादीनां चेति** ॥ इत्थं च प्रायपाठशङ्कैव नेति तात्पर्यम् ॥

यद्वा- ननु विष्णुत्वाभाववत्सु अन्नमयादिष्वपि उक्ताभ्याससत्त्वात् 'अभ्यासात्' इति हेतुर्व्यभिचारी इत्यत आहुः- **अन्नादीनां चेति** ॥ तथा च प्राचुर्यार्थकान्नमयादिशब्देन विष्णोरेव वाच्यत्वात् न व्यभिचार इति भावः ॥

अथवा- ननु अन्नमयादिप्रायपाठात् आनन्दमयेऽपि विकारार्थ एव युक्तः, अन्यथा प्रायपाठविरोध इति चेत्- भवेत् प्रायपाठविरोधः, यद्यन्नमयादिशब्देन अन्नादिविकारो गृह्येत, किन्तु तत्रापि प्राचुर्यमेव इत्याहुः- **अन्नादीनां चेति** ॥

यद्वा- ननु आनन्दमयप्रकरणस्यैव ब्रह्मपरत्वे इदं सूत्रं व्यर्थम्- आनन्दमयशब्दे विकारार्थासम्भवेन शङ्काकरणायोगाद् इत्यत आहुः- **अन्नादीनां चेति** ॥ आनन्दमयशब्दे विकारार्थासम्भवप्रकारस्तु सूत्रार्थवर्णनप्रस्तावे निरूपितः ॥ **प्राचुर्यमेवेति** ॥ अन्नमयादिशब्दार्थ इति शेषः । एवं च आनन्दमये विकारार्थसम्भवशङ्काऽभावेऽपि अन्नमयादिषु तच्छङ्कासत्त्वात् तत्र प्राचुर्यार्थबोधनद्वारा अन्नमयादीनामपि ब्रह्मपरत्वबोधनार्थं सूत्रमिति भावः ॥

ननु अन्नादिप्राचुर्यम्, अन्नमयादिशब्दार्थो न सम्भवति भगवत्परत्वसम्पादनार्थम् आश्रित-प्रवृत्तिनिमित्तस्य अन्नप्राचुर्यस्य अप्राकृतविग्रहे हरावयोगात्, तस्याल्पत्वाच्च अत आहुः- **अद्यते, अत्ति चेति** ॥ **व्याख्यानादिति** ॥ अन्नशब्दार्थस्य विवरणादित्यर्थः ॥ **तत्प्राचुर्यं चेति** ॥ भगवति अन्नमयशब्दार्थत्वेन युज्यत इत्यर्थः । अदधातोः कर्मणि, कर्तरि च क्तप्रत्यये 'बहुलं तणि' इति (सञ्ज्ञा-छन्दसोः) जग्ध्यादेशाभावे [1]निष्ठानत्वे च निष्पन्नोऽत्र अन्नशब्दः- भूताद्य- भूताऽत्तृवाचक इति श्रुतितात्पर्यम् । एवं च प्रचुरभूताद्यत्व-प्रचुरभूतात्तृत्वयोः, परमात्मन्येव सम्भवेन तत्समन्वयार्थम् अन्नमयादिप्रकरणेऽपि प्राचुर्यार्थ आवश्यक इति भावः ॥

---

१. 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' (पा.सू. ८.२.४२) इत्यनेन 'द'-'त'कारयोः 'न'कारादेशः ।

(१४) **अद्यतेऽत्ति चेति** ।। (तै.उ. २.२) यतः **भूतैः**= प्राणिभिः **अद्यते**= उपजीव्यते, तदाश्रित्य भूतानि जीवन्तीति भावः, **भूतानि अत्ति**= संहरति च, **तस्मात्**= भूतोपजीव्यत्वात्, भूतोपसंहारकत्वाद्धेतोः **तत्**= विष्ण्वाख्यं ब्रह्म, **अन्नमित्युच्यते**= वेदेष्वित्यर्थः ।।

## (१५) उपजीव्यत्वमेवाद्यत्वम् । 'स वा एष' (तै.उ.२–२–) इत्यन्यप्रारम्भात् ।

**(१५) ननु प्रसिद्धान्ने भूतात्तृत्ववत् भगवति भूताद्यत्वमपि न सम्भवतीत्यत आहुः- उपजीव्यत्व-मेवेति ।। अयं भावः- प्रसिद्धान्नेऽद्यत्वम्- उपजीव्यत्वमूलकमिति, प्रकृते उपजीवकादनवाचक-अदधातुना उपजीवनं गृह्यते । धातूनामनेकार्थत्वात्, अन्नशब्दनिर्वचनश्रुतिप्रामाण्याच्च इति ।।**

**इदमत्रावधेयम्- अत्र श्रुतौ प्रसिद्धान्नग्रहणे अत्तृत्वं तस्य कथमपि न सम्भवति, अद्यत्वं तु लोकत एव सिद्धम् । श्रुतेः तदर्थकत्वे अनुवादकत्वप्रसङ्गः । न च अनुवादकत्वमेव युक्तम् । अत एव 'तस्मादन्नं तदुच्यते' (तै.उ. २.५) इति हेतुत्वं सङ्गच्छत इति वाच्यम्- भूताऽत्तृत्वस्य लोकतोऽसिद्धेः, तत्सह-चरितस्य अस्यापि विधिविषयस्यैव हेतुत्वेन अङ्गीकर्तव्यत्वात् । समकक्षे अपूर्वार्थभगवत्परत्वे सम्भवति, लोकसिद्धार्थानुवादकत्वरूपाप्रामाण्यकल्पनाऽयोगात् । उक्तं च विष्णुस्वामिना स्वभाष्ये आकाशाधिकरणे- 'यावन्मुख्यपरत्वं सम्भवति, तावन्न कस्यापि वेदान्तवाक्यस्य अपरब्रह्मपरत्वमिति मर्यादेति, यत्र तु लिङ्गसन्देहः, तत्रापि गमकान्तराभावेऽपि ब्रह्मपरत्वमेव' इति । 'अन्तस्थत्वाधि-करणेऽपि वेदान्तेषु तत्तत्प्रकरणे एकोऽप्यसाधारणो ब्रह्मधर्मो विद्यमानः शेषान् साधारणत्वेन सन्दिग्धान् धर्मान् तद्धर्मत्वेनैव निश्चिनोतीति मर्यादा' इति च । एवं च- भूताऽत्तृत्वरूपब्रह्मधर्मबलाद् अद्यत्वादीनां ब्रह्मधर्मत्वनिश्चयः, इति ।**

**नन्वेवमपि 'अन्नात्पुरुषः' (तै.उ. २.३) इति प्रकृतमेव देहं 'स वा एष पुरुषः' (तै. २.४) इति परामृश्य अन्नरसमयत्वं विधीयते, अतः कथमन्नमयशब्दे मयटः प्राचुर्यमर्थ इत्यत आहुः- स वा एष इति ।। अन्यप्रारम्भादिति ।। अन्यस्य= देहादन्यस्य=परमात्मनः प्रारम्भात्=उपक्रमादित्यर्थः । आत्मनः पुनः उपक्रमस्तु आकाशाधिकरणस्यैव आत्मनः, अन्नमयादिपञ्चरूपत्वविधानाय इति बोध्यम् ।।**

(१५) **स वा एष इति** ।। (तै.उ. २.२) यस्मात् सत्यत्वादिगुणोपेताद् आत्मनः अकाशादि उत्पन्नं **सः**= आत्मपदोदितः भूतादिद्रष्टा **एषः**= जीवशरीरगः **पुरुषः**= पूर्णषड्गुणः, पुरि= देहे शयो वा, भगवान् **अन्नरसमयः**= उत्तमान्नत्वपूर्ण इत्यर्थः ।।

**(१६) 'येऽन्नं ब्रह्मोपासते'(तै.उ. २–२) इत्यादिब्रह्मशब्दाद् बहुरूपत्वाच्च न विकारित्वमविरोधश्च ।**

(१६) एवं पञ्चानामपि मयटां प्राचुर्यार्थकत्वे प्राप्तं बाधकम् 'प्रारम्भात्' इत्यन्तेन परिहृत्य साधकं मानमाहुः- **येऽन्नमिति ॥ इत्यादिब्रह्मशब्दादिति ॥** इत्यदिषु ब्रह्मशब्दादिति विग्रहः । आदिना- 'ये प्राणं ब्रह्मोपासते' (तै. २.३) 'आनन्दं ब्रह्मणो विद्वान्' (तै. २.४) 'विज्ञानं ब्रह्म चेद्वेद' (तै. २.५) 'अस्ति ब्रह्मेति चेद्वेद' (तै. २.६) इत्यादेः परिग्रहः । अन्नमयादीन् प्रति उदाहृतेष्वेषु श्लोकेषु ब्रह्मशब्दश्रवणादित्यर्थः ।

ननु पञ्चरूपत्वे 'एकमेवाद्वितीयम्' (छा. ६.२.१) इति श्रुतिविरोध इत्यत आहुः- **बहुरूपत्वाच्चेति ॥** 'अजायमानो बहुधा विजायते' (तै.आ. ३.१३.४०)इति श्रुत्यवगतबहुरूपत्वादित्यर्थः ॥ **न विकारित्वमिति ॥** विकारित्वं विकारः । नञर्थो भेदवान्, अभावश्च । प्रसङ्गात् मयटाम् अर्थः, निश्चीयत इति लभ्यते । तदियं योजना- अन्यप्रारम्भात्, ब्रह्मशब्दाच्च मयटां विकारित्वं नार्थः, किन्तु **न विकारित्वं=** विकारभिन्नप्राचुर्यम् अर्थ इति निश्चीयते । **बहुरूपत्वाच्च, अविरोधश्च=** 'एकमेव' इति श्रुतिविरोधोऽपि नेति । अन्यप्रारम्भादित्यस्य- बाधकाभावविधया (अभावबोधकत्वे) ब्रह्मशब्दस्य तु साधकमानत्वेन हेतुत्वं बोध्यम् ॥ एवं प्राणमयत्वं प्रचुरचेष्टकत्वम्, मनोमयत्वं प्रचुरज्ञानत्वम्, विज्ञानमयत्वं प्रचुरविशेषज्ञानत्वम्, इति बोध्यम् ॥ ईश्वरस्य उभयविधज्ञानवत्वं 'यः सर्वज्ञः स सर्ववित्' इत्यादिश्रुतिसिद्धम् ॥

(१६) **येऽन्नमिति ॥** (तै. २.२) अस्य पूर्ववाक्यम्- 'सर्वं वै तेऽन्नमाप्नुवन्ति' इति । अयमर्थः- ये अधिकारिणः **अन्नं=** अन्नरसाभिधम्, अनिरुद्धं ब्रह्म **उपासते=** गुणपूर्णमित्युपासते । ते **सर्वमन्नं=** गुणपूर्णम् अनिरुद्धम् **आप्नुवन्तीति** ॥ १३ ॥

**(एकप्रकरणगतानां मयटां भिन्नार्थत्वं न युक्तम्)**

**(१७) न च पृथक्कल्पना युक्ता । स्वरूपे च युज्यते प्रचुरप्रकाशो रविरितिवत् ॥ १३ ॥**

(१७) एवं मयटां प्राचुर्यार्थम्, प्रकरणानां ब्रह्मपरत्वं च प्रसाध्य परकृतापव्याख्यां दूषयन्ति- **न च पृथक्कल्पनेति ॥** आनन्दमये मयटः प्राचुर्यमर्थः, अन्यमयटां विकारोऽर्थ इति भेदकल्पना इत्यर्थः ॥ **युक्तेति ॥** सहपाठितानामेकार्थे सम्भवति भिन्नार्थत्वं न युक्तमित्यर्थः ॥

ननु 'तत्प्रकृतवचने मयट्'[१] इति सूत्रेण प्राचुर्योपाधिक-स्वार्थवृत्तेः प्रथमान्ताद् अधिकरणे मयट् विहितः । अन्नमयो यज्ञ इत्युदाहरणम् । प्रचुरान्नवानिति तदर्थः । 'तत्प्रकृत' इति सूत्रे वचने इत्यत्र वचधात्वर्थोऽविवक्षितः । प्रत्ययार्थाधिकरणत्वमात्रं विवक्षितम् । 'रुजार्थानां भाववचनानाम्'[२] इत्यत्र प्रत्ययार्थकृतत्वमात्रस्य विवक्षावत् ।

एवं च यज्ञान्नयोर्भेदवत् - आनन्दब्रह्मणोर्भेदाभावात् कथमत्र मयट् ? इत्यत आहुः- **स्वरूपे चेति** ॥ आनन्दस्य इत्यतः आनन्दमय इति वर्तते । चः अप्यर्थे । तथा च- आनन्दस्वरूपेऽपि भगवति आनन्दमयव्यवहारः **प्रचुरप्रकाशो रविरितिवत्** युज्यत इत्यर्थः ॥ विशेषबलात्, उक्तदृष्टान्तेन च 'आनन्दं ब्रह्मणो विद्वान्' (तै. २.४) इति श्रौतव्यवहारबलेन च आनन्दरूपस्यापि ब्रह्मणः, आनन्दवत्वं युज्यत इति भावः ॥

ननु प्रथमान्तात् प्रकृतवचने प्राचुर्येण प्रस्तुतस्वार्थप्रतिपादने समर्थात् स्वार्थे मयट्, वचन इति भावे ल्युट्, उदाहरणं तु अन्नमयमिति, प्रचुरान्नमिति तदर्थः । इत्थं च प्रचुर आनन्दः आनन्दमय इति विग्रहकरणे भेदशङ्कैव नेति, कुतस्तथा न विग्रहः कृत इति चेत्- उच्यते- तथा सति धर्मिलाभानापत्तेः इति ॥ १३ ॥

### (पूर्णानन्दत्वादेव विष्णुर्लोकचेष्टकः)

## (१८) ॥ ॐ तद्धेतुव्यपदेशाच्च ॐ ॥ १४ ॥

(१८) हेत्वन्तरेण उक्तार्थसाधनाय सूत्रम्- **ॐ तद्धेतुव्यपदेशाच्च ॐ इति** ॥ शब्दात्, आनन्दमयः, तत्तु, इति वर्तते । यथायथम् आवृत्तिविपरिणामौ । **अयमर्थः**- आनन्दमयः, तत्तु= विष्णुरेव, तस्यैव= विष्णोरेव, **तद्धेतुव्यपदेशाच्च**= तस्मिन्= पूर्णानन्दत्वे, शब्दस्य= मयटः प्राचुर्यार्थे च, हेतोः= लोकचेष्टकत्वादेः 'को ह्येवान्यात्' इति श्रुतावुक्तत्वाच्च इति ॥

लोकचेष्टकत्वे आनन्दोद्रेकस्य कारणत्वम्, आनन्दोद्रेकेण लोकचेष्टकत्वस्य व्याप्तिश्च, 'यदा वै सुखं लभते अथ करोति । नासुखं लब्ध्वा करोति । सुखमेव लब्ध्वा करोति' (छा.उ. ७.२२.१) इति श्रुतावपि उक्तमिति ज्ञेयम् ॥

**(१९) 'को ह्येवान्यात्कः प्राण्यादेष आकाश आनन्दो न स्यात्' इति (तै.उ.२-७) ॥ १४ ॥**

१. पा.सू. ५.४.२१ २. पा.सू. २.३.५४

(१९) सूत्रसूचितश्रुतिमाहुः- **को ह्येति ॥ न स्यादितीति ॥** अस्य सूत्रेण सम्बन्धः । सूत्रस्य तु **'किन्तु विष्णुरेव'** इति व्यवहितपूर्वभाष्ये अन्वयः ॥

ननु विष्णोः पूर्णानन्दत्वे लोकचेष्टकत्वं हेतुः (लिङ्गं) भवतु, तथापि न आनन्दमयशब्दवाच्यत्वे, मयटः प्राचुर्यार्थे हेतुः स्यादिति चेत्, उच्यते- श्रुतौ आनन्दमयशब्दस्य पूर्णानन्दत्वं प्रवृत्तिनिमित्तमिति कथनम्, लोकचेष्टकत्वहेतुना तत्साध्यं च, प्रकृताऽऽनन्दमयपदवाच्यत्वसमर्थनार्थमेव इति उक्तहेतुना हरेः आनन्दमयपदवाच्यत्वसिद्धेः । अन्यथा हेतुकथनम् असङ्गतं स्यात् । अत एव प्रकृतमयटोऽपि प्राचुर्यार्थकत्वं सिद्धमिति ॥ १४ ॥

(१९) को ह्येवेति ॥ (तै. २.७) यत्= यदि, **एष आकाशः**= आ समन्तात् काशमानत्वात् आकाशशब्दवाच्यो विष्णुः, **आनन्दः**= पूर्णानन्दः, **न स्यात्**= पूर्णानन्दोद्रेकप्रयुक्तलोकचेष्टकत्ववान् न स्यादिति यावत् । तर्हि **को ह्येव**= को वा **अन्यात्** लोकं चेष्टयेत् । **कश्च प्राण्यात्**= धर्मादौ प्रवर्तयेत् इत्यर्थः ॥ १४ ॥

**(सत्यत्वादिलक्षणवत्तया मन्त्रोक्त एवानन्दमयः)**

## (२०) ॥ ॐ मान्त्रवर्णिकमेव च गीयते ॐ ॥ १५ ॥

(२०) ननु ब्रह्मशब्देन आनन्दमयस्य विष्णुत्वसाधनं कथम् ? तस्य जीवादिसाधारणत्वात् । न च ब्रह्मशब्दः विष्णौ मुख्य इति, तेन तत्साधनमिति वाच्यम्- तथापि विष्णोः आनन्दमयपुच्छत्वोक्त्या तेन बाधकेन, आनन्दमयस्य विष्णुत्वबाधात् ॥ न चैवं पुच्छश्रुतावपि ब्रह्मशब्दस्यैव श्रवणेन तस्य पूर्वपक्षिरीत्या कथं विष्णुपरत्वनिर्णयः ? इति वाच्यम्- बाधकाभावसहकृतब्रह्मशब्दस्य मुख्यतो विष्णुपरत्वमिति सिद्धान्तिन्यायेन तस्य विष्णुपरत्वनिश्चयात् इति शङ्कापरिहाराय, सूत्रम्- **ॐ मान्त्रवर्णिकमेव च गीयते ॐ ॥ मन्त्रवर्णः**= 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. २.१) इति **मन्त्रः**, **तत्रभवं**= मान्त्रवर्णिकम्, आध्यात्मादित्वात् ठञ्, प्रतिपादकतासम्बन्धेन तत्र विद्यमानं= मन्त्रवर्णप्रतिपाद्यमिति यावत् ॥

तत्तु आनन्दमय इति वर्तते । चः हेतौ, सत्यादिशब्दानाम् अन्नरसमयादि(आनन्दमयादि)-शब्दानां च, अर्थानुसन्धाने एकार्थत्वावगतेः, च अनुक्तायाः समुच्चये । यथायथम् आवृत्ति-विपरिणामौ । **अयमर्थः**- च= यतः, च= सत्यादिशब्दानाम्, आनन्दमयादिशब्दानां च, अर्थानु-सन्धाने एकार्थत्वावगतेः, आनन्दमयेन= आनन्दमयादिशब्दैः, मान्त्रवर्णिकमेव= सत्यत्वादिलक्षण-वत्तया मन्त्रवर्णोक्तमेव, तत्तु= ब्रह्मैव, गीयते= प्रतिपाद्यते । अतश्च आनन्दमयः आनन्द-मयादिशब्दवाच्यः, तत्तु= विष्णुरेव ॥ इति ॥

**(२१) 'ब्रह्मविदाप्नोति परम्' इति सूचयित्वा 'सत्यं ज्ञानमनन्तं ब्रह्म' इति (तै.उ.२–१) मन्त्रवर्णलक्षितं परमेव ब्रह्म शब्दानुसन्धानाद्गीयते ।**

(२१) ननु मन्त्रवर्णेऽपि ब्रह्मेत्युक्तत्वात् कथं तेन निर्णय इत्यत आहुः- **ब्रह्मविदित्यादि** ॥ **सूचयित्वेति** ॥ परं ब्रह्म, तज्ज्ञानम्, तत्प्राप्तिं च, कथयित्वा इत्यर्थः ॥ अस्य **लक्षितमिति** लक्षधात्वर्थे प्रतिपादनेऽन्वयः । **शब्दानुसन्धानादिति** ॥ सत्यादिशब्दानाम्, अन्नमयादिशब्दानां च अर्थानुसन्धाने एकार्थत्वावगमादित्यर्थः । मन्त्रवर्णे **सत्यपदेन** सत्= जन्म, जीवनम्, प्रवर्तनम्, नाशम्, यापयतीति व्युत्पत्त्या- स्रष्टृत्वम्, जीवनप्रदत्वम्, प्रवर्तकत्वम्, संहर्तृत्वं चोच्यते । **ज्ञानपदेन**- स्वपरगताशेषसामान्य-विशेषविषयकसामान्य-विशेषज्ञानमुच्यते । **अनन्तपदेन** - त्रिविधपरिच्छेदराहित्यम् उच्यते । अन्नमयशब्देन संहर्तृत्वम्, उपजीव्यत्वरूपं जीवनप्रदत्वम्, प्राणमयशब्देनापि जीवनप्रदत्वम्, मनोमयशब्देन सामान्यज्ञानरूपत्वम्, विज्ञानमयशब्देन च विशेषज्ञानरूपत्वम्, आनन्दमयपदेन आनन्दादिपूर्णत्वेन गुणापरिच्छिन्नत्वम्, उच्यत इत्येकार्थता ज्ञेया ॥ **गीयत इति** ॥ आनन्दमयादिशब्दैरिति शेषः । एतदन्तेन सूत्रार्थ उक्त इति बोध्यम् ॥

**एवं च मन्त्रवर्णसमाख्ययाऽपि आनन्दमयादिः विष्णुरिति फलितम् । सत्यज्ञानादिवाक्ये ब्रह्मपदस्य मुख्यब्रह्मपरत्वम् एष्टव्यम् । 'ब्रह्मविदाप्नोति परम्' इति परब्रह्मप्राप्तिप्रतिपादनात् । तदनुरोधेन अन्नमयादिप्रकरणस्थ-ब्रह्मशब्दस्यापि परब्रह्मपरत्वं सिद्धम् ॥**

(२१) **ब्रह्मविदिति** ॥ (तै. २.२) **ब्रह्मवित्**= ब्रह्मज्ञानी **परं**= परमं ब्रह्म **प्राप्नोति** इत्यर्थः । **सत्यमिति** (तै. २.२) **ब्रह्म, सत्यं**= जन्मगतिजीवननाशप्रापकम् । **ज्ञानं**= सामान्यविशेषज्ञानवत् । **अनन्तं**= देशादिपरिच्छेदशून्यमित्यर्थः ।

**(२२) न चावयवत्वविरोधः । 'स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छम्' इति तस्यैवावयवत्वोक्तेश्चतुर्वेदशिखायाम् ॥**

(२२) ननु आनन्दमयस्य विष्णुत्वे, विष्णोः तदवयत्वं न सम्भवति । अवयवावयविनोः भेदस्य '**विष्णुः** आनन्दमयभिन्नः तदवयवत्वात्, यो यदवयवः सः तद्भिन्नः, यथा लौकिकावयवः- इत्यनुमानसिद्धत्वात् इत्यत आहुः- **न चेति** ॥ एवम् इति शेषः । एवम्= आनन्दमयस्य विष्णुत्वे, अवयवत्वविरोधः= आनन्दमयावयवत्वं श्रुतिसिद्धं न स्यादिति च, न च वाच्यत्वमित्यर्थः ॥ विरोध-

परिहाराय श्रुतिमाहुः- **स शिर इति ॥ चतुर्वेदशिखायामिति ॥** अनेन उक्तानुमानस्य श्रुतिबाध उक्तो भवति । अवयविनः अवयवत्वं विरुद्धमिति शङ्कापरिहाराय स्मृतिं चाहुः- **शिर इति ॥ बृहत्संहितायामिति ॥** अवयवत्वोक्तेरिति वर्तते । अनेन अनुमानस्य अचिन्त्याद्भुतशक्तिमत्वाभावः, अल्पशक्तिमत्वं वा उपाधिरुक्तो भवति ॥

(२२) **स शिर इति ॥ सः**= नारायण एव, **शिरः**= शिरोरूपावयवः स्वस्येति शेषः । **सः**= प्रद्युम्नः **दक्षिणः पक्षः**= बाहुः । **सः**= अनिरुद्धः, **उत्तरः** सव्यः **पक्षः** । **सः**= वासुदेवः, **आत्मा**= मध्यदेहः । **सः**= सङ्कर्षणः, **पुच्छः**= पाद इत्यर्थः ॥ अत्रत्यतच्छब्दाः वक्ष्यमाण 'शिरो नारायणः' इत्यादिस्मृत्यनुरोधेन नारायणादिपरा इति बोध्यम् ॥

**(भगवद्रूपाणामवयवावयविभावः प्रामाणिकः)**

**(२३) 'शिरो नारायणः पक्षो दक्षिणः सव्य एव च ।**
**प्रद्युम्नश्चानिरुद्धश्च सन्दोहो वासुदेवकः ॥**
**नारायणोऽथ सन्दोहो वासुदेवः शिरोऽपि वा ।**
**पुच्छं सङ्कर्षणः प्रोक्त एक एव तु पञ्चधा ॥**
**अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः ।**
**ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिञ्जनार्दने ।**
**अतर्क्ये हि कुतस्तर्कस्त्वप्रमेये कुतः प्रमा ॥'इति बृहत्संहितायाम् ॥**

(२३) **शिर इति ॥** नारायण एव **शिरः** । प्रद्युम्नो **दक्षिणः पक्षः**= बाहुः । अनिरुद्धः **सव्यः पक्षः** । वासुदेवकः **सन्दोहः** । अथवा नारायणः सन्दोहः, **वासुदेवोऽपि**= वासुदेवस्तु **शिरः** । सङ्कर्षणः **पुच्छः प्रोक्तः** । पक्षद्वये 'तु'शब्द एकत्वेऽपि अविरोधद्योतकः । **एक एव पुरुषोत्तमः** भगवान् **पञ्चधा**, विभक्त इति शेषः । **अङ्गाङ्गित्वेन भगवान् क्रीडते, तस्मिन्**= अवयवावयविविभागमापन्ने **जनार्दने, विरोधः**= एकस्यैव अवयवत्वावयवित्वविषये विरोधः, **न चिन्त्यः, ऐश्वर्यात्**= ईश्वरसामर्थ्यात् । **अतर्क्ये**= केवलतर्कागोचरे, **तर्कः**= 'विष्णुः आनन्दमयभिन्नः तदवयवत्वात्' इत्यादिः, **कुतः**=कथं प्रकृतार्थसाधको बाधको वा भवेत् । **अप्रमेये**=अपरिमितशक्तिमति, **प्रमा**=परिमितशक्तिविरोधप्रयोजिका कुतो भवेत्? न भवेदेवेति भावः ॥

**(२४) रसशब्देन विशेषणात् तत्तत्साभूतं चिन्मात्रमेवोच्यते । इदमिति च दृश्यमानसन्निहितत्वात् ।**

(२४) ननु यदुक्तं 'स वा एष पुरुषः' इति पुरुषपदेन परमात्मपरामर्श इति तदयुक्तम् आत्मनो दूरस्थत्वात् 'अन्नात् पुरुषः' इति देहस्य समीपस्थत्वात्, इत्यत आहुः- **रसेति** ॥ अन्नशब्दार्थस्य रसशब्देन विशेषणादित्यस्य व्यावर्तनात् ॥ यद्वा- **रसशब्दघटितेन**= अन्नरसमयशब्देन **विशेषणात्**= पुरुषपदार्थे इतरस्य व्यावर्तनात्, **तत्तत्सारभूतं**= तत्तत्पदार्थेषु आकाशादिपुरुषान्तपदार्थेषु नियामकत्वेन स्थितम् आकाशादिपदवाच्यम्, **चिन्मात्रमेव**= चिन्मात्रस्वरूपकं ब्रह्मैव, पुरुषपदेनेति शेषः । उच्यत इत्यर्थः ॥

अत्र प्रकरणे आकाशादिपदैः- आकाशादिभूत-तदभिमानि-तद्देह-तन्नियामकभगवद्रूपाणां चतुर्णां वाच्यत्वं स्वीक्रियते । पुरुषपदेन अभिमानिनो देहस्य, नियामकभगवद्रूपस्य च वाच्यत्वम् । 'स वा एष पुरुषः' इति पुरुषपदेन च आत्मन एव वाच्यत्वम्, उक्तविशेषणात् । तद्विशेषणेन च सार-भूतं यदन्नम्, तन्मय इत्यर्थो लभ्यते । प्रचुरोपजीव्यत्ववान्, प्रचुरात्तृत्ववांश्च पुरुष आत्मा इति विशिष्टार्थः ॥

यद्वा- अन्नेषु उपजीव्येषु, अत्तृषु च, श्रेष्ठ इत्यर्थः ॥ शिष्टं समानम् । एवं च- इदमेव विशेषणम् आकाशादिपदानाम् अनेकार्थत्वे च मानमिति भावः ॥ रसशब्दस्य विष्णुपरत्वे 'रसो वै सः रस९ह्येवाऽयं लब्ध्वाऽऽनन्दी भवति' (तै. २.७) इत्यग्रेतनं वाक्यं मानमिति ज्ञेयम् ॥ टीकायां रसशब्देन इत्यादिभाष्यस्य प्रयोजनान्तरमप्युक्तम् ।

नन्वेवमपि 'अयं दक्षिणः पक्षः' इत्यादौ इदंशब्दप्रयोगो न युज्यते । आत्मसम्बन्धिपक्षादेरदृश्य-मानत्वात् । इदंशब्दस्य च दृश्यमानसन्निहितवाचित्वाद् अत आहुः-**इदमिति** ॥ युज्यत इति शेषः। अयमर्थः- **इदमिति च**= 'अयं दक्षिणः पक्षः' इत्यादौ इदंशब्दप्रयोगस्तु **दृश्यमानसन्निहितत्वात्**= दृश्यमानपक्षादौ भगवत्पक्षादेः सन्निहितत्वाद् युज्यते । 'वस्त्रप्रावृते जानुनि इदं जानु' इति प्रयोगवदिति भावः ।

किञ्च 'इदमेव शिरः' इत्यादौ उक्तार्थानङ्गीकारे प्रसिद्धदेहशिरआदेः प्रत्यक्षत्वेन इदंशब्देन बोधने अनुवादकत्वरूपाप्रामाण्यम्, वैयर्थ्यं च स्यादिति ज्ञेयम् ॥

(२५) **'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् ।**
**प्रोच्यते भगवान् विष्णुरैश्वर्यात् पुरुषोत्तमः ॥' इति ब्रह्माण्डे ।**

(२५) **नन्वेवमपि 'तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः'** इत्यादौ अन्य-शब्देन परस्परं भेदबोधनात् भगवतश्च एकत्वात् कथं प्रकरणपञ्चकस्य आत्मपरत्वमिति- चेत्-तत्राहुः- **अनन्योऽपीति ॥ ब्रह्माण्ड इति ॥** इदं च, युज्यत इति वर्तते । अयमर्थः- ब्रह्माण्डे इत्युक्तेः इदं च मिथो भेदवर्जिते अन्यशब्दप्रयोगोऽपि युज्यत इति । एतद्विषये प्रपञ्चस्तु आकरग्रन्थे द्रष्टव्यः ॥ १५ ॥

(२५) अनन्योऽपीति ॥ **पुरुषोत्तमः भगवान् विष्णुः अनन्योऽपि**= स्वावयवादिभिः भेदरहितोऽपि, **अन्यशब्देन**= अन्यार्थकशब्देन **प्रोच्यते**= प्रतिपाद्यते । **तथा एकोऽपि बहुरूपवान्** भवतीत्यर्थः ॥१५॥

## (२६) न चोक्तप्राप्त्या विरिञ्चादिरुच्यते ॥ १५ ॥

(२६) नन्वेवंरीत्या प्रयासेन बाधकानि परिहृत्य आनन्दमयादिः विष्णुरेवेति कुतो वक्तव्यम् ? विरिञ्चादिरेव आनन्दमयादिरस्तु । तत्तत्प्रापकसत्त्वात्, इत्यत आहुः- **न चेति ॥ उक्तप्राप्त्येति ॥** विष्णुप्रापकत्वेन उक्तेन हेतुभूतेन ब्रह्मशब्देन, हेतुव्यपदेशेन, मान्त्रवर्णिकसमाख्यया च अन्नमयादि-शब्दैः विरिञ्चादिः उच्यत इत्यर्थः । ब्रह्मशब्दस्य उभयसाधारण्यात्, हेतुव्यपदेशे विष्णुप्रापकाभावात्, समाख्यायाः प्रबलेन सूर्ये प्रोक्तत्वलिङ्गेन बाधादिति भावः । वाच्यमिति शेषः । इति न च वाच्यमित्यन्वयः ॥

**(न जीव आनन्दमयः)**

## (२७) ॥ ॐ नेतरोऽनुपपत्तेः ॐ ॥ १६ ॥

(२७) अत्र सौत्रहेतुं वक्तुं सूत्रमुपन्यस्यन्ति- **ॐ नेतर इति ॥** आनन्दमयः, तदिति वर्तते । तत् इति पञ्चम्या विपरिणम्यते । अयमर्थः- **आनन्दमयः**= आनन्दमयादिशब्दवाच्यः, **तस्मात्**= विष्णोः **इतरः**= विरिञ्चादिः, जीवो वा, न, अनुपपत्तेः । 'ब्रह्मविदाप्नोति परम्' (तै.उ. २.१) इत्यत्र श्रूयमाणाऽऽनन्दमय-ज्ञानजनित-तत्प्राप्तिरूपमोक्षानुपपत्तेः इति ॥ तथा च भगवदितरज्ञानेन मोक्षो नैव जायत इति भावः ॥

'नेतर' इत्यंशस्य पूर्वभाष्येण व्याख्यातत्वात् हेत्वंशं व्याचक्षते- **न ह्यन्येति ॥**

## (२८) न ह्यन्यज्ञानान्मोक्ष उपपद्यते । 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' (तै.उ. ३-१२-७) इति ह्युक्तम् ॥ १६ ॥

(२८) अन्यज्ञानान्मोक्षः कुतो नोपपद्यत इत्यत आहुः- **तमेवमिति ॥ इति ह्युक्तमिति ॥ हि=** यतः **इति=** इति श्रुत्या, **इति** अन्यज्ञानान्मोक्षो नेति उक्तम्, अतः अन्यज्ञानान्मोक्षः नोपपद्यते । **हि=** यतः नोपपद्यते, अतो विरिञ्चादिः नोच्यत इति सम्बन्धः ॥ १६ ॥

(२८) **तमेवमिति** ॥ (तै ३.१२.७) व्याख्यातो जिज्ञासाधिकरणे (पृ. ३९) ॥ १६ ॥

**(भेदकधर्मोक्तेः न जीवोऽत्र प्रतिपाद्यः)**

## (२९) ॥ ॐ भेदव्यपदेशाच्च ॐ ॥ १७ ॥

**(३०) 'ते ये शतं प्रजापतेरानन्दाः' (तै.उ.२-८) । 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति' (तै.उ.२-७)। 'स यश्चायं पुरुषे' (तै.उ. २-८) इत्यादिभेदव्यपदेशात् ।**

(२९-३०) युक्त्यन्तरेण चतुर्मुखादीनाम् आनन्दमयत्वनिराकरणाय सूत्रम्- **ॐ भेदव्यपदेशादिति ॥** न इतर इति वर्तत आनन्दमय इति च । स च आवर्त्य, विपरिणम्यते । भिद्यत अनेनेति भेदः= भेदकधर्मः । **अयमर्थः-** आनन्दमयः= तच्छब्दवाच्यः, इतरः= जीवः, न । आनन्दमये= तत्प्रकरणे 'ते ये शतं प्रजापतेरानन्दाः' इत्यादौ **भेदव्यपदेशाच्च= भेदस्य=** विरिञ्चादेः परिमिताऽनन्दवत्वरूपस्य भेदकधर्मस्य, ब्रह्मणस्तु- अपरिमिताऽनन्दवत्वनिकृष्टोत्कृष्टजीववृत्तित्व-जीवगुणविधुरत्वसाकल्यतोनिर्वचनानर्हत्वादिरूपस्य भेदकधर्मस्य च, व्यपदेशाच्च इति । अत एव भेदोऽपि सिद्ध इति भावः ॥ पक्षसाध्यांशयोः स्पष्टत्वात् हेत्वंशं व्याचक्षते- **ते ये शतमित्यादिना ॥ इत्यादि भेदेति ॥** इत्यादिना भेदकधर्मव्यपेदशादित्यर्थः । अस्य भाष्यस्य 'न विरिञ्चादिरुच्यते' इति **पूर्वसूत्रभाष्येण अन्वयः** । आदिना 'यतो वाचो निवर्तन्ते' (तै. २.४.१) इत्यादेः परिग्रहः ॥

(३०) **ते ये शतमिति** ॥ (तै. २.९) **प्रजापतेः=** रुद्रस्य, **ये शतं=** शतगुणिताः **आनन्दाः**, **ते ब्रह्मणः=** चतुर्मुखस्य **एक आनन्दः** इत्यर्थः ॥ **अदृश्ये इति** ॥ (तै.उ. २.७) **अदृश्ये=** साकल्येन अज्ञेये, **अनात्म्ये=** आत्मन इमे आत्म्याः 'तद्धिताः' इति बहुवचनेन ऊह्यमानः ष्यञ् इदमर्थे । छान्दसत्वात् टिलोपः । जीवगुणाः यस्मिन् न विद्यन्ते, तस्मिन्, जीवगुणविधुरे, स्वामिरहिते वा, **अनिरुक्ते=** साकल्येन निर्वचनागोचरे **अनिलयने=** अनन्याश्रये **अभयं** यथा **भवति** तथा **प्रतिष्ठां=** ध्यानरूपां स्थितिं **विन्दते** यः, **सः=** उपासकः, **अभयं** भयरहितं भगवन्तं **गतो भवतीत्यर्थः** ॥ **स यश्चायमिति** ॥ (तै. २.९) **पुरुषे=** पुरुषोपलक्षितापकृष्टजीवे **यः अयं** आनन्दमयोऽस्ति **स आदित्ये=** आदित्योपलक्षितोत्तमजीवेषु योऽसौ आनन्दमयोऽस्ति, **स च एकः** अभेदवानित्यर्थः ॥

(सर्वान्तर्यामित्वादभेदव्यपदेशः)

**(३१) न च 'तत्त्वमसि' (छा.उ. ६–८) 'अहं ब्रह्मास्मि' (बृ.उ.३–४–१०) इत्यादिश्रुतिविरोधः ।**

(३१) भेदाङ्गीकारे ऐक्यश्रुतिविरोधं शङ्कन्ते- **न च तत्त्वमसीति ॥** एवमिति शेषः, भेदस्वीकारे इति तदर्थः । इत्यादीत्यादिना 'सर्वं खल्विदं ब्रह्म' (छा. ३.१४.१) 'आत्मा वा इदं॒ सर्वम्' 'पुरुष एवेद॒ं सर्वम्' (तै.आ. ३.१२.१३) 'तद्योहं सोऽसौ योऽसौ सोऽहम्' (ऐ.आ. २.२.४) 'योऽसावसौ पुरुषः सोऽहमस्मि' (ई.उ. १६) इत्यादीनाम् ऐक्यबोधकत्वेन पराङ्गीकृतानां श्रुतीनाम्, 'एवं धर्मान् पृथक् पश्यन्' (का. २.१.१४) 'एतस्मिन् उदरमन्तरं कुरुते- अथ तस्य भयं भवति' (तै.उ. २.७) इत्यादीनां भेदज्ञानस्य मिथ्याज्ञानत्वप्रतिपादकत्वेन पराङ्गीकृतश्रुतीनां च, सङ्ग्रहः । इत्यादिना श्रुतिविरोध इति विग्रहः ॥

(३१) तत्त्वमसीति ॥ (छा. ६.८) पूर्वपक्षिमते- हे श्वेतकेतो त्वं तत् ब्रह्म असि इत्यर्थः ॥ **अहं ब्रह्मेति** ॥ (बृ. ३.४.१०) **अहं ब्रह्म अस्मि**= ब्रह्माभिन्नोऽस्मि । वामदेववाक्यमेतत् । अयमर्थः पूर्वपक्षे । **सिद्धान्ते तु**- 'सर्वान्तर्यामिक' इत्यादिना भाष्यकारेणैव वक्ष्यते । पदसमन्वयप्रकारस्तु अन्यत्र बोध्यः ॥

**(३२) 'नामानि सर्वाणि यमाविशन्ति' इति (भाल्लवेयश्रुतिः) तत्तच्छब्द-वाच्यत्वोक्तेः ।**

**(३३) 'इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवः'(भागवते) ॥ (१.५.१०)**

**(३४) 'असर्वः सर्वः' इव इत्यपि (तुरश्रुतिः) ॥**

(३२-३४) तत्र विरोधो द्विधा- तत्प्रतिपादितैक्य-विरुद्धभेदप्रतिपादनम्, भेददृष्टेः मिथ्याज्ञानत्वेन तद्बोधितभेदज्ञानस्य तत्वज्ञानत्वबोधनं चेति । तत्र आद्यविरोधपरिहारार्थम् आहुः- **नामानीत्यादिना ॥ तत्तच्छब्देति ॥** इदं पदसमन्वयाभिप्रायेण उक्तम् । तत्स्वामिकत्वेन तद्व्यपदेश इति 'तत्त्वमसि' इत्यादिश्रुत्याशय इति स्मृत्या, श्रुत्या च, दर्शयन्ति- **इदं हीत्यादि ॥ असर्व इति ॥** 'असर्वः सर्व इव' इति वक्ष्यमाणश्रुतिरपीत्यर्थः । अपिना इदं हीति वचनपरिग्रहः । एकार्थकमिति शेषः । 'इदं हि' इति वचनम्, 'असर्व' इति वचनं च एकार्थकमित्यर्थः । यद्वा- यतो अत इति शेषः। यतः 'इदं हि' इति वचनम्, 'असर्व' इति वचनं चास्ति, अतो न विरोध इत्यन्वयः ॥

**नामानीति** ॥ (व्याख्याता श्रुतिः - पृ. ४३)

(३३) **इदं हीति** ॥ **(भाग. १.५.२०) जगत्स्थाननिरोधसम्भवः**= जगतः स्थानं= स्थितिः, निरोधः= नाशः, सम्भवः= उत्पत्तिः, यस्मात् स इति व्यधिकरणबहुव्रीहिः । जगदुत्पत्यादिकर्तेति यावत् । इवशब्द उपचारेण इत्यर्थे । अयमर्थः- **यतः** कारणात्, **भगवान्**= विष्णुः, **जगत्स्थाननिरोधसम्भवः**, अतः **इदं विश्वम्, इतरः**= वस्तुतः भिन्नः, **भगवानिव**, उपचारेण भगवदभिन्न उच्यते । 'तत्त्वमसि' इत्यादौ व्यवह्रियते **हि**(प्रसिद्धम्)इति ॥ एवं 'असर्वः सर्व इव' इत्यत्राप्यर्थो बोध्य इति **भावदीपे** ॥ **भाष्यदीपिकायां तु**- यतो भगवान् स्वयम् इतरोऽपि= जगद्भिन्नोऽपि इदं विश्वमिव= प्रमितप्रपञ्च इव, उच्यते= तत्त्वमसीत्यादौ प्रतिपाद्यत इत्युक्तम् । तत्त्वमसीत्यादौ ब्रह्मणि प्रपञ्चव्यवहारस्य साक्षादकृतत्वेऽपि तुल्यन्यायेन तादृशव्यवहारो बोध्यः ॥

इदं विश्वं भगवानिव भगवान् यथोच्यते तथा इदमुच्यत इत्यर्थाङ्गीकारे तु- तत्त्वमसीत्यादौ जीवे भगवद्गुणादिमत्तया भगवत्सदृशव्यवहारस्य अभावात् अर्थासङ्गतिरिति ज्ञेयम् ॥

(३४) **असर्वः सर्व इवेति** ॥ तुरश्रुतिरियम् । **असर्वोऽपि सर्व इव ईयते** तत्त्वमसीत्यादौ ज्ञायते, **आत्मैव सन्**= सर्वस्वाम्येव सन्, **अनात्मेव**= स्वामिभिन्न इव **ईयते**= रामकृष्णादिरूपेषु ज्ञायते, **प्रत्यङेव सन्**= देहान्तर्गतोऽपि सन् **पराङिव**= देहबहिर्मात्रगत इव **ईयते, एक एव बहुधा ईयते । सः**= भगवान् **पुरुषः**= पूर्णषड्गुणत्वात् पुरुषसूक्तगतपुरुषशब्दवाच्यः, **स ईश्वरः**= सर्वसामर्थ्यवान्, **स ब्रह्म**= गुणपूर्णत्वात्, 'सर्वं खल्विदं ब्रह्म' इत्यादिश्रुतिस्थब्रह्मशब्दवाच्य इत्यर्थः । अत्र ईयत इत्यस्य द्विर्ग्रहणेन सर्वत्रान्वयः । अत्र विष्णोः स्वामित्वोक्त्या तत्स्वामिकत्वाद्धेतोः तद्व्यपदेश इति भावः ॥

**(३५) 'विद्याऽऽत्मनि भिदाबोधः' (भागवते, ११.१९.४९) ॥**

**(३६) 'भेददृष्ट्याभिमानेन निस्सङ्गेनापि कर्मणा'(भागवते, ३.२३.१२) ।**

**(३७) 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' (मु.उ.३-१-२)।**

**(३८) 'असर्वः सर्व इवात्मैव सन्ननात्मेव प्रत्यङ्पराङिवैक ईयते बहुधेयते स पुरुषः, स ईश्वरः, स ब्रह्म' ।**

**(३९) 'सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते ।**
**एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः ॥'**

**(४०) 'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह' (मोक्षधर्मे) इत्यादेश्च ।**

**(४१) उक्ता च प्राप्तिः । 'ब्रह्मैव सन्' (बृ.उ.६–४) इत्यपि जीव एव ब्रह्मशब्दः । उपपद्यते च विरोधे । प्रमादात्मकत्वाद् बन्धस्य विमुक्तत्वं च युज्यते ।**

(३९-४१) द्वितीयविरोधपरिहाराय मानमाहुः- **विद्यात्मनीत्यादिना वीतशोक इत्यन्तेन** ॥ 'सिंहावलोक'न्यायेन आद्यविरोधपरिहारार्थं मानमाहुः- **असर्व इत्यादि** ॥ इयं श्रुतिः पूर्वम्-स्वामित्वेन ऐक्यव्यपदेश इति ऐक्यश्रुतितात्पर्यमित्यत्र मानत्वेन उपन्यस्ता, इदानीं तु- अन्तर्यामित्वेन ऐक्यव्यपदेश इत्यत्र मानत्वेन उपन्यस्यते । उभयथाऽपि सम्भवादिति भावः । 'नैतदिच्छन्ति' इति वचनं तु विशिष्टैक्याभिप्रायेण अद्वैतश्रुतिप्रवृत्तिमाह । विशिष्टैक्यं च उत्तमैक्यमिति **भावदीपे** ॥ **इत्यादेरिति** ॥ न विरोध इति पूर्वेणान्वयः ।

एवं च- तत्तच्छब्दवाच्यत्व-तदन्तर्यामित्व-तत्स्वामित्वविशिष्टत्वैरेव धर्मैः अद्वैतश्रुतिप्रवृत्तिरिति भेदाङ्गीकारे न तद्विरोध इति भावः । एवं- तत्सदृशोऽसि, अतदसि, इत्याद्यर्थोऽपि अन्यत्रोक्तोऽनुसन्धेयः । 'एवं धर्मान् पृथक् पश्यन्' इत्यादिषु भगवद्रूपेषु, भगवद्गुणादिषु च, भेदज्ञानस्य मिथ्याज्ञानत्वं तात्पर्यतो वक्तीति न तद्विरोधः ॥

ननु अद्वैतश्रुत्यभावे कथम् अद्वैतं श्रुत्यादिना निषिध्यते । अद्वैतस्य प्रमाणान्तराप्राप्तत्वात्, अप्राप्तस्य निषेधायोगात्, अत आहुः- **उक्ता चेति** ॥ 'न च तत्त्वमसि, अहं ब्रह्मास्मि' इति भाष्येण अद्वैतनिषेधाय श्रुत्यर्थाऽपरिज्ञाननिमित्तकप्राप्तिः उक्तप्रायैवेत्यर्थः ॥

ननु एतासां श्रुतीनाम् अविरोधकत्वेऽपि 'ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुतिविरोधः स्यादेव । ब्रह्मैवेति एवकारेण अब्रह्मतानिषेधेन तदधीनत्वादिना तद्व्यपदेशस्य पूर्वोक्तस्य वक्तुमशक्यत्वात् । न च तत्तच्छब्दवाच्यत्वेन निर्वाहः । पदसमन्वयपक्षे तत्सम्भवेऽपि, तदितरपक्षे तत्समाधानायोगात्, अत आहुः- **ब्रह्मैवेति** ॥ **इत्यत्रापि**= इत्यत्र तु, **ब्रह्मशब्दः जीवे एव** वर्तते । **जीवः**= जीववाचीति वा अर्थः । यद्वा- इत्यत्र **ब्रह्मशब्दोऽपि**= ब्रह्मशब्दस्तु, **जीव एव** इत्यर्थः 'ब्रह्माणि जीवाः सर्वेऽपि' इति श्रुत्या जीवभावम् अविहायैव ब्रह्म प्राप्नोतीत्यर्थोपपत्तेः न एतद्विरोध इति भावः ॥

नन्वेवमपि ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वात्, न जीवे ब्रह्मशब्दो युज्यत इत्यत आहुः- **उपपद्यते चेति** ॥ **ब्रह्मशब्दः**, जीवे इति वर्तते । अयमर्थः- **विरोधे**= स्वतः परब्रह्मभूतस्य ब्रह्मप्राप्तिरूपविरोधे सति, **ब्रह्मशब्दः जीवे**= अमुख्यार्थे जीवे, **उपपद्यते**= उपपन्नो भवति ॥

**ननु संसारिणामपि 'विमुक्तश्च विमुच्यते' (काठक.) इति मुक्तत्वश्रवणात्, तदन्यथाऽनुपपत्त्या जीवस्य परब्रह्मत्वं सिद्धम्, तद्विरोधो भेदवाक्यस्य इत्यत आहुः- प्रमादेति ॥ प्रमादः= अज्ञानम्, आत्मा= कारणम्, यस्य, तस्य भावः तस्मादित्यर्थः । तथा च बन्धस्य अस्वाभाविकत्वात् विमुक्तत्वं युज्यत इति भावः ॥**

**(३५) विद्यात्मनीति ॥ (भाग. ११.१९.४९) आत्मनि**= परमात्मनि, **भिदाबोधः**= भेदज्ञानम्, जीवप्रतियोगिक-भगवदनुयोगिकभेदज्ञानम् ईश्वरप्रतियोगिक-जीवानुयोगिकभेदज्ञानं च, **विद्या** इत्युच्यत इत्यर्थः ॥

**(३६) भेददृष्ट्येति ॥ (भाग. ३.२३.१२)** अस्य पूर्ववाक्यम्-

'आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः ।
योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः ॥' इति ।

**अयमर्थः**- यः **स्थिरचराणां**= स्थावरजङ्गमानाम्, **आद्यः**= आदौ भूतः **वेदगर्भः**= हिरण्यगर्भः, **सहर्षिभिः**= मनुष्योत्तमादिशेषान्तैः ज्ञानिभिः, **सिद्धैः**= साधनसामग्रीमद्भिः, **योगेश्वरैः**, **कुमाराद्यैः**= सनत्कुमारादिभिः, **योगप्रवर्तकैः**= योगाचार्यैश्च सह, **भेददृष्ट्या**= जीवेश्वरादिभेदज्ञानेन, **अभिमानेन**= भगवति पूर्णज्ञानेन, **निस्सङ्गेन**= निष्कामेन, **कर्मणाऽपि**= मुक्तिं प्राप्तः सन् 'यथापूर्वं प्रजायते' इत्युत्तरवाक्येन सम्बन्धः । इति ॥ प्रजननं च पूर्ववत् मुक्ताधिपत्यमेवेति बोध्यम् । अर्थान्तरं **कर्मनिर्णयटीकायां** द्रष्टव्यम् ॥

**(३७-३८) जुष्टमिति ॥ (मु.उ. ३.१.२) अयमर्थः- यदा** अधिकारी, **जुष्टं**= सर्वसेव्यम्, **ईशं**= स्वतन्त्रं विष्णुम्, **अन्यं पश्यति**= जीवात् अन्यमेव जानाति, **अस्य**= विष्णोः **महिमानं**= 'तदेतत्सत्यम्' (अ. ३.१) इत्याद्युक्तमाहात्म्यं च **पश्यति**= तदा- **वीतशोकः**= मुक्तः भवतीति ॥ अस्याः श्रुतेः- **'अन्यं**= रुद्रादन्यम् **ईशं**= विष्णुम्' इत्यर्थो वक्ष्यते- 'द्युभ्वादि'नये (१.३.१) इत्यपि ज्ञेयम् ॥ **असर्वः सर्व इति ॥** अत्रत्य'आत्म'पदम् अन्तर्यामिपरमत्र पक्षे । शिष्टं व्याख्यातम् ॥

**(३९) सर्वान्तर्यामिक इति ॥** यतः- **विष्णुः सर्वान्तर्यामिकः**= सर्वस्य अन्तः स्थित्वा नियामकः, अतः- **एषोऽहम्, त्वमसौ चेति- सर्वनाम्ना** 'एष आत्मेति होवाच' (छा. ६.३.४) 'सोहमस्मि' (ई. १७) 'तत्त्वमसि' (छा. ६.८) 'योऽसावसौ' (ई. १६) इत्यादिवाक्यस्थसर्ववाचकसर्वनामसञ्ज्ञकशब्देन, सर्वशब्देन च अभिधीयते= एष आत्मा इत्यादौ प्रतिपाद्यते । **सर्वस्वरूपतस्तु**= सर्वात्मकत्वात्तु नाभिधीयत इत्यर्थः ॥

(४०) **नैतदिति** ।। अस्य पूर्ववाक्यं तु- 'बहवः पुरुषाः ब्रह्मन्नुताहो एक एव तु ।' इति ।।

उत्तरवाक्यं तु- 'बहूनां पुरुषाणां हि यथैका योनिरुच्यते । तथा तं पुरुषं विश्वम् आख्यास्यामि गुणाधिकम् ।।' इति ।

**विशिष्टस्य** अयमर्थः- हे ब्रह्मन् वैशम्पायन! पुरुषाः= चेतनाः, बहवः= बहुसङ्ख्याकाः प्रतिपत्तव्याः ? उत एक एव चेतन इति प्रतिपत्तव्यः ? इति शङ्का । द्वैतपक्ष आश्रयणीयः ? अथवा अद्वैतपक्षः ? इति तात्पर्यम् । उत्तरमाह- **नैतदिति** ।। **हे कुरुकुलोद्वह**= जनमेजय ! ज्ञानिनः, **एकमेव पुरुषं** वेदाः वदन्तीति, **नेच्छन्ति** । **एतत्**=एतस्मिन् जगति **एकं पुरुषं**= चेतनं **नेच्छन्ति** इति वा । किन्तु बहवः सन्तीति इच्छन्ति= बहव इति वदन्ति । यथा=येन प्रकारेण, बहूनां पुरुषाणां=चेतनानाम्, योनिः=कारणभूता, एका= मुख्या, उच्यते श्रुत्यादौ तथा= तेन प्रकारेण तं विश्वं पूर्णं गुणाधिकं पुरुषम् आख्यास्यामि ।। इति ।।

(४१) **ब्रह्मैव सन्निति** ।। (बृ.उ. ६.४.६) **सः**= मुक्तजीवः, **ब्रह्मैव सन्**= जीवभावमविहायैव, प्रलये परब्रह्म प्राप्नोतीत्यर्थः ।।

## (४२) 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' इति हि भागवते (२.१०.६) ।। १७ ।।

(४२) **बन्धस्य अस्वाभाविकत्वे मानमाहुः- मुक्तिरिति ।। भागवत इति ।।** भागवते इत्युक्तेः **प्रमादात्मकत्वादित्यन्वयः ।। १७ ।।**

(४२) **मुक्तिर्हित्वेति** ।। (भाग. २.१०.६) **अन्यथारूपम्**= अस्वाभाविकं रूपम्, **हित्वा**= त्यक्त्वा **स्वरूपेण व्यवस्थितिरेव मुक्तिः** । चिदानन्दात्मकेन निजस्वरूपेण अवस्थानमेव मुक्तिरित्युच्यत इत्यर्थः ।। १७ ।।

## (४३) न च तत्तदनुमानविरोधः ।। १७ ।।

(४३) **ननु** श्रुतिविरोधाभावेऽपि **'विमतानि शरीराणि मद्भोगायतनानि, शरीरत्वात् मच्छरीरवत्, स मदभिन्नः मद्भोगायतनशरीरावच्छिन्नत्वात्, मद्वत्'** इत्याद्यनुमानविरोधस्तु **भविष्यति ।**

**न च उक्तानुमानेन जीवानां मिथोऽभेदसिद्धावपि ब्रह्माभेदः कथं सिद्ध्यतीति वाच्यम्- जीवानामैक्यं विशिष्टे बाधितमिति स्वरूपे वाच्यम्, स्वरूपे च अभेदसिद्धौ निरुपाधिकजीवस्वरूपस्यैव ब्रह्मत्वेन ब्रह्मैक्यसिद्धेः इत्याशङ्कन्ते- न चेति ।। भेदे इति शेषः । तत्र हेतुतया सूत्रं पठन्ति ।**

(जीवेशभेदेऽनुमानविरोधोऽकिञ्चित्करः)

## (४४) ॥ ॐ कामाच्च नानुमानापेक्षा ॐ ॥ १८ ॥

(४४) **ॐ कामाच्चेति ॥** शास्त्रयोनि, भेदेति वर्तते । काम्यत इति कामः । भावप्रधानो निर्देशः, **तस्मात्**= इच्छानुसारित्वात् इति यावत् । **चो** हेतौ । **विरोध** इति शेषः । **यथायथम्** आवृत्तिविपरिणामौ ॥ अयमर्थः- **च**= यतः, शास्त्रयोनौ शास्त्रैकसमधिगम्ये विषये, **अनुमानापेक्षा**= शास्त्राननुगृहीतानुमानसाहाय्यं **न**, **कामात्**= अनुमानानाम् इच्छानुसारित्वात् । अतो **भेदे**= जीवेश्वरभेदविषये, **विरोधः**= अनुमानविरोधः न इति ॥

## (४५) यथाकामं ह्यनुमातुं शक्यते । अतो न तत्वे पृथगनुमानमपेक्ष्यते ।

(४५) सूत्रतात्पर्यार्थमाहुः- **यथाकाममिति ॥** **हि**= यतः **यथाकामम् अनुमातुं** शक्यते, **अतः तत्वे**= अदृष्टेऽर्थे **पृथगनुमानं**= श्रुत्यननुगृहीतानुमानम्, **नापेक्ष्यते**= नापेक्षितम् । तस्मात् इति शेषः । तस्मात् तत्तदनुमानविरोधो नेत्यन्वयः ॥

## (४६) उक्तं च स्कान्दे –

**'यथाकामाऽनुमा यस्मात्तस्मात्साऽनपगा श्रुतेः ।**
**पूर्वापराविरोधाय चेष्यते नान्यथा क्वचित् ॥' इति ॥**

## (४७) 'नैषा तर्केण मतिरापनेया' इति (कठ.उ.२–९) च ॥ १८ ॥

(४६) अत्र स्मृतिमाहुः- **उक्तं च स्कान्दे- यथेति ॥ इतीति ॥** इत्यत्रेत्यर्थः, स्कान्दे इत्यनेनान्वयः । ईश्वरे तर्कप्रवृत्तिर्नेति श्रुत्याऽऽहुः- **नैषेति ॥ इति चेति ॥** इत्यत्र चेत्यर्थः, उक्तमित्यावर्तते । उक्तं प्रमेयम्, स्कान्दे इत्यत्र च **उक्तम्** इत्यर्थः ॥ १८ ॥

(४६) **यथाकामेति ॥** यथाकामेत्यव्ययीभावः, स्त्रीत्वम् आर्षम् । अपगच्छतीत्यपगा, न अपगा= अनपगा इति विग्रहः । अयमर्थः- **यस्माद् अनुमा**= पृथगनुमानम्, **यथाकामा**= इच्छानुसारिणी, **तस्मात् श्रुतेः अनपगा** = श्रुत्यनुकूला अनुमा, **पूर्वापराविरोधाय** = श्रुत्यादिपूर्वोत्तरवाक्यविरोधपरिहारार्थम् इष्यते । **क्वचित्**= किञ्चिदनुमानम् **अन्यथा न चेत्**= उक्तगुणकं न चेद् अतीन्द्रियार्थनिश्चयाय नेष्यत इति ॥ **नैषेति** ॥ (का. २.९) आ अप, नेया इति पदत्रयम् । **एषा**= ब्रह्मविषयिणी मतिः, **तर्केण**= शुष्कतर्केण, **आनेया**= उत्पाद्या **अपनेया**= निराकार्या च न भवतीत्यर्थः ॥ १८ ॥

(ब्रह्मणा सह जीवस्य भोगोक्तेर्मुक्तावप्यनुवर्तते भेदः)

**(४८) ॥ ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ ॥ १९ ॥**

**अस्य जीवस्य । युक्तिसमुच्चये चशब्दः ।**

**(४९) 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ।' (तै.उ.)**

**'अनिलयनेऽभयं प्रतिष्ठां विन्दते' (तै. २.७)**

**'एतमानन्दमयमात्मानमुपसङ्क्रामति' (तै. २.८)**

(४८-४९) ननूक्तभेदः सांसारिकोऽस्तु- मुक्तौ तु अभेद एव इत्याशङ्कावारणाय सूत्रम्- ॐ **अस्मिन्नस्य चेति ॥** तु, भेदः, इति वर्तते । श्रुतिरिति शेषः । चः युक्तिसमुच्चये । **अयमर्थः- अस्मिन्** प्रकरणे (तै.उ. २.३वल्याम्) **अस्य=** नेतर इति प्रसक्तस्य **जीवस्य तद्योगं=** तेन= आनन्दमयादिना, योगं= मुक्तिकालिकं सम्बन्धम्, श्रुतिः= भाष्योक्ता 'सोऽश्नुते सर्वान् कामान्' इत्यादिश्रुतिः, **शास्ति=** (वक्ति) **च**, तस्माद्भेद एव इति ॥

यद्वा- चो हेतौ, तत्तु इति वर्तते । च= शासनाद्धेतोः आनन्दमयः नेतरः= न जीवः, अपि च आनन्दमयः नेतरः= न कोशः । किन्तु- तत्तु= ब्रह्मैव, यतः **अस्मिन्=** वल्लीत्रये, **अस्य=** जीवस्य 'एतमन्नमयमात्मानमुपसङ्क्रामति' इत्यादिना, 'एतमन्नमयमात्मानमुपसङ्क्रम्य' इत्यदिना च, **तद्योगं=** तेन अन्नमयादिना, योगं= फलभूतं सम्बन्धं श्रुतिः **शास्ति=** बोधयतीत्यर्थः ।

एतेन (मुक्तौ जीवानाम् अन्नमयादिना सम्बन्धकथनेन अभेदाभावकथनेन) 'भेदव्यपदेशाच्च' (१.१.१७) इत्यत्र भेदशब्दस्य भेदकधर्मपरत्वेन मुक्तिकालिकतद्योगस्यापि भेदकधर्मत्वेन तेनैव सूत्रेण मुक्तावपि भेदसिद्ध्या इदं सूत्रं किमर्थमिति शङ्का परास्ता ॥ सौत्रास्येत्यनूद्य अर्थमाहुः- **अस्य जीवस्येति ॥** अस्य इत्यनुवादः- जीवस्येति तदर्थः । योगशासनश्रुतिमाहुः- **सोऽश्नुत इत्यादि ॥ इत्यादीति ॥** इत्यादिवाक्यं तद्योगं शास्तीति सौत्रेणान्वयः ॥ १९ ॥

॥ इत्यानन्दमयाधिकरणम् ॥ ६ ॥

(४९) सोऽश्नुत इति ॥ (तै. २.१) सः= ब्रह्मज्ञानी **विपश्चिता=** सर्वज्ञेन **ब्रह्मणा=** ज्ञातेनैव परब्रह्मणा, चतुर्मुखेन च **सह, सर्वान् कामान्=** स्वोचितसर्वकामान् **अश्नुते=** मुक्तौ प्राप्नोतीत्यर्थः ॥ **अनिलयने इति** ॥ (तै. २.७) **एतमानन्दमयमिति** ॥ (तै. २.७) **एतमानन्दमयं=** पूर्णानन्दं परमात्मानम् उपसङ्क्रामतीत्यर्थः ॥ १९ ॥

॥ इत्यानन्दमयाधिकरणम् ॥ ६ ॥

## ७ अन्तःस्थत्वाधिकरणम्

**(अन्तःस्थत्वलिङ्गसमन्वयः)**

**(१) 'अदृश्येऽनात्म्ये' इत्युक्तम् । तस्मादृश्यत्वम् 'अन्तः प्रविष्टं कर्तारमेतम् । अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः' (तै.आ. ३–११) इत्यन्तःस्थस्य कस्यचिदुच्यते ।**

(१) अत्र नये= अन्यत्र प्रसिद्धेन्द्राद्यनेकनाम्नां हरौ समन्वयसिद्ध्यर्थम् अन्तःस्थत्वलिङ्ग-समन्वयसमर्थनम् ॥ **अदृश्येऽनात्म्ये इत्युक्तमिति ॥** पूर्वाधिकरणे 'भेदव्यपदेशाच्च' (१.१.१७) इति सूत्रे 'अदृश्ये' इत्यनेन यद् अदृश्यत्वमुक्तमित्यर्थः । अनेन- श्रुत्या, आनन्दमयनयेन च, सङ्गतिर्दर्शिता ॥ संशायकश्रुतिमाहुः- **अन्तःप्रविष्टमित्यादि ॥ इत्यन्तःस्थस्येति ॥** इत्यनेन अन्तः-स्थस्य कस्यचिदुच्यत इत्यन्वयः । अनेन अन्तःस्थः विष्णुः ? अन्यो वा ? इति संशयो दर्शितः । अदृश्यत्वोक्तिः, इन्द्रादिश्रुतिश्च, सन्देहबीजमिति बोध्यम् ॥

(१) **अदृश्ये इति ॥** व्याख्यातम् । **अन्तः प्रविष्टमिति ॥** (तै.आ. ३.११.२४) **अन्तः**= हृदयगुहायां **प्रविष्टम्, कर्तारं**= जगत्कर्तारं **चन्द्रमसि अन्तः, मनसा**= स्वेच्छया, **चरन्तं सहैव सन्तं**= स्थितम्, **एतम्, देवाः** = तत्त्वाभिमानिनः देवाः, **न विजानन्ति**= कात्स्र्न्येन न विजानन्तीत्यर्थः **सिद्धान्ते** ॥ (पूर्वपक्षेऽपि अयमेवार्थः, परन्तु अन्यपरा इयम्)

**स च 'इन्द्रो राजा' (तै.आ.३-११-६) (२-३) 'सप्त युञ्जन्ति' (तै.आ.३-१-८) इत्यादिभिरन्यः प्रतीयते । तस्मात्स एवानन्दमय इति न मन्तव्यम् ।**

(२) पूर्वपक्षमाहुः- **स चेति ॥** अनेन अन्तःस्थो विषयः, इत्यपि सूचितम् ॥ पूर्वपक्षसाधकमाहुः- **इन्द्रो राजेत्यादि ॥ इत्यादिभिरिति ॥** प्रतीयत इत्यत्रान्वेति ॥ **अन्य इति ॥** इन्द्राद्यन्यतम इत्यर्थः। **तस्मादिति ॥** अन्तःप्रविष्टाभिन्नादृश्यस्य विष्ण्वन्यत्वादित्यर्थः । **स एव**= **अन्य एव** । **आनन्दमयः**= आनन्दमयशब्दवाच्यः । सिद्धान्तमाहुः- **न मन्तव्यमिति ॥**

(२) **इन्द्रो राजेति ॥** (तै.आ. ३.११.२५) 'इन्द्रो राजा जगतो य ईशे । सप्तहोता सप्तधा विक्लृप्तः' इति पठ्यते । अयमर्थः- **यः इन्द्रः, जगतः ईशे**= नियमयति यतः, अतः जगतो राजा । सप्त होता= सप्तबुद्धीन्द्रियाणि विषयेषु जीवेन जुहोतीति । तथा विषयान् इन्द्रियैः सह जुहोतीति वा इति । **सप्तधा विक्लृप्तः**= तत्तदिन्द्रियनियामकसप्तरूपी अभवत् इति ॥

(३) **सप्तयुञ्जन्तीति ॥ (तै.आ. ३.११.८)** 'एकोऽश्वो वहति सप्तनामा । त्रिणाभिचक्रमजरमनर्वम् । येनेमा विश्वा भुवनानि तस्थुः' (तै.आ. ३.११.९) इति वाक्यम् । अस्यार्थः- **सप्त**= गायत्र्यादीनि सप्तच्छन्दांसि अश्वरूपाणि, एकचक्ररथं सूर्यरथं प्रति **युञ्जन्ति**= स्वात्मानं योजयन्ति । रथे नियुक्तानि भवन्तीति भावः । **एकः**= सप्तसु मध्ये प्रधानोऽश्वः **सप्तनामा**= सप्तच्छन्दो नाम **वहति**= प्राप्नोति (नामा इत्यत्र दीर्घः छान्दसः) सप्तच्छन्दोऽभिमान्यपेक्षया, पृथक् वेदाभिमानी सप्तच्छन्दोनामा कश्चन वेदः, सः सूर्याश्वेषु प्रधान इति तात्पर्यम् । सूर्यरथचक्रस्य स्वरूपमाह- **त्रिणाभीति ॥** त्रिरावृत्त-मासचतुष्टयात्मक-नाभित्रयोपेतम् । अजरं= सदा दृढम् । अनर्वम्= समीपे अश्वरहितम्, चक्रं सूर्यरथस्यास्ति । येन= यत्र चक्रे इमा= इमानि, विश्वा= सर्वाणि भुवनानि तस्थुः= स्थितानि इत्यर्थः ॥ सूर्यरथचक्रस्य तदश्वानां च मिथो दूरस्थत्वं युक्तमेव । चक्रस्य मानसोत्तरगिरिशिखरवर्तित्वात् । अश्वानां च मेरुमानसोत्तर-मध्याकाशगतत्वादिति बोध्यम् ॥

आदिना-(१) 'अपां नेतारं भुवनस्य गोपाम्' (तै.आ. ३.११.२७),(२) 'त्वष्टारं रूपाणि विकुर्वन्तं विपश्चिम्'(तै.आ.३.११.२१),(३) 'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिम् । चतुर्होतारं प्रदिशोऽनुक्लृप्तं वाचो वीर्यं तपसान्वविन्दत् ॥' (तै.आ. ३.११.२१) इत्यादि गृह्यते ॥

(१) अपामित्यस्यायमर्थः- भुवनस्य= सकलप्राणिवर्गस्य, गोपां= रक्षितारम्, अपां नेतारं= अधिपतिं वरुणम् इति । अयं च पूर्वपक्षरीत्या । **सिद्धान्ते तु**- नेतारं= परमात्मानमित्यर्थः । शिष्टं समानम् । गुपेः विचि, आयाभावे, लघूपधगुणे षष्ठीबहुवचने 'गोपाम्' इति भवति ।

(२) त्वष्टारमित्यस्यायमर्थः- रूपाणि= नामरूपात्मकप्रपञ्चजातानि, विकुर्वन्तं= विशेषेण उत्पाद-यन्तम्, विपश्चिं= सर्वज्ञं, त्वष्टारं= तन्नामकदेवम् इति । अस्य- 'अमृतस्य प्राणम्' इत्युत्तरवाक्येन अन्वयः। अयं च पूर्वपक्षे । **सिद्धान्ते तु**- त्वष्टारं= परमात्मानम् इत्यर्थः । शिष्टं समानम् ॥

(३) ब्रह्मेन्द्रमित्यादेरयमर्थः- जगतः प्रतिष्ठां= आश्रयम्, चतुर्होतारं= अन्तःकरणचतुष्टये विषयहोतारं, प्रदिशः अनुक्लृप्तं= व्यवस्थितं, वाचः= वेदस्य, वीर्यं= सारं मुख्यार्थम्, इन्द्रम् अग्निम्, दिवः= देव्याः, आत्मानं=स्वामिनं, वायुं सवितारं, बृहस्पतिं, ब्रह्मा= चतुर्मुखः तपसा अन्वविन्दत्= लब्धवान् इति ॥

**पूर्वपक्षे**- इन्द्रो राजा इत्यादीनाम् आपाततः प्रतीयमान एवार्थः । **सिद्धान्ते तु**- इन्द्रादिपदानां परममुख्यवृत्त्या परमात्मपरत्वेन विष्णुविषयकत्वं बोध्यम् ॥

**(हृदयान्तः श्रुतं ब्रह्मैव न इन्द्रादिः)**

## (४) ॥ ॐ अन्तस्तद्धर्मोपदेशात् ॐ ॥ २० ॥

(४) अत्र हेतुतया सूत्रं पठन्ति- **ॐ अन्तस्तद्धर्मेति** ॥ तत्तु इति वर्तते । **अयमर्थः- अन्तः** 'अन्तः प्रविष्टं कर्तारमेतम्' इति श्रुतौ, 'अन्तश्चन्द्रमसि' इत्यादिश्रुतौ च, हृदि, चन्द्रादिषु च, अन्तस्थत्वेन श्रूयमाणम्, तत्तु= विष्णुरेव । तद्धर्मोपदेशात्= तस्य= विष्णोः, धर्मस्य= असाधारण-धर्मभूतसमुद्रस्थत्व-ब्रह्माण्डवीर्यत्वादेः, उपदेशात्= 'समुद्रेऽन्तः कवयः' इत्यादिना उक्तत्वादिति ॥

**(५) अन्तः श्रूयमाणो विष्णुरेव । 'अन्तःसमुद्रे मनसा चरन्तम् । ब्रह्मान्वविन्दद् दशहोतारमर्णे' (तै.आ.३-११-१) ।**

(५) सूत्रार्थमाहुः- **अन्तः श्रूयमाण इति** ॥ अन्तःस्थत्वेन श्रुत्या प्रतिपादित इत्यर्थः । सूत्रसूचितश्रुतीराह- **अन्तः समुद्रे इत्यादि** ॥

(५) अन्तः समुद्रे इति ॥ (तै.आ. ३.११.१) **ब्रह्मा**= वर्तमानः चतुर्मुखः **समुद्रे**= प्रलयाब्धौ, क्षीराब्धौ च, **अन्तरर्णे**= जले, क्षीरे च, **मनसा**= स्वेच्छया, **सञ्चरन्तं**, **दशहोतारं**= दशेन्द्रियेषु विषय-होतारं विषयस्थापकं दशेन्द्रियाणि विषयेषु होतारं= प्रेरयन्तं विष्णुम् **अन्वविन्दत्**= व्यजानादित्यर्थः ॥

**(६) 'समुद्रेऽन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः' (तै.आ. ३-११-११) । 'यस्याण्डकोशं शुष्ममाहुः' (तै.आ. ३-११-४) इत्यादि-तद्धर्मोपदेशात् । स हि क्षीरसमुद्रशायी । तस्य च वीर्यमण्डकोशः ।**

(६) आदिना 'य अण्डकोशे भुवनं बिभर्ति' (तै.आ. ३.११.२३) इत्यादेः परिग्रहः । इत्यादिना, इत्यादिषु वा, तद्धर्मव्यपदेश इति विग्रहः । यद्वा- इत्यादिपदेन श्रुत्युक्तधर्मपरिग्रहः । इत्यादयश्च ते धर्माश्च इति विग्रहः । धर्माश्च- समुद्रशायित्व-ब्रह्माण्डवीर्यत्व-लोकधारकत्वादयः । तेषाम् अन्तःस्थनिष्ठतया व्यपदेशादित्यर्थः । अस्य च न मन्तव्यम् इत्यत्रान्वयः ॥

अत्र समुद्रस्थत्वम्, क्षीरसमुद्रशायित्वम्, प्रलयार्णवशायित्वं च विवक्षितम्- तत्र आद्यं दर्शयन्ति- **स हीति** ॥ **सः**= विष्णुः, **क्षीरसमुद्रशायी हि**= प्रसिद्धः । **तस्य च**= विष्णोरेव ॥

(६) **समुद्रेऽन्त इति** ॥ (तै.आ. ३.११.११) **कवयः**= ज्ञानिनः, **समुद्रे**= प्रलयक्षीराब्ध्योः **अन्तः** स्थितं **विचक्षते**= जानन्ति **वेधसः**= भूतवर्तमानभविष्यद्ब्रह्माणः **मरीचीनां**= जीवानां **पदं**= आश्रयं

विष्णुम् **इच्छन्ति**= प्रार्थयन्तीत्यर्थः । **यस्येति** ॥ (तै.आ. ३.११.४) **कवयः**, **अण्डकोशं**= ब्रह्माण्डाख्यस्थानम्, यस्य विष्णोः **शुष्मं**= वीर्यम्, तदुपादानकमाहुरित्यर्थः ॥

**(७) 'सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।**
**अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥**
**तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।**
**यस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥**
**आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।**
**अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥' इति व्यासस्मृतेः ।**

(७) द्वितीयस्य प्रलयार्णवशायित्वस्य, ब्रह्माण्डवीर्यत्वादेश्च विष्णुधर्मत्वे मानमाहुः- **सोऽभिध्यायेति** ॥ **आपो नारा इति** ॥ इदं प्रलयार्णवशायित्वे मानम् ॥ अत्र नरशब्दात्- 'तस्येदम्' इति अण्प्रत्यये अजादित्वात् टाप् । **नारायण इति** ॥ नारा अयनं यस्येति विग्रहः । प्रलयार्णवशायी इत्यर्थः ॥

(७) **सोऽभिध्यायेति** ॥ **सः**= वासुदेवात् जातो विष्णुः **स्वात् शरीरात् विविधाः प्रजाः सिसृक्षुः**, **अभिध्याय**= विचिन्त्य **आदौ**= अण्डसृष्टेः पूर्वमेव, **अपः**= अण्डावरणभूताः **ससर्ज** । **तासु**= अप्सु, **वीर्यम्**, **अवासृजत्**= न्यधात्, मायाद्वारेति शेषः । **हैमं**= हिरण्यात्मकम्, **सहस्रांशुसमप्रभं**= सूर्यसमप्रकाशं **तत्**= वीर्यम् **अण्डं**= ब्रह्माण्डाख्यम्, **अभवत्** । **यस्मिन्**= अण्डे **सर्वलोकपितामहः**= ब्रह्मा चतुर्मुखः **स्वयं**= स्वतन्त्रात् हरेः साक्षात् **जज्ञे** इत्यर्थः ॥ स्वयमिति मान्तमव्ययं परमात्मवाचि ॥ **आपो नारा इति** ॥ यतः **आपः नरसूनवः**= विष्णुसूनवः, अतो **नाराः प्रोक्ताः** । **येन** कारणेन **पूर्वं**= प्रलये **ताः**= आपः **तस्य**= विष्णोः **अयनम्**, तेन- **सः नारायणः**= नारायणशब्दवाच्य इति **स्मृतः** इत्यर्थः ॥

**(८) 'अहं तत्तेजो रश्मीन्नारायणं पुरुषं जातमग्रतः । पुरुषात् प्रकृतिर्जनदण्डम्' इति चतुर्वेदशिखायाम् ॥ २० ॥**

(८) उक्तार्थे प्रमाणान्तरमाहुः- **अहं तत्तेज इति** ॥ **शिखायामिति** ॥ स हि क्षीरसमुद्रशायी इति आवर्तते । एवं च व्यासस्मृतेः, चतुर्वेदशिखायामित्युक्तेश्च- तस्यैव वीर्यम् अण्डकोशः, स हि= स एव क्षीरसमुद्रशायी, जलात्मकलयार्णवशायी च इत्यर्थ इति योजना ॥ २० ॥

(८) **अहं तदिति** ॥ **अहं**= अहेयम्, **तत्** प्रसिद्धम्, व्याप्तं वा, **रश्मीत्**= रं= रतिं, शं= सुखं मितं येषां ते रश्मयः= जीवाः तान् [1]इन्दयति प्रेरयतीति- रश्मीत् (अत्र कल्पे नलोपश्छान्दसः)दकारान्तम् । यद्वा-**रश्मीन्**= सूर्यादिरश्मीन् [2]**इन्धयति**= प्रकाशयति इति= **रश्मीत्** (धकारान्तम्) **तेजः**= जगत्प्रकाशकं **पुरुषं**= पूर्णषड्गुणम्, **नारायणं**= तदाख्यं ब्रह्म, तेज इति वा, **अग्रतः**= प्रलये, **जातं**= स्थितम् । **पुरुषात्**= नारायणात् **अग्रतः** प्रथमं **प्रकृतिः**= चेतना **जगत्**= (जीवजातं) पश्चात् **अण्डं त्रिपुरुषं** मायाबीजमिति शेषः **त्रिपुरुषं**= ब्रह्मवायुशिवाख्यपुरुषत्रययुक्तं मायाबीजं= प्रकृत्युपादानकं जातमित्यर्थः । जनिश्च यथायोग्यं परतन्त्रत्वादिरूपा ग्राह्या ॥ २० ॥

**(तदन्तर्यामित्वादिरूपभेदकधर्मोक्तेः इन्द्रादिभिन्नः विष्णुरेव प्रतिपाद्यः)**

## (९) ॥ ॐ भेदव्यपदेशाच्चान्यः ॐ ॥ २१ ॥

(९) **नन्वेवं विष्णुः अन्तस्थोऽस्तु, इन्द्रादयोऽपि अन्तस्थाः सन्तु, न च विरोधः, इन्द्रादेः विष्णुना अभेदात् इति शङ्कावारणाय सूत्रम्- ॐ भेदव्यपदेशादिति** ॥ चः एवार्थे । अन्तरिति वर्तते, तत् इति च । तत् इति षष्ठ्यन्ततया विपरिणम्यते । भेदस्य सप्रतियोगित्वेन प्रतियोग्याकाङ्क्षायां पूर्वपक्ष्यभिमतेन्द्रादिभ्य इति लभ्यते । **अयमर्थः**- अन्तः 'अन्तश्चन्द्रमसि' इत्यादौ अन्तः श्रूयमाणः, इन्द्रादिभ्यः **अन्यश्च**= अन्य एव, **भेदव्यपदेशात्**= 'इन्द्रस्यात्मा' इत्यादिना, तस्य= अन्तःस्थस्य विष्णोः इन्द्रादिभ्य भेदेन उक्तत्वात् इति ॥

**(१०) 'इन्द्रस्यात्मा निहितः पञ्च होता', 'वायोरात्मानं कवयो निचिक्युः' 'अन्तरादित्ये मनसा चरन्तम्, देवानां हृदयं ब्रह्मान्वविन्दत्' (तै.आ. ३-११) इत्यादिभेदव्यपदेशात् ॥ २१ ॥**

॥ इत्यन्तःस्थत्वाधिकरणम् ॥ ७ ॥

(१०) **भेदबोधकश्रुतीः आहुः- इन्द्रस्यात्मा इत्यादि** ॥ 'इन्द्रस्यात्मा' इत्येकम्, 'वायोरात्मानम्' इत्येकम्, 'अन्तरादित्ये' इत्यारभ्य अन्वविन्दत् इत्यन्तमेकं वाक्यम् । आदिना तैत्तरीयाऽरण्यकस्थस्य

---

१. 'इदि- परमैश्वर्ये' इति धातुः । (सं. ६३), एवं धातुव्याख्यानं नास्ति, तथापि धातूनाम् अनेकार्थत्वात् प्रेरणार्थः युज्यत इति भाति ।

२. 'ञि इन्धी- दीप्तौ' (रुदादिगणधातुः, सं. १४४८)

'अन्तश्चन्द्रमसि मनसा' इत्यादेः, 'अमृतं देवानाम्' इत्यादेश्च परिग्रहः । इत्यादिना इत्यादिषु वा इन्द्राद्यन्तर्यामित्वादिकथनमुखेन भेदस्य उक्तत्वादित्यर्थः ॥

न च 'इन्द्रस्यात्मा' इत्यादौ आत्मशब्दः स्वरूपपर इति वाच्यम् । षष्ठ्या औपचारिकत्वप्रसङ्गात् । 'राहोः शिरः' इत्यत्र अगतिकत्वात् औपचारिकत्वकल्पनम् । इन्द्रादिस्थत्वस्य भेदं विनाऽनुपपत्तेश्च इन्द्रादिशब्दस्य स्वरूपमात्रे लक्षणापत्तेश्च अन्तःस्थत्वादिलिङ्गानां सूर्यादिस्वरूपेऽभावाच्च ॥ **व्यप-देशादिति** ॥ अस्य सूत्रस्य हेतुविवरणरूपत्वेन न अन्यत्र अन्वयः ॥ २१ ॥

॥ इत्यन्तःस्थत्वाधिकरणम् ॥ ७ ॥

(१०) **इन्द्रस्येति** ॥ (तै.आ. ३.११.२२) **इन्द्रस्य**= पुरन्दरस्य **आत्मा**= अन्तर्यामी, आदानादिकर्ता वा, **निहितः**= सर्वहृदये सन्निहितः **पञ्चहोता**= चक्षुरादिपञ्चेन्द्रियेषु विषयहोता इत्यर्थः ॥ **वायोरिति** ॥ (तै.आ. ३.११.२३) **कवयः**= ज्ञानिनः **वायोरात्मानं विचिक्युः**= अन्तर्यामिणं ददृशुरित्यर्थः । **अन्तरादित्ये इति** ॥ (तै.आ. ३.११.२५) **आदित्ये अन्तः**, **मनसा**= स्वेच्छया **चरन्तं** विष्णुं (कवयः अन्वविन्दन्) **ब्रह्मा**= चतुर्मुखः **देवानां हृदि अयनात्**= स्थितेः प्रवर्तनात् वा **हृदयं**= विष्णुम् **अन्वविन्दन्**= अपश्यन् इत्यर्थः ॥ २१ ॥

॥ इत्यन्तःस्थत्वाधिकरणम् ॥ ७ ॥

## ८. आकाशाधिकरणम्

**(१) 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' (तै.उ.२–७) इत्याकाशस्याऽऽनन्दमयत्वे हेतुरुक्तः, न तु विष्णोरिति न मन्तव्यम् ।**

(१) अत्र नये हरौ लोकतोऽन्यत्र प्रसिद्धाऽकाशनामसमन्वयः ।

आनन्दमयाधिकरणे आनन्दमयत्वं विष्णोरुक्तम् । तच्च 'को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्' इति आकाशस्य उक्तम् ।

न च 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रवर्णात् जगत्कर्तृत्वादिविशिष्टस्यैव आनन्दमयत्वमुक्तम् । आकाशस्य तदभावात्, न आनन्दमयत्वप्रसक्तिरिति वाच्यम्- छन्दोगश्रुतौ जगत्कारणत्वस्यापि आकाशे श्रवणात् इति आक्षेपिक्या- श्रुत्या, आनन्दमयनयेन च, सङ्गती आहुः- **को हीति ॥ इतीति** ॥ इत्यादिना भूताकाशस्य आनन्दमयपदप्रवृत्तिनिमित्तप्रचुरानन्दवत्वे लोकचेष्टकत्व-प्रवर्तकत्वरूपो हेतुरुक्तः, न तु विष्णोरित्यर्थः ।

अनेन आकाशशब्दोऽत्र विषयः, स आकाशः विष्णुः ? भूताकाशो वा ? इति सन्देहः । आकाशशब्दस्य भूताकाश एवार्थः, कोशादिप्रसिद्धेः, विष्णौ तदभावात्- इति पूर्वपक्षश्च उक्तो वेदितव्यः । वक्ष्यते च मुखतो भाष्यकारैरेव सूत्रव्याख्यावसरे । संशयबीजं तु- आनन्दमये वस्तुनि आकाशशब्दप्रयोगः, भूताकाशादौ अन्यत्र प्रसिद्धिश्च इति बोध्यम् ।

ननु अचेतने आनन्दवत्वादिकं नोपपद्यत इति चेत्- उच्यते- अचेतने आनन्दवत्वलोकचेष्टकत्व-मोक्षदत्वानाम् 'अभिमानि' (२.१.६अ.) नयन्यायेन उपपत्तिः । एवमेव मान्त्रवर्णिकसमाख्या, तद्योगशासनयोरप्युपपत्तिः । श्रुतेः सर्वतो बलवत्वात् । ब्रह्मशब्दस्य अभिमानिजीवे, विष्णौ च प्रसिद्धेः, आकाशश्रुतेः एकत्रैव प्रसिद्धेश्च ब्रह्मशब्दाभ्यासस्य विष्णौ असाधकत्वाच्चेति भाव इति ।

प्रकृतनये छान्दोग्यस्थाकाशपदवाच्यो भूताकाश इति पूर्वपक्षस्य फलभूतोऽयं पूर्वपक्षः तैत्तिरीये, छान्दोग्ये च, आकाशस्य जगत्कारणत्वोक्त्या एकत्वादिति बोध्यम्, इति प्राप्ते आहुः- **न मन्तव्य-मिति** ॥ तत्र हेत्वाकाङ्क्षायां सूत्रोदाहरणाधिकरणरचनापूर्वकम् आकाशशब्दस्य विष्णुवाचकत्व-रूपप्रसिद्धिमाहुः ॥

(१) को ह्येवेति ॥ (तै.उ. ९५) व्याख्यातं पूर्वम् ।

**(विष्णोरेवाकाशः परोवरीयस्त्वादिलिङ्गात्)**

**यतः -**

## (२) ॥ ॐ आकाशस्तल्लिङ्गात् ॐ ॥ २२ ॥

(२) **यत इत्यादिना ॥ ॐ आकाशस्तल्लिङ्गादिति ॥** तत्तु इति वर्तते । यथायथम् आवृत्तिविपरिणामौ । **अयमर्थः- आकाशः=** 'आकाश इति होवाच' इत्यत्र आकाशशब्दवाच्यः, तत्तु= विष्णुरेव । तस्मिन्= आकाशे **तल्लिङ्गात्=** 'स एष परोवरीयान्' इति परोवरीयस्त्वादि-ब्रह्मलिङ्गश्रवणात् इति ॥

**(३) 'अस्य लोकस्य का गतिरित्याकाश इति होवाच' (छा. उ.१-९) इत्यत्र भूताकाशस्य प्राप्तिः । न चासौ युज्यते, किन्तु विष्णुरेव ।**

(३) विषयवाक्यमाहुः- **अस्य लोकस्येति ॥** अधिकरणपूर्वपक्षमाहुः- **भूताकाशस्येति ॥** यद्यपीत्यादिः । अस्य लोकस्येति पृथिवीकारणत्वोक्त्या न अव्याकृताकाशस्य प्राप्तिः । भूतकारणत्वादिकं तु 'आकाशाद्वायुः' इत्यादि श्रुत्यन्तरे भूताकाशस्य उक्तम् । एतेन कण्ठरवेण पूर्वपक्ष उक्तो वेदितव्यः । सिद्धान्तमाहुः- **न चासाविति ॥** तथापीत्यादिः । यद्यपि भूताकाशस्य प्राप्तिरस्ति, तथापि असौ भूताकाशः आकाशशब्दवाच्यो **न युज्यते, किन्तु विष्णुरेव** युज्यत इत्यर्थः ।

**(४) 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः'(छा.उ.१-९) इत्यादि तल्लिङ्गात् ।**

(४) तत्र हेत्वाकाङ्क्षायां सौत्रहेतुं विवृण्वन्ति- **स एष इति ॥ इत्यादि तल्लिङ्गादिति ॥** इत्यादिषु विष्ण्वसाधारणपरोवरीयस्त्व-उद्गीथत्व-अनन्तत्वरूपलिङ्गश्रवणादित्यर्थः । तथा च यतः तल्लिङ्गात् विष्णुरेव आकाशशब्दवाच्यो युज्यते, अतः इति न मन्तव्यम् इत्यन्वयः । एवं च निरवकाशलिङ्गेन छन्दोगश्रुतौ लोकप्रसिद्धिं त्याजयित्वा, आकाशशब्दस्य विष्णुवाचित्वे स्थापिते उक्तश्रौतप्रसिद्ध्या, ब्रह्मशब्दाभ्यासादिना च, आनन्दमयप्रकरणे आकाशो विष्णुरेवेति सिद्धम्, इति भावः ।

एतेन 'आकाश इति होवाच' इति छन्दोगश्रुतौ विष्णुलिङ्गात् आकाशशब्दस्य विष्णुपरत्वेऽपि आनन्दमयप्रकरणस्थाऽऽकाशशब्दस्य किमागतमिति शङ्का परास्ता ॥

(३-४) **अस्य लोकस्येति** । (छा. १.९.१) **अस्य=** प्रत्यक्षसिद्धस्य पृथिवीलोकस्य, तदभिमानि-चतुर्मुखस्य **का गतिः=** क आश्रयः ? इति शिलकेन पृष्टः प्रवाहणो राजा, **आकाशो गतिरिति ह उवाच-** आकाशस्य एतल्लोककारणत्वोपपादनाय प्रवृत्तम् उत्तरवाक्यम्-

सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति । आकाशो ह्येव एतेभ्यो ज्यायान् । आकाशः परायणम् । स एष परोवरीयानुद्गीथः । स एषोऽनन्तः ॥ इति ॥

यतः इमानि= परिदृश्यमानानि स्थावरजङ्गमानि, आकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति= प्रलये, मुक्तौ च लीना भवन्ति । हि= यतः, आकाश एव एभ्यः= उक्तसर्वेभ्यः, ज्यायान्= अधिकोत्तमः यतः आकाशः परायणम्= उत्तमाश्रयः । स एष आकाशः परोवरीयान्= उत्तमोत्तमोत्तमादुत्तमः, उद्गीथः= उच्चत्वेन गीतः (छन्दसि- तस्य थः) स एष आकाशः अनन्तः= देशादिभिः अपरिच्छिन्नः (तस्मात्) इत्यर्थः ॥ परात्परः= परपरः, तस्माद्वरः- परपरात् वरः, छान्दसत्वात् पञ्चम्या अलुक्, तस्मात् वरतरः परपराद्वरवरीयानिति स्थिते 'समाने लोपः' इति व्याकरणान्तरीयसूत्रेण एकस्य वरशब्दस्य, परशब्दस्य च लोपे, परशब्दात् श्रूयमाणपञ्चम्याः सुपां सुलुगिति सौआदेशे रुत्व-उत्व-गुणेषु च निष्पन्नोऽयं परोवरीयानिति शब्द इति ज्ञेयम् ।

पूर्वपक्षे- अत्रत्याऽऽकाशशब्दः प्रसिद्धाकाशपर एव । भूतशब्दः आकाशव्यतिरिक्तभूतपरः ।

सिद्धान्ते तु- आ-समन्तात् काशमान इति व्युत्पत्या विष्णुवाचकः । परोवरीयानित्यस्य- उत्तमभूत-रुद्रादिभारत्यन्तापेक्षया, उत्तमो= वायुः, तदपेक्षया उत्तमा= लक्ष्मीः, तदपेक्षया उत्तमो= विष्णुः इत्यर्थ इति बोध्यम् ॥ भूतशब्दः आकाशादिपर इति च बोध्यम् ॥ **स एष इति** ॥ **व्याख्यातम्** ।

## (५) 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि वि ममे रजांसि' । (ऋ. १-१५४-१) 'परो मात्रया तन्वा वृधान' (ऋ.सं.७—९८—१) इत्यादिना तस्यैव हि तल्लिङ्गम् ।

**(५) अनन्तगुणत्वरूपानन्तत्वरूपलिङ्गस्य विष्णुधर्मत्वे मानमाहुः- विष्णोर्नु कमिति ॥ सर्वोत्तमत्वरूपपरोवरीयस्त्वोद्गीथत्वयोः विष्णुधर्मत्वे मानमाहुः- परो मात्रयेति ॥ तल्लिङ्गमिति ॥ तत्= सर्वोत्तमत्वादिकम्, तस्यैव= विष्णोरेव लिङ्गं= धर्मः हि= प्रसिद्धः इति- इत्यादिना ज्ञायत इत्यर्थः।**

(५) **विष्णोरिति** ॥ (ऋ. १.१५४.१) **विष्णोः वीर्याणि कं** नु= को वा **प्रवोचं**= प्रावोचत्= साकल्येन प्रवक्ति ? नपुंसककिंशब्दात्- सौ छान्दसत्वादलुकि कादेशे प्रत्ययस्य अमादेशे पररूपे कमिति प्रथमैकवचने निष्पन्नमिति बोध्यम् ॥ **यः (कविः)**= ब्रह्मा, **पार्थिवानि रजांसि**= पृथिवीपरमाणून् **विममे**= गणयति, सोऽपि न प्रवक्तीत्यर्थः । अनेन अनन्तत्वं स्पष्टीकृतम् । **परो मात्रयेति** ॥ (ऋ. ७.९९.१) व्याख्यातं (पृ. ५२) 'न ते महित्वम्' इत्यनेन उत्तमत्वमुक्तम् । यद्यपि- प्रथमम् उत्तमत्वे प्रमाणं वक्तव्यं तस्यैव

प्रथमं प्रसक्तत्वात् । तथापि- प्रथमम् अनन्तत्वस्य सावकाशत्वशङ्कानिवृत्त्यर्थं प्रथमं तद्विषयक-प्रमाणोपन्यास इत्यदोषः ॥

**(६) 'अनन्तो भगवान् ब्रह्मा आनन्देत्यादिभिः पदैः ।**
**प्रोच्यते विष्णुरेवैकः परेषामुपचारतः ॥' इति पाद्मे ।**
**'नामानि सर्वाणि यमाविशन्ति' (भाल्लवेयश्रुतिः) इति चोक्तम् ॥ २२ ॥**

**॥ इत्याकाशाधिकरणम् ॥ ८ ॥**

(६) अनन्तत्वस्य विष्ण्वेकनिष्ठत्वे स्मृतिं च आहुः- **अनन्त इति ॥ ब्रह्मा इति ॥** तत्र इत्युक्तेरि-त्यर्थः । इत्युक्तेश्च तस्यैव तल्लिङ्गमित्यन्वयः ॥

ननु श्रुत्या पूर्वपक्षिते कथं लिङ्गेन निर्णयः ? इत्यत आहुः- **नामानीति ॥** अनेन आकाशशब्दस्य विष्णौ रूढिर्दर्शिता । **उक्तमिति ॥** यत उक्तम्, अतश्च विष्णुरेव इत्यन्वयः । एवं च आकाशश्रुतेः-विष्णौ सावकाशत्वात्, निरवकाशलिङ्गेन न आकाशो विष्णुरिति सिद्धमिति भावः । तथा च आकाशशब्दस्य तल्लिङ्गबलेन विष्णौ लक्षणा इति परास्तम् । भगवति कस्यापि समन्वेतव्यशब्दस्य लक्षणाऽयोगात् ॥ २२ ॥

॥ इत्याकाशाधिकरणम् ॥ ८ ॥

(६) **अनन्त इति ॥ अनन्तो, भगवान्, ब्रह्मा, (परमात्मा) आनन्दः इत्यादिभिः पदैः**= शब्दैः, **एक एव विष्णुः** प्रोच्यते, **परेषां**= विष्ण्वन्येषाम् **उपचारतः**= अमुख्यवृत्त्या, वाच्यतेति शेष इत्यर्थः ॥ **नामानीति ॥** व्याख्यातं पूर्वम् (पृ. ४३) ॥ २२ ॥

॥ इत्याकाशाधिकरणम् ॥ ८ ॥

## ९. प्राणाधिकरणम्

**(लक्ष्मीपतित्वादिलिङ्गात् विष्णुरेव प्राणशब्दवाच्यः)**

## (१) ॥ ॐ अत एव प्राणः ॐ ॥ २३ ॥

(१) अत्र नये लोकतोऽन्यत्र प्रसिद्धप्राणनाम्नो, भगवति समन्वयसमर्थनम् । विषयादिकं तु वक्ष्यते भाष्यकारैरेव ॥ (१ सू. अ.)

**ॐ अत एव प्राणः ॐ इति** ॥ तत्तु इति वर्तते, एवः लिङ्गस्य निरवकाशत्वं बोधयति । **अयमर्थः- प्राणः=** 'तद्वै त्वम्' इति श्रुतिस्थप्राणपदवाच्यः, तत्तु= विष्णुरेव । **अत एव=** 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति श्रुतश्रीलक्ष्मीपतित्वादिप्रसिद्धविष्णुलिङ्गादेव- इति ॥

**(२) 'तद्वै त्वं प्राणो अभवः महान्भोगः प्रजापतेः । भुजः करिष्यमाणः यद्देवान् प्राणयो नव' इति (तै.आ.३-१४) महाभोगशब्देन परमानन्दत्वं प्राणस्योक्तम् । स च प्राणः प्रसिद्धेर्वायुरित्यापतति । न चैवम् । यतो विष्णुरेव प्राणः ।**

(२) विषयवाक्यमाहुः- **तद्वै इति** ॥ **महाभोगेति** ॥ महाभोगशब्दसमानार्थकश्रुतिस्थ-महान्भोग इति शब्देन इत्यर्थः ॥ **प्राणस्योक्तमिति** ॥ विष्णोरानन्दमयत्वं यदुक्तं तत् प्राणस्योक्तमित्यर्थः । अनेन प्राणशब्दोऽत्र विषयः । आनन्दमयनयेन सङ्गतिः, स प्राणः विष्णुः ? अथ वायुः ? इति संशयश्च दर्शितः । आनन्दपूर्णत्वबोधकमहान्भोगशब्दश्रवणम्, प्राणपदस्य अन्यत्र प्रसिद्धिश्च, सन्देहबीजमिति बोध्यम् ॥ पूर्वपक्षमाहुः- **स चेति** ॥ **प्राणः=** 'तद्वै त्वम्' इति श्रुतिस्थप्राणशब्दवाच्यः । **प्रसिद्धेः=** प्राणशब्दस्य वायौ रूढत्वात् । सिद्धान्तमाहुः-**न चैवमिति** ॥ **एवं**=वायुरेव प्राणशब्दवाच्य इति न वाच्यमित्यर्थः । तत्र हेतुः- **यत इत्यादि** ॥ **यतो विष्णुरेव प्राणः**, अतो न वाच्यमित्यन्वयः ।

(२) **तद्वै त्वमिति** ॥ (तै.आ. ३.१४.४५) हे विष्णो **यत्** यस्मात् **प्रजापतेः**= हिरण्यगर्भस्य, तदुपलक्षितसर्वसज्जीवानां च **भुजः**= तत्तद्योग्याऽऽनन्दान् **करिष्यमाणः**, उपलक्षणमेतत् कुर्वाणः, कृतवांश्चेत्यर्थः । यद्वा- करिष्यमाण इत्यत्र भविष्यत्वम् अविवक्षितम्, तेन भोगकरणस्य त्रैकालिकत्व-सिद्धिः । **तत्**= तस्मात् **त्वम्, महान् भोगः**= पूर्णानन्दः **अभवः** । स्वस्य महाभोगाभावे परस्य तद्दानासम्भव इति हृदयम् । यस्माच्च **त्वं नव**= नवसङ्ख्याकान् देवान्, ज्ञान-कर्मनवेन्द्रियाभिमानिदेवान् **प्राणयः**=

अचेष्टयः, चेष्टमानाः पूर्ववत् त्रैकालिकत्वम् ऊह्यम् ॥ तस्मात् **त्वं प्राणः अभवः**= प्राणशब्दवाच्यो जातोऽसीत्यर्थः । अयं च **सिद्धान्तरीत्या** । पूर्वपक्षे तु- वायुपरेयं श्रुतिः ॥ (अत्र हे वायो इति सम्बोध्यः) अत्र महान् भोग इति बहुव्रीहिः सोर्लुगभावेन पूर्वपदे नुमादिकम् । अथवा लुक्यपि 'न लुमता' इति निषेधस्य अनित्यत्वेन प्रत्ययलक्षणेन नुमादिकम्, छान्दसत्वात् । आत्वाभावश्छान्दसः । यद्वा- महान् भोग इति द्वे पदे, धर्मधर्मिणोरभेदाभिप्रायेणायं प्रयोगः । ज्ञान-कर्मेन्द्रियाणां सङ्कलनया दशत्वेऽपि पायूपस्थयोरैक्याभिप्रायेण नवत्वोक्तिरिति ज्ञेयम् ॥

**(३) अत एव 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ अहोरात्रे पार्श्वे' (तै.आ.३-१३) इत्यादितल्लिङ्गादेव ॥ २३ ॥**

**॥ इति प्राणाधिकरणम् ॥**

(३) **अत एवेति सौत्रपदमनूद्य अर्थमाहुः- श्रीश्च ते इति ॥ तल्लिङ्गादेवेति ॥ श्रीपतित्वादिविष्णुलिङ्गादेवेत्यर्थः** ॥ २३ ॥

**॥ इति प्राणाधिकरणम् ॥ ९ ॥**

(३) **श्रीश्च ते इति** ॥ (तै.आ. ३.१३) हे विष्णो, ते= तव, **श्रीश्च, लक्ष्मीश्चेति**= द्वे पत्न्यौ स्तः **अहोरात्रे**= तदभिमानिनौ सूर्याचन्द्रमसौ **पार्श्वे**= पार्श्वगतावित्यर्थः ॥ **वक्षस्थिता श्रीः, अङ्कस्थिता लक्ष्मीरिति सम्प्रदायविदः** ॥

ननु 'ह्रीश्च ते लक्ष्मीश्च' इति तैत्तिरीये पठ्यते । तस्मात् कथं श्रीश्चेति पाठ इति चेत् उच्यते- तदर्थविवरणार्थमेवमुक्तम् । यद्वा- वाजसनेयकपाठानुसारेण एवमुक्तमिति ॥ यद्यपि पूर्वानुवाके, श्रीश्चेति पठ्यते । 'तद्वै त्वम्' इति तु 'भर्ता सन्' इति उत्तरानुवाके पठ्यते । अतः कथमुत्तरानुवाकार्थनिर्णायकत्वं पूर्वानुवाकस्येति शङ्का प्राप्नोति । तथापि- पूर्वोत्तरानुवाकयोः एकविषयकत्वेन उत्तरवाक्यार्थनिर्णायकत्वसम्भवात् न दोषः । आदिना- 'हरिं हरन्तमनुयन्ति देवाः । विश्वस्येशानम्' (तै.आ. ३.१५.४६) इत्याद्यनुवाकान्तरगतं ग्राह्यम् ॥ २३ ॥

**॥ इति प्राणाधिकरणम् ॥ ९ ॥**

## १०. ज्योतिरधिकरणम्

**(१) 'यो वेद निहितं गुहायाम्' (तै.उ.२-१) इत्युक्तम् ।**

**(१) अत्र नये लोकतोऽन्यत्र प्रसिद्धज्योतिर्नाम्नः हरौ समन्वयसमर्थनम् ॥ (१. सू.अ.)**

**पूर्वसङ्गतिकथनाय श्रुतिमाहुः- यो देवेति ॥ इत्युक्तमिति ॥ इत्यनेन यत् गुहानिहितत्व-मुक्तमित्यर्थः । अनेन- श्रुत्या, आनन्दमयाधिकरणेन च सङ्गती दर्शिते, 'मान्त्रवर्णिक' (१.१.१५) सूत्रे 'ब्रह्मविदा' इति मन्त्रवर्णोदाहरणात्, तदेकदेशस्य 'यो वेद' इत्यस्यापि उक्तप्रायत्वेन उक्तम् इत्युक्तमिति बोध्यम् ॥**

(१) **यो वेदेति** ॥ (तै. २.२) **गुहायां**= तत्तद्हृदये, **परमे व्योमन्**= उत्तमाकाशे, व्योमन्नित्यत्र सप्तम्याः छान्दसत्वात् लुक् ; हृदयाकाशे इति यावत् । स्थितं **यो वेद**= योऽधिकारी जानातीत्यर्थः ॥

**(२) तच्च गुहानिहितम् । 'वि मे कर्णा पतयतो विचक्षुर्वी३दं ज्योतिर्हृदय आहितं यत् । वि मे मनश्चरति दूर आधीः किंस्विद्वक्ष्यामि किमु नू मनिष्ये' (ऋ.सं.६-९-६) इति ज्योतिरुक्तम् ।**

**(२) विषयवाक्यमाहुः- विमे इति ॥ मनिष्य इति ॥ इत्यनेनेत्यर्थः । ज्योतिरिति ॥ ज्योतिश्शब्दवाच्य इत्यर्थः । अनेन ज्योतिःशब्दो विषय इति दर्शितः ॥**

(२) **वि मे कर्णेति** ॥ (ऋ. ६.९.६) **यतः**= मे **कर्णा**= कर्णौ, **ज्योतिषः वि**= विरुद्धं **पतयतः**= पततः, **विचक्षुः**= विरुद्धं पतति **मे हृदये आहितं**= आसमन्तात् स्थितं **यत् ज्योतिः**, तदपि अत्यन्तं कर्णादिविरुद्धमस्ति, **मे मनः** ज्योतिषो दूरे **विचरति**= अतीव दर्शनदूरं वर्तते, अतः **आधीः**= ईषद्बुद्धिः, व्याप्तबुद्धिर्वा अहम्, **किंस्वित्**= किंनु वक्ष्यामि **किमु नू**= इदानीं **मनिष्ये**= चिन्तयामि इत्यर्थः ॥

पूर्वपक्षे तु- ज्योतिश्शब्दस्य विष्ण्वन्यप्रसिद्धज्योतिर्वाचकत्वम् । सिद्धान्ते तु- विष्णुवाचकत्वमिति बोध्यम् ॥ कर्ण औ इति प्रथमाद्विवचनस्य 'सुपां सुलुक्' इति आकारादेशे पूर्वसवर्णदीर्घे सवर्णदीर्घे वा 'कर्णा' इति भवति । पतयत इत्यत्र बाहुलकाद् स्वार्थणिच् । वीदमित्यत्र कम्पस्वरः अत्यन्तार्थे ॥

**(३) तच्च ज्योतिरग्निसूक्तत्वात् प्रसिद्धेश्चाग्निरेवेति प्राप्तम् । अत आह–**

(३) **पूर्वपक्षमाहुः- तच्चेति** ॥ हृदयगुहानिहितमित्यर्थः । **अग्निसूक्तत्वात्**= अग्निप्रकरणत्वात् ।

**प्रसिद्धेः**= रूढत्वात् । अनेन तज्ज्योतिः, अग्निः ? उत विष्णुः ? इति संशयोऽपि सूचित इत्यवधेयम् । गुहानिहितत्वकथनम्, ज्योतिश्शब्दस्य अग्नौ प्रसिद्धिश्च, संशायकमित्यवगन्तव्यम् ॥ **एवेति** ॥ न विष्णुरिति भावः ।

**(साकल्येन कर्णादिविदूरत्वश्रवणाद् विष्णुरेव ज्योतिः)**

## (४) ॥ ॐ ज्योतिश्चरणाभिधानात् ॐ ॥

(४) सिद्धान्तमाहुः- **अत्र आहेति** ॥ **ॐ ज्योतिरिति** ॥ तत्तु इति वर्तते, **अयमर्थः**- **ज्योतिः**= 'विमे कर्ण' इत्यत्रत्यज्योतिश्शब्दवाच्यः, तत्तु= विष्णुरेव, **चरणाभिधानात्**= ज्योतिस्सकाशात् कर्णादीन्द्रियाणां विरुद्धचरणाभिधानात् इति (विरुद्धचरणं च साकल्येन तदविषयकत्वम्) उपसर्गाणां द्योतकत्वेन धातोरेव विवक्षितक्रियावाचकत्वेन विचरणाभिधानादिति नोक्तमिति ज्ञेयम् ॥

**(५) विष्णुरेव ज्योतिः । कर्णादीनां विचरणाभिधानात् । स हि 'परो मात्रया तन्वा वृधान'(ऋ.७-९९-११) इत्यादिना कर्णादिविदूरः ॥ २४ ॥**

**॥ इति ज्योतिरधिकरणम् ॥**

(५) सूत्रार्थमाहुः- **विष्णुरेवेति** ॥ इन्द्रियाणां यस्मात् विरुद्धाचरणम्, तस्य विष्णुत्वे मानमाहुः- **परो मात्रयेति** ॥ **स हीति** ॥ **हि**= यतः, **सः**= विष्णुः, इत्यादिज्ञाप्यकर्णादिविदूरत्ववान्, अतो विचरणाभिधानात्, विष्णुरेव ज्योतिः, इति सम्बन्धः । तथा च नासिद्धोऽयं हेतुरिति भावः ॥

**तत्वप्रदीप-सन्न्यायरत्नावलीग्रन्थयोः- एतस्मादारभ्य चतुःसूत्री एकाधिकरणतया व्याख्याता । गायत्र्यधिकरणम् अवान्तराधिकरणमिति च व्याख्यातम् ॥ २४ ॥**

॥ इति ज्योतिरधिकरणम् ॥

(५) परोमात्रयेति ॥ (ऋ. ७.९९.९) हे विष्णो त्वं **मात्रया**= इन्द्रियगणात् **परोऽसि**= दूरोऽसीत्यर्थः, मीयन्ते विषया अनयेति व्युत्पत्त्या मात्राशब्दः इन्द्रियगणपरः ॥ २४ ॥

॥ इति ज्योतिरधिकरणम् ॥ १० ॥

## ११. गायत्र्यधिकरणम्

### (गानत्राणकर्तृत्वाद् विष्णुरेव गायत्रीशब्दवाच्यः)

### (१) ॥ ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॐ ॥ २५ ॥

**अत्र नये अधिवेदगतसर्वशब्दोपलक्षकस्य लोकतोऽन्यत्र प्रसिद्धगायत्रीनाम्नो भगवति समन्वय-समर्थनम् ॥ (३ सू. अ.)**

(१) सङ्गत्यादिजिज्ञासोदयाय सूत्रमेवादौ पठन्ति- **ॐ छन्दोभिधानादिति** ॥ विषयवाक्यबलात्, छन्दःपदेन वा, गायत्रीति लभ्यते । छन्दोऽभिधानात् इति व्यस्तं समस्तं च । तत्तु इति वर्तते । यथायोग्यम् आवृत्तिः विपरिणामश्च । **चेतोऽर्पणम्**= उपासनम्, चेतोऽर्पणस्य निगद इति विग्रहः । षष्ठ्यर्थः तादर्थ्यम् । **अयमर्थः**- गायत्री= 'गायत्री वा इद९सर्वम्' इति श्रुतिस्थगायत्रीशब्दवाच्यं तत्तु= विष्णुरेव । **हि**= यतः, **तथा**= विष्णुत्वप्रापक-सकलवेदोच्चारणरूप-गानत्राणकर्तृत्वरूप-गायत्रीशब्द-प्रवृत्तिनिमित्तधर्मवत्वबोधकं= **दर्शनम्**, 'गायति त्राय(ते)ति च' इति श्रुतिः उपसंहारेऽस्ति अतः । ननु **छन्दोभिधानात्**= गायत्रीशब्दस्य छन्दसि= वेदविशेषे रूढत्वात्, 'वाग्वै गायत्री' (छा.) इति श्रुत्या छन्दस्त्वेन= वेदविशेषभूतवाक्त्वेन प्रतिपादनाच्च, गायत्रीछन्दस्तु वेदविशेष एव, न विष्णुः इति चेत्- न- **तथा** गायत्रीवागादिशब्दप्रवृत्तिनिमित्तधर्मवत्वेन, तस्य विष्णोः **चेतोऽर्पणनिगदात्**= उपासनार्थं गायत्र्यादिशब्देन अन्यत्र रूढेनापि प्रतिपादनात् ॥ इति ॥

**(२) 'अथ यदतः परो दिवो ज्योतिर्दीप्यत'(छां.३-१३-७) इत्युक्तस्य ज्योतिषः**

**(३) 'गायत्री वा इदं सर्वम्' इति (छां. ३-१२-१) गायत्र्या समारम्भः कृतः । तस्मान्न विष्णुरिति चेन्न, तथा चेतोऽर्पणार्थं हि निगद्यते । अग्नि-गायत्र्यादिशब्दार्थरूपोऽसाविति चेतोऽर्पणार्थं हि निगद्यते ।**

(२) श्रुत्यादिसङ्गतिविषयादीन् दर्शयन्ति- **अथ यदिति** ॥ **इत्युक्तस्येत्यादि** ॥ अत्र यथेष्टम् आवृत्तिविपरिणामौ । **अयमर्थः**:- **उक्तस्य**= 'हृदय आहितं ज्योतिः' इति पूर्वाधिकरणोक्तश्रुत्युक्त-ज्योतिरभिन्नस्य उक्तस्य एतच्छ्रुत्युक्तस्य **ज्योतिषः** ।

(२) **अथ यदिति ॥** (छा. ३.१३.७) 'अथ यदतः परो दिवो ज्योतिर्दीप्यते । विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु इदं वाव तत् यदिदमस्मिन् अन्तः पुरुषे ज्योतिः' इति उपसंहारे श्रूयते । **पूर्वपक्षेऽयमर्थः** अथेत्यर्थान्तरे **अतः**= दिवः **परः**= परं **यत्, ज्योतिः, विश्वतः पृष्ठेषु**= सर्वोत्तमेषु, **अनुत्तमेषु**= प्रत्यवरेषु **सर्वतः पृष्ठेषु**= सर्वभूतेभ्यः उच्चेषु **उत्तमेषु, लोकेषु दीप्यते, तत्**= दीप्यमानं तेजः **इदं वाव**= इदं खलु, **यदिदमस्मिन्, अन्तःपुरुषे** हृदये अन्तः ज्योतिः इति । **सिद्धान्ते तु- अतः** बुद्धिस्थाया **दिवः, परः**= परम्, तदपेक्षया उच्चस्थाने= श्वेतद्वीप-अनन्तासन-वैकुण्ठाख्ये स्थितं नारायण-वासुदेव-वैकुण्ठाख्यम्, **ज्योतिः**= तेजोमयं **यत्**= रूपत्रयं **तत्, विश्वतः पृष्ठेषु**= अन्तरिक्षगतवैजयन्त-मेरु-सत्य-लोकगतेभ्यो ब्रह्मसदनेभ्यः क्रमेण उच्चेषु, **सर्वतः पृष्ठेषु**= अन्तरिक्ष-पृथिवी-स्वरात्मकलोकेभ्यः क्रमेणोच्चेषु, **अनुत्तमेषु**= स्वापेक्षया उत्तमशून्येषु, **उत्तमेषु**= स्वरूपतः उत्तमेषु श्वेतद्वीप-अनन्तासन-वैकुण्ठेषु **दीप्यते**= प्रकाशते । **तत्**= तेजः **इदं वाव**= यदिदम् **अस्मिन् पुरुषे** हृदये अन्तः **ज्योतिः**= तेजोमयं ब्रह्म, इत्यर्थः । तथा च श्वेतद्वीपादिस्थज्योतीरूपं ब्रह्म, हृदयस्थज्योतीरूपब्रह्माभिन्नमिति भावः ॥

(३) **गायत्र्या समारम्भः कृतः**= 'गायत्री वा इद९ सर्वम्' इति गायत्रीशब्देनोपक्रमः कृतः **गायत्र्याश्च**= गायत्रीशब्दवाच्यस्य तु **समारम्भः**= 'वाग्वै गायत्री' इति वाक्त्वेन विवरणं कृतम् । अनेन ज्योतिरधिकरणेन (१.१.१० अ.) सङ्गतिर्दर्शिता । **गायत्रीति ॥** पूर्वपक्षप्रापकश्रुतिरियम् । **कृत इति ॥** एतदन्तेनैव ग्रन्थेन- गायत्रीशब्दो विषयः, तद्वाच्यो विष्णुः ? अन्यो वा ? इति संशयश्च सूचितः । ज्योतिश्श्रुतिः, लोकप्रसिद्धिश्च, सन्देहबीजं बोध्यम् ॥

पूर्वपक्षयन्ति- **तस्मादिति ॥ तस्मात्**= गायत्र्या उपक्रमात् तस्याः वाक्त्वेन विवरणात्, गायत्री-शब्दस्य वेदमातरि रूढत्वात्, **गायत्री तु**= गायत्रीशब्दवाच्यं तु **न विष्णुः** किन्तु व्रेदविशेष एव, इति चेत् इति सम्बन्धः । सिद्धान्तयन्ति- **नेति ॥** अत्र पूर्वपक्षनिरासे हेतुः 'तथा हि' इति वक्ष्यमाणो बोध्यः ॥

ननु वक्ष्यमाणहेतुना गायत्र्यादिशब्दवाच्यत्वं विष्णोरुच्यते, तथापि तत्र प्रसिद्धविष्ण्वादिशब्दान् विहाय तत्राऽप्रसिद्धगायत्र्यादिशब्दैः विष्णोः प्रतिपादनं कुत इत्यतः 'तथा हि' इति सूत्रखण्डस्यार्थ-माहुः- **तथेति ॥** तथा चेतोऽर्पणार्थं हि निगद्यत इति, स्वपदानि वर्णयन्ति- **अग्निगायत्रीति ॥** अग्निपदेन प्रकृततेजसो ग्रहणम् । आदिना वागादेर्ग्रहणम् । हिशब्देन अधिकरणान्तरे आकाशनयादौ तत्तद्गुणवत्वेनोपासनायैव अन्यत्रप्रसिद्धशब्दैः प्रतिपादनमित्येतन्न्यायस्यानुसन्धेयत्वं सूचितम् । **शब्दार्थरूप इति ॥** शब्दप्रवृत्तिनिमित्तधर्मवानित्यर्थः ।

(३) **गायत्री वा इति ॥** (छा. ३.१३.१) 'गायत्री वा इदꣳ सर्वं यदिदं किञ्च वाग्वै गायत्री वाग् वा इदꣳ सर्वं भूतं गायति त्रायते च' इत्युपक्रमे श्रूयते । पूर्वपक्षे- गायत्री= चतुर्विंशत्यक्षरात्मकमन्त्र इत्यादिः प्रतीत एव । सर्वस्य गायत्रीत्ववर्णनं तु अर्थवाद इति बोध्यम् । सिद्धान्ते तु- गायत्रीनामा गायत्रीसंस्थः स्त्रीरूपः हयशीर्षाख्यो भगवान् यदिदं किञ्च भूतं पूर्णं मत्स्याद्यवताररूपं यच्च सर्वं सर्वान्तस्थरूपं तत्सर्वं गायत्री= उक्तगायत्रीनामको भगवानेव । वै= प्रसिद्धम् । गायत्री= उक्तगायत्रीनामको भगवान् वाग्वै= वाङ्नामा विष्णुरेव इदं सर्वं भूतं= प्राणिजातं वाग्वै= वाङ्नामकभगवदधीनमेव च, यतः गायति= वेदनादौ उच्चारयति, त्रायतेऽखिलम्, अतः गायत्रीनामेत्यर्थः ॥

## (४) तथा हि दर्शनं 'गायति त्रायते च' (छां.उ.३–१२–१) इत्यादि ।

**(४) गायत्रीपदस्य विष्णुपरत्वे हेतुबोधकं सूत्रखण्डं व्याचक्षते- तथा हीति ॥ दर्शनं= श्रुतिः। गायति त्रायते चेति ॥ भाष्यदीपिकायां तु- त्रायतीति प्रतीकं गृहीत्वा- यद्यपि 'त्रायते' इति छन्दोगानां पाठः, तथापि शाखान्तरमेतदित्युक्तम् । गै= शब्दे, अस्मात् 'श्याद्व्यधास्रु' (पा.सू. ३.१.१४१) इति सूत्रेण कर्तरि णप्रत्यये 'आतो युक्' (७.३.३३) इति युगागमे च टापि- गाया, त्रैङ्= पालने इत्यस्मात् औणादिके डटि, टिलोपे, ङीपि, त्री इति भवति । ततः गाया चासौ त्री चेति विग्रहे पूर्वपदस्य पुंवत्वे च निष्पन्नः गायत्रीशब्दः= गानत्राणकर्तृवाचकः अत्रेति श्रुतितात्पर्यम् ।**

(४) **गायतीति** ॥ (व्याख्यातमत्रैव सूत्रे) **आदिना** 'या वै सा गायत्री इयं वा व सा, येयं पृथिवी अस्यां हीदं सर्वं भूतं प्रतिष्ठितम् । एतामेव नातिशीयन्ते' (छा. ३.१२.२) इत्यादि गृह्यते । अस्यार्थः- या वै= प्रसिद्धा गायत्री, तन्नामा हरिः, इयमेव सा येयं पृथिवी= पृथुत्वहेतुना तन्नामा, तस्यां स्थितः स्त्रीरूपो हरिः, अनेन मात्रयाऽपि तद्रूपयोर्भेदो नास्तीति सूचितम् । भगवतः पृथिवीत्वे लक्षणम् (ज्ञापकम्) आह- **अस्यां हीति** ॥ अस्यां सर्वं प्राणिजातं (जगत्) प्रतिष्ठितं= आश्रितम् । तदधीनमिति यावत् । एतामेव नातिशीयन्ते= नातिशेरते इति । पृथिवीनामा हरिरेव सर्वाश्रयः सर्वोत्तम इति भावः ॥

## (५) 'सर्वच्छन्दोऽभिधो ह्येषः सर्वदेवाभिधो ह्यसौ ।
## सर्वलोकाभिधो ह्येषस्तेषां तदुपचारतः ॥' इति वामने ॥ २५ ॥

**(५) ननु श्रुत्या पूर्वपक्षिते कथं लिङ्गमात्रेण निर्णयः ? अत आहुः- सर्वेति ॥ वामन इति ॥ गायत्र्यादिशब्दानां विष्णौ रूढ्युक्तेरिति भावः । तथा च हि= यतः, तथा चेतोऽर्पणार्थं निगद्यते, अतः, यत इत्यादिदर्शनमस्ति अतश्च, वामने इत्युक्तेश्च, 'इति चेत्- न' इति सम्बन्ध इति बोध्यम् ॥**

ननु श्रुतौ गुणमात्रमुच्यते, न तूपासनम्, तत्कथमुक्तमुपासनार्थमिति चेत्- न- अग्रे उपासनापादे 'आध्यानाय प्रयोजनाभावात्' (३.३.१५) इति सूत्रे गुणकथनस्य उपासनार्थत्वोक्तेः । 'गायति त्रायते च' इति श्रुतिः उपलक्षणं वागादिशब्दनिर्वचनश्रुतेरिति ध्येयम् ॥

नन्वत्र सूत्रे पूर्वपक्षफलं तु छान्दोग्यस्थज्योतिषोऽन्यत्वे 'विमे कर्णा' इति श्रुत्युक्तज्योतिरपि अन्यदेव स्यादिति वक्तव्यम्- तच्च न सम्भवति । अस्यान्यत्वेऽपि पूर्वोक्तस्यान्यत्वे नियामकाभावात् ।

न चास्य अन्यत्वे एतत्समाख्यया पूर्वोक्तमपि अन्यदेव स्यादिति वाच्यम्- विचरणरूपलिङ्गेन निर्णीतस्य विष्णुपरत्वस्य दुर्बलसमाख्यया बाधायोगात् । प्रत्युत लिङ्गेन निर्णीत-('वि मे कर्णौ' इति) श्रुतिसमाख्यया 'परो दिवा' इति श्रुतेरर्थनिर्णये सम्भवति पूर्वपक्ष एव निर्बीजः स्यात् ।

न च 'परो दिवा' इति श्रुतेः उपक्रमस्थगायत्रीश्रुत्या अन्यपरत्वमेव युक्तम् । समाख्यायाः श्रुत्यपेक्षया दुर्बलत्वात्, ततश्च पूर्वपक्षो युक्त एवेति पूर्वोक्तज्योतिरप्यन्यदेवेति वाच्यम् । छान्दोग्यज्योतिषोऽन्यत्वेऽपि पूर्वोक्तज्योतिषो लिङ्गेन विष्णुपरत्वाङ्गीकारे बाधकाभावात्, इति चेत्, न । हृदिस्थज्योतिष एव उभयत्रापि वाच्यत्वेन प्रतिपाद्यस्य एकत्वात् । अत्रत्यज्योतिःपदस्य श्रुत्याऽन्यपरत्वे पूर्वोक्तज्योतिःपदमपि अन्यपरमेव स्यादित्याशयात् । विषयादिकमनुक्त्वा प्रथमतः सूत्रपठनम्- अन्यत्रापि अधिकरणरचनायाः पूर्वं सूत्रनिर्देशे बाधकाभाव इति सूचनायेति बोध्यम् । अत एव प्राणनये सूत्रमेव आदौ निर्दिष्टमित्यवधेयम् ॥ २५ ॥

(५) **सर्वच्छन्द इति** ॥ **एषः**= विष्णुः, **सर्वच्छन्दोऽभिधः**= गायत्र्यादिसर्वच्छन्दसाम् अभिधेव अभिधा यस्य सः, तथा छन्दोवाचकगायत्र्यादिशब्दवाच्यः, **असौ**= विष्णुः, **सर्वदेवाभिधः**= पूर्ववत् व्यधिकरणबहुव्रीहिः । देवतावाचकाग्न्यादिशब्दवाच्यः । **एषः**= विष्णुः **सर्वलोकाभिधः**= लोकवाचकपृथिव्यादिशब्दवाच्यः । समासः पूर्ववत् । **हि**= प्रसिद्धः । एवमेव पूर्वहिद्वयस्याप्यर्थः । **तेषां**= वेद-देवलोकानाम्, **तत्**= तत्तच्छब्दवाच्यत्वम् **उपचारतः**= भगवत्समीपे स्थितत्वात्, अमुख्यवृत्त्या इत्यर्थः । वेद-लोकयोः प्रत्यक्षत्वात् **एष** इति, देवानां परोक्षत्वात् **असौ** इति निर्देशः ॥ २५ ॥

**(भूतामृतपादवत्त्वव्यपदेशादत्र विष्णुरेव वाच्यः)**

## (६) ॥ ॐ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॐ ॥ २६ ॥

(६) हेत्वन्तरेण उक्तार्थसाधनाय सूत्रम्- **ॐ भूतादीति** ॥ भूतं= समस्तं जगत्, आदिः येषां ते- **भूतादयः**= भूतामृतरूपाः पादाः यस्य तत् । भावप्रधानम्, तेन व्यपदेशः, **भूतादिपादव्यपदेशेति**

**विग्रहः।** लुप्तषष्ठीकम्। अनुपपत्तेः, तत्तु, छन्दः, अन्यः, इति वर्तते। सप्तम्या विपरिणम्यते। **अयमर्थः**- छन्दसि= गायत्रीप्रकरणे, भूतादिपादव्यपदेशस्य= 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतम्' इति भूताऽमृतरूप-पादवत्व-व्यवहारस्य, तस्मिंस्तु= विष्णावेव, उपपत्तेः । अन्यस्मिन्= अन्यत्र= गायत्रीच्छन्द आदौ अनुपपत्तेश्च, एवं= विष्णुरेव गायत्रीपदवाच्यः, इति ॥

**(७) 'तावानस्य महिमा ततो ज्यायांश्च पूरुषः ।**
**पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥' (छा.उ.३-१२-६) इति ।**

(७) सूत्रसूचितश्रुतिमाहुः- **तावानिति ॥ दिवीतीति ॥** इत्यत्रेत्यर्थः । अस्य सौत्र-'व्यपदेशे' अन्वयः ।

(७) **तावानिति** ॥ (छा. ३.१२.६) सामवेदपाठ एवायम्। ऋग्वेदे तु- 'एतावानस्य' इति 'पादोऽस्य विश्वा भूतानि' इति 'अतो ज्यायान्' इति च पाठो दृश्यते। **अस्य**= पुरुषस्य विष्णोः न केवलं **तावान्** अमृतत्वेशानत्वादिरेव **महिमा**, किन्तु **पूरुषः**= भगवान् **ततः**= पूर्वोक्तमहिमापेक्षया **ज्यायांश्च**= अधिक-महिमवान्। ज्यायस्त्वमेव आह- **पादेत्यादिना ॥ सर्वा भूतानि**= सर्वं जगत्, **अस्य**= विष्णोः **पादः**= एकदेशसदृशः भिन्नांशः। **अमृतं**= नाशरहितम् **अस्य**= विष्णोः, **त्रिपात्**= स्वरूपभूतांशपादत्रयं नारायण-वासुदेव-वैकुण्ठाख्यं **दिवि** द्योतनात् द्युशब्दवाच्यश्वेतद्वीप-अनन्तासन-वैकुण्ठलोकेषु तिष्ठति इत्यर्थः ॥

**(८) 'सुवर्णं कोशँ रजसा परीवृतम्। देवानां वसुधानीं विराजम्।**
**अमृतस्य पूर्णं तामु कलां विचक्षते। पादं षड्ढोतुर्न किला विवित्से ॥'**
**(तै.आ.३–११) इति श्रुतेः ।**

**पाद इति एकदेशपरिमितं चतुर्भागबल इतिवद्भिन्नं च ।**

(८) नन्वत्र श्रुतौ पादशब्दस्य चतुर्थांशपरत्वे जगदपेक्षया चतुर्गुणितबलवानित्यर्थः स्यात्। एकदेशपरत्वे अभेदशङ्का स्यात्, अत आहुः- **सुवर्णमित्यादि ॥ पाद इति ॥** पादशब्देनेत्यर्थः। **एकदेशपरिमितं**= विष्णुसामर्थ्यैकदेशसामर्थ्यसदृशपरिमितसामर्थ्यवत् । उच्यत इति शेषः । **चतुर्भागबल इति ॥** 'यज्ञदत्तात् चतुर्भागबलो देवदत्तः' इत्यत्र प्रतीयमानयज्ञदत्तीयबलावधिकचतुर्गुणित-तद्भेदविशिष्टदेवदत्तीयबलवत् इत्यर्थः। **भिन्नं चेति ॥** विश्वमिति शेषः। एवं च- श्रुतिबलात् पादशब्दः एकदेशपरः । एकदेशत्वेऽपि उक्तदृष्टान्ते बलयोः भेदवत् जगद्ब्रह्मणोर्भेद एवेति भावः ॥

(८) **सुवर्णमिति** ॥ (तै.आ. ३.११.२३-२४) **सुवर्णं**= एकस्मिन् कपाले सुवर्णमयम्, **रजसा परीवृतं**= रजोगुणोपलक्षितअबग्निमरुन्नभोऽहंकृन्महत्तत्वगुणत्रयैः परिवेष्टितं **विराजं**= ब्रह्मणः शरीरं **कोशं**= ब्रह्माण्डाख्यं यदस्ति, **देवानां वसुधानीं**= द्रव्यनिधानमञ्जूषाम्, **अमृतस्य पूर्णां**= मुक्तेः पूर्णाम्, **तां**= कोशम्, **षड्ढोतुः**= षडिन्द्रियेषु विषयान् जुह्वतः, षडिन्द्रियाणि विषयेषु जीवेन सह जुह्वतो वा, षडिन्द्रियैः साराऽऽदानकर्तुर्वा विष्णोः **कलां उ**= एकदेशपरिमितामेव, पादम्, **विचक्षते**= व्यवहरन्ति । **पादशब्देन** पुरुषसूक्ताद्यागमाः । नात्र पादशब्देन अङ्घ्रिम्, नापि चतुर्थांशं वदन्तीति एवार्थकस्य उ इत्यस्य प्रयोजनम्, अत्र हेतुमाह- **न किलेति** ॥ यतः सा मञ्जूषा, **पादं**= चतुर्थांशसाम्यम्, **न विवित्से**= न लेभे, **किल** इत्यर्थः । (अत इति शेषः, अस्य विचक्षते इत्यनेनान्वयः)

**(९) स हि पुरुषसूक्ताभिधेयः । 'यज्ञेन यज्ञमयजन्त' (तै.आ.३-१२) इति यज्ञशब्दात् । 'यज्ञो विष्णुर्देवता' इति हि श्रुतिः ।**

(९) **विष्णोः पुरुषसूक्तोक्तत्वात् भूतादिपादवाच्यत्वं तल्लिङ्गम्, गायत्रीवाच्यं वा तत्, इत्याहुः- स हीति ॥ हि**= यतः सः= विष्णुः **पुरुषसूक्ताभिधेयः** अत इत्यर्थः ॥ अस्य सौत्रव्यपदेशोपपत्तौ अन्वयः । पुरुषसूक्ताभिधेयत्वे मानम्- **यज्ञेनेति** ॥ **यज्ञशब्दादिति** ॥ विष्णुवाचकयज्ञशब्दादि- त्यर्थः । यज्ञशब्दस्य विष्णुपरत्वे मानम्- **यज्ञो विष्णुरिति** ॥ हि= यतः, इति श्रुतिरस्ति अत इत्यर्थः। (अस्य पुरुषसूक्ताभिधेय इत्यत्रान्वयः)

(९) **यज्ञेनेति** ॥ (तै.आ. ३.१२.३९) देवाः, **यज्ञेन**= ज्ञानकर्मात्मकेन रुद्राख्यपशुना वा, **यज्ञं**= विष्णुम् **अयजन्त**= अपूजयन्नित्यर्थः । **यज्ञो विष्णुरिति** ॥ **विष्णुः**= देवता, **यज्ञः**= तच्छब्दवाच्य इत्यर्थः । यजुषि 'यज्ञो वै विष्णुः इति पठ्यते, अथापि शाखान्तरमेतत् ।

**(१०) 'तस्मिन् काले महाराज राम एवाभिधीयते । यथा हि पौरुषे सूक्ते विष्णुरेवाभिधीयते ॥' इति (च) स्कान्दे ॥ २६ ॥**

(१०) ननु भूतादिपादप्रकरणे यज्ञशब्दो नास्ति । पुरुषसूक्तस्य अन्यपरत्वेऽपि विष्णोः प्रासङ्गिकत्वेन यज्ञशब्दप्रयोगः इत्यस्तु । ततश्च पुरुषसूक्तस्य कथं विष्णुपरत्वम् ? इति शङ्कावारणाय, अत्र स्मृतिं चाहुः- **तस्मिन्निति** ॥ **स्कान्द इति** ॥ स्कान्दे इत्युक्तेः इत्यर्थः । **अस्यापि पुरुष- सूक्ताभिधेयत्वेऽन्वयः** ॥ २६ ॥

(१०) **तस्मिन्निति** ॥ हे महाराज, **तस्मिन् काले**= त्रेतायुगे, सर्वैः पुरुषनामभिः **राम एवाभिधीयते**= उच्यते । अत्र दृष्टान्तम्- **यथेत्यादि** ॥ **पौरुषे सूक्ते**= पुरुषसम्बन्धिनि सूक्ते **विष्णुरेव यथाभिधीयते** तथेत्यर्थः ॥ हि= प्रसिद्धम् । तथा इत्यस्य पूर्वार्धेन सम्बन्धः ॥ २६-२७ ॥

## (११) ॥ ॐ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॐ ॥ २७ ॥

**'त्रिपादस्यामृतं दिवि'(छां. ३-१२-६) इति पूर्वोपदेशः 'परो दिवः'(छां. ३-१३-७) इति पञ्चम्यन्तः पश्चिमः । तस्मान्नैकं वस्त्वत्रोच्यत इति चेत्-**

(११) **गायत्रीपदवाच्यो विष्णुरेवेति उक्तमाक्षिप्य समादधत्सूत्रम्- ॐ उपदेशभेदादिति** ॥ तत्तु इति वर्तते । यथायोग्यम् आवृत्तिविपरिणामौ । **अयमर्थः- उभयोः**= गायत्री-ज्योतिःपदप्रतिपाद्ययोः, **उपदेशभेदात्**= 'परो दिवा' इति, 'त्रिपादस्यामृतं दिवि' इति च उपदिश्यमानद्युस्थत्वदिवःपरत्वयोः विरुद्धत्वात्, उभयं= गायत्रीज्योतिरिति शब्दद्वयवाच्यम्, **न तत्**= न विष्णुः, **इति चेत् - न - उभयस्मिन्नपि**= निर्देशद्वयेऽपि एकस्य प्रतिपाद्यत्वेऽपि **अविरोधात्**= विवक्षाभेदेन विरोधपरिहारात् इति ॥ विरोधपरिहारस्तु- त्रिसप्तलोकेत्यादि भाष्ये स्पष्टः ॥

सूत्रं व्याचक्षाणाः सौत्रपूर्वपक्षमाहुः- **त्रिपादस्येत्यदिना** ॥ **पूर्वोपदेशः**= गायत्र्या द्युस्थत्वबोधकः पूर्वत्र (छा. ३.१२.६) पठ्यमानः । **पश्चिमः**= पश्चाद्भवः उत्तरत्र (छा. ३.१३) श्रूयमाणः, ज्योतिषो दिवःपरत्वबोधकः उपदेशः । **तस्मात्**= विरुद्धधर्माधिकरणत्वात् । **एकं**= विष्ण्वाख्यम् । **अत्र**= गायत्रीज्योतिःप्रकरणद्वये । **नोच्यत इति** ॥ किन्तु वस्तुद्वयमुच्यते । ततश्च तत्रान्यतरस्य विष्णुत्वेऽन्यतरस्य तदभाव इति भावः ॥

## (१२) न । त्रिसप्तलोकापेक्षयोभयस्मिन्नप्यविरोधात् ॥ २७ ॥

**॥ इति गायत्र्यधिकरणम् ॥**

(१२) सिद्धान्तांशं व्याचक्षते- **न इति** ॥ **त्रिसप्तेति** ॥ त्रयश्च सप्त चेति द्वन्द्वः, ततो लोकशब्देन कर्मधारयः । एकशेषनिर्दिष्टलोकपदार्थयोः त्रिसप्तेत्यस्य यथासङ्ख्यं सम्बन्धः । 'भूवादयो धातवः' इत्यत्र आदिपदार्थे भूवयोरिव । त्रिसप्तलोकानाम् अपेक्षा, तया इति विग्रहः । त्रिलोक्यभिप्रायेण, सप्तलोक्यभिप्रायेणेत्यर्थः ।

यद्यपि 'एकादिनवान्तानाम् एकशेषद्वन्द्वौ अनभिधानात् न स्तः' इति वैयाकरणानां मर्यादा ।

तथापि क्वचित् प्रयोगो दृश्यत एव। 'ह्व्येकयोर्द्विवचनैकवचने' इति पाणिनिसूत्रे, 'एकद्विकरणे हेतुः' इति नैषधे (१७सर्गे), 'एकद्वित्र्यनुपादानात्' इति चन्द्रालोके, 'ऊकाल' इति पाणिनिसूत्रव्याख्यानरूपवैयाकरणग्रन्थेषु एकद्वित्रिमात्रस्य क्रमेणेत्यादिः। इत्थं च 'अनभिधानान्न स्तः' इत्यस्य अयमाशयः- द्वित्वाभिप्रायेण एकौ, चतुरभिप्रायेण द्वे, षडभिप्रायेण त्रयः, इत्याद्येकशेषः, व्यक्तित्रयाभिप्रायेण एकद्वाः, पञ्चाभिप्रायेण द्वित्रयः, इत्यादिद्वन्द्वश्च न इति ॥

तथा च- अन्यपदार्थे प्रत्येकमन्वयाभिप्रायेण द्वन्द्वकरणे बाधकाभाव इति ज्ञेयम् ॥

त्रित्व-सप्तत्वरूपसङ्ख्यासमुदायस्य सङ्ख्यात्वाभावात्, 'दिक्सङ्ख्ये सञ्ज्ञायाम्' इति सूत्राप्रवृत्त्या विशेषणसमासे तस्य द्विगुत्वाभावेन स्त्रीत्वाभावात् त्रिसप्तलोकेत्यत्र ङीप् न ॥ **उभयस्मिन्नपि**= निर्देशद्वयेऽपि ॥ **अविरोधादिति** ॥ त्रिलोक्यभिप्रायेण **दिवि** इति निर्देशः, सप्तलोक्यभिप्रायेण **परो दिव** इति निर्देशः, इति विरोधपरिहार इति भावः । **उभयपदेनोपात्ते** बुद्ध्या विवेकेन यथासङ्ख्यं बोध्यम् ॥

**इदमुक्तं भवति**- भूर्भुवःस्वरित्यत्र भूपदेन अन्तरिक्षलोकात् अधःस्थितलोक उच्यते । लक्षयोजनोच्छ्रितान्तरिक्षलोकः भुवःपदेन, अन्तरिक्षादुपरितनं क्रीडाकान्त्यादिविशिष्टोत्कृष्टलोकसामान्यं स्वःपदेन, क्रीडाद्यर्थकदिवधातुप्रकृतिकडिविप्रत्ययान्तद्युशब्देन च, उच्यत इति त्रिलोकीपक्षे,

वैकुण्ठ-अनन्तासन-श्वेतद्वीपानाम्, द्युलोकत्वात्, तद्वृत्तिवैकुण्ठ-नारायण-वासुदेवाख्यरूपत्रयाभिप्रायेण स्वरूपभूतपादत्रयस्य द्युस्थत्वात् । अथान्तरिक्षात् अधःस्थितलोको भूलोकः, अन्तरिक्षलोको भुवर्लोकः, भूलोकात् उपरितनमेरुः सूर्यलोकः, अन्तरिक्षादुपरितनम् इन्द्रसदनं च देवलोकत्वात् स्वर्लोकः, द्युलोकश्चेत्युच्यते । द्युलोकादुपरितनाः महरादिलोकाः चत्वार इति सप्तलोकीपक्षे,

इन्द्रसदन-मेरुपर्वत-सूर्यलोकानां द्युलोकत्वात् क्रमेण इन्द्रसदनाद्यपेक्षया उपरितनानाम्, वैकुण्ठ-अनन्तासन-श्वेतद्वीपानां दिवःपरत्वात् तत्रत्यमूर्तित्रयस्य दिवःपरत्वं बोध्यम् ॥ इति ॥

ननु अन्यदेवलोकं परित्यज्य उपरित्वावधित्वेन इन्द्रसदनादीनामेव ग्रहणे को हेतुरिति चेत्- उच्यते- इन्द्रसदनसादृश्यं वैकुण्ठस्य, मेरुसादृश्यम् अनन्तासनस्य, सूर्यलोकसादृश्यं श्वेतद्वीपस्यास्तीति इन्द्रसदनादीनां ग्रहणम् इति ॥

ननु त्रिलोकीपक्षेऽपि इन्द्रसदनादिरूपयत्किञ्चिद्दिवःपरत्वमादाय श्रुत्यर्थनिर्वाहे, तदर्थं पक्षान्तराश्रयणं कुत इति चेत्- न - श्रुतौ सामान्यतो दिवःपरत्वमुच्यते । तत्र परत्वं= उत्कृष्टत्वम्, भिन्नत्वं च, भेदस्थले, अवच्छेदकावच्छेदेनान्वयस्य व्युत्पत्तिसिद्धत्वेन द्युलोकत्वावच्छिन्न-प्रतियोगिताकभेदवल्लोकवृत्तित्वस्य प्रतीत्या यत्किञ्चिल्लोकापेक्षया परत्वस्य वाक्यार्थत्वाभावात् । एवमुत्कृष्टविषयेऽपि ज्ञेयम् ॥

अत्रेदं विचार्यते- ननु 'अन्तस्तद्धर्मोपदेशात्', 'भेदव्यपदेशाच्चान्यः', आकाशः, प्राणः, ज्योतिः, इति न्यासोऽस्तु । त्रिषु तद्धर्मोपदेशादिति वर्तते । गायत्री तथा चेतोऽर्पणनिगदाच्च- चात्= तद्धर्मोपदेशादिति वर्तते । तद्धर्मश्च गानत्राणकर्तृत्वमेव शेषं यथाश्रुतमस्तु, इति चेत्, न । भेदव्यपदेशसूत्रेण व्यवधानात्, तद्धर्मेत्यस्य अननुवृत्तिशङ्कावकाशात्, हेत्वनुवृत्तेः प्रायोऽदर्शनाच्च इति ॥ २७ ॥

॥ इति गायत्र्यधिकरणम् ॥ ११ ॥

## १२. पादान्त्यप्राणाधिकरणम्

**(१) प्राणो विष्णुरित्युक्तम् । तत्र 'ता वा एताः शीर्षन् श्रियः श्रिताश्चक्षुश्श्रोत्रं मनो वाक्प्राणः' (ऐ.आ. २-१-४) इत्यत्र प्राणस्य विष्णुत्वं न युज्यते । इन्द्रियैः सहाभिधानादिति । अत आह–**

अत्र नये लोकतोऽन्यत्र प्रसिद्धप्राणनाम्नो विष्णौ समन्वयसमर्थनम् ॥ (४. सू. अ.)

(१) **प्राणो विष्णुरित्युक्तमिति ॥** प्राणाधिकरणे इत्युक्तमित्यर्थः । अनेन पूर्वप्राणाधिकरणेन (१.१.९ अ.) सङ्गतिर्दर्शिता । तत्र= तादृशप्राणविषयके । विषयवाक्यमाहुः- **ता वा इति ॥** प्राणस्य= प्राणपदवाच्यस्येत्यर्थः । अनेन प्राणशब्दोऽत्र विषय इति सूचितम् । **न युज्यत इति ॥** ऐतरेयप्राणशब्दवाच्यो विष्णुः ? उत वायुः ? इति सन्देहः । वाय्वादिरेव प्राणपदवाच्यः, न विष्णुः, इन्द्रियगणे गणितत्वादिति पूर्वपक्षश्चोक्तो वेदितव्यः। पूर्वप्राणनयः, अन्यत्र प्रसिद्धिश्च, सन्देहबीजमिति बोध्यम् ॥ **इन्द्रियैस्सहेति ॥** अनेन निरवकाशलिङ्गश्रुतिबाहुल्यरूपहेतुबोधनद्वारा अभ्यधिका शङ्का सूचिता । एवं च पूर्वप्राणनयेन न गतार्थमिदमिति बोध्यम् । **अभिधानादिति ॥** तैस्सह उक्तत्वादित्यर्थः ॥

(१) ता वा इति ॥ (ऐ.आ. २.१.४) चतुर्मुखशिरसि शिरश्शब्दप्रवृत्तिनिमित्तकथनाय प्रवृत्तमेतत् । यतः ता एताः= चक्षुः, श्रोत्रम्, मनो, वाक्, प्राणः इत्येतच्छब्दवाच्याः= चक्षुराद्यभिमानिन्यो देवताः, शीर्षन्= मूर्ध्नि श्रिताः । अत एव श्रयणात् श्रियः= (श्रीशब्दवाच्याः) इति सिद्धान्ते अर्थः । अनेन चक्षुरादिभिः श्रितत्वमेव शिरश्शब्दप्रवृत्तिनिमित्तमित्युक्तं भवति । पूर्वपक्षी तु प्राणशब्दं विष्णुपरं न मन्यते ॥

**(देवोपास्यत्वादिलिङ्गश्रवणादैतरेयोक्तप्राणः विष्णुरेव)**

### (२) ॥ ॐ प्राणस्तथाऽनुगमात् ॐ ॥ २८ ॥

(२) **ॐ प्राणस्तथानुगमादिति ॥ अनुगमात्=** अनुवृत्तेः । पौनःपुन्येन श्रवणरूपाभ्यासादिति यावत् । साध्यबलात् विष्णुत्वप्रापकस्येति लभ्यते । **तथा**शब्दबलात् अत्रापीति ॥ **अयमर्थः- तथा=** 'तद्वै त्वम्' इति श्रुताविव, **अत्रापि=** 'तावा एता' इति श्रुतावपि **प्राणः=** प्राणशब्दवाच्यः, **तत्तु=** विष्णुरेव **अनुगमात्=** 'तं देवाः प्राणयन्त' इत्यादौ देवकर्तृकोपदेशविषयत्वादिरूपविष्णुत्वप्रापकधर्माभ्यासात्, 'तं प्रपदाभ्यां प्रापयत, ब्रह्मेमं पुरुषम्' इत्यादौ पुनःपुनः ब्रह्मशब्दोपदेशाच्च इति ॥

**(३) 'तं देवाः प्राणयन्त' (ऐ.आ. २-१-५) 'स एषोऽसुः स एष प्राणः' (ऐ.आ. २-३-८) 'प्राण ऋच इत्येव विद्यात्' 'तदयं प्राणोऽधितिष्ठति' इत्याद्यनुगमात् । अत्रापि प्राणो विष्णुरेव ।**

**(४) 'विष्णुमेवानयन् देवा विष्णुं भूतिमुपासते ।**
**स एव सर्ववेदोक्तस्तद्रथो देह उच्यते ॥' इति स्कान्दे ।**

**ब्रह्मशब्दानुगमाच्च ॥ २८ ॥**

(३) **सूत्रार्थमाहुः- 'तं देवा' इत्यादिना ॥** तं देवा इत्यनेन देवकर्तृकोपदेशविषयत्वम्, 'स एषोऽसुः, स एषः प्राणः' इत्याभ्यां भूतित्वेन सर्वदेवोपास्यत्वम्, 'सर्वा ऋच' इत्यनेन सर्ववेदप्रतिपाद्यत्वम्, 'तदयं प्राण' इत्यनेन सर्वदेहरथित्वम् उक्तमिति विवेकः ॥

**इत्याद्यनुगमादिति ॥** इत्यादिषु ब्रह्मधर्माभ्यासादित्यर्थः । **अत्रापि=** ऐतरेयश्रुतावपि ॥ उक्तश्रुतीनामर्थो नान्यथा ग्राह्य इत्याहुः- **विष्णुमेवेति ॥ स्कान्द इति ॥** स्कान्दे इति श्रुत्यर्थोक्ते-रित्यर्थः । स्मृत्यैव श्रुत्यर्थस्योक्तत्वात् श्रुत्यर्थभूतदेवोपास्यत्वादीनां कथञ्चिदप्यन्यत्र सम्भवो वक्तुमशक्य इति भावः । **ब्रह्मेति ॥** 'ब्रह्मेमं पुरुषम्' (ऐ.आ. २.१.४) इत्यादौ ब्रह्मशब्दाभ्यासाच्च इत्यर्थः । अन्वयस्तु स्पष्टः ॥ २८ ॥

(३) तं देवा इति ॥ (ऐ.आ. २.१.५) तं= नारायणं वायुं च, देवाः **प्राणयन्त**= प्रकर्षेण शिष्यादिषु नीतवन्त उपदिदिशुरित्यर्थः ॥

**स एषोऽसुरिति ॥** (ऐ.आ. २.१.८) **'स एष प्राणः**, स एष भूतिश्चाऽभूतिश्च, तं भूतिरिति देवा उपासाञ्चक्रिरे' इति वाक्यशेषः स एषः= भगवान्, दुष्टनिरसनात् असुः, प्रकृष्टानन्दरूपत्वात् प्राणः, सुराणां ज्ञानैश्वर्यादिप्रदत्वात् भूतिः, असुराणाम् अज्ञानाद्यनैश्वर्यप्रदत्वाद् अभूतिः, इत्युच्यत इत्यर्थः । **प्राण इति ॥** (ऐ.आ. २.२.२) 'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋचः' इति श्रूयते । यास्ता एताः सर्वा ऋचः, ये सर्वे वेदाः, सर्वे घोषाः= समुद्रादिघोषाः, तेषां च एकैव व्याहृतिः= एकमेव प्रतिपाद्यम् । प्रतिपाद्यमेवाह- **प्राण एवेति ॥** विष्णुरेवेत्यर्थः । ऋचः प्राणे एव= विष्णावेव **विद्यात्**= विशेषत इन्द्रादिशब्दैः विष्णुप्रतिपादिका एव इति तं जानीयात् इत्यर्थः ॥

**तदयमिति** (ऐ.आ. २.३.८) 'अथ देवरथः तस्य वागुद्धिः श्रोत्रे पक्षसी चक्षुषी युक्ते मनःसङ्गृहीता तदयं प्राणोऽधितिष्ठति' इति श्रूयते । **अथ**= प्रमेयान्तरमारभ्यते, **देवरथः**= देवस्य= विष्णोः वायोश्च,

रथः अध्यात्मम्= अस्मदादिदेहाख्यो रथः, तयोरेव देवनिर्मितप्रसिद्धरथश्च, उच्यत इति शेषः । **तस्य=** देहाख्यरथस्य, **वाक्=** वागभिमानिनी उमा, **उद्धिः=** उद्धरणरज्जुः, **श्रोत्रे=** दक्षिणवामश्रोत्रगतचन्द्रतद्भार्ये, **पक्षसी=** दक्षिणवामपार्श्वगताश्वौ, **चक्षुषी=** दक्षिणवामचक्षुर्गतसूर्यतद्भार्ये, **युक्ते=** पुरतो योजिताश्वौ, **मनः=** मनोऽभिमानिनी तद्गतो रुद्रः, **सङ्गृहीता=** सारथिरित्यर्थः ॥

**अधिदैवपक्षे** तु- तस्य= देवनिर्मितप्रसिद्धरथस्य, वाक्= वाङ्नाम्नी उमा, उद्धिः= नागाकारा अश्वोद्धरणरज्जुः, श्रोत्रे= तत्सञ्ज्ञिके चन्द्ररोहिण्यौ, पक्षसी= पार्श्वतो नियुक्ताश्वाकारे, चक्षुषी= तत्सञ्ज्ञिके सूर्यतद्भार्ये, युक्ते= पुरतो नियुक्ताश्वाकारे, मनः= तत्सञ्ज्ञको रुद्रः, सङ्गृहीता= सारथिरित्यर्थः । तदयमिति कर्मधारयः, प्राण इत्यस्य विशेषणम् । उभयविधरथमिति शेषः । **अयमर्थः- तदयं=** सोऽयम्, **प्राणः=** विष्णुः, वायुश्च, **उभयविधं=** देहाख्यं प्रसिद्धं च, **रथम् अधितिष्ठतीति** ॥ यद्वा- तदिति द्वितीयान्तम्, विभक्तेः 'सुपां सुलुक्' इति लुक्, उभयविधरथमित्यर्थः ।

(४) **विष्णुमिति** ॥ देवाः विष्णुमेव शिष्यादिषु उपदिदिशुः, विष्णुमेव भूर्ति=ज्ञानादिप्रदमिति उपासते । सः= विष्णुरेव, सर्ववेदोक्तः= प्राधान्येन सर्ववेदप्रतिपाद्यः, देहः= अस्मदादिदेहः, तद्रथः= तस्य विष्णोरेव रथ इत्युच्यत इत्यर्थः ॥ २८ ॥

**(परमात्मावेशबाहुल्यादिन्द्रस्य प्राणत्वेन व्यपदेशः)**

## (५) ॥ ॐ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॐ ॥

(५) **शङ्कासमाधानाभ्याम् ऐतरेय-प्राणपदवाच्यो विष्णुरेव इति उक्तार्थस्य दृढीकरणाय सूत्रम्-**

**ॐ न वक्तुरात्मेत्यादि ॥ प्राणः, तत्, इति वर्तते वक्तुरिति षष्ठ्यर्थः= उद्देश्यत्वम् । 'आत्मनि इति' इति विग्रहे, अध्यात्ममिति अव्ययीभावः । अध्यात्मे सम्बन्धः । इति सप्तमीतत्पुरुषः । ततो भूतशब्देन षष्ठीसमासः । किञ्च अधिकश्चासौ आत्मा चेति कर्मधारयः । अध्यात्मा= परमात्मा । शेषं पूर्ववत् । यथायथम् आवृत्तिविपरिणामौ ॥**

**अयमर्थः- वक्तुः=** बृहतीसहस्रवक्तुः विश्वामित्रस्य, तदुद्देशेन, **आत्मोपदेशात्=** आत्मनः= प्रकृतोपदेशकर्तुः इन्द्रस्य प्राणत्वेन कथनात्, प्राणो **न** तत्= न विष्णुः, **इति चेत् न, हि=** यतः **अस्मिन्** प्रकरणे प्राणस्य= 'प्राणो वा अहमस्मि' इत्युक्तप्राणशब्दवाच्यस्य, **अध्यात्मसम्बन्ध-भूमा=** 'प्राणस्त्वं प्राणस्सर्वाणि' इत्यादिना बहुदेहसम्बन्धः, व्यापकत्वमिति यावत् । उच्यत इति शेषः । अथवा- **अस्मिन्=** इन्द्रे **अध्यात्मसम्बन्धभूमा=** परमात्माऽऽवेशबाहुल्यम् उच्यते, अत इति ॥ एवं च विष्णुरेव प्राण इति भावः ॥

**(६) 'प्राणो वा अहमस्म्यृषे' (ऐ.आ. २-२-३) इति वक्तुरात्मोपदेशादिन्द्र एवेति चेन्न, 'प्राणस्त्वं प्राणः सर्वाणि भूतानि' इति (ऐ.आ. २-२-३) बह्वध्यात्मसम्बन्धो ह्यत्र विद्यते ॥ २९ ॥**

(६) श्रुत्युपन्यासपूर्वं सूत्रं व्याचक्षते- **प्राणो वा इत्यादिना ॥ ऋषे इतीति ॥** इत्यनेन सूत्रे- वक्तुरिति षष्ठ्यर्थ उद्देश्यत्वमिति सूचितम् । तच्च उपदेशे अन्वेति । **इन्द्र एवेति ॥** इदं फलितार्थ- कथनम् । विष्णुर्न इत्युक्ते इन्द्रस्यैव प्रकृतत्वाल्लाभात् । अत एव टीकायाम्- नञध्याहारेणेत्युक्तम् । अन्यथा एकस्यैव नञः वाक्यघटकत्वेनाध्याहारो व्यर्थस्स्यात् । **भूतानीति ॥** अत्र प्रकरणे प्राणस्य इति शेषः । हि= यतः भूतादीत्यादिज्ञाप्यः बह्वध्यात्मसम्बन्धः अत्र प्रकरणे प्राणस्य बहुदेहसम्बन्धो विद्यते । यद्वा- अत्र इन्द्रे बह्वध्यात्मसम्बन्धो बह्वन्तर्यामिसम्बन्धो विद्यते, अतः- इति चेन्नेत्यन्वयः ॥ २९ ॥

(६) **प्राणो वा इति ॥** (ऐ.आ. २.२.३) अस्य पूर्ववाक्यम्- **'तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागा वरं ते ददामीति, स होवाच त्वामेव विजानीयामिति, तमिन्द्र उवाच'** इति ॥ तं= विश्वामित्रम्, इन्द्र उवाच । हे ऋषे, मे प्रियं धाम उपागाः= प्राप्नुहि, वरं ते ददामि इति । वैशब्दोऽवधारणे प्रसिद्धौ वा । स एवमुक्तो विश्वामित्रः- त्वां सामान्यतः पूर्वं जानान एव । परं तु इदानीं त्वामेव विशेषतो जानीयामिति इन्द्रमुवाचेत्यर्थः । तम्= एवं वदन्तं विश्वामित्रम्, हे ऋषे अहं प्राणोऽस्मीति इन्द्र उवाचेत्यर्थः- पूर्वपक्षे ॥

**सिद्धान्ते तु-** इन्द्रादिपदानां तदन्तर्यामिभगवान् अर्थः । धामेति- सालोक्यादिप्राप्ति- साधनभगवत्प्रसादपरम् । त्वामेवेत्यत्र- युष्मच्छब्देनेन्द्रान्तर्यामिभगवतः परामर्शः । त्वामेव जानीयामिति वरप्रतिपादकं वाक्यम् । प्राणोऽहमित्यत्राहंपदेन अन्तर्यामिणः परामर्शः । प्राण इत्यस्य प्रकृष्टानन्दवत्त्वात् प्राणशब्दवाच्य इत्यर्थः । अन्तःप्रविष्टत्वेन ज्ञानं= सामान्यज्ञानम् । विशेषज्ञानं तु- गुणविशेषविशिष्टत्वेन जायमानं ज्ञानम्- इति पदार्थमादायान्वयः पूर्ववदेव द्रष्टव्यः ॥

**प्राणस्त्वमिति ॥ (ऐ.आ. २.२.३) त्वं=** त्वदन्तर्यामीत्यर्थः । एवमुत्तरत्रापि । ननु लिङ्गस्य अन्तर्यामिविषयकत्वे- 'उदासीनौ च तावास्तां केशवश्चाब्जसम्भवः' इति भगवतः औदासीन्यप्रतिपादन- परैतरेयभाष्यविरोधः । प्राणसंवादादेः अन्तर्यामिणैव वक्तव्यत्वात्- इति चेत् - उच्यते । (**ऐ.भा.**) वचनस्य, यज्ञान्तस्थः, स्वयम् (भाग.ता. ३.२७.७०) इति वचनेन अन्तर्यामिव्यतिरिक्तबाह्यरूपविषयकत्वात् न दोष इति ॥

न चैवमपि 'प्राणं विना न च ब्रह्म तं विना प्राण एव च' इति अष्टमबृहद्भाष्योक्तेः- प्राणनिर्गमे ब्रह्मणोऽपि बहिर्निर्गमात्, तस्य तत्र औदासीन्येन स्थितिकथनम् अयुक्तमिति वाच्यम्-

'अंशेन सुप्तो ब्रह्मा तु अंशेन निरगात्पुनः ।
स्वदेहाद्वायुसहितो विष्णुना च जगत्प्रभुः ॥' (भाग.ता. ३.२७.७३)

इति वचनबलाद् अंशेन निर्गमेऽप्यंशेन निर्व्यापाररूपौदासीन्येन स्थितिसम्भवात् ॥ २९ ॥

**(अन्तर्याम्यभिप्रायेण इन्द्रादिकर्तृकोपदेश उपपन्नः)**

## (७) ॥ ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ ॥ ३० ॥

**(७) अथान्तर्यामिपरत्वे मयि प्राणः त्वयि प्राण इति व्यपदेशः स्यात्, न तु- त्वं प्राण इति निर्देशः, इत्याशङ्कायाम्, त्वं प्राण इत्यादिनिर्देशस्य दृष्टान्तमुखेनोपपत्तिकथनाय सूत्रम्- ॐ शास्त्रदृष्ट्येति ॥ शास्ति= नियमयतीति- शास्त्रम्= अन्तर्यामी, तस्य दृष्टिः । तुः एवार्थे । वामदेववदिति षष्ठ्यन्तात् वतिः । युज्यत इत्यध्याह्रियते । अयमर्थः- उपदेशः= 'प्राणो वाऽहमस्मि' इति इन्द्रकर्तृकोपदेशः, वामदेववत्= वामदेवकर्तृक-'अहं मनुरभवं सूर्यश्च' इत्याद्युपदेशवत्, शास्त्रदृष्ट्या= अन्तर्याम्यभिप्रायेण युज्यत एवेति ॥**

## (८) शास्त्रमन्तर्यामी । 'संविच्छास्त्रं परं पदम्' इति हि भागवते ।

**(८) शास्त्रपदस्य अर्थमाहुः- शास्त्रमन्तर्यामीति ॥ भागवते इति ॥ भागवते इत्युक्तेः शास्त्रं= शास्त्रपदवाच्यम् अन्तर्यामीत्यर्थः ।**

**(८) संविदिति ॥ (भाग. १.६. १७)**

'स्वप्नो मायाऽग्रहश्शय्या जाग्रदाभास आत्मनः ।
नामरूपक्रियावृत्तिः संविच्छास्त्रं परं पदम् ॥'

इति पठ्यते । **अयमर्थः**- आत्मनः= जीवस्य, माया= वासनामयवस्तुज्ञानरूपः, स्वप्नः= स्वप्नावस्था, अग्रहः= जाग्रत्स्वप्नज्ञानरहितः शय्या= सुषुप्तिः, नामरूपक्रियावृत्तिः= शब्दार्थकर्मसु वृत्तिः व्यापृतिः यस्य सः, तथा आभासः= प्रत्ययः शब्दादिविषयकज्ञानरूपः, जाग्रत्= जाग्रदवस्था च, इत्यवस्थात्रयं यस्माद् आत्मनः= परमात्मनः सकाशात् भवति तत् संवित्= ज्ञानरूपं सर्वज्ञं वा, शास्त्रं= सर्वनियन्तृ- अन्तर्यामि परम्=उत्तमम्, पदं=सद्भिः प्राप्यं ब्रह्म, अहं चिन्तयामि इति ॥ (पद्यते=प्राप्यत इति पदः, तमिति विग्रहः)

**(९) 'तत्तन्नाम्नोच्यते विष्णुः सर्वशास्तृत्वहेतुतः ।**
**न क्वापि किञ्चिन्नामास्ति तमृते पुरुषोत्तमम् ॥' इति च पाद्मे ।**
**'अहं मनुरभवं सूर्यश्च' (ऋ. ४-२६-१) इत्यादिवत् ॥ ३० ॥**

(९) अन्तर्यामिणि अहम्, त्वम् इत्यादिशब्दप्रयोगविषये प्रमाणत्वेन स्मृतिमाहुः- **तत्तन्नाम्नेति ॥ पाद्मे इति ॥** पाद्मे इत्युक्तेरित्यर्थः । अत्र सूत्रे अध्याहृतं 'युज्यते' इति पदं सौत्रम् उपदेश इति पदं चानुवर्तते । अन्वयः स्पष्टः । वामदेववदिति दृष्टान्तपदस्य अर्थमाहुः- **अहं मनुरिति ॥** भाष्ये सूत्रस्थपदानामर्थ उक्तः, तदनुरोधेन सूत्रार्थ ऊह्य इति भावः ॥ ३० ॥

(९) **तत्तन्नाम्नेति ॥ सर्वशास्तृत्वहेतुतः**= सर्वनियन्तृत्वनिमित्तेन **विष्णुः तत्तन्नाम्ना उच्यते ।** अन्यवाचकत्वेन भासमानाहमादिशब्देनोच्यते । तं **पुरुषोत्तमम्, ऋते**= विना **क्वापि**= अन्यत्र जीवादौ **किञ्चिन्नाम**= कश्चन शब्दो नास्तीत्यर्थः । **अहं मनुरिति** ॥ (ऋ. ४.२६.१) **अहं**= वामदेवान्तर्यामी तत्तदन्तर्यामित्वेन **मनुः सूर्यश्च अभवम्** इत्यर्थः ॥ **आदिना**- 'अहं कक्षीवान् ऋषिः' इत्युत्तरऋङ्मन्त्रः, 'अहं ब्रह्मास्मि' इत्यादि च गृह्यते ॥ ३० ॥

**(अधिकारिभेदेनोपासनार्थम् अन्तर्यामिकथनम्)**

**(१०) ॥ ॐ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॐ ॥ ३१ ॥**

(१०) उक्तार्थस्यैव आक्षेपसमाधानाभ्यां स्थिरीकरणाय सूत्रम्- **ॐ जीवमुख्येति ॥** तत्तु, प्राणः, शास्त्रदृष्ट्या, उपपत्तेः, इति वर्तते । तिस्रो विधा यस्याः सा= त्रिविधा, त्रिविधैव त्रैविध्यम्, स्वार्थे ष्यञ्, सामान्ये नपुंसकम् । तत उपासाशब्देन कर्मधारयः । 'कडाराः कर्मधारये' इति विशेषणस्य परनिपातः । यथायथमावृत्तिविपरिणामौ ॥ **अयमर्थः- जीवमुख्यप्राणलिङ्गात्**= 'तावन्ति शत-संवत्सरस्य' इत्याद्यत्रगतशतायुष्ट्वादिजीवलिङ्गात् 'ता अहिंसन्ताहमुक्थमस्मि अहमुक्थमस्मि' इति कथनाद् इन्द्रियसंवादादिमुख्यप्राणलिङ्गात्, प्राणः न तत्= विष्णुः न, इति चेत् - न - जीवमुख्य-प्राणलिङ्गानां शास्त्रदृष्ट्या= अन्तर्यामिदृष्ट्या उपपत्तेः, शास्त्रस्य= शास्त्रशब्दितान्तर्यामिकथनस्य **उपासात्रैविध्यात्**= अन्तर्बहिः सर्वगतत्वेन त्रिविधोपासनार्थत्वात्, उपासात्रैविध्यस्य, इह= अस्मिन् प्रकरणे **आश्रितत्वात्** 'स एतमेव सीमानम्' इत्यनेन, 'ब्रह्म ततमम्' इत्यनेन 'एतद्ध स्म वै' इत्यनेन च उक्तत्वात्, जीवानां **तद्योगात्**= तदुपासनार्हत्वात् ॥ इति ॥

**(११) 'तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति' (ऐ.आ. २-२-४) इति जीवलिङ्गम् । प्राणसंवादादिमुख्यप्राणलिङ्गम् । तस्मान्नेति चेन्न । अन्तर्बहिःसर्वगतत्वेनेत्युपासात्रैविध्यात्, इहाश्रितत्वाच्च ।**

(११) श्रुत्युदाहरणपूर्वं सौत्राक्षेपांशं व्याचक्षते- **तावन्तीति ॥ प्राणसंवादेति ॥** 'ता अहिंसन्त' इति इत्यादिः, प्राणस्य संवादः इन्द्रियैस्सहेति बोध्यम् । यतः श्रूयत इति शेषः । यतो जीवलिङ्गम्, मुख्यप्राणलिङ्गं च, श्रूयते तस्मादिति सम्बन्धः । **नेति ॥** प्राणो विष्णुरिति शेषः । सिद्धान्तांशं व्याचक्षते- **नेत्यादिना ॥ आश्रितत्वादिति ॥** इह प्रकरणे उपासात्रैविध्यस्य आश्रितत्वादित्यर्थः।

(११) **तावन्तीति** ॥ (ऐ.आ. २.२.४) **पूर्वपक्षे**- 'तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति' (ऐ.ओ. २.२.१) इति श्रुतिबलात् शतं वर्षाणि पुरुषाणां (जीवानाम्) आयुरिति आपाततः प्रतीयमान एवार्थः । **सिद्धान्ते तु**- पुरुषायुषः शतसंवत्सरस्य अह्नां सहस्राणि= शतसंवत्सरान्तःप्रविष्टाहर्नियामकसूर्यगत-भगवत्पुरुषरूपाणि तावन्ति सहस्राणि, **बृहतीसहस्रगताक्षराणां** वाच्यानि पुरुषरूपाणि यावन्ति सहस्राणि वर्तन्ते तावन्तीत्यन्वयः ॥

एवं च- तानि भगवद्रूपाणि षट्त्रिंशत्सहस्रसङ्ख्याकानि वर्तन्त इति बोध्यम् ॥

तस्मात् **शतम्** इत्यस्य तु **प्राणस्य**=परमात्मनः शतं वर्षाण्येव जीवदेहे नियामकतया स्थितिरित्यर्थः ॥

**ता अहिंसन्तेति** ॥ (ऐ.आ. २.१.४) अस्यार्थः- **ताः**= चक्षुरादिदेवताः, **अहिंसन्त**= विवाद-मकुर्वन्= अन्योन्यम्, प्राणेन च, सह । विवादमेवाह- **अहमिति ॥ अहं**= अस्य चतुर्मुखस्य, **उक्थमस्मि**= उत्थापकोऽस्मि । (उत्तमोऽस्मि इति वा) इति पूर्वपक्षे । सिद्धान्ते तु- प्राणपदस्य अन्तर्यामिपरत्वं परिकल्प्य पूर्ववत् अर्थो वक्तव्यः ॥

**(१२) 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' (ऐ.आ.२–४–३) । 'स एतमेव पुरुषं ब्रह्म ततममपश्यत्' (ऐ,आ,२–४–३)**

(१२) **स एतमेवेति ॥** अनेनान्तरुपासनमुच्यते । **ब्रह्म ततममिति** ॥ अनेन सर्वगतत्वोपा-सनम् । **एतद्धस्म वै इति ॥** अनेन बहिरुपासनम् ।

**यद्यपि तत्रोपनिषदि अन्तःस्थितिः, व्याप्तत्वम्, स्वमाहात्म्यं च लक्ष्मीं प्रति महिदासेनोक्तम्, न तु उपासनम्- तथापि विष्णौ तत्कथनस्य 'आध्यानाय प्रयोजनाभावात्** (३.३.१५) इति **न्यायेन**

**उपासनार्थत्वोक्तेः । एवमुक्तमत्र ॥ इत्यादिनेति ॥ अस्याश्रितत्वादित्यनेन सम्बन्धः । अन्तर्बहिः सर्वगतत्वेनेत्यत्र- अन्तर्बहिःशब्दौ तद्गतपरौ, उभयोर्वृत्तिविषये आधेयपरत्वाभ्युपगमात् । अन्तश्च बहिश्च सर्वगतश्चेति द्वन्द्वः, ततः भावे त्वप्रत्ययः । अन्तर्बहिः सर्वेति क्रमोऽत्र न विवक्षितः । 'एतमेव' इत्याद्युदाहृतवाक्येषु एतत्क्रमादर्शनात् ॥**

(१२) **स एतमिति** ॥ (ऐ.आ. २.४.३) **सः**= वासुदेवो भगवान् **एतमेव सीमानं**= शिरोमयं विदार्यैव, **एतया द्वारा** सुषुम्नानाड्या, **प्रापद्यत**= प्राप्तः चतुर्मुखहृदयमिति शेषः, इत्यर्थः ॥ **स एतमेव पुरुषमिति** ॥ (ऐ.आ. २.४.३) **सः**= चतुर्मुखदेहे प्राक् प्रविष्टो नारायणः **एतमेव पुरुषं**= व्यासकृष्णकपिलादिरूपम् आत्मानम्, **ततमं**= अतिशयेन व्याप्तम्, **ब्रह्म**= पूर्णगुणम् **अपश्यत्**= ददर्श इत्यर्थः ॥

## (१३) 'एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेय' (ऐ.आ.२-१-८) इत्यादिना ।

(१३) **एतद्ध स्म वै इति** ॥ (ऐ.आ. २.१.९) **तदेतत्**= प्रकृतं सर्वं **विद्वान्**= जानन् **ऐतरेयः**= इतरायाः पुत्रः विशालसञ्ज्ञकऋषेः उत्पन्नः **महिदासः** = तन्नामको भगवान् **आह,** इत्यर्थः ॥ ह-स्म-वैशब्दाः प्रसिद्धिबोधकाः । महिनः= महात्मानः दासाः यस्य स इति विग्रहे महिदास इति भवतीति ज्ञेयम् ॥

## (१४) 'महिदासाभिधो जज्ञे इतरायास्तपोबलात् ।
## साक्षात् स भगवान् विष्णुर्यस्तन्त्रं वैष्णवं व्यधात् ॥' इति (च) ब्रह्माण्डे ।
## तत्तदुपासनायोग्यतया च पुरुषाणाम् ।

**(१४) ननु 'एतद्ध स्म वै' इति महिदासस्य ऋषेः प्रतिपादनात् कथमिह प्रकरणे बहिरुपास्तिरुच्यते- इति कथ्यते, इत्याशङ्क्य महिदासस्य भगवदवतारत्वे प्रमाणमाहुः- महिदासाभिध इति ॥ ब्रह्माण्डे इति ॥ ब्रह्माण्डोक्तेरित्यर्थः । इदं वचनं स्ववाक्यत्वेनापि योजनीयम्, 'इति ब्रह्माण्डोक्तेः महिदासाभिधो जज्ञे' इत्यादिक्रमेणेति ॥**

**ननु एकविधोपासनयैव ब्रह्मापरोक्षसम्भवाद् उपासात्रैविध्यस्य किं कृत्यम् ? अत आहुः- तत्तदुपासनेति ॥ पुरुषाणामिति ॥ सौत्रजीवपदस्य आवृत्तिविपरिणामाभ्यां लब्धमिदम् । तत्तत्पुरुषाणां तत्तदुपासनायोग्यत्वादित्यर्थः । येषामुपासकानां यत्र उपासनायाम् अधिकारः, ते तदुपासनां कुर्वन्त्विति बोधनाय उपासात्रैविध्यमुक्तमिति ज्ञेयम् ॥**

(१४) **महिदासेति** ॥ यः **इतरायास्तपोबलात् महिदासाभिधः**= तन्नामकः (तस्याः पुत्रः) **जज्ञे**= प्रादुर्बभूव । यः प्रादुर्भूतो महिदासाभिधः, **वैष्णवं**= विष्णुविषयकम्, **तन्त्रं**= ग्रन्थम्, **व्यधात्**= चक्रे, **सः साक्षात्** भगवान् विष्णुः गुणपूर्णः परमात्मैवेत्यर्थः ॥

**(१५) 'केषाञ्चित् सर्वगत्वेन केषाञ्चिद्धृदये हरिः ।**
**केषाञ्चिद्बहिरेवासावुपास्यः पुरुषोत्तमः ॥' इति ब्राह्मे ॥**

(१५) पुरुषाणाम् अनेकविधयोग्यताऽस्तीत्यत्र मानमाहुः- **केषाञ्चिदिति ॥ ब्राह्म इति ॥** तत्र इत्युक्तेरित्यर्थः । उक्त एवार्थे स्मृत्यन्तरमाहुः- **अग्नाविति ॥ इति चेति ॥** इति वचनाच्चेत्यर्थ उभयत्रापि ज्ञाप्यत्वं पञ्चम्यर्थः । तस्य तत्तदुपासनायोग्यतया इत्यत्रान्वयः । तस्य आश्रितत्वादित्यत्रा-न्वयः । आश्रितत्वात् इत्यस्य 'इति चेन्न' इत्यनेन सम्बन्धः । इदं तु बोध्यम्- प्राणसंवादादिमुख्यप्राण-लिङ्गस्य अन्तर्यामिनिष्ठतामात्रेण प्राणस्योत्तमत्वासिद्ध्या मुख्यप्राणोऽपि ऐतरेयप्राणशब्दवाच्योऽङ्गी-कार्य इति । इति सर्वं निरवद्यम् ॥ ३१ ॥

॥ इति पादान्त्यप्राणाधिकरणम् ॥ १२ ॥

**॥ इति श्रीमदार्याचार्यकुलावतंसेन, वैयाकरणकेसरी-महामहोपाध्याय इत्यादिबिरुदभाजा श्रीमुष्णं सुब्बरायाचार्याभिधेन विद्वद्वरेण विरचितायां श्रीमद्भाष्यार्थसहितसूत्रार्थमणिमञ्जर्यां प्रथमाध्यायस्य नामसमन्वयः प्रथमः पादः ॥**

(१५) **केषाञ्चिदिति ॥ असौ पुरुषोत्तमो हरिः**= भगवान् विष्णुः **केषाञ्चित्**= देवादिभिः **सर्वगत्वेन उपास्यः । केषाञ्चित्**= ऋष्यादिभिः हृदये (स्वस्वहृदये) उपास्यः **केषाञ्चित्**= मनुष्योत्तमैः **बहिरेवोपास्य** इत्यर्थः । केषामिति कृद्योगे कर्तरि षष्ठी ॥

**(१६) 'अग्नौ क्रियावतां विष्णुर्योगिनां हृदये हरिः ।**
**प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनाम्' इति च ॥ ३१ ॥**

**॥ इति पादान्त्यप्राणाधिकरणम् ।**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये**
**प्रथमाध्यायस्य प्रथमः पाद : ॥**

(१६) **अग्नाविति** ॥ उपास्य इति शेषः । **विष्णुः क्रियावतां**= यज्ञादिकर्तृभिः **अग्नौ** उपास्यः, **योगिनां**= ऋष्यादिभिः **हृदये उपास्यो हरिः । अप्रबुद्धानां**= मन्दबुद्धीनां मनुष्योत्तमैः, **प्रतिमासु**= रामकृष्णप्रतीकेषु हरिः उपास्यः **विदितात्मनां**= भगवदपरोक्षिभिः देवादिभिः **सर्वत्र**= सर्वस्थानेषु उपास्यो हरिरित्यर्थः । क्रियावतामित्यादौ पूर्ववत् कर्तरि षष्ठी ।

प्रतिमोपासनम्, अग्न्युपासनं चेति द्वयमपि बहिरुपासनमेव उच्यते । इदमुपलक्षणम्-आदित्यादिगतभगवद्रूपोपासनारूपबहिरुपासनस्य च । इदं च मनुष्योत्तमविषयम् । बहिरुपासनाप्रतिपादके-'केषाञ्चिद्धहिरेवासौ, अग्नौ क्रियावतां विष्णुः' इत्यादिवाक्ये हृदय इत्यस्य अनुषङ्गेण अग्न्यादौ हृदये च उपास्यो हरिरित्यर्थः । ततश्च बहिरुपासनाऽधिकारिणां तत्र अग्न्याद्युपासनं बहुलम्, हृदयोपासनं किञ्चिदिति विवेकः । अत एव 'येषां बहिरुपासनेन मोक्षः तेषां हृद्युपासनं किञ्चित् कर्तव्यम्' (बृ.भा. २ आ.) इति भाष्येण न विरोध इति **सम्प्रदायविदः** ॥ ३१ ॥

**॥ इति पादान्त्यप्राणाधिकरणम् ॥ १२ ॥**

**॥ इति ब्रह्मसूत्रभाष्यव्याख्यायां प्रथमाध्यायस्य प्रथमपादे**
**श्रीमुष्णं सुब्बरायाचार्यविरचिता व्याख्या ॥**

# अथ प्रथमाध्यायस्य द्वितीयः पादः

## १. सर्वगतत्वाधिकरणम्

**(अन्यत्रप्रसिद्धलिङ्गात्मकशब्दसमन्वयः प्रथमाध्यायद्वितीयपादे)**

## (१) लिङ्गात्मकानां शब्दानां विष्णौ प्रवृत्तिं दर्शयत्यस्मिन् पादे प्राधान्येन ।

(१) एतत्पादप्रतिपाद्यं दर्शयन्ति- **लिङ्गात्मकानामिति** ॥ **लिङ्गं**= धर्मः, समन्वेतव्यशब्दावयवार्थः, स आत्मेव **आत्मा**= प्रवृत्तिनिमित्तं येषाम्, तेषामिति विग्रहः । यौगिकानामिति यावत् । **लोकतः विष्णोरन्यत्र प्रसिद्धानामिति योज्यम्** । तत्त्वं च लौकिकदृष्ट्याऽन्यपरत्वेन पूर्वपक्ष्यभिमतत्वम् । **प्रवृत्तिमिति** ॥ शक्तितात्पर्यलक्षणसम्बन्धमित्यर्थः । **दर्शयतीति** ॥ साधयति सूत्रकार इत्यर्थः । **प्राधान्येनेति** ॥ प्रायेणेत्यर्थः । तेन 'वैश्वानर'नये (१.२.२४.७अ.) मुखतो नामसमन्वयेऽपि न दोषः ॥

अत्रेदं बोध्यम्- लिङ्गात्मकाः शब्दाः द्विविधाः पदरूपाः, वाक्यरूपाश्चेति । तत्र पदरूपाणाम् अन्तर्यामि-अदृश्यादिशब्दानाम्, वाक्यरूपाणां 'एतमस्याम्' इत्यादीनां च, समन्वयः, परमात्मनि तत्तत्पदवाक्य-शक्तिसमर्थनं तत्तात्पर्यसमर्थनं चेति उभयरूपः । वाक्येऽपि शक्त्यङ्गीकारादेव 'अव्यक्तः कर्मवाक्यैश्च वाच्य एकोऽमितात्मकः' इत्यणुभाष्ये वाक्यवाच्यत्वमुक्तम् ।

सुधायामपि द्वितीयाध्यायारम्भे 'नारायणे स्वर-वर्ण-पद-वाक्य-महावाक्यरूपस्य समस्तस्य शास्त्रस्य साक्षात् परममुख्यया वृत्त्या, न तु लक्षणया, तथा महातात्पर्येण, न तु पारार्थ्येन समन्वयः प्रथमाध्याये समर्थितः' इत्युक्तमिति **केचित् साम्प्रदायिकाः** वदन्ति ।

**अन्ये साम्प्रदायिकास्तु**- वाक्ये शक्तिर्नास्ति, अत एवोक्तम्- **जिज्ञासानयसुधायाम्**- 'ओतत्ववाची ह्योङ्कारः' इति **अनुभाष्यव्याख्यावसरे**- 'एतदुक्तं भवति-यौगिका हि शब्दाः नावश्यमर्थप्रत्यायनार्थं सङ्गतिग्रहणमपेक्षन्ते, किं नाम निगम-निरुक्त-व्याकरणबलेन अवयवार्थावगमे सति तत्संसर्ग-सम्भावनायां प्रसिद्धम् अन्यथाऽपूर्वमर्थं गमयन्ति । वाक्यरूपत्वात् तेषाम् । न हि वाक्यं सङ्गति-ग्रहणापेक्षमर्थम् अवबोधयति, अधिगतार्थत्वप्रसङ्गात् अशक्यत्वाच्च । तदेतौ ॐकार-ब्रह्मशब्दावपि यौगिकौ, जिज्ञास्यमनन्तगुणपरिपूर्णं प्रतिपादयन्तौ, जीवजडातिरिक्तमेव किञ्चिदवगमयतः' इत्युक्तम् ॥

(१६) **अग्नाविति** ॥ उपास्य इति शेषः । **विष्णुः क्रियावतां**= यज्ञादिकर्तृभिः **अग्नौ** उपास्यः, **योगिनां**= ऋष्यादिभिः **हृदये उपास्यो हरिः । अप्रबुद्धानां**= मन्दबुद्धीनां मनुष्योत्तमैः, **प्रतिमासु**= रामकृष्णप्रतीकेषु हरिः उपास्यः **विदितात्मनां**= भगवदपरोक्षिभिः देवादिभिः **सर्वत्र**= सर्वस्थानेषु उपास्यो हरिरित्यर्थः । क्रियावतामित्यादौ पूर्ववत् कर्तरि षष्ठी ।

प्रतिमोपासनम्, अग्न्युपासनं चेति द्वयमपि बहिरुपासनमेव उच्यते । इदमुपलक्षणम्-आदित्यादिगतभगवद्रूपोपासनारूपबहिरुपासनस्य च । इदं च मनुष्योत्तमविषयम् । बहिरुपासनाप्रतिपादके- 'केषाञ्चिद्बहिरेवासौ, अग्नौ क्रियावतां विष्णुः' इत्यादिवाक्ये हृदय इत्यस्य अनुषङ्गेण अग्न्यादौ हृदये च उपास्यो हरिरित्यर्थः । ततश्च बहिरुपासनाऽधिकारिणां तत्र अग्न्याद्युपासनं बहुलम्, हृदयोपासनं किञ्चिदिति विवेकः । अत एव 'येषां बहिरुपासनेन मोक्षः तेषां हृद्युपासनं किञ्चित् कर्तव्यम्' (बृ.भा. २ आ.) इति भाष्येण न विरोध इति **सम्प्रदायविदः** ॥ ३१ ॥

**॥ इति पादान्त्यप्राणाधिकरणम् ॥ १२ ॥**

**॥ इति ब्रह्मसूत्रभाष्यव्याख्यायां प्रथमाध्यायस्य प्रथमपादे**
**श्रीमुष्णं सुब्बरायाचार्यविरचिता व्याख्या ॥**

# अथ प्रथमाध्यायस्य द्वितीयः पादः

## १. सर्वगतत्वाधिकरणम्

(अन्यत्रप्रसिद्धलिङ्गात्मकशब्दसमन्वयः प्रथमाध्यायद्वितीयपादे)

**(१) लिङ्गात्मकानां शब्दानां विष्णौ प्रवृत्तिं दर्शयत्यस्मिन् पादे प्राधान्येन ।**

(१) एतत्पादप्रतिपाद्यं दर्शयन्ति- **लिङ्गात्मकानामिति** ॥ **लिङ्गं**= धर्मः, समन्वेतव्यशब्दावयवार्थः, स आत्मेव **आत्मा**= प्रवृत्तिनिमित्तं येषाम्, तेषामिति विग्रहः । यौगिकानामिति यावत् । **लोकतः विष्णोरन्यत्र प्रसिद्धानामिति योज्यम् ।** तत्त्वं च लौकिकदृष्ट्याऽन्यपरत्वेन पूर्वपक्ष्यभिमतत्वम् । **प्रवृत्तिमिति** ॥ शक्तितात्पर्यलक्षणसम्बन्धमित्यर्थः । **दर्शयतीति** ॥ साधयति सूत्रकार इत्यर्थः । **प्राधान्येनेति** ॥ प्रायेणेत्यर्थः । तेन 'वैश्वानर'नये (१.२.२४.७अ.) मुख्यतो नामसमन्वयेऽपि न दोषः ॥

अत्रेदं बोध्यम्- लिङ्गात्मकाः शब्दाः द्विविधाः पदरूपाः, वाक्यरूपाश्चेति । तत्र पदरूपाणाम् अन्तर्यामि-अदृश्यादिशब्दानाम्, वाक्यरूपाणां 'एतमस्याम्' इत्यादीनां च, समन्वयः, परमात्मनि तत्तत्पदवाक्य-शक्तिसमर्थनं तत्तात्पर्यसमर्थनं चेति उभयरूपः । वाक्येऽपि शक्त्यङ्गीकारादेव 'अव्यक्तः कर्मवाक्यैश्च वाच्य एकोऽमितात्मकः' इत्यणुभाष्ये वाक्यवाच्यत्वमुक्तम् ।

सुधायामपि द्वितीयाध्यायारम्भे 'नारायणे स्वर-वर्ण-पद-वाक्य-महावाक्यरूपस्य समस्तस्य शास्त्रस्य साक्षात् परममुख्यया वृत्त्या, न तु लक्षणया, तथा महातात्पर्येण, न तु पारार्थ्येन समन्वयः प्रथमाध्याये समर्थितः' इत्युक्तमिति **केचित् साम्प्रदायिकाः** वदन्ति ।

**अन्ये साम्प्रदायिकास्तु-** वाक्ये शक्तिर्नास्ति, अत एवोक्तम्- **जिज्ञासानयसुधायाम्-** 'ओतत्ववाची ह्योङ्कारः' इति **अनुभाष्यव्याख्यावसरे-** 'एतदुक्तं भवति-यौगिका हि शब्दाः नावश्यमर्थप्रत्यायनार्थं सङ्गतिग्रहणमपेक्षन्ते, किं नाम निगम-निरुक्त-व्याकरणबलेन अवयवार्थावगमे सति तत्संसर्ग-सम्भावनायां प्रसिद्धम् अन्यथाऽपूर्वमर्थं गमयन्ति । वाक्यरूपत्वात् तेषाम् । न हि वाक्यं सङ्गति-ग्रहणापेक्षमर्थम् अवबोधयति, अधिगतार्थत्वप्रसङ्गात् अशक्यत्वाच्च । तदेतौ ॐकार-ब्रह्मशब्दावपि यौगिकौ, जिज्ञास्यमनन्तगुणपरिपूर्णं प्रतिपादयन्तौ, जीवजडातिरिक्तमेव किञ्चिदवगमयतः' इत्युक्तम् ॥

**परिमळे च**- 'अशक्यत्वाच्चेति प्रतीकमादाय 'वाक्ये शक्तेरभावेन तन्निष्ठशक्त्यविषयत्वाच्चेत्यर्थः' इत्युक्तम् (न्या.सु.प., पृ.) ।

'वाक्यान्वयात्' (१.४.२०) इति सूत्रे च टीकायां (वाक्यस्य न शक्तिरित्युच्यते किन्तु) पृथक् पृथक् वाचकतया स्थितस्य वाक्यस्य अन्ततो भगवत्परत्वम्, तच्च तात्पर्यविषयत्वमेव इति चोक्तम् । ततश्च वाक्यरूपाणां समन्वयः तात्पर्यसमर्थनमिति वदन्ति ॥ अधिकं 'समाकर्षात्' (१.४.१६) इति सूत्रे निपुणतरं वक्ष्यते ॥

**अत्र नये** लोकतोऽन्यत्र प्रसिद्धसर्वगतत्वलिङ्गस्य परमात्मनि समन्वयः ॥ ८ सू. अ. ।

**(२) 'ब्रह्म ततमम्' इति सर्वगतत्वमुक्तं विष्णोः । तच्च 'तस्यैतस्यासावादित्यो रसः' (ऐ,आ.३-२-३) इत्यादिनाऽऽदित्यस्य प्रतीयत इत्यतोऽब्रवीत् -**

(२) पूर्वपादान्त्यप्राणनयेन (१.१.१२) सङ्गतिमाहुः- **ब्रह्म ततममिति** ॥ **तच्चेति** ॥ सर्वगतत्वान्तःपातिसर्वप्राणिहृदयगुहावृत्तित्वमित्यर्थ इति- भावदीप-शर्करा-भाष्यदीपिकासु । अत्रार्थेऽनुग्राहकाणि तु- 'अनुपपत्तेस्तु न शारीरः' (१.२.३) 'स्मृतेश्च' (१.२.६) 'अर्भकौकस्त्वात्' (१.२.७) 'सम्भोग' (१.२.८) इति गुणसूत्राणीत्यवगन्तव्यम् ॥

ननु **सुधायाम्**- 'चिन्त्यते सर्वगत्वं तु प्रथमं प्रविचार्यते' इत्येतदधिकरणीय-**अनुव्याख्यान**-व्याख्यावसरे 'सर्वगत्वम्' इति प्रतीकं गृहीत्वा 'एतमस्यामेतं दिवि' इत्यादिवाक्योक्तसर्वगतत्वमेवात्र पादे प्रथमं परमेश्वरे समर्थ्यते इत्युक्तम्, अतः कथं सर्वप्राणिहृदयगुहावृत्तित्वमित्युच्यते- इति चेत्- उच्यते- तस्या अपि **सुधायाः** पूर्वोक्तार्थ एव तात्पर्यं कल्पनीयम्, वर्णनान्तरं वा तदस्तु इति ॥

**उक्तमिति** वर्तते (उक्तं सर्वगतत्वं च) तत्रैव ऐतरेयके- 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते' (३.२.३) इत्यादिना (कस्यचित्) उक्तमित्यर्थः । अनेन सर्वगतत्वं विषयः । विष्णोः ? अन्यस्य वा ? इति संशयोऽपि दर्शितः । ब्रह्म ततममित्युक्तिः, आदित्यशब्दश्रवणं च, संशयबीजम् । ततः किम्? इत्यतः सयुक्तिकं पूर्वपक्षमाहुः- **तस्यैतस्येति** ॥ तच्च इति वर्तते, तच्च (कस्यचित्) उक्तं सर्वगतत्वं च, तस्यैतस्येत्यादिना 'एतं ह्येव' इत्यतः पूर्ववाक्येन आदित्यस्यैव प्रतीयत इत्यर्थः ॥

(२) **ब्रह्म ततममिति** (ऐ.आ. २.४.३) व्याख्यातम् (पृ. १३८) ।

(पृथिव्यादिषु उच्यमानः विष्णुरेव, ब्रह्मशब्दात्)

## (३) ॥ ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ ॥ १ ॥

(३) **ॐ सर्वत्रेति ॥** तत्तु इति वर्तते, उच्यमानमिति शेषः । **अयमर्थः- सर्वत्र**= 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते' इति श्रुतौ, पृथिव्यादिषु उच्यमानम्, तत्तु= विष्णुरेव, **प्रसिद्धोपदेशात्= विष्णावेव प्रसिद्धस्य ब्रह्मशब्दस्य 'एतमेव ब्रह्मेत्याचक्षते'** इति अत्र **प्रकरणे** पाठात् इति ॥

(३) **तस्यैतस्येति ॥** (ऐ.आ. ३.२.३) अस्योत्तरवाक्यम्- 'स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकं तदिति विद्यात्, तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति, तदप्येतद् ऋषिणोक्तं 'चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च' इति एतामनुविधं संहितां सन्धीयमानां मन्य इति ह स्माह बाध्वः, एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नौ अध्वर्यव एतं महाव्रते छन्दोगा एतमस्यां एतं दिवि एतं वायौ एतमाकाशे एतमप्सु एतमोषधीषु एतं वनस्पतिषु एतं चन्द्रमसि एतं नक्षत्रेषु एतं सर्वेषु भूतेषु एतमेव ब्रह्मेत्याचक्षते' इति ॥

**अस्यार्थः- तस्य**= प्रकृतस्य, **एतस्य**= संवत्सरनामकस्य चतुर्मुखस्य, **असावादित्यः**= आदित्यान्तर्गतः सर्वादित्व-ततत्व-नियामकत्वनिमित्तैः आदित्यनामा **प्रद्युम्नः, रसः**= सारभूतः, **स यश्चायं**= पुरुषदेहगतः, **अशरीरः**= प्राकृतदेहरहितः **प्रज्ञात्मा**= ज्ञानरूपः **अनिरुद्धः, यश्चासावादित्ये स्थितः**= प्रद्युम्नः, उभयम् एकं विद्यात् । **तस्मात्**= पुरुष-आदित्यगतयोरेकत्वात् आदित्यः, **पुरुषं पुरुषं प्रति** आदित्यः अभिमुखं भवति । सर्वपुरुषाणाम् आदित्यः **प्रति**= अभिमुखो भवतीति यावत् । सर्वपुरुषगतो भवतीति वा । (द्वितीयेऽर्थे प्रतीत्यस्य प्रतिगत इत्यर्थः) **तदप्येतत्**= पूर्वोक्तं सर्वमपि **ऋषिणा**= मन्त्रेण उक्तम्, स च मन्त्रः- **'चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः, आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च'** इत्यन्तः । **देवानां**= ब्रह्मादिदेवानाम्, **अनीकं**= चेष्टकम्= ईशितृ, कर्तृ च, **चित्रं**= चिद्रूपं ब्रह्म, **उदगात्**= उदितमभूत् ॥ **जगतः**= जङ्गमस्य, **तस्थुषः**= स्थावरस्य, **आत्मा**= आदानादिकर्ता, **सूर्यः**= सूरिप्राप्यो विष्णुः, **द्यावापृथिवी अन्तरिक्षं**= दिवम्, पृथिवीं, अन्तरिक्षं च, **आप्राः**= समन्तात् अपूरयत्, इति ऋषिणोक्तमित्यन्वयः । **एतां संहिताम्, अनुविधं**= सप्रकारं सम्यगिति यावत् । अनुसन्धीयमानां फलदां मन्ये इति आह स्म बाध्वः ।

**बह्वृचाः**= ऋग्वेदिनः, **एतं ह्येव**= पुरुषादित्यगतं विष्णुमेव, **महत्युक्थे**= महदुक्थनामक**बृहतीसहस्रे** विषये, तत्प्रतिपाद्यत्वेनेति यावत्, **मीमांसन्ते**= जानन्ति ॥

**अध्वर्यवः**= यजुर्वेदिनः, **अग्नौ विषये**= चयनसाधनेष्टकादेवतात्वेनेति यावत्, मीमांसन्ते ॥

**छन्दोगाः**= सामवेदिनः, महाव्रते- तदाख्यस्तोत्रविषये- तद्देवतात्वेनेति यावत्, मीमांसन्ते ॥ एतमस्यां पृथिव्याम्, दिवि, अन्तरिक्षे, भूतेषु= प्राणिषु (सर्वत्र) अन्तः व्याप्तम्, आचक्षते विद्वांसः । **एतमेव च** ब्रह्मेति चाचक्षते । अन्यत् सुगममिति- सिद्धान्ते ॥ पूर्वपक्षे तु- आपाततः प्रतीयमानसूर्यपरा इयं श्रुतिरिति बोध्यम् ॥

**(४) 'स यश्चायमशरीरः प्रज्ञात्मा' (ऐ.आ. ३-२-४) इत्यादिना सर्वत्रोच्यमानो नारायण एव ।**

**'तदेव ब्रह्म परमं कवीनाम्' (म.ना.उ.१—६) ।**

**'परमं यो महद्ब्रह्म' ('म.भा.आनु. अ.९,श्लो.१९६)**

**'वासुदेवात् परः को नु ब्रह्मशब्दोदितो भवेत् ।**
**स हि सर्वगुणैः पूर्णस्तदन्ये तूपचारतः ॥'**

**इति तस्मिन्नेव प्रसिद्धब्रह्मशब्दोपदेशात् ॥ १ ॥**

**(४) श्रुत्युपन्यासपूर्वं सूत्रार्थमाहुः- स यश्चेति ॥ विषयवाक्यस्य 'तस्यैतस्य' इति उदाहृतत्वेऽपि अशरीरत्वरूपसिद्धान्तयुक्तिसूचनाय पुनः स यश्चेतीत्युदाहृतम् । नारायण इति ॥ विष्णुरेव इत्यनुक्त्वा एवमुक्तिस्तु- 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' (महा.ना. १०.२५) इति तैत्तिरीयसमाख्याप्रदर्शनार्था । ब्रह्मशब्दस्य विष्णुपरत्वे मानमाहुः- तदेवेत्यादि ॥ इतीति ॥ इत्यादावित्यर्थः । तस्मिन्नेव= विष्णावेव, प्रसिद्धस्य= परममुख्यवृत्त्या तद्वाचकत्वेन निर्णीतस्येत्यर्थः । उपदेशादिति ॥ अस्य 'नारायण एव' इत्यत्रान्वयः ॥ १ ॥**

(४) **स यश्चायमिति** ॥ व्याख्यातम् (पृ. १४३) । **तदेवेति** ॥ व्याख्यातम् (पृ. ४२) ।

**परममिति** ॥ 'परमं यो महद् ब्रह्म परमं यः परायणम् ।' ('म.भा.आनु.,अ.९,श्लो.१९६) इति ॥

**यो**= विष्णुः, परमं, महद् ब्रह्म, यः परमं परायणमित्यर्थः । अस्य-

'तस्य लोकप्रधानस्य जगन्नाथस्य भूपतेः । विष्णोर्नामसहस्रं ........... ॥'इत्युत्तरवाक्येनान्वयः ।

**वासुदेवात् इति** ॥ **हि**= यतः, **सः**= वासुदेवः, **सर्वगुणैः पूर्णः** ततः **वासुदेवात् परः**, **को नु**= को

वा **ब्रह्मशब्दोदितः**= तन्मुख्यवाच्यो **भवेत्** । न कोऽपीति भावः, **तदन्ये तु**= वासुदेवात्परे ब्रह्मादयस्तु जीवाः **उपचारतस्तु**= अमुख्यवृत्त्यैव ब्रह्मशब्दवाच्याः भवेयुरित्यर्थः ॥ १ ॥

**(उक्ताश्रुतत्वादीनां विष्णावेव सम्भवः)**

## (५) ॥ ॐ विवक्षितगुणोपपत्तेश्च ॐ ॥ २ ॥

(५) **युक्त्यन्तरेण भगवत एव सर्वगतत्वमिति प्रतिपादनाय सूत्रम्- ॐ विवक्षितेति ॥ वक्तुं योग्या विवक्षिता वक्ष्यमाणा उपसंहारस्था इति यावत् । सर्वत्र, उच्यमानम्, तत्तु, इति वर्तते । यथायोग्यम् आवृत्तिविपरिणामौ । अयमर्थः- सर्वत्रोच्यमानं तत्तु= विष्णुरेव, तस्मिंस्तु (सर्वगते एव) विवक्षितगुणोपपत्तेश्च= विवक्षितानां 'स योऽतोऽश्रुतः' इत्यादिना उक्ताऽश्रुतत्वादिगुणानां हरावेवोपपत्तेः, अन्यत्राऽनुपपत्तेश्च इति ॥**

**(६) 'स योऽतोऽश्रुत' (ऐ.आ. ३-२-४) इत्यादि । स हि 'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' (ऋ.सं. ७-९९-४) इत्यादिनाऽश्रुतत्वादिगुणकः ।**

(६) **गुणबोधकश्रुतिमाहुः- स य इति ॥ इत्यादीति ॥** इत्यादिनेत्यर्थः । **अस्य सौत्रविवक्षितपदार्थैकदेशविवक्षायामन्वयः । यद्वा- इत्यादीत्यस्य= इत्यादिवाक्यप्रतिपाद्येत्यर्थः । अस्य सौत्रगुणपदार्थेऽभेदेनान्वयः (पक्षद्वयेऽपि इत्यादीति लुप्तविभक्त्यन्तम् ।) अश्रुतत्वादिगुणस्य विष्णुधर्मत्वे मानमाहुः- न ते इति ॥ इत्यादिनेति ॥ ज्ञाप्यत्वं तृतीयार्थः ॥**

(६) **स योऽत इति ॥** (ऐ.आ. ३.२.४) आदिना- 'अगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टा आदेष्टा आघोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानाम् अन्तरपुरुषः स आत्मेति विद्यात्' इति सम्पूर्णं वाक्यं गृह्यते ।

**अस्यायमर्थः- यः**= प्रकृतो विष्णुः, **अतः**= देशादिना व्याप्तः (अत=सातत्यगमने इत्यस्मात् पचाद्यच्) **अश्रुतः**= साकल्येन श्रोतुमशक्यः, साकल्येनेति सर्वत्र योज्यम् । **अगतः**= अज्ञातः, **अमतः**= मननाविषयः, **अनतः**= अप्रह्वः स्वतन्त्र इति यावत्, नेतृरहित इति । भाष्यदीपिका तु- फलितार्थकथनपरा इति बोध्यम् । **अदृष्टः**= प्रत्यक्षाविषयः, **अविज्ञातः**= विशेषज्ञानाविषयः, **अनादिष्टः**= अनाज्ञप्तः, अनुपदिष्टो वा, आत्मन इव अन्येषाम् अश्रुतत्वादिकं नेत्याह= **श्रोतेति ॥** अत्रापि साकल्येनेति सर्वत्र योज्यम् । **श्रोता**= स्वातन्त्र्येण साकल्येन सर्वश्रोता, तथा **मन्ता द्रष्टा आदेष्टा**= नियोजनकर्ता, उपदेष्टा वा,

**आघोष्टा**= सम्यग्वक्ता, **विज्ञाता**= विशेषज्ञाता, **प्रज्ञाता**= प्रकृष्टं ज्ञाता, सर्वेषां भूतानां जीवानाम्, **अन्तरपुरुषः**= अन्तरश्चासौ पुरुषश्चेति कर्मधारयः, **अन्तरः**= अन्तस्थः, **पुरुषः**= पूर्ण इत्यर्थः । अन्तर इति लुप्तप्रथमान्तो वा । **समः**= सर्वरूपेण समानः **स आत्मा** आदानादिकर्ता, सर्वनियामक इति विद्यात् ॥ इति ॥

(६) न ते इति ॥ (ऋ. ७.९९.२ व्या.पु. ५१)

## (७) 'स सविता स वायुः स इन्द्रः सोऽश्रुतः सोऽदृष्टो यो हरिर्यः परमो यो विष्णुर्योऽनन्तः' इत्यादि चतुर्वेदशिखायाम् ॥ २ ॥

(७) **स्पष्टमश्रुतत्वादिगुणानां विष्णुधर्मत्वबोधकश्रुतिं चाहुः- स सवितेति ॥ इति चतुर्वेदशिखायामिति ॥** चतुर्वेदशिखायाम् इत्युक्तेरित्यर्थः । ज्ञाप्यत्वं पञ्चम्यर्थः । हि= यतः स विष्णुः **इत्यादिज्ञाप्य-चतुर्वेदशिखोक्तिज्ञाप्य-अश्रुतत्वादिगुणकः, अतः विवक्षितगुणोपपत्तेरिति सौत्रपदेऽन्वयः । सूत्रस्य 'सर्वत्रोच्यमानो नारायण एव' इति पूर्वसूत्रभाष्येऽन्वयः ॥ २ ॥**

(७) **स सवितेति ॥ यो हरिः**= हरिशब्दितः **स सविता** जगत्प्रसविता यः परमः **स वायुः**= बलज्ञानरूपः, यो विष्णुः **स इन्द्रः**= ऐश्वर्यादिगुणवान्, योऽनन्तः सोऽश्रुतः, अदृष्टश्च इत्यर्थः ॥ २-३ ॥

## (८) न चाऽदित्यशब्दाच्चक्षुर्मयत्वादेश्च जीव इति वाच्यम् ।

(८) **ननु ब्रह्मशब्दात्, अश्रुतत्वादिलिङ्गैश्च सर्वगतो विष्णुरित्युच्यते यथा, तथा आदित्यशब्दात् चक्षुर्मयत्वादिलिङ्गैश्च सूर्यः सर्वजीवो वा सर्वगतो वा किं न स्यात् ? इत्याशङ्कते- न चेत्यादि ॥ आदित्यशब्दादिति ॥** 'आदित्यो रसः' इत्यादिशब्दादित्यर्थः ॥ **चक्षुर्मयत्वादेश्चेति ॥ सर्वगतत्वप्रकरणे** 'चक्षुर्मयः श्रोत्रमयः' इत्याद्युक्तचक्षुर्मयत्वादेरित्यर्थः । **जीव इति ॥** जीवविशेषः **सूर्यः, सर्वजीवो वेत्यर्थः । सर्वत्रोच्यमान इति वर्तते ।**

**(सर्वशरीरगतत्वानुपपत्तेरेव न सूर्यादयोऽत्रोक्ताः)**

## (९) ॥ ॐ अनुपपत्तेश्च न शारीरः ॐ ॥ ३ ॥

## एकस्य सर्वशरीरस्थत्वानुपपत्तेरेव ॥ ३ ॥

(९) न च वाच्यमित्यत्र हेत्वाकाङ्क्षायां सौत्रहेतुं वक्तुं सूत्रं पठन्ति- **ॐ अनुपपत्तेरिति ॥** तुः

एवार्थे । सर्वत्रोच्यमानमिति वर्तते । शरीरे भवः शारीरः । यथायथमावृत्तिविपरिणामौ, भावप्राधान्यं च, सर्वत्रेत्येतत् शारीरपदार्थैकदेशे शरीरेऽपि अभेदसम्बन्धेनान्वेति । सापेक्षत्वेऽपि (शिवभागवत इत्यादाविव) तद्धितवृत्तिः ।

**अयमर्थः**- शारीरः= सूर्यः, सर्वजीवो वा, सर्वत्र उच्यमानो न भवति । सर्वत्र शारीरत्वस्य 'एतं सर्वेषु भूतेषु' इति श्रुत्युक्तसर्वशरीरवृत्तित्वस्य **अनुपपत्तेरेव** । इति ॥ एवं च हरिरेव सर्वगत इति भावः ॥

सौत्रप्रतिज्ञांशस्य 'न च' इत्यादिपूर्वभाष्येणैव व्याख्यातत्वात् हेत्वंशं व्याचक्षते- **एकस्येति** ॥ यद्यपि- एकस्यैव सूर्यस्य विवक्षितसर्वशरीरवृत्तित्वमङ्गीकृतम् । तथापि- ब्रह्मादिसर्वशरीरवृत्तित्वस्यानुपपत्तिरिति भावः ।

सर्वजीवपक्षे तु - एकस्य= एकैकस्येत्यर्थः ॥ न च प्रत्येकं जीवस्य तत्तच्छरीरवृत्तित्वेन सर्वशरीरवृत्तित्वोपपत्तिरिति वाच्यम्- तस्य सर्वगतत्वविरोधित्वात् । **एवेति** ॥ अत्रैवकारो न इतरव्यावर्तकः । किन्तु अयमनुपपत्तिरेवेति हेतुः दुष्परिहर इति द्योतकः ॥ ३ ॥

**(सर्वगस्य विष्णोः कर्मत्वेन जीवस्य कर्तृत्वेन चोपदेशाद् विष्णुरेवोक्तः)**

## (१०) ॥ ॐ कर्मकर्तृव्यपदेशाच्च ॐ ॥ ४ ॥

## 'आत्मानं परस्मै शंसति' (ऐ.आ.३-२-३) इत्यादि ॥ ४ ॥

(१०) युक्त्यन्तरेण जीवस्य सर्वगतत्वनिराकरणाय सूत्रम्- **ॐ कर्मकर्तृव्यपदेशादिति** ॥ शारीरः, न, सर्वत्रोच्यमानम्, इति वर्तते । यथायथमावृत्तिविपरिणामौ । भावप्राधान्यं च । **अयमर्थः**- सर्वत्रोच्यमानः शारीरः जीवो न । सर्वत्रोच्यमानस्य वस्तुनः शारीरस्य च क्रमेण कर्मकर्तृव्यपदेशात्= ऐतरेये एव सर्वगतत्वप्रकरणे 'आत्मानं परस्मै शंसति' इति श्रुतौ आत्मानमित्यनेन सर्वगतस्य कर्मत्वेन, शंसतीत्यनेन जीवस्य कर्तृत्वेन च, व्यपदेशात्= उक्तत्वात् । इति ॥

हेतुबोधकश्रुतिमाहुः- **आत्मानमिति** ॥ **इत्यादीति** ॥ लुप्ततृतीयाकमिदं पदम् । अस्य सूत्रेण सम्बन्धः । इत्यादिना कर्मकर्तृव्यपदेशात् न जीव इति वाच्यमिति पूर्वभाष्येणान्वयः ॥

**अयं भावः**- कर्मत्वं च- परसमवेतक्रियाजन्यफलशालित्वम्, परत्वं च यस्य कर्मत्वमुच्यते तदपेक्षया ग्राह्यम् । तथा च- एकस्यां क्रियायाम्, एकस्य कर्तृत्वं कर्मत्वं च नेति उत्सर्गन्यायसिद्धम्

**इति ज्ञेयम् । अत एव यदा चैत्रो ग्रामं गच्छति, तदा गमनजन्यसंयोगरूपफलस्य ग्रामवत् चैत्रे सत्त्वेऽपि संयोगाश्रयस्य चैत्रस्य कर्मत्वाभावेन, चैत्रः चैत्रं गच्छतीति प्रयोगो न । एकस्यां क्रियायामिति पूर्वोक्तन्यायस्य औत्सर्गिकत्वात् कचित्कर्तुरपि कर्मत्वशंसनक्रियाकर्तुः जीवस्य शंसनक्रिया-कर्मवाचकसर्वगतप्रकरणस्थाऽत्मानमित्यात्मशब्दाप्रतिपाद्यत्वात् कर्तृकर्मणोर्भेद एव, इत्यवसेयम् ॥**

**न च चैत्रः स्वं जानातीत्यादिवत्, प्रकृतेऽपि जीवस्य कर्मत्वं कर्तृत्वं च कुतो न स्यात् ? इति वाच्यम् - सामान्यन्यायस्य बाधकैकापोद्यत्वेन प्रकृते च बाधकाभावात् । सामान्यन्यायप्रवृत्तेरेव युक्तत्वात् । इत्थं च कर्तृकर्मणोर्भेदस्यैव न्याय्यत्वेन जीवः सर्वगतो न इति बोध्यम् । इति ॥ ४ ॥**

(१०) **आत्मानं परस्मै इति** ॥ (ऐ.आ. ३.२.३) **यः एतं**= चक्षुर्मयत्वादिगुणयुक्तम् **आत्मानं**= परमात्मानम्, **परस्मै**= अयोग्याय **शंसति**= उपदिशति, अस्य वेदाः **दुग्धदोहाः**= फलविधुरा भवन्ती-त्यर्थः ॥ आदिना- 'आत्मानं वेद' (३.२.४) इत्यादेर्ग्रहणम् ॥ ४ ॥

**(सावधारणब्रह्मशब्दश्रवणादत्रोक्तो विष्णुः)**

## (११) ॥ ॐ शब्दविशेषात् ॐ ॥ ५ ॥

(११) **ननु चक्षुर्मयत्वादिजीवलिङ्गबलेन ब्रह्मशब्दस्य अमुख्यत्वम्, कर्तुरपि कर्मत्वम्, कथञ्चित् जीवस्यादृश्यत्वादिकं च स्वीक्रियते, अनुपपत्तिस्तु प्रकारान्तरेण विष्णावप्यस्ति । ततश्च जीव एव सर्व(त्र)गतः किं न स्यात् इति शङ्कावारणाय सूत्रम्- ॐ शब्दविशेषादिति ॥ सर्वत्रोच्यमानम्, तत्तु इति वर्तते । अयमर्थः- सर्वत्रोच्यमानं तत्तु= विष्णुरेव, शब्दविशेषात्= शब्दस्य= ब्रह्मशब्दस्य 'एतमेव ब्रह्मेत्याचक्षते' इत्यवधारणेन विशेषितत्वात् इति ॥ यद्वा- न, शारीरः, सर्वत्रोच्यमानः, इति वर्तते- अयमर्थः- सर्वत्रोच्यमानो न शारीरः, शेषं पूर्ववत् इति ॥ ब्रह्मशब्दस्य अवधारणेन विशेषितत्वं नाम 'यत्र एवकारस्ततोऽन्यत्र नियमः' इति न्यायेन भगवदन्यावाचकत्वरूपेण नियमितत्वमिति बोध्यम् ॥**

**(१२) 'एतमेव ब्रह्मेत्याचक्षते' (ऐ.आ. ३-२-३) इति । न हि जीवमेव ब्रह्मे-त्याचक्षते । 'एष उ एव ब्रह्मैष उ एवात्मैष उ एव सवितैष उ एवेन्द्र एष उ एव हरिर्हरति परः परानन्द' इति चेन्द्रद्युम्नशाखायाम् ॥ ५ ॥**

(१२) **एतमेवेति** ॥ (अत्र एवकारः ब्रह्मशब्दं नियमयति । नियमश्चोक्तः) नियमलब्धमेवाहुः-

**न हीति** ॥ उदाहृतश्रुतौ विष्णोरेव वाच्यत्वे नियामकमाहुः- **एष उ एवेति** ॥ **शाखायामिति** ॥ शाखायामित्युक्तेः 'एतमेव ब्रह्म' इत्यत्र जीवमेव ब्रह्मेति (ब्रह्मशब्दवाच्य इति) नाचक्षते विद्वांसः। तस्मात् 'सर्वत्रोच्यमानो नारायण एव' इति पूर्वभाष्येण 'जीव इति न च वाच्यम्' इति पूर्वभाष्येण वा सम्बन्धः ॥ ५ ॥

(१२) **एतमेवेति** ॥ (ऐ.आ. ३.२.३) (व्याख्यातम् पृ. ८७) **एष उ एवेति** ॥ उ एवार्थे, विष्णौ वा, अयमर्थः- **एष उ एव**= एष विष्णुरेव ब्रह्म इत्यादिरर्थः, पापं हरतीति हेतोः हरिशब्दवाच्यः, परः परानन्द इति ॥ ५ ॥

## (१३) ॥ ॐ स्मृतेश्च ॐ ॥ ६ ॥

(१३) **स्मृतिसमाख्यानादपि हरेरेव सर्वगतत्वसाधनाय सूत्रम्- ॐ स्मृतेश्च ॐ इति** ॥ सर्वत्रोच्यमानः तत्तु, इति वर्तते । **अयमर्थः**- सर्वत्रोच्यमानः तत्तु= विष्णुरेव । **स्मृतेश्च**= 'अहमात्मा गुडाकेश' 'गामाविश्य' इति स्मृतेश्च इति ॥

**(१४) 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' (भ.गी. १०-२०) 'गामाविश्य च भूतानि धारयाम्यहमोजसा'(भ.गी. १५-१३) इत्यादि । न चाप्रामाणिकं कल्प्यम् ॥ ६ ॥**

(१४) **स्मृतिमाहुः- अहमित्यादि ॥ इत्यादीति ॥** लुप्तपञ्चम्यन्तमिदम् । तस्याभेदसम्बन्धेन सौत्रस्मृतिपदार्थेऽन्वयः । सूत्रस्य- 'सर्वत्रोच्यमानो नारायण एव' इति, 'जीव इति न वाच्यम्' इति वा पूर्वभाष्येणान्वयः । एवं सूत्रार्थे स्थिते ईशजीवयोर्भेदः प्रसज्यते, इत्याशङ्क्य 'सूत्रकृता मिथ्याभेद एव विवक्षितः' इति यदपव्याख्यानं तन्निरस्यन्ति- **न चेति** ॥ **अप्रामाणिकमिति** ॥ प्रमाणासिद्धम्, प्रमाणविरुद्धं च भेदमिथ्यात्वमित्यर्थः ॥ ६ ॥

(१४) **अहमात्मेति** ॥ (भ.गी. १०.२०) हे **गुडाकेश**= अर्जुन. **अहमात्मा**= अन्तर्यामी, व्याप्तोऽपि अन्तर्यामितया **सर्वभूताशयस्थितः**= सर्वप्राणिहृदयगुहास्थित इत्यर्थः ॥

**गामाविश्येति** ॥ (भ.गी. १५.१३) अयमर्थः- अहं **गामाविश्य**= भूम्यामवतीर्य, **भूतानि**= जीवान्, **ओजसा**= सामर्थ्येन धारयामि ॥ इति ॥ ६ ॥

(व्याप्तस्यापि भगवत एकदेशस्थितिराकाशवद् युज्यते)

**(१५) ॥ ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॐ ॥ ७ ॥**

(१५) आक्षेपसमाधानाभ्याम् उक्तार्थस्यैव दृढीकरणाय सूत्रम्- **ॐ अर्भकौकस्त्वादिति** ॥ द्वितीयः चः हेतौ अनुक्तसमुच्चये च । **अर्भकं**= अल्पम्, **ओकः**= आश्रयः यस्य, तस्य भावः, तस्मात् । तत्तु, सर्वत्रोच्यमानम्, इति वर्तते । यथायोग्यमावृत्तिविपरिणामौ । **अयमर्थः**- सर्वत्रोच्यमानम्, तत्तु= विष्णुरेव इति न, अर्भकौकस्त्वात्= 'सर्वेषु भूतेषु' इति सर्वगतस्य अल्पाऽश्रयकत्वश्रवणात्, **तद्व्यपदेशात्**= चक्षुर्मयत्वादिजीवलिङ्गव्यपदेशात्, आदित्यश्रुतेश्च, **इति चेत्- न**, तस्य विष्णोः, **एवं**= अल्पाश्रयकत्वेन, चक्षुर्मयत्वादिरूपेण च, **निचाय्यत्वात्**= उपासनार्थमुक्तत्वात्, च= यतः, **व्योमवत्**= आकाशस्येव । तस्य विष्णोः अर्भकौकस्त्वम्, च= स्कान्दवचनेन चक्षुर्मयत्वादिकं च युज्यते, अतश्च इति ॥

**(१६) सर्वेषु भूतेष्वित्यल्पौकस्त्वाच्चक्षुर्मयत्वादिना जीवव्यपदेशाच्च नेति चेन्न । अर्भकौकस्त्वेन चक्षुर्मयत्वादिरूपेण च तस्यैव विष्णोर्निचाय्यत्वात् । सर्वगतत्वेऽप्यल्पौकस्त्वं च युज्यते व्योमवत् ।**

(१६) सूत्रं व्याचक्षते- सर्वेषु **भूतेष्वित्यादिना** ॥ **अल्पौकस्त्वादिति** ॥ अल्पौकस्त्वश्रवणादित्यर्थः । **चक्षुर्मयत्वादिनेति** ॥ 'धान्येन धनवान्' इत्यत्रेव अभेदे तृतीया (प्रकृत्यादित्वात्) जीवपदं जीवलिङ्गपरम्, तृतीयार्थाभेदस्य जीवलिङ्गेऽन्वयः । विष्णुः, सर्वगत इति शेषः । **नेति चेदिति** ॥ विष्णोर्महत्वात् तन्निष्ठाऽधेयतानिरूपिताधिकरणतापर्याप्तिः अल्पे न सम्भवतीति भावः ॥

सिद्धान्तमाहुः- **नेत्यादिना** ॥ **तस्यैव**= व्यापकत्वादिगुणविशिष्टस्यैव, **निचाय्यत्वादिति** ॥ उपासनार्थत्वादित्यर्थः । (अस्य- चेन्न इत्यनेनान्वयः)

ननु तर्हि तद्धर्माभाववति तद्धर्मवत्तया उपासनं मिथ्योपासनं स्यात् अत आहुः- **सर्वगतत्वेऽपीति** ॥ **युज्यत इति** ॥ एवं च- महन्निष्ठाधेयतानिरूपिताधिकरणतापर्याप्तिः अल्पे न विवक्षिता, किन्तु अधिकरणतावत्वमात्रं विवक्षितम् । तच्च अस्त्येव, प्रत्येकवृत्तित्वमन्तरा सर्ववृत्तित्वासम्भवादिति भावः ॥ **व्योमवदिति** ॥ यथा- व्याप्तस्यापि आकाशस्य मठादिनिरूपिताऽधेयतावत्वम्, तथा- परमात्मनोऽपि व्याप्तस्य सर्ववृत्तित्वं सङ्गतमेवेति बोध्यम् ।

**(१७) 'सर्वेन्द्रियमयो विष्णुः सर्वप्राणिषु च स्थितः ।**
**सर्वनामाभिधेयश्च सर्ववेदोदितश्च सः ॥' इति स्कान्दे ॥**

(१७) अत्र स्मृतिमाहुः- **सर्वेति** ॥ **स्कान्द इति** ॥ स्कान्दे इत्युक्तेरित्यर्थः । **चक्षुर्मयत्वदिकमिति** शेषः । **अस्य युज्यत** इत्यत्रान्वयः ॥ ७ ॥

(१७) **सर्वेन्द्रियेति** ॥ च= यतो विष्णुः, **सर्वप्राणिषु स्थितः**= तन्नियामकत्वेन स्थितः, अतः सर्वेन्द्रियमय इत्युच्यत इत्यर्थः । शिष्टं स्पष्टम् । एतेन 'चक्षुर्मयः' इत्यादौ मयट्शब्दः स्वामित्वार्थक इति सूचितम् । सर्वनामाभिधेय इत्यनेन, आदित्यश्रुतिः हरौ सावकाशेति सूचितमिति बोध्यम् ॥ ७ ॥

**(जीवशरीरगतस्यापि विष्णोः सामर्थ्यविशेषात् न जीवसमभोगप्राप्तिः)**

**(१८) ॥ ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ ॥ ८ ॥**

(१८) उक्तार्थदार्ढ्यायैव उक्तमाक्षिप्य समादधत्सूत्रं पठन्ति- **ॐ सम्भोगेति** ॥ तत्तु, शारीरः, इति वर्तते । विशेषशब्दः अर्शआद्यजन्तः, तस्य भावः, तस्मात् । यथायथमावृत्तिविपरिणामौ । **अयमर्थः**- तत्तु= विष्णुः, शारीरेण= जीवेन सह, शारीरश्चेत्= शरीरभवश्चेत्, शरीरे विद्यमानश्चेदिति यावत् । तस्य विष्णोः शारीरेण= जीवेन, **सम्भोगप्राप्तिः**= समानभोगप्राप्तिः **इति चेन्न**- तस्य हरेः **वैशेष्यात्**= विशेषसामर्थ्यवत्वात्, इति ॥

**(१९) जीवपरयोरेकशरीरस्थत्वे समानभोगप्राप्तिरिति चेन्न । सामर्थ्यवैशेष्यात् ।**
**उक्तं च गारुडे—**

**'सर्वज्ञत्वाल्पज्ञताभेदात् सर्वशक्त्यल्पशक्तितः ।**
**स्वातन्त्र्यपारतन्त्र्याभ्यां सम्भोगो नेशजीवयोः' इति (च) ॥ ८ ॥**

**॥ इति सर्वगतत्वाधिकरणम् ॥ १ ॥**

(१९) सूत्रार्थमाहुः- **जीवपरयोरित्यादिना** ॥ **प्राप्तिरिति** ॥ विष्णोरिति शेषः । **चेदिति** ॥ एतदन्तेन सौत्रपूर्वपक्षो विवृतः । सिद्धान्तमाहुः- **नेति** ॥ हेतुबोधकस्मृतिमाहुः- **उक्तं च गारुडे- सर्वज्ञेति** ॥ उक्तमित्यावर्तते । उक्तं वैशेष्यं गारुडेऽप्युक्तं= गारुडेऽपि विवृतमिति यावत् ।

(१.१.७) गतार्थम् । अनेनापि सर्वान्तर्वृत्तित्वस्यैव साधितत्वा- हरेः सर्वान्तर्वृत्तित्वं न युक्तमिति शङ्कायां व्याप्तस्यापि व्योमवद् युज्यत .वारणार्थमिदमावश्यकमिति ॥ ८ ॥

॥ इति सर्वगतत्वाधिकरणम् ॥

(१९, **सर्वज्ञेति ॥** सर्वज्ञत्वाल्पज्ञत्वरूपभेदकधर्मात् **सम्भोगः**= समानभोगप्राप्तिः नेत्यर्थः । शिष्टं स्पष्टम् । जीवेशयोः एकशरीरप्रवेशेऽपि ईश्वरस्य सर्वज्ञत्वेन भाविज्ञानसम्भवात् भाविदुःखपरिहारे पूर्णशक्तेः सम्भवाच्च तादृशशक्तेरन्यानधीनत्वाच्च दुःखप्राप्तिर्न । जीवस्य तु- एतद्विरुद्धाल्पज्ञत्वादिसत्त्वेन दुःखप्राप्तिरिति विवेकः ॥ ८ ॥

॥ इति सर्वगततत्वाधिकरणम् ॥ १ ॥

## २. अत्तृत्वाधिकरणम्

**(१) 'जन्माद्यस्य यतः' इत्युक्तम् । तत्रात्तृत्त्वं 'स यद्यदेवासृजत तत्तदत्तुमध्रियत । सर्वं वा अत्तीति तददितेरदितित्वम्' (बृ.उ. ३-२-५) इत्यदितेः प्रतीयते ।**

**(२) 'स यद्यदेवासृजत' इति पुल्लिङ्गं च 'कूटस्थोऽक्षर उच्यते' (भ.गी.१५-१६) इत्यादिवत् । अत्रोच्यते -**

अत्र नये हरौ सर्वात्तृत्वलिङ्गसमन्वयः ॥ २ सू. अ. ॥ अधिकरणसङ्गत्यादिकमाहुः- **जन्माद्यस्येति** ॥ अनेन तन्नयेन सङ्गतिर्दर्शिता । 'जन्माद्यस्य यतः' इति सूत्रेण जन्मादिकारणं ब्रह्म इत्युक्तम्, तत्र तद्घटकम् अत्तृत्वम् अदितेः प्रतीयत इति सम्बन्धः ।

(१-२) **स यदिति** ॥ विषयवाक्यमिदम् । **अदितेरिति** ॥ देवमातुरित्यर्थः । **प्रतीयते इति** ॥ इत्यन्तेन अत्तृत्वं विषयः, अत्तृत्वं विष्णोः ? अन्यस्य वा ? इति संशयः । अदितेरेव अत्तृत्वम्, न विष्णोः, अदितिशब्दश्रवणादिति पूर्वपक्षश्च दर्शितः । जन्मनयः, अदितिशब्दश्रवणं च सन्देहबीजमिति बोध्यम् ॥ तथा च ब्रह्मलक्षणं दुष्टमिति भावः ॥ **इत्यादिवदिति** ॥ युज्यत इति शेषः । उच्यते इति ॥ सूत्रकृता इति शेषः ॥

(१) **स यदिति** ॥ (बृ. ३.२.५) **सिद्धान्ते** अयमर्थः- **सः**= संवत्सरनामकः चतुर्मुखः, **यद्यदेवासृजत, तत्तदत्तुं** सः मृत्युनामा जनार्दनः, **अध्रियत**= मनश्चकार आदच्च । **सर्वं वा अत्तीति यत्**, तदेव, **अदितेः**= जनार्दननामकब्रह्मणः, **अदितित्वं**= अदितिशब्दवाच्यत्वे प्रवृत्तिनिमित्तमिति ॥

**पूर्वपक्षे तु**- सः **अदितिः**= देवमाता संवत्सरनामा, चतुर्मुखः यद्यदसृजत, तत्तत् अत्तुं मनोऽध्रियत आदच्च, सर्वं अत्तीति यत्, तदेव अदितेः= देवमातुः अदितित्वम्= अदितिशब्दवाच्यत्वे प्रवृत्तिनिमित्तम् इति ॥ ननु पक्षद्वयेऽपि अदितिशब्दनिर्वचनं कुत इति चेत्- उच्यते- देवमातरि प्रसिद्धस्य अदितिशब्दस्य निर्वचनम्- तत्र योगरूढिज्ञापनार्थम् । विष्णुविषये तु- 'अदितिर्देवतामयी' (का. २.१.७) इति श्रुतौ श्रुतादितिशब्दस्य मुख्यतः भगवत्परत्वज्ञापनार्थम्, इति ॥

(२) **कूटस्थ इति** ॥ (भ.गी. १५.१६) कूटम्= आकाशम्, तद्वत् निर्विकारतया तिष्ठतीति- **कूटस्थः** प्रकृति अक्षर इत्युच्यते । देहतोऽपि नाशरहितत्वात्, इत्यर्थः । आदिना 'सोऽहमेतमेवं वायुं दिशां वत्सं वेद' (छा. ३..१५.२) इति श्रुतिर्गृह्यते । अस्या अर्थः- **दिशां**= दिक्शब्दितानां पूर्वादिचतुर्दिगवस्थितानां

भगवद्बाहूनाम्, **वत्सं**= ततो जातम्, **वायुं**= मुख्यप्राणम्, **अहं वेद**= जानामि इति । लक्ष्मीवाक्य-मेतत् । अत्र लक्ष्मीपरतच्छब्दस्य स इति पुल्लिङ्गत्वम् ॥

**(सर्वसंहर्ता - विष्णुः)**

## (३) ॥ ॐ अत्ता चराचरग्रहणात् ॐ ॥ ९ ॥

(३) **ॐ अत्ता चराचरग्रहणादिति ॥** तत्तु इति वर्तते । **अयमर्थः- अत्ता**= 'सर्वं वा अत्ति' इति श्रुत्युक्तः सर्वात्ता, तत्तु= विष्णुरेव, **चराचरग्रहणात्**= अदनकर्मत्वेन सर्वमिति सर्वस्य चराचरस्य= सकलचेतनाचेतनप्रपञ्चजातस्य ग्रहणात् इति ॥

**(४) न हि चराचरस्य सर्वस्यात्तृत्वमदितेः ।**
**'स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु ।**
**वासुदेवः परः पुंसामितरेऽल्पस्य वा न वा ॥' इति स्कान्दे ।**

(४) ननु चराचरग्रहणेऽपि अस्तु अदितेरप्यत्तृत्वम्, ततश्च हेतुः सावकाश इति शङ्कां वारयन्ति- **न हीति ॥**

चराचरात्तृत्वस्य वैष्णवत्वे मानमाहुः- **स्रष्टेत्यादि ॥ इति श्रुतिरिति ॥** स्कान्दे इत्युक्तेः, हि= यतः इति श्रुतिरस्ति अतः, चराचरस्य सर्वस्य अत्तृत्वम् अदितेः= देवमातुः नास्ति हि इत्यर्थः । अस्य भाष्यस्य हेत्वर्थविवरणमात्रपरत्वेन नान्यत्र अन्वयापेक्षा ॥

इदं बोध्यम्- 'अदितिर्देवतामयी' (का. २.१.७) इति श्रुत्यन्तरे विष्णौ अदितिशब्दप्रयोगेण अदितिश्रुतेः हरौ सावकाशत्वात्, अशनकर्तृत्वरूपलिङ्गस्य च 'गुहाधिकरणे' (१.२.३) वक्ष्यमाण-रीत्या सावकाशत्वाच्च, निरवकाशेन सर्वात्तृत्वलिङ्गेन सावकाशयोः दर्शितश्रुतिलिङ्गयोर्बाध इति ॥

नन्वत्र टीकायाम्- 'जन्मादि' सूत्रेण उक्तसर्वसंहर्तृत्वरूपब्रह्मलक्षणाऽऽक्षेपेण देवमातैव संहर्त्री, अदितिश्रुतेः । न च श्रुतिरपि विष्णुविषया, श्रुतौ अत्तीति अशनोक्तेः विष्णोः 'अनश्नन्' (आ. ५.१) इति अनशनोक्तेरिति पूर्वपक्ष उक्तः । स च न सम्भवति, सर्वात्तृत्वस्य सिद्धान्तयुक्तित्वेन पूर्वपक्षे तत्साधकतया तस्य ग्रहीतुमशक्यत्वात् ।

ननु यत्किञ्चिदत्तृत्वमर्थ इति चेन्न- तस्य सर्वसंहर्तृत्वरूपब्रह्मलक्षणातिव्याप्त्यापादकत्वाभावात् ।

न च यत्किञ्चिदत्तृत्वमेवार्थः, सर्वसंहर्तृत्वलक्षणं चासम्भवि, इत्येव तात्पर्यम्, अतिव्याप्तिप्रसङ्गाद्

इति टीकाया अपि अतीता व्याप्तिः लक्षणस्य लक्ष्ये सम्बन्धः तस्याः प्रसङ्गः, तस्माद् इति व्युत्पत्त्या व्याप्त्यभावप्रसङ्गादित्यर्थेन असम्भव एव तात्पर्यम् (व्याप्त्यभावः= लक्षणस्य लक्ष्ये सम्बन्धाभावः) इति वाच्यम्- 'सर्वम्' इति कर्मकारकपरित्यागेन धात्वर्थमात्रमादाय पूर्वपक्षकरणायोगाद् इति चेन्न । पूर्वोत्तरविमर्शमन्तरेणैव इह शास्त्रे- जन्माकाशनयादौ पूर्वपक्षकरणात्, धात्वर्थमात्रमादाय अत्रापि पूर्वपक्षकरणेन अदोषात् ॥ वस्तुतस्तु- सर्वात्तृत्वम् अतिव्याप्तमित्येव पूर्वपक्षः, न त्वसम्भवीति ॥

न च पूर्वकल्पोक्त 'स च न सम्भवति' इत्यादिदोषप्रसङ्ग इति वाच्यम् । सर्वात्तृत्वस्य विष्णुमात्रवृत्तिधर्मत्वाज्ञानात् पूर्वपक्षकरणेन पूर्वोक्तदोषानवकाशात् । सिद्धान्तस्तु- तद्धर्मस्य विष्णुमात्रवृत्तित्वावगतेः नातिव्याप्तिरिति । ततश्च टीकोक्तं सर्वं रमणीयमेवेति बोध्यम् ॥ ९ ॥

(४) **स्रष्टेति** ॥ **पुंसां परः**= उत्तमः वासुदेवः, **एक एव**= स्वतन्त्र एव, **निखिलस्य**- स्रष्टा तथा पाता अत्ता निखिलस्य, **इतरे**= ब्रह्मादयस्तु **अल्पस्य**= एकदेशस्य जगतः अस्वातन्त्र्येण सृष्ट्यादिकर्तारो भवन्ति । स्वातन्त्र्येण तु न भवन्तीत्यर्थः ॥

**(५) 'एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः । यमप्येति भुवनं साम्पराये स नो हरिर्घृतमिहायुषेऽत्तु देवः' (घृत.सू.) इति च श्रुतिः ॥**

(५) **एक इति** ॥ **य एकः इदम्**= अस्य जगतः, **पुरस्तात्**= प्रलये बभूव । यतश्च सृष्टौ इदं जगत् बभूव जातम् । अथ य एकः, **भुवनस्य**= जगतः **गोपाः** बभूव= रक्षको जातः । **यं च साम्पराये**= मुक्तिप्रलययोः, **भुवनं**= जगत् प्रविशति निगीर्ण-ओदनवत् **स** देवो **हरिः नः आयुषे**= आयुरर्थे **इह**= यज्ञस्थाने आमत्य, **घृतं**= आहुतिरूपम् **अत्तु**= स्वीकरोतु इत्यर्थः । मन्त्रद्रष्टृवाक्यमेतत् घृतसूक्ते ॥ ९ ॥

**('नैवेह किञ्चन' इति विष्णुप्रकरणबलाच्च विष्णुरेवात्ता)**

## (६) ॥ ॐ प्रकरणाच्च ॐ ॥ १० ॥

**अप्संवत्सरसृष्ट्यादिना तत्प्रकरणाच्च ।**

(६) निरवकाशलिङ्गेन सिद्धस्य सर्वात्तृत्वस्य निरवकाशप्रकरणेनापि साधनाय सूत्रम्- **ॐ प्रकरणाच्चेति** ॥ अत्ता, तत्तु इति वर्तते । 'तत्' इत्यस्य आवृत्तिविपरिणामौ ॥ **अयमर्थः**- अत्ता- 'सर्वं वाऽत्ति' (बृ. ३.२.५) इति श्रुत्युक्तः- अत्ता, तत्तु= विष्णुरेव । तस्य 'नैवेह' (बृ. ३.२.१) इतीत्यादिप्रकरणस्य, **प्रकरणाच्च**= निरवकाशविष्णुप्रकरणत्वाच्च इति ॥

**सौत्रहेतुं विवृण्वते- अप्संवत्सरेति ॥ *'सोऽर्चन्' अचरत्तस्यार्चत आपोऽजायन्त' (बृ. ३.२.१) इति अपां सृष्टिः 'तद्यद्रेत आसीत्** तत्संवत्सरोऽभवत्' (बृ. ३.१.४) इति संवत्सर-सृष्टिश्चोच्यत इति बोध्यम् ॥ आदिना प्रलयवृत्तित्वग्रहः । तृतीयार्थः ज्ञाप्यत्वम् ।

(६) ***सोऽर्चन्नचरदिति** ॥ (बृ. ३.२.१) **सः**= मृत्युनामा हरिः भगवान् **अर्चन्**= अप्सृष्ट्यर्थमात्मानं पूजयन् चचार, **तस्य अर्चतः**= स्वात्मानं पूजयतः सकाशात् **आपोऽजायन्त** इत्यर्थः । **तद्यद्रेत इति** ॥ (बृ. ३.२.४) अस्यार्थः- **तत्**= तेन मिथुनीभावेन, **यत् रेत आसीत्**, स संवत्सरोऽभवत्, तद्रेत उपादानकदेहवान् संवत्सरनामकः चतुर्मुखोऽभवदिति ॥ स इति विधेयानुरोधेन पुंलिङ्गनिर्देशः । **यद्वा- तत्** तस्यां देव्यां **यद्रेत आसीत्**= स्थापितमासीत् इत्यर्थः ॥ शिष्टं पूर्ववत् । (तदित्यत्र सप्तम्याः 'सुपां सुलुक्' इति लुक्) ॥

**(७) 'नेहाऽसीत्किञ्चनाप्यादौ मृत्युरासीद्धरिस्तदा ।**
**सोत्मनो मनसाऽस्राक्षीदप एव जनार्दनः ॥**
**शयानस्तासु भगवान्निर्ममेऽण्डं महत्तरम् ।**
**तत्र संवत्सरं नाम ब्रह्माणमसृजत् प्रभुः ।**
**तमत्तुं व्यददादास्यं तदाऽसौ विरुराव ह ॥**
**अथ तत्कृपया विष्णुः सृष्टिकर्मण्ययोजयत् ।**
**सोऽसृजद्भुवनं विश्वमद्यार्थं हरये विभुः ॥' इति ब्रह्मवैवर्ते ॥ १० ॥**

**॥ इति अत्तृत्वाधिकरणम् ॥ २ ॥**

**(७) अबादिसृष्टेः (कर्तृत्वस्य) विष्णुधर्मत्वे स्मृतिमाहुः- नेहेति ॥ वैवर्ते इति ॥** तत्र इत्युक्ते-**रित्यर्थः । पञ्चम्यर्थो ज्ञाप्यत्वम् । द्वयोर्ज्ञाप्यत्वयोः प्रकरणत्वेऽन्वयः ।**

**यद्वा- पञ्चम्यर्थज्ञाप्यत्वस्य अप्संवत्सरसृष्टावन्वयः, तथा च ब्रह्मवैवर्तोक्तिज्ञाप्याप्संवत्सर-सृष्ट्यादिज्ञाप्यप्रकरणत्वादित्यन्वयः । अस्य भाष्यस्य सौत्रहेतुमात्रविवरणपरत्वेन नान्यत्रान्वयः । एतदनुरोधेन सूत्रार्थो बोध्यः ॥ १० ॥**

॥ इति अत्तृत्वाधिकरणम् ॥ २ ॥

(७) **नेहाऽसीदिति** ॥ **आदौ**= प्रलये, **इह**= प्रपञ्चे, **किञ्चन**= जीवो, जडं वा स्वतो नाऽसीत् । किन्तु

**मृत्युः**= मारकः, तन्नामको **हरिः तदा**= प्रलयकाले **आसीत्**= आवरकः आसीत्। मृत्युना सर्वमिदम् आवृतमासीत् इति यावत् ॥ **सः**= विष्णुः ('मन्त्रेष्वाङ्यादेरात्मनः' (पा.सू. ६.४.१४१) इति आत्मन आल्लोपः) **आत्मनो मनसा**= स्वेच्छयैव **अप अस्राक्षीत् तासु**= अप्सु **शयानो भगवान्, महत्तरं**= स्वार्थे तरप्, स्थूलम् अण्डं= ब्रह्माण्डं **निर्ममे**, (ततः) **प्रभुः**= भगवान्, **तत्र**= ब्रह्माण्डे **संवत्सरं**= तन्नामकं ब्रह्माणम् **असृजत्**। अत्र नामेति पदम्- वत्सभूतान् देवान् सम्यक् रमयतीति व्युत्पत्या- संवत्सरशब्दस्य चतुर्मुखे प्रसिद्धिद्योतनाय। **तमत्तुं**= चतुर्मुखं भक्षयितुम् **आस्यं व्याददात्**= वदनं विस्तृतमकरोत्। **तदा असौ**= ब्रह्मा **विरुराव**= भाण् इति शब्दमकरोत्, ह प्रसिद्धम् **अथ**= आरवकरणानन्तरम्, **तत्कृपया**= तस्मिन् चतुर्मुखे दयया **विष्णुः तं**= चतुर्मुखम् अजग्ध्वा **सृष्टिकर्मणि अयोजयत्** (ततः) **स विभुः**= चतुर्मुखः, **हरये**= विष्णवे **अद्यार्थं भुवनं विश्वं**= समस्तप्रपञ्चम् **असृजत्**= सृष्टवानित्यर्थः ॥ १० ॥

॥ **इति अत्तृत्वाधिकरणम्** ॥ २ ॥

## ३. गुहाधिकरणम्

### (१) सर्वात्तैकः पर उक्तः ।

(१) अत्र नये कर्मफलभोक्तृत्वस्य हरौ समन्वयः ॥ (२. सू. अ.) । **सर्वात्ता एक इति ॥** पूर्वाधिकरणे अत्ता इत्यनेन सर्वसंहर्तृत्वं (सार)भोक्तृत्वं चेत्युभयं विवक्षितम् । अत एव टीकायाम्- 'न च सर्वात्तृत्वोक्तिविरोधः, कर्मफलभोगं विना संहर्तृत्वमात्रेण तदुपपत्तेः' इत्युक्तम् (पूर्वपक्षकथनावसरे)। 'तत्तदत्तुमध्रियत' इति श्रुतावपि तत्तत्पदेन सुकृत(कर्म)फलमपि विवक्षितम् । तथा च **सर्वात्ता** = सर्वसंहर्ता, सर्वकर्मफलभोक्ता च, **परः**= परमात्मा **एक** एव इत्युक्तः पूर्वनये इत्यर्थः । एतेन अत्तृत्वनयेन सङ्गतिः, कर्मफलभोक्तृत्वमपि एतदधिकरणविषयश्चेति, सूचितम् ॥

अनेन- नेयमवतारिका सङ्गच्छते । पूर्वाधिकरणे सर्वसंहर्तृत्वस्यैव सिद्धान्तितत्वेन, तस्य कर्मफलसारभोक्तृत्वरूपधर्मविषयकशङ्कानुत्थापकत्वात् । न च श्रुतिसूत्रस्थयोः 'अत्ति, अत्ता' इत्यनयोः सर्वकर्मफल(सार)भोक्ता, सर्वसंहर्ता, इत्युभयार्थवाचकत्वेन सर्वकर्मफल(सार)भोक्तृत्वमपि पूर्वनये अत्ता इत्यनेन विवक्षितमिति वाच्यम् । उभययार्थकत्वे मानाभावादिति शङ्का परास्ता ।

श्रुतौ 'अशनाया हि मृत्युः' इति अशनाया मृत्युपदस्वारस्यात्, अत्तीति पदस्य अर्थद्वये सिद्धे, श्रुत्यनुरोधेन सूत्रे- अत्ता इत्यस्य अर्थद्वयवाचकत्वेन अभ्युपगम्यत्वाच्च ॥

### (२) 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः' (क.उ. १.३.१) इति पिबन्तौ प्रतीयेते, तौ कौ ? इति । उच्यते -

(२) **ऋतं पिबन्ताविति ॥** विषयवाक्यमिदम् । **त्रिनाचिकेता इति ॥** इत्यत्र तु इत्यर्थः । **प्रतीयेत इति ॥** पिबन्ताविति द्विचवननिर्देशेन द्वयोः फलभोक्तृत्वं प्रतीयत इति भावः । **तौ काविति ॥** श्रूयमाणौ पिबन्तौ कौ= भगवदन्यौ वा (भगवान् जीवश्च वा) भगवद्रूपे एव वा तौ इत्यर्थः । चेत् इति शेषः । अनेन विष्णोः अन्यस्य वा ? विष्णोरेव वा ? इति संशयो दर्शितः । सर्वात्तृत्वोक्तिः, जीवे कर्मफलभोक्तृत्वप्रसिद्धिश्च सन्देहबीजम् । अपि तु जीवसहितस्य परमात्मनः कर्मफलभोक्तृत्वमित्यादिपूर्वपक्षो बोध्यः । उच्यते- सूत्रकृतेति शेषः ।

(२) **ऋतमिति ॥** (का. १.३.१) अयमर्थः- सुकृतस्य लोके= पुण्यनिर्मिते, पुण्यनिमित्ते वा शरीरे,

**गुहां**= हृदयगुहायां (स्थिते) **परार्धे** = परेभ्यः रुद्रादिभ्यः **आरूढे**= अतिपूर्णे **परमे**= सर्वजीवोत्तमे वायौ, **प्रविष्टौ, ऋतं**= सुकृतफलं **पिबन्तौ**= भुञ्जानौ यौ आत्माऽन्तरात्मेति रूपविशेषौ वर्तेते, तौ **ब्रह्मविदः**= ब्रह्मज्ञानिनः, **पञ्चाग्नयः**= देव-पितृ-भूत-मनुष्य-ब्रह्मयज्ञाख्यपञ्चमहायज्ञवन्तः, अग्निहोत्र-दर्शपूर्णमास-चातुर्मास-पशु-सोमरूपपञ्चयज्ञवन्तो वा, द्यु-पर्जन्य-धरा-पुं-स्त्र्याख्यपञ्चाग्निनिष्ठा वा, नचिकेता नाम ऋषिः, तस्येदं= नाचिकेतं पृषोदरादित्वात् सलोपः, ततो बहुव्रीहिः । त्रिवारम् अनुष्ठितनाचिकेत-चयनवन्तश्च ये महान्तः, ते सर्वेऽपि **छायातपौ वदन्ति**- विदुषाम्, पापिनां च क्रमेण सुखदुःखप्रदौ भगवद्रूपविशेषौ इति वदन्ति ॥ इति ॥

**(हृदयगुहां प्रविष्टौ विष्णुरूपे एव)**

## (३) ॥ ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ ११ ॥

## गुहां प्रविष्टौ पिबन्तौ विष्णुरूपे एव ।

(३) **ॐ गुहां प्रविष्टाविति** ॥ अत्ता इत्यनुवर्तते, द्विवचनान्ततया च विपरिणम्यते । यद्वा- तत्तु इत्यनुवर्त्य तच्छब्देन श्रुतिस्थ'पिबन्तौ'इत्यस्य परामर्शः । अथवा- (आदेयं= सुखम्, मातः= अनुभवतः) आदेयं मात इति व्युत्पत्या शुभफलभोक्तृपरं सौत्रम् 'आत्मानौ' इत्येतत्पदं तेन- पिबन्तौ इति लब्धम् । गुहां प्रविष्टाविति हेतुगर्भम् । **अयमर्थः- गुहां**=हृदयगुहां **प्रविष्टौ** अत्तारौ= 'ऋतं पिबन्तौ सुकृतस्य लोके' इति श्रुत्युक्तसुकृतफलभोक्तारौ **आत्मानौ तु** आत्माऽन्तरात्माख्यविष्णुरूपे एव, गुहाप्रविष्टत्वलिङ्गात्, **तद्दर्शनात्**=तस्य भगवतः द्विरूपेण हृदयगुहाप्रवेशस्य दर्शनात्= 'घर्मा समन्ता' इति श्रुतौ श्रवणात्, हि= गुहाप्रविष्टत्वलिङ्गं विष्णोरेवेति 'यो वेद' इति श्रुतौ प्रसिद्धमिति ॥ यद्वा- **पिबन्तौ**= ऋतपानकर्तारौ आत्मानावेवेत्यर्थः । शेषं पूर्ववत् । अथवा- **आत्मानौ**= ऋतपानकर्तारौ तावेव विष्णुरूपे एवेत्यर्थः । शेषं प्राग्वत् । प्रथम-द्वितीयपक्षयोः तत्तु इत्यनुवृत्या सिद्धे आत्मानौ इति पदं भगवतः आत्माऽन्तरात्माख्यरूपद्वयेन भोक्तृत्वबोधनार्थमिति ज्ञेयम् ॥

## (४) 'घर्मा समन्ता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम' (ऋ.सं. १०-११४-१) इत्यादिना तद्दर्शनात् ।

(४) सौत्रप्रतिज्ञांशं व्याचक्षते- **गुहामिति** ॥ **रूपे इति** ॥ आत्माऽन्तरात्माख्यरूपे इत्यर्थः । भगवतो द्विरूपेण सर्वशरीरप्रवेशे श्रुतिमुदाहरन्ति- **घर्मेति** ॥ **इत्यादिना तद्दर्शनादिति** ॥ **तस्य**= द्विरूपेण भगवत्कर्तृकसर्वहृदयगुहाप्रवेशस्य प्रतिपादनादित्यर्थः ।

## ३. गुहाधिकरणम्

### (१) सर्वात्तैकः पर उक्तः ।

(१) **अत्र नये कर्मफलभोक्तृत्वस्य हरौ समन्वयः ॥** (२. सू. अ.)। **सर्वात्ता एक इति ॥ पूर्वाधिकरणे अत्ता इत्यनेन सर्वसंहर्तृत्वं (सार)भोक्तृत्वं चेत्युभयं विवक्षितम् । अत एव टीकायाम्- 'न च सर्वात्तृत्वोक्तिविरोधः, कर्मफलभोगं विना संहर्तृत्वमात्रेण तदुपपत्तेः' इत्युक्तम् (पूर्वपक्षकथनावसरे)। 'तत्तदत्तुमध्रियत' इति श्रुतावपि तत्तत्पदेन सुकृत(कर्म)फलमपि विवक्षितम् । तथा च सर्वात्ता = सर्वसंहर्ता, सर्वकर्मफलभोक्ता च, परः= परमात्मा एक एव इत्युक्तः पूर्वनये इत्यर्थः । एतेन अत्तृत्वनयेन सङ्गतिः, कर्मफलभोक्तृत्वमपि एतदधिकरणविषयश्चेति, सूचितम् ॥**

अनेन- नेयमवतारिका सङ्गच्छते। पूर्वाधिकरणे सर्वसंहर्तृत्वस्यैव सिद्धान्तितत्वेन, तस्य कर्मफल-सारभोक्तृत्वरूपधर्मविषयकशङ्कानुत्थापकत्वात् । न च श्रुतिसूत्रस्थयोः 'अत्ति, अत्ता' इत्यनयोः सर्वकर्मफल(सार)भोक्ता, सर्वसंहर्ता, इत्युभयार्थवाचकत्वेन सर्वकर्मफल(सार)भोक्तृत्वमपि पूर्वनये अत्ता इत्यनेन विवक्षितमिति वाच्यम् । उभययार्थकत्वे मानाभावादिति शङ्का परास्ता ।

श्रुतौ 'अशनाया हि मृत्युः' इति अशनाया मृत्युपदस्वारस्यात्, अत्तीति पदस्य अर्थद्वये सिद्धे, श्रुत्यनुरोधेन सूत्रे- अत्ता इत्यस्य अर्थद्वयवाचकत्वेन अभ्युपगम्यत्वाच्च ॥

**(२) 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।**
**छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः' (क.उ. १.३.१)**
**इति पिबन्तौ प्रतीयेते, तौ कौ ? इति । उच्यते -**

(२) **ऋतं पिबन्ताविति ॥** विषयवाक्यमिदम् । **त्रिनाचिकेता इति ॥** इत्यत्र तु इत्यर्थः । **प्रतीयेत इति ॥** पिबन्ताविति द्विचवननिर्देशेन द्वयोः फलभोक्तृत्वं प्रतीयत इति भावः । **तौ काविति ॥** **श्रूयमाणौ पिबन्तौ कौ= भगवदन्यौ वा (भगवान् जीवश्च वा) भगवद्रूपे एव वा तौ इत्यर्थः । चेत् इति शेषः । अनेन विष्णोः अन्यस्य वा ? विष्णोरेव वा ? इति संशयो दर्शितः । सर्वात्तृत्वोक्तिः, जीवे कर्मफलभोक्तृत्वप्रसिद्धिश्च सन्देहबीजम् । अपि तु जीवसहितस्य परमात्मनः कर्मफलभोक्तृत्वमित्यादिपूर्वपक्षो बोध्यः । उच्यते- सूत्रकृतेति शेषः ।**

(२) **ऋतमिति ॥ (का. १.३.१) अयमर्थः- सुकृतस्य लोके=** पुण्यनिर्मिते, पुण्यनिमित्ते वा शरीरे,

**गुहां**= हृदयगुहायां (स्थिते) **परार्धे** = परेभ्यः रुद्रादिभ्यः **आरूढे**= अतिपूर्णे **परमे**= सर्वजीवोत्तमे वायौ, **प्रविष्टौ**, **ऋतं**= सुकृतफलं **पिबन्तौ**= भुञ्जानौ यौ आत्माऽन्तरात्मेति रूपविशेषौ वर्तेते, तौ **ब्रह्मविदः**= ब्रह्मज्ञानिनः, **पञ्चाग्नयः**= देव-पितृ-भूत-मनुष्य-ब्रह्मयज्ञाख्यपञ्चमहायज्ञवन्तः, अग्निहोत्र-दर्शपूर्णमास-चातुर्मास-पशु-सोमरूपपञ्चयज्ञवन्तो वा, द्यु-पर्जन्य-धरा-पुं-स्त्र्याख्यपञ्चाग्निनिष्ठा वा, नचिकेता नाम ऋषिः, तस्येदं= नाचिकेतं पृषोदरादित्वात् सलोपः, ततो बहुव्रीहिः । त्रिवारम् अनुष्ठितनाचिकेत-चयनवन्तश्च ये महान्तः, ते सर्वेऽपि **छायातपौ वदन्ति**- विदुषाम्, पापिनां च क्रमेण सुखदुःखप्रदौ भगवद्रूपविशेषौ इति वदन्ति ॥ इति ॥

**(हृदयगुहां प्रविष्टौ विष्णुरूपे एव)**

## (३) ॥ ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ ११ ॥

## गुहां प्रविष्टौ पिबन्तौ विष्णुरूपे एव ।

(३) **ॐ गुहां प्रविष्टाविति** ॥ अत्ता इत्यनुवर्तते, द्विवचनान्ततया च विपरिणम्यते । यद्वा- तत्तु इत्यनुवर्त्य तच्छब्देन श्रुतिस्थ'पिबन्तौ'इत्यस्य परामर्शः । अथवा- (आदेयं= सुखम्, मातः= अनुभवतः) आदेयं मात इति व्युत्पत्त्या शुभफलभोक्तृपरं सौत्रम् 'आत्मानौ' इत्येतत्पदं तेन- पिबन्तौ इति लब्धम् । गुहां प्रविष्टाविति हेतुगर्भम् । **अयमर्थः- गुहां**=हृदयगुहां **प्रविष्टौ** अत्तारौ= 'ऋतं पिबन्तौ सुकृतस्य लोके' इति श्रुत्युक्तसुकृतफलभोक्तारौ **आत्मानौ तु** आत्माऽन्तरात्माख्यविष्णुरूपे एव, गुहाप्रविष्टत्वलिङ्गात्, **तद्दर्शनात्**=तस्य भगवतः द्विरूपेण हृदयगुहाप्रवेशस्य दर्शनात्= 'घर्मा समन्ता' इति श्रुतौ श्रवणात्, हि= गुहाप्रविष्टत्वलिङ्गं विष्णोरेवेति 'यो वेद' इति श्रुतौ प्रसिद्धमिति ॥ यद्वा- **पिबन्तौ**= ऋतपानकर्तारौ आत्मानावेवेत्यर्थः । शेषं पूर्ववत् । अथवा- **आत्मानौ**= ऋतपानकर्तारौ तावेव विष्णुरूपे एवेत्यर्थः । शेषं प्राग्वत् । प्रथम-द्वितीयपक्षयोः तत्तु इत्यनुवृत्त्या सिद्धे आत्मानौ इति पदं भगवतः आत्माऽन्तरात्माख्यरूपद्वयेन भोक्तृत्वबोधनार्थमिति ज्ञेयम् ॥

## (४) 'घर्मा समन्ता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम' (ऋ.सं. १०-११४-१) इत्यादिना तद्दर्शनात् ।

(४) सौत्रप्रतिज्ञांशं व्याचक्षते- **गुहामिति** ॥ **रूपे इति** ॥ आत्माऽन्तरात्माख्यरूपे इत्यर्थः । भगवतो द्विरूपेण सर्वशरीरप्रवेशे श्रुतिमुदाहरन्ति- **घर्मेति** ॥ **इत्यादिना तद्दर्शनादिति** ॥ **तस्य**= द्विरूपेण भगवत्कर्तृकसर्वहृदयगुहाप्रवेशस्य प्रतिपादनादित्यर्थः ।

(४) **घर्मेति** ॥ (ऋ. १०.११४.१) **घर्मा**= दीप्तौ, सङ्कोचकौ वा, **समन्ता**= देशादिभिर्व्याप्तौ ('अति= बन्धने' इत्यस्मात् समूपूर्वात् कर्तरि पचाद्यच्) भगवन्ताविति शेषः । **त्रिवृतं**= तेजोऽबन्नात्मकं शरीरं **व्यापतुः**= विशेषेण आपतुः देहहृदयगुहास्थानं प्राप्तौ इति यावत् । **तयोः**= भगवद्रूपयोः, **जुष्टिं**= सेवाम्, कर्तुमिति शेषः, **मातरिश्वा**= वायुरपि **जगाम** तच्छरीरं प्राप्त इत्यर्थः । आदिना- 'दिवस्पय' इत्युत्तरवाक्यम्, 'एकः सुपर्णः' इति एतत्सूक्तीयोत्तरवाक्यं च, ग्राह्यम् । तस्यार्थो भाष्यदीपिकायां व्यक्तः ॥

**(५) 'आत्माऽन्तरात्मेति हरिरेक एव द्विधा स्थितः ।**
**निविष्टो हृदये नित्यं रसं पिबति कर्मजम् ॥' इति बृहत्संहितायाम् ।**

(५) **भगवान् द्विरूपेण हृदयगुहामास्थाय कर्मफलं भुङ्क्ते इत्यत्र मानमाहुः- आत्मेति ॥ यद्वा- ऋतमिति वाक्यप्रतिपाद्यो विष्णुरेवेत्यत्र स्मृतिमाहुः- आत्मेति ॥ बृहत्संहितायामिति ॥ तद्दर्शनादिति वर्तते । बृहत्संहितायामिति वचनेन उक्तप्रवेशस्य, ऋतपानस्य च, प्रतिपादनादित्यर्थः ।**

**'श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥'**

**इति गीतायाम् (१५.९) । अप्येवं दृश्यत इति बोध्यम् ॥**

(५) **आत्मेति** ॥ **हृदये**= प्राणिनां हृदयगुहायामित्यर्थः । शिष्टं स्पष्टम् । अत्र रसमित्यनेन जीवाभोग्यफलमेव विष्णोः भोग्यत्वेन उच्यते ॥

**(६) 'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् ।**
**पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित् ॥' इति पाद्मे ॥**

**(६) ननु विष्णोः भोक्तृत्वाभ्युपगमे 'अनश्नन्' इति श्रुतिविरोधः, अत आहुः- शुभमिति ॥ निषेधस्तु अशुभफलविषयक इति भावः । पाद्मे इति ॥ तद्दर्शनात् इति वर्तते । पाद्मे इति वचनेन शुभफलभोक्तृत्वप्रतिपादनादित्यर्थः । पञ्चम्यन्तत्रयस्य 'विष्णुरूपे एव' इति भाष्येण सम्बन्धः ॥**

**इदं बोध्यम्- अत्र श्रुतिसूत्राभ्यां सर्वशुभकर्मफलसारभोक्तृत्वमेव विवक्षितम्, तत्रैव संशयादिकं चेति स्थितिः । एतेन अशुभकर्मफलभोक्तृत्वस्य सर्वफलभोक्तृत्वान्तःपातिनो हरौ अभावात् सर्वफलभोक्तृत्वम् अतिप्रसक्तम् (असम्भवि), सज्जीवीयशुभफलभोक्तृत्वस्य परमात्मन्यभावाच्च, अतिप्रसक्तमिदं सर्वफलभोक्तृत्वमिति शङ्काद्वयं परास्तं वेदितव्यम् ॥ सज्जीवीयफलभोक्तृत्वस्य सारभोक्तृत्वरूपत्वाभावाच्चेति ॥**

(६) **शुभमिति** ॥ **असौ**= शरीरे प्राणे स्थितो हरिः, **नित्यं**= नियमेन, **शुभं**= शुभकर्मजफलं **पिबति, अशुभं**= अशुभकर्मजं **न पिबेत्** । कुत इति चेत्, तत्राह- **पूर्णेति** ॥ **पूर्णानन्दमयस्यास्य** हरेः **चेष्टा**= व्यापारः **कचित्** काले, देशे च, केनापि साकल्येन **न ज्ञायते** इत्यर्थः । ऐश्वर्यबलेन पूर्णानन्दस्यापि सुखभोगो युक्त इति ज्ञेयम् ॥

**(७) 'यो वेद निहितं गुहायाम्' इत्यादिना प्रसिद्धं हिशब्देन दर्शयति ॥ ११ ॥**

(७) **ननु गुहानिविष्टत्वं कुतो विष्णुलिङ्गम् ? तस्य जीवेऽपि सम्भवाद् इति शङ्कापरिहारक-सौत्रहिशब्दार्थमाहुः- यो वेदेति ॥ प्रसिद्धमिति ॥** निश्चितमित्यर्थः । **दर्शयतीति ॥ गुहावृत्तित्वं सूत्रकार इति शेषः । तथा च- एतच्छ्रुत्युक्तगुहावृत्तित्वस्य मोक्षकारणज्ञानविषयत्वसमानाधिकरणत्वेन विष्णुनिष्ठत्वात् तद्बलेन ऋतपानकर्तृत्वमपि हरेरेवेति ज्ञेयम् ॥**

**ननु अत्र सूत्रे श्रुतं गुहाप्रविष्टत्वलिङ्गमेव समन्वीयताम् । कर्मफलसारभोक्तृत्वं तु अर्थात् सिद्ध्यत्येव । तथा च- अश्रुतऋतपानकर्तृत्वसाधनं मास्तु ।**

**न च ऋतपानविषय एव सङ्गतिसम्भवेन तत्समन्वय एव युक्त इति वाच्यम्- 'अन्तस्थत्व' (१.१.७) नये आनन्दमयप्रकरणश्रुतादृश्यत्व(समन्वय)मुखेन अन्तस्थत्वलिङ्गसमन्वयवत् पूर्वनय-प्रसक्तकर्मफलभोक्तृत्व(समन्वय)मुखेन गुहाप्रवेशलिङ्गसमन्वये बाधकाभावात् इति चेन्न- अत्र सूत्रे गुहाप्रविष्टत्वस्य हेतुत्वेन तत्समन्वयायोगात् ॥ ११ ॥**

यो वेदेति ॥ व्याख्यातम् (पृ. १२०) ॥ ११ ॥

**(सेतुत्वादिना विशेषितत्वाद् विष्णुरूपे एवात्रोक्ते)**

**(८) ॥ ॐ विशेषणाच्च ॐ ॥ १२ ॥**

(८) निरवकाशश्रुत्याऽपि उक्तार्थसाधनाय सूत्रम्- **ॐ विशेषणाच्चेति** ॥ अत्तारौ, आत्मानौ, इति वर्तते, तु इति च । यथायोग्यमावृत्तिविपरिणामौ । **अयमर्थः**- अत्तारौ, आत्मानौ तु परमात्मानावेव । **विशेषणाच्च**= 'यः सेतुः' इति एकवचनेन 'ब्रह्म तत्परम्' इति ब्रह्मशब्देन च (परत्वेन च पिबतोः) विशेषितत्वाच्च इति ॥

**(९) 'यः सेतुरीजानानामक्षरं ब्रह्म तत्परम्' (क.उ.१–३–२) इति ।**

(९) सूत्रबोधितश्रुतिमाहुः- **यः सेतुरिति ॥ तत्परमितीति ॥** अस्य 'विशेषणाच्च' इति सूत्रे, सूत्रस्य 'विष्णुरूपे एव' इति पूर्वसूत्रभाष्येऽन्वयः ।

(९) **यः सेतुरिति ॥** (का. १.३.२) **यः**, आत्माऽन्तरात्माख्यद्विरूपो (हरिः) भगवान् **ईजानानां**= विष्णुयष्टॄणां **सेतुः**= आश्रयः, **यद् अक्षरम्, तत् परं ब्रह्म** इत्यर्थः ॥ अस्य 'अभयम्' इत्याद्युत्तरवाक्येनान्वयः (ईजानानाम् इत्यत्र यजेर्लिटि 'लिटः कानज्वा' इति कानजादेशे सम्प्रसारणे द्वित्वे सवर्णदीर्घे च- ईजानेति सिद्धमिति बोध्यम् ।)

**(१०) 'पृथग्वक्तुं गुणास्तस्य न शक्यन्तेऽमितत्वतः ।**
**यतोऽतो ब्रह्मशब्देन सर्वेषां ग्रहणं भवेत् ॥**
**एतस्माद् ब्रह्मशब्दोऽयं विष्णोरेव विशेषणम् ।**
**अमिता हि गुणा यस्मान्नान्येषां तमृते प्रभुम् ॥' इति ब्राह्मे ।**
**न च जीवे समन्वयोऽभिधीयते ।**

(१०) ब्रह्मशब्दस्य मुख्यवृत्त्या भगवत्परत्वं स्मारयन्ति- **पृथगिति ॥ ब्राह्मे इति ॥** ब्रह्मशब्दः विष्णोरेव मुख्यवाचक इत्युक्तमिति शेषः । परकृतापव्याख्यानं निराकुर्वन्ति- **न चेति ॥** च= यतः जीवे समन्वयो नाभिधीयते, यतश्च भेदोऽसत्यो न भवति, अतः गुहां प्रविष्टौ बुद्धिजीवौ इति प्राप्ते, जीवेश्वराविति सिद्धान्तितमिति यत् परव्याख्यानं तद् अयुक्तमिति भावः । विस्तरः टीकादौ ॥

(१०) पृथग्वक्तुमिति ॥ **अमितत्वतः**= असङ्ख्याकत्वाद्धेतोः **तस्य**= विष्णोः **गुणाः**, **पृथक्**= विविच्य तत्तद्रूपेण **वक्तुं यतो न शक्यन्ते**, यतस्तस्य गुणाः ज्ञातव्या इति शेषः **यतो ब्रह्मशब्देन सर्वेषां**= गुणानां **ग्रहणं**= ज्ञानं **भवेत्** । **अतः**= सर्वगुणज्ञानार्थम्, तस्मिन् विष्णौ ब्रह्मशब्दः प्रयुज्यत इति शेषः । **यस्मात्** कारणात् **प्रभुं तमृते**= विष्णुं विना **अन्येषां** जीवानां **गुणाः अमिताः** न भवन्ति । **एतस्मात्** कारणात् **ब्रह्मशब्दोऽयं विष्णोरेव विशेषणम्**= मुख्यवाचक इत्यर्थः ॥

**(११) 'सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा मैवाऽरुवण्यो मैवाऽरुवण्यो मैवाऽरुवण्यः' इति पैङ्गिश्रुतिः ।**

**(१२) 'आत्मा हि परमस्स्वतन्त्रोऽधिगुणो जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः' इति भाल्लवेयश्रुतिः ।**

**(१३) 'यथेश्वरस्य जीवस्य भेदस्सत्यो विनिश्चयात् ।**
**एवमेव हि मे वाचं सत्यां कर्तुमिहार्हसि ॥'**

**'यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम् ।**
**तेन सत्येन मां देवास्त्रायन्तु सहकेशवाः ॥' इत्यादेर्नासत्यो भेदः ॥ १२ ॥**

**॥ इति गुहाधिकरणम् ॥ ३ ॥**

**(११-१३) ननु भेदस्य मिथ्यात्वात् जीवे समन्वये कृतेऽपि ब्रह्मणि समन्वय उक्तप्राय इत्यत आहुः- सत्य आत्मेति ॥ विरुद्धधर्मत्वाच्च जीवेशयोः भेद एव इत्याहुः- आत्मेति ॥ उक्तार्थ एव स्मृतिवचने उदाहरन्ति- यथेश्वरस्येति ॥ इत्यादेरिति ॥ पैङ्गिश्रुतेः, च= यत इति भाल्लवेयश्रुतिरस्ति अतः इत्यादेश्च, नासत्यो भेद इत्यर्थः । अस्य तु अन्वयः 'न च' इत्यस्य व्याख्यावसरे दर्शितः ॥१२॥**

**॥ इति गुहाधिकरणम् ॥ ३ ॥**

(११) **सत्य इति ॥ भिदा=** भेदः, **आरुवण्यः=** आरुभिः= दोषिभिः, वन्यः= भजनीयः **मैव=** नैव भवतीत्यर्थः । शिष्टं स्पष्टम् । आवृत्तिः परपक्षनिरासपूर्वं भेदसत्यत्वदार्ढ्यार्थम् । अत्र विशेषविचारः भाष्यदीपिकायाम् ॥

(१२) **आत्मा हीति ॥ अधिगुणः=** अधिकशक्तिः । शिष्टं स्पष्टम् ।

(१३) **यथेति ॥** एवार्थे यथाशब्दः । **सत्यभेदौ यथा=** सत्यभेदावेव । **तेन सत्येन=** जीवेश्वरभेदसत्यत्वज्ञानेनेत्यर्थः । **विनिश्चयादिति** एवार्थे । जीवेश्वरभेदः सत्य एवेत्यर्थः । **यथा ईश्वरश्चेत्यत्र** यथाशब्द एवार्थे । सत्यभेदाविति बहुव्रीहिः, सत्यभेदावेवेत्यर्थः । **तेन सत्येन=** ज्ञातेन जीवेश्वरसत्यभेदेन त्राणकारणतया फलितं तु जीवेश्वरसत्यभेदज्ञानमिति बोध्यम् । **आदिना-** 'द्वौ भूतसर्गौ' (भ.गी. १६.६) इत्यारभ्य- 'आसुरीष्वेव योनिषु' (१६.१९) इत्यन्तं वाक्यम्, 'असत्यमप्रतिष्ठन्ते' इति **व्यासस्मृतिः**, 'इन्द्रासोमा' (ऋ. ७.१०४.१) इत्यादिकं च ग्राह्यमिति दीपिका ॥ १२ ॥

**॥ इति गुहाधिकरणम् ॥ ३ ॥**

## ४. अन्तराधिकरणम्

**(१) आदित्ये विष्णुरित्युक्तम् । 'य एष आदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मि' (छां.उ. ४-११) इत्यादावग्नीनामेवाऽदित्यस्थत्वमुच्यते । अतोऽक्ष्यादित्ययोरैक्यात् ।**

अत्र नये अग्निश्रुतिसाहित्येन अन्यत्र प्रसिद्धचक्षुरन्तस्थत्वस्य भगवति समन्वयः ॥ (५ सू. अ.)

(१) **आदित्ये विष्णुरित्युक्तमिति ॥** 'आनन्द'नये (१.१.६) 'यश्चासावादित्ये' (तै. ३.१०) इत्यनेनेति भावः । अनेन तन्नयेन सङ्गतिः सूचिता । तन्न युक्तमिति शेषः । विषयादिकमाहुः- **य एष इत्यादि ॥ इत्यादाविति ॥** यत इति शेषः । अग्नीनामिति बहुवचनेन, आदित्यशब्दद्वयेन च, अग्निश्रुतिबाहुल्यं सूचितम् । **अत इति ॥** अग्नेरेव आदित्यस्थत्वादित्यर्थः । तथा च यतः 'य एष आदित्ये' इति अग्नीनामादित्यादिस्थत्वमुच्यतेऽत उक्तम्, तन्न युक्तमित्यन्वयः । ततः किमित्यत आहुः- **अक्ष्यादित्ययोरिति ॥** अक्षिगोलकाऽऽदित्यमण्डलयोरित्यर्थः । **ऐक्यादिति ॥** 'आदित्यः चक्षुर्भूत्वाऽक्षिणी प्राविशत्' (ऐ.आ. २.४.२) इति श्रुतेरेकविधत्वादित्यर्थः । एकविधत्वं च समान-देवताकत्वम् । यद्वा- अक्ष्यादित्याभिमानिदेवतयोरित्यर्थः । ऐक्यादित्यस्य= एकत्वादित्यर्थः । तथा च उभयाभिमानिनी एकैव देवतेति भावः ॥

इदं बोध्यम्- अक्ष्यादित्ययोरेकत्वात् विष्णोः आदित्यगतत्वोक्तावपि, अक्षिगतत्वमपि उक्तकल्पमेव, अतः आदित्यगताऽऽक्षेपेण उक्ता सङ्गतिर्युक्तैव, ततश्च अक्षिगतस्य अन्यत्वे को दोष इति शङ्का परास्ता इति ॥

(१) **य एष आदित्य इति ॥** (छा. ४.११.१) आदिना 'य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि' (छा. ४.१२.१) इत्यदिकं ग्राह्यम् । पूर्वपक्षे प्रतीत एवार्थः । सिद्धान्ते तु- **आदित्ये**= तन्मण्डले, तद्देवतायां वा, **यः**= व्याप्तत्वादिगुणवत्वेन प्रकृतः **एषः**= विष्णुः दृश्यते दिव्यदृष्ट्या, **सः**= विष्णुः **अहमस्मि**= मदन्तर्यामी इति । एवमेव 'य एष चन्द्रमसि' इत्यादावप्यर्थो बोध्यः । परन्तु 'चन्द्रमसि' इत्यादेः तत्तन्मण्डल इत्यादिरर्थ ऊह्यः ॥

**(२) 'य एषोऽन्तरिक्षिणि पुरुषो दृश्यते' (छां.उ.४—१५) इत्यत्राप्यग्निरेवोच्यते । अतः 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न**

**श्लिष्यते' (छां.उ.४–१४) इत्यग्निज्ञानादेव सर्वपापाश्लेषान्मोक्षोपपत्तिरिति । अतो ब्रवीति-**

(२) **य एषोऽन्तरक्षिणीति ॥** विषयवाक्यमिदम् । 'य एषः' इति पूर्वमुदाहृतं तु- आदित्यगतस्यैव अक्षिगतत्वं नान्यस्य इति सूचनाय । **अग्निरेवोच्यत इति ॥** अनेन अक्षिगतत्वं विषयः, विष्णोः ? अन्यस्य वा ? इति सन्देहः । 'यश्चासावादित्ये' इत्युक्तिः, अग्निशब्दश्रवणं च, संशयबीजम् । अग्निरेव अक्षिस्थः, न विष्णुः, अग्निश्रुतेः, इति पूर्वपक्षोऽपि दर्शित इति ज्ञेयम् । तथा च आनन्दमयत्वम् अग्नेरेव स्यात् इति भावः ।

अग्नेः नाऽनन्दमयत्वमात्रप्राप्तिः, अपि तु विष्णुज्ञानान्मोक्ष इत्युक्तमपि बाधितं स्यादित्याहुः- **अतः तद्यथेति ॥** अतः= अग्नेः अक्षिस्थत्वादेवेत्यर्थः । **मोक्षेति ॥** सर्वपापाश्लेषान्यथाऽनुपपत्तिसिद्धमोक्षस्यापि सिद्धिरित्यर्थः । एवं च मोक्षकारणत्वमपि अन्यस्यैवेति भावः । **ब्रवीतीति ॥** सूत्रकार इति शेषः ॥

(२) य एषोऽक्षिणीति ॥ (छा. ४.१५.१) 'एष आत्मेति होवाच एतदमृतमभयमेतद् ब्रह्म' इत्युत्तरवाक्यम् । **अयमर्थः**- **यः**= प्रकृतः **एषः**=विष्णुः, **अक्षिणि**= गोलके (तत्र प्रविष्टः) देवतायां वा, दिव्यदृष्ट्या **दृश्यते, स आत्मा**= वामनाख्य इति **इत्युवाच ह** (आचार्यो जाबालः) **एतदमृतं**= स्वतो मृतिशून्यम्, नित्यमुक्तं वा, **एतदभयं**= स्वतो भयशून्यम्, **एतद् ब्रह्म**= गुणपूर्णमिति ॥ एतदिति विधेयानु-रोधेन नपुंसकम् ॥ **तद्यथेति** ॥ (छा.४.१४.३) **एवं विदि**=अक्षिस्थत्वेन पुरुषज्ञानिनि इत्यर्थः । शिष्टं स्पष्टम् ।

**(अमृतत्वादिलिङ्गश्रवणाच्चक्षुरन्तःस्थो विष्णुः)**

**॥ ॐ अन्तर उपपत्तेः ॐ ॥ १३ ॥**

**(३) चक्षुरन्तःस्थो विष्णुरेव । 'त्रिपादस्यामृतं दिवि' (ऋ.सं. १०-९०-३) इत्यादिना तस्यैवामृतत्वाद्युपपत्तेः । ब्रह्मशब्दाद्युपपत्तेश्च ।**

(३) **ॐ अन्तर उपपत्तेरिति ॥** तत्तु इति वर्तते । यथायथमावृत्तिविपरिणामौ । **अयमर्थः**- **अन्तरः**- 'य एषोऽक्षिणि' इति श्रुत्युक्तः चक्षुरन्तस्थः, तत्तु= विष्णुरेव, **उपपत्तेः**= तस्य **'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमेतदभयमेतद् ब्रह्म'** इत्यमृतत्वादेः, ब्रह्मशब्दादेश्च, तस्मिन्नेव= विष्णावेव, **उपपत्तेः**= उपपन्नत्वादिति ॥ सूत्रार्थमाहुः- **चक्षुरिति ॥** परमात्मन्येव अमृतत्वादय

उपपद्यन्ते- इत्यत्र ऋचमुदाहरन्ति- **त्रिपादस्येति** ॥ **ब्रह्मशब्दोपपत्तेश्चेति** ॥ निरवकाशब्रह्म-श्रुत्युपपत्तेश्चेत्यर्थः । अस्य, 'उपपत्तेः' इति पूर्वभाष्यस्य च, विष्णुरेवेत्यत्रान्वयः ।

(३) **त्रिपादस्येति** ॥ (ऋ.१०.९०.३) व्याख्यातं (पृ. १२६)। आदिना 'अभयं तितीर्षतां पारम्' (का. १.३.२) 'अमृतैवैषा देवता' 'आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' (६.४.२४बृ.)इत्यादिकं ग्राह्यम् ।

**(४) 'सोऽहमस्मि' इत्यादि त्वन्तर्याम्यपेक्षया ।**
**'अन्तर्यामिणमीशेशमपेक्ष्याहं त्वमित्यपि ।**
**सर्वे शब्दाः प्रयुज्यन्ते सति भेदेऽपि वस्तुषु ॥' इति महाकौर्मे ॥ १३ ॥**

(४) नन्वेवं 'सोऽहम्' इत्यादीनां कथमुपपत्तिरित्यत आहुः- **सोऽहमिति** ॥ **अपेक्ष्येति** ॥ अभिप्रायेणेत्यर्थः, प्रवृत्तमिति शेषः । अत्र प्रमाणमाहुः- **अन्तर्यामिणमिति** ॥ **कौर्मे इति** ॥ तत्र इत्युक्तेरित्यर्थः । अस्य अध्याहृतप्रवृत्तमित्यत्रान्वयः । अत्राधिकरणे टीकायाम् (ऋजुसङ्गतिसम्भवे सति) आदित्यस्थत्वलिङ्गस्यापि समन्वयसिद्ध्यर्थं वक्रसङ्गत्याऽधिकरणाऽरम्भ इत्युक्तम् । (तत्र विष्णुज्ञानान्मोक्ष इति प्रागुक्तम्- अयुक्तम्, 'तद्यथा' इति अक्षिस्थाग्निज्ञानान्मोक्षश्रवणात् इति ऋजुसङ्गतिः । आनन्दमयस्य आदित्यस्थत्वमुक्तम् । ततश्च अर्थादक्षिस्थत्वमप्युक्तं भवति । तच्च अक्षिस्थत्वं छान्दोग्ये अग्नेः श्रूयते, इति प्रागुक्तमादित्यस्थत्वम्, आनन्दमयत्वं च, तस्यैवेति वक्रसङ्गतिरिति बोध्यम् ॥)

ननु 'अन्तस्थत्व' (१.१.अ.७) नये एव 'अन्तरादित्ये मनसा' इति आदित्यस्थत्वलिङ्गस्य समन्वितत्वात् पुनस्समन्वयः कुतः? इति चेन्न- 'आनन्दमय' (१.१.अ.६) नये 'भेदव्यपदेशात्'(१.१.१७) इति सूत्रे निर्णीताऽदित्यस्थः छान्दोग्ये अग्निश्रुत्या अग्निरिति प्राप्ते तन्निवारणार्थत्वात् । इदमुपलक्षणम् 'अन्तश्चन्द्रमसि मनसा' इत्युक्तचन्द्रान्तस्थत्वमपि छान्दोग्यवाक्येन अग्नेः प्राप्तम्, तदपि अनेन हरौ समन्वेतव्यमित्यस्यापि ॥ १३ ॥

(४) **सोऽहमिति** ॥ व्याख्यातम् । **अन्तर्यामिणमिति** ॥ **वस्तुषु**= अग्न्यादिजीवेषु **भेदेऽपि**= ईशात् भेदे सत्यपि, **ईशेशं**= ब्रह्मादीनामन्तर्यामिणम्, ब्रह्मादीनामुत्तमं वा, विष्णुम् **अपेक्ष्य** विष्णुतात्पर्येणैव **अहं त्वमित्यपि**= अहमित्यादयः **सर्वे शब्दा**= अभेदप्रतीतिजनकाः जीवे **प्रयुज्यन्ते** इत्यर्थः । तथा च अहमादिपदानाम् अन्तर्यामिपरत्वेन न जीवेशयोरभेद इति भावः ॥ १३ ॥

**(असङ्गत्वाख्यस्थानशक्तेः स्वरूपशक्तेश्च कथनात् विष्णुरेवोच्यते)**

## (५) ॥ ॐ स्थानादिव्यपदेशाच्च ॐ ॥ १४ ॥

(५) हेत्वन्तरेण विष्णोरेव चक्षुरन्तस्थत्वमिति प्रतिपादयत् सूत्रम्- **ॐ स्थानादिव्यपदेशाच्चेति** ॥ तत्तु, अन्तर, इति वर्तते । **अयमर्थः**- अन्तरः तत्तु= विष्णुरेव, **स्थानादिव्यपदेशाच्च**= 'तद्यदस्मिन्' इति श्रुतौ अन्तरपुरुषसम्बन्धजन्यासङ्गत्वाख्यचक्षूरूपस्थानशक्तेः, 'एतं संयद्वाम इत्याचक्षते' इत्यादिश्रुतौ, 'एष उ एव वामनिः' इत्यादिश्रुतौ 'एष उ एव भामनिः' इत्यादिश्रुतौ- संयद्वामत्व-वामनीत्व-भामनीत्वरूपात्मशक्तेश्च प्रतिपादनाद् इति ॥

**(६) 'तद्यदस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति' (छां.उ. ४-१५) इत्यादिस्थानशक्तिः, 'वामनिर्भामनि'रित्याद्यात्मशक्तिश्चोच्यते । तस्य ह्येतल्लिङ्गम् ।**

(६) स्थानादिशक्तिप्रतिपादकश्रुतिमाहुः- **तद्यदित्यादि** ॥ **गच्छतीत्यादीति** ॥ इत्यादीति लुप्ततृतीयान्तम् । लुप्तसप्तम्यन्तं वा, इत्यादिवाक्येन इत्यादिवाक्ये वा, इत्यर्थः । अस्य 'उच्यते' इत्यत्रान्वयः । **स्थानशक्तिरिति** ॥ असङ्गत्वाख्यस्थानशक्तिरित्यर्थः । **वामनिरिति** ॥ 'एष उ एव वामनिः' इत्यादिना, इत्यादौ वा, **भामनिरिति** ॥ 'एष उ एव भामनिः' इत्यादिना, इत्यादौ वा, अनयोरपि 'उच्यते' इत्यनेनान्वयः । **आत्मशक्तिरिति** ॥ स्वरूपशक्तिरित्यर्थः ।

यद्वा- वामनिः= वामनित्वम्, भामनिः= भामनित्वम्, आदिना संयद्वामत्वं गृह्यते । एतत्त्रयाणाम् आत्मशक्तौ अभेदसंसर्गेणान्वयः ।

ननु उक्तलिङ्गद्वयस्य (त्रयस्य) अक्षिस्थे सत्त्वेऽपि अक्षिस्थस्य विष्णुत्वनिश्चयः कथम् ? इत्यत आहुः- तस्य हीति ॥ एतत्= स्थानशक्त्यादिकम्, तस्य हि= विष्णोरेव, लिङ्गं= धर्मः ॥

(६) **तद्यदस्मिन्निति** ॥ (छा. ४.१५.१) **यत्**= यस्माद् असङ्गोऽयं पुरुषो विद्यते, **तत्**= तस्माद् **अस्मिन्**= चक्षुषि, **सर्पिः**= घृतम्, **उदकं वा**, **सिञ्चति**= सिञ्चेत्कश्चित्-तर्हि तत्= घृतादि **वर्त्मनी एव गच्छति** उभयपार्श्वस्थमार्गौ प्रत्येव गच्छति न चक्षुः स्पृशतीत्यर्थः ॥ **वामनिरिति** ॥ (छा. ४..१५.३) 'एतं संयद्वाम इत्याचक्षते, एतं हि सर्वाणि वामानि अभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद' (छा. ४.१५.२) ।

'एष उ एष वामनिः एष हि सर्वाणि वामानि नयति, सर्वाणि वामानि नयति य एवं वेद' (छा. ४.१५.३) 'एष उ एव भामनिः एष हि सर्वेषु लोकेषु भाति, सर्वेषु लोकेषु भाति य एवं वेद' (छा. ४.१५.४) इति पठ्यते ॥ **अस्यार्थः- एतं**= चाक्षुषं वामनाख्यं विष्णुम्, संयद्वामः **संयन्ति**= प्राप्नुवन्ति वामानि भद्राणि एतमिति व्युत्पत्या प्राप्तसकलभद्र इत्याचक्षते विद्वांसः। कुत इत्यत आह-**एतं हीति** ॥ **हि**= यतः, **एतं**= विष्णुं **सर्वाणि वामानि** भद्राणि (स्त्रीरूपाणि वा) **अभिसंयन्ति**= प्राप्नुवन्ति । एवं वेत्तुः फलमाह- **सर्वाण्येनमिति** ॥ अत्र 'वामानि' इत्यस्य भद्राणीत्यर्थः । **एष उ एव**= चक्षुरन्तर्गत एव मुख्यतो वामनिः इत्युच्यते । कुतः? इत्यत आह- **एष हीति** ॥ **एषः**= चक्षुरन्तस्थो विष्णुः, सर्वाणि **वामानि**= सौन्दर्यप्रधानक-रमादि-स्त्रीरूपाणि, **नयति**= प्रेरयति । एवं वेत्तुः फलमाह- **सर्वाणीति** ॥ **एष उ एव**= चाक्षुषः पुरुष एव, **भामनिः**= मुख्यतो भामनिशब्दवाच्यः । कुतः? इति चेदाह- **एष हीति** ॥ **हि**= यतः, सर्वेषु लोकेषु पुरुषेषु **एषः**= विष्णुः **भाति**= तदीयतेजःप्रकाशकतया तत्र दीप्यते । (यद्वा- **एष उ एव भामनिः**= भामं= तेजः तत्प्रधानत्वात् पुरुषा अपि भामपदवाच्याः, तान् नयतीति व्युत्पत्या सर्वपुरुषनेतृत्वेन भामनिपदवाच्यः । गुणान्तरमप्याह- **एष हीति** ॥ लोकेषु वैकुण्ठादिषु **भाति**= दीप्यते) वेत्तुः फलमाह- **सर्वेष्विति** ॥ स भामनिः वामनिरित्युभयत्र ह्रस्वः छान्दसः ॥

**(७) 'स ईशः सोऽसपत्नः स हरिः स परः स परोवरीयान् यदिदं चक्षुषि सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति स वामनः स भामनः स आनन्दः सोऽच्युतः' इति चतुर्वेदशिखायाम् ।**

**(८) 'यत्स्थानत्वादिदं चक्षुरसङ्गं सर्ववस्तुभिः ।**
**स वामनः परोऽस्माकं गतिरित्येव चिन्तयेत् ॥' इति वामने ॥ १४ ॥**

(७) तत्र मानमाहुः - **स इत्यादि ॥ चतुर्वेदशिखायामिति ॥** तत्र इत्युक्तेरित्यर्थः । **वामने इति ॥ इत्युक्तेश्च इत्यर्थः** । एतद्धेतुद्वयस्य 'तस्य हि' इत्यादावन्वयः । तस्य च= यत एतल्लिङ्गं तस्यैव, **अतश्च 'चक्षुरन्तस्थो विष्णुरेव'** इति **पूर्वसूत्रभाष्येणान्वयः** ॥ १४ ॥

(७) **स ईश इति** ॥ **यदिदं चक्षुषि** इत्येकं पदम्, यस्य= विष्णोः अधिकरणभूतेऽस्मिन् चक्षुषि, यद्वा- यत् इति भिन्नं पदम्, **यत्**= यस्मात्= यस्य विष्णोः सामर्थ्यात् **अस्मिन्**= 'चक्षुषि, सर्पिर्वा, उदकं वा', **सिञ्चति**= सिञ्चेत् कश्चित्, तत् **वर्त्मनी** प्रत्येव **गच्छति**, **स ईशः**, **असपत्नः**= शत्रुरहितः, **परः**= लोकविलक्षणः, **परोवरीयान्**= जगत्परभूतरुद्रादिवाण्यन्तापेक्षया, परभूतचतुर्मुखापेक्षया, परभूतश्रीतत्वा-

पेक्षया, **वरः**= उत्तमः । **स हरिः स वामनः** स्त्रीरूपनेता **स भामनः** सकलपुरुषनेता **स आनन्दः सोऽच्युतश्च** इत्यर्थः । वामं नयति, भामं नयतीत्यर्थे वामभामोपपदकात् नयतेः 'अन्येभ्योऽपि दृश्यते' इत्यनेन डप्रत्यये वामनो भामनश्चेति भवति ॥

(८) **यत्स्थानत्वादिति** ॥ यस्य वामनस्य स्थानत्वात् सर्ववस्तुभिः= सर्पिरादिभिः इदं **चक्षुरसङ्गं स** सौन्दर्यहेतुना वामशब्दवाच्यः, स्त्रीकदम्बनेतृत्वात् वामनशब्दवाच्यो वामनाख्यो विष्णुः । **अस्माकं परः गतिः**= परमप्राप्य इति चिन्तयेदित्यर्थः ॥ १४ ॥

**(विशिष्टसुखाभिधानाच्चक्षुरन्तःस्थो विष्णुः)**

## (९) ॥ ॐ सुखविशिष्टाभिधानादेव च ॐ ॥ १५ ॥

(९) **प्रकरणाच्च उक्तार्थसाधनाय सूत्रम्- ॐ सुखविशिष्टेति ॥** तत्तु, अन्तर, इति वर्तते । **विशिष्टं= पूर्णम्, विशिष्टं च तत् सुखं च इति विग्रहः । विशेषणस्य परनिपातः, मयूरव्यंसकादित्वात्, कडारादित्वाद्वा ॥ अयमर्थः- अन्तरः, तत्तु= विष्णुरेव, सुखविशिष्टाभिधानादेव च= उपक्रमे 'प्राणो ब्रह्म कं ब्रह्म' इति पूर्णसुखाभिधानादेव च इति । पूर्णसुखाभिधानादेव विष्णुत्वे सिद्धे किमु वक्तव्यं पूर्णज्ञानाभिधानादपीति कैमुत्यद्योतकोऽत्र एवकारः । उपक्रमस्थमिदं हेतुद्वयं प्रकरणस्य वैष्णवत्वबोधनद्वारा चक्षुरन्तस्थस्य विष्णुत्वसाधकमिति ज्ञेयम् ॥**

### (१०) 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति (छा.उ. ४-१०) 'विज्ञानमानन्दं ब्रह्म' (बृ.उ. ५-९-२८) । 'आनन्दो ब्रह्मेति व्यजानात्' (तै.उ. २-६) इत्यादेस्तस्यैव हि तल्लक्षणम् ।

**(१०) पूर्णसुखप्रतिपादकश्रुतिमाहुः- प्राणो ब्रह्म कं ब्रह्मेति ॥ इतीति ॥ इत्यनेनेत्यर्थः । अस्य सौत्रेऽभिधानेऽन्वयः, सूत्रस्य 'चक्षुरन्तस्थो विष्णुरेव' इति पूर्वभाष्येऽन्वयः । पूर्णसुखादेः विष्णुधर्मत्वे मानमाहुः- विज्ञानमित्यादि ॥ लक्षणमिति ॥ ज्ञायत इति शेषः ।**

(१०) **प्राणो ब्रह्मेति** ॥ (छा. ४.१०.५) **प्राणः**= मुख्यप्राणः, **ब्रह्म**= स्वेतरजीवापेक्षया पूर्णः, **कं**= सुखम्, **ब्रह्म**= पूर्णं **खं**= ज्ञानम्, **ब्रह्म**= पूर्णमित्यर्थः । छान्दोग्यभाष्यरीत्या अन्योऽप्यर्थो द्रष्टव्यः । **विज्ञानमिति** ॥ (बृ. ५.९.२८) पूर्णज्ञानादिरूपं ब्रह्मेत्यर्थः । **आनन्दो ब्रह्मेति** (तै. ३.३) स्पष्टोऽर्थः। आदिना 'सत्यं ज्ञानमनन्तम्' (तै. २.२.) इति 'अथैष परम आनन्दः' इत्यादिकं ग्राह्यम् ॥

**(११) 'लक्षणं परमानन्दो विष्णोरेव न संशयः ।**
**अव्यक्तादितृणान्तास्तु विप्रुडानन्दभागिनः ॥' इति ब्रह्मवैवर्ते ।**
**न च मुख्ये सत्यमुख्यं युज्यते ॥ १५ ॥**

(११) विष्णोरेव निरवधिकपूर्णानन्दत्वम्, न तु तदन्येषामिति स्मृत्याऽऽहुः- **लक्षणमिति** ॥

ननु विवक्षितपूर्णसुखत्वमादाय अग्नीनामेवेदं प्रकरणमिति किं न स्याद् ? इत्यत आहुः- **न चेति** ॥ सूत्रे पूर्णेत्यनुक्त्वा विशिष्टेत्युक्तेः इदमेव फलमिति सूचितं भवति ॥ **युज्यते इति** ॥ इत्यादेः, ब्रह्मवैवर्ते इत्युक्तेः, **च**= यतः **मुख्ये**= निरवधिकपूर्णत्वे सम्भवति सति, **अमुख्यम्**= आपेक्षिकं पूर्णत्वं ग्रहीतुं न युज्यते अतश्च, तत्= **पूर्णसुखादिकं तस्यैव**= **विष्णोरेव** लक्षणमिति ज्ञायत इत्यर्थः ॥ १५ ॥

(११) **लक्षणमिति** ॥ अयमर्थः- निरवधिकपूर्णाऽनन्दवत्वं विष्णोरेव लक्षणम्= धर्मः, नान्येषाम् तत्र संशयो नास्ति । कुतः? इति चेद् आह- **अव्यक्तेति** ॥ तु= यतः, **अव्यक्तादितृणान्ताः**= श्रीतत्वप्रभृतितृणजीवपर्यन्ताश्चेतनाः, **विप्रुडानन्दभागिनः**= ब्रह्मानन्दप्रतिबिम्बत्वाऽपेक्षिकतारतम्योपेताऽनन्दवन्तः, आपेक्षिकाऽल्पाऽनन्दवन्तो वा, तस्माद् इति ॥ १५ ॥

**(ध्यातैतद्विद्यानां वायुना कार्यपरब्रह्मगत्युक्तेः चक्षुरन्तरो विष्णुः)**

## (१२) ॥ ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॐ ॥ १६ ॥

(१२) ननु 'प्राणो ब्रह्म कं ब्रह्म' इति विद्या- विष्णुविद्या, 'आदित्ये पुरुषः' इति विद्या तु अग्निविद्या, 'उपकोसल एषा सोम्य ते अस्मद्विद्या आत्मविद्या च', इति अस्मच्छब्दश्रवणात्, अक्षिविद्याऽपि अग्निविद्यैव, अक्ष्यादित्ययोरेकत्वात् । तथा च विद्याद्वयस्य भिन्नविषयकत्वेन अक्षिविद्यायाः 'कं ब्रह्म' इति विद्यया उपक्रमः कथं स्यादित्याशङ्कापरिहाराय सूत्रम्- **ॐ श्रुतोपनिषदिति** ॥

श्रुतपदं मननध्यानयोरप्युपलक्षणम् । श्रुता= श्रुतमतध्याता, उपनिषत् यैस्ते= श्रुतोपनिषदः, कः= सुखरूपत्वेन प्रकृतो विष्णुः, 'को वायुरिति शब्दितः' इत्यभिधानात् वायुश्च, कश्च कश्चेति- कौ, ततः श्रुतोपनिषदश्च कौ चेति द्वन्द्वः, श्रुतोपनिषत्कानां गतिः= प्रापणमिति विग्रहः । श्रुतोपनिषत्कानामिति एकाऽपि षष्ठी विषयभेदाद् भिद्यते । 'आदेशप्रत्यययोः' इति पाणिनिसूत्रे इव (श्रुतोपनिषद्गतोपासनानां गतिः प्राप्तिरिति वा) । प्रकृतविद्याफलत्वेनेति प्रसङ्गाल्लभ्यते । तत्तु, अन्तरः, इति वर्तते । **अयमर्थः-**

अन्तरः तत्तु= विष्णुरेव, **श्रुतोपनिषत्कगत्यभिधानाच्च**= 'स एनान्ब्रह्म गमयति' इति श्रुतौ श्रुत-मत-ध्यात-प्रकृताक्षिविद्यावत् मुख्यकर्मक-ब्रह्मकर्मक-वायुकर्तृकप्रापणस्य प्रकृतविद्याफलत्वेन (कथनाच्चेति) श्रवणाच्चेति ॥ अयमपि हेतुः प्रकरणस्य वैष्णवत्वबोधनद्वारा अन्तरस्य विष्णुत्वसाधक इति ज्ञेयम् ॥

## (१३) 'स एनान् ब्रह्म गमयति' (छां.उ. ४-१५) इति । न ह्यन्यविद्यया अन्यगतिर्युक्ता ॥

(१३) सूत्रसूचितां श्रुतिमाहुः- **स एनानिति** ॥ एनानित्यनेन श्रुतविद्यानां परामर्शः । **गमयतीति** ॥ अस्य सौत्रेऽभिधानेऽन्वयः । सूत्रस्य 'चक्षुरन्तस्थो विष्णुरेव' इति पूर्वभाष्येऽन्वयः । अक्षिविद्यायाः अन्यविद्यात्वे बाधकमाहुः- **न हीति** ॥ हि यतः 'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि' (गी. ७.२३) इति स्मृत्या अन्यविद्यया अन्यप्राप्तिर्न युक्ता, अत इदम् 'आदित्ये पुरुष' इत्याद्यपि विष्णुप्रकरणमिति शेषः । तथा च अग्न्यादिज्ञानस्य मोक्षकारणत्वाभावेनात्र च ब्रह्मप्राप्तेः श्रवणादक्ष्यादिविद्याया अपि विष्णुविषयकतैवाभ्युपेया । ततश्च 'कं ब्रह्म' इत्युपक्रमानुरोधात्, अक्ष्यादिविद्या विष्णुविषयिणीत्यपि युक्तैव । अस्मच्छब्दप्रयोगस्तु अन्तर्यामिपरतया योजनीय इति भावः ॥ १६ ॥

(१३) **स एनानिति** ॥ (छा. ४.१५.६) उपसंहारस्थमेतद्वाक्यम् । **स**= वायुः, विष्णुं प्राप्तः मुख्यप्राणः, **एनान्**= (चाक्षुषपुरुषज्ञानिनः) श्रुतविद्यान् स्वं प्राप्तान् प्रतीकाऽलम्बनान्, **ब्रह्म**= कार्यं ब्रह्म= चतुर्मुखं **गमयति** । अप्रतीकाऽलम्बनान् परं ब्रह्म गमयतीत्यर्थः ॥ (१६.१७) ॥

॥ इति अन्तराधिकरणम् ॥

**(जीवस्य जीवान्तरनियामकत्वे जीवत्वाविशेषात् नियामकान्तराभ्युपगमेनानवस्था, असम्भवश्च)**

## (१४) ॥ ॐ अनवस्थितेरसम्भवाच्च नेतरः ॐ ॥ १७ ॥

(१४) विपक्षे (जीवस्यान्तरङ्गत्वाङ्गीकारे) बाधकप्रतिपादनाय सूत्रम्- **ॐ अनवस्थितेरिति** ॥ तत्, अन्तरः, इति वर्तते । यथायथमावृत्तिविपरिणामौ । भावप्राधान्यं च । **अयमर्थः**- अन्तरः= चक्षुरन्तस्थः, तस्मात् **इतरः**= विष्णुभिन्नः= अग्न्याख्यो जीवः न भवति । **अनवस्थितेः**= अग्नेर्देहस्थजीवनियामकत्वे, अग्नेरपि जीवत्वेन तस्य नियामकान्तरेण एकेन भाव्यम्, तस्यापि एकेन

**नियामकान्तरेण भाव्यमिति रीत्या अनवस्थाख्यदोषप्रसङ्गात् । असम्भवाच्च= अग्नेः तत्प्रेर्यजीवस्य च जीवत्वसाम्येन अग्नेः जीवान्तरनियामकत्वासम्भवाच्च इति ॥**

**तथा च चक्षुषि विद्यमानत्वेन स्वीकृतस्तु पुरुषः देहस्थजीवनियामक इत्येवाभ्युपगन्तव्यम् । चक्षुःस्थितेः तत्तज्जीवनियमनफलकत्वात् अन्यफलकत्वाभावाच्च । अग्नेस्तु तच्च नियमनकर्तृत्व-मुक्तरीत्या न सम्भवतीति भावः ॥**

**(१५) जीवस्य जीवान्तरनियामकत्वेऽनवस्थितेः, साम्यादसम्भवाच्च न जीवः ।**

(१५) सूत्रं व्याचक्षते- **जीवस्येति ॥** अग्र्याख्यजीवस्येत्यर्थः । **अनवस्थितेरिति ॥** सा च दर्शिता सूत्रार्थवर्णनावसरे । **साम्यादिति ॥** 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात्' इति न्यायेनेति भावः । **न जीव इति ॥** अन्तर इति शेषः । तथा च हरिरेव अन्तर इति भावः । यद्वा सूत्रस्थपदार्थविवरणमेव कृतम् । सूत्रार्थस्तु ऊह्य इति भावः ॥

**(१६) नियमे प्रमाणाभावात् । अनीश्वरापेक्षत्वाच्च ॥ १७ ॥**

**॥ इत्यन्तराधिकरणम् ॥**

(१६) ननु अग्र्याख्यजीवस्य इतरानधीनप्रेरकत्वमस्ति- स्वातन्त्र्याभ्युपगमात् इत्यत आहुः- **नियम इति ॥** इतरानधीन-नियामकत्वप्रयोजकस्वातन्त्र्ये इत्यर्थः । नन्वस्तु अग्निरस्वतन्त्रः, प्रेरकश्च, अग्नेस्तु ईश्वरः प्रेरक इत्यभ्युपगमात् नानवस्था इत्यत आहुः - **अनीश्वरेति ॥** ईश्वरस्य अपेक्षा यस्य, तस्य भावः । ततो नञ्समासः, तस्मात् ईश्वरापेक्षत्वाभावादित्यर्थः । तवेति शेषः । त्वया ईश्वरानङ्गीकारादिति यावत् । एवं च ईश्वरमनङ्गीकृत्य अक्षिस्थो जीव एवेति वदता भवतैव यदिदानीमनवस्थादोषपरिहाराय ईश्वरोऽङ्गीक्रियते तर्हि तस्यैव (ईश्वरस्यैव) अक्षिस्थत्वाङ्गीकारेण सर्वनिर्वाहे किमेवं कुकल्पनाश्रयणेन भवत इति भावः ॥

एतेन सिद्धान्तिनो मते जीवविशेषस्य अग्र्यादेः जीवान्तरनियामकत्वाङ्गीकारवत् मयाऽपि तथाऽङ्गीक्रियत इति परास्तम् ॥ ईश्वरदत्तनियामकत्वस्यैव भगवदितरस्मिन् सिद्धान्तिभिरङ्गीकारात् ॥ १७ ॥

॥ इति अन्तराधिकरणम् ॥ ४ ॥

## ५. अन्तर्याम्यधिकरणम्

**(१) 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' (बृ.उ. ५-७-३) इत्याद्यन्तर्याम्युच्यते । तत्र च 'एतदमृतम्' (छां.उ. ४-१५-१) इत्युक्तममृतत्वमुच्यते ।**

(१) अत्र नये पृथिव्यादिशरीरकत्वसाहित्येन अन्यत्रैव प्रसिद्धान्तर्यामित्वलिङ्गस्य हरौ समन्वयः ॥ (३ सूत्राणि अ.) विषयबोधकश्रुतिमाहुः- **य इति** ॥ **अमृत इत्यादीति** ॥ इत्यादिनेत्यर्थः । आदिना- 'योऽप्सु तिष्ठन्' इत्यादेः सङ्ग्रहः । **अन्तर्याम्युच्यत इति** ॥ अनेन अन्तर्यामी विषय इति दर्शितम् । **तत्रेति** ॥ अन्तर्यामिप्रकरणे इत्यर्थः । **एतदमृतमिति** ॥ इत्यनेन उक्तम् अमृतत्वं बृहदारण्यकान्तर्यामिप्रकरणे उच्यते इत्यर्थः ।

तथा च 'एतदमृतमेतदभयम्' इति अक्षिस्थपुरुषस्य यदमृतत्वमुक्तम्, तदमृतत्वं काण्व-माध्यन्दिनशाखीयश्रुत्योः कस्यचिदन्तर्यामिणः श्रूयत इति भावः । एतेन अन्तर. (१.२.४) नयेन सङ्गतिर्दर्शिता ॥

(१) **यः पृथिव्यामिति** ॥ (बृ. ५.७.३) **पृथिव्यां**= गरुडे, **तिष्ठन्**, **पृथिव्याः**= तदभिमानिचेतनात्, **अन्तरः**= विविक्तः, **यं च पृथिवी**= तदभिमानिदेवता साकल्येन **न वेद**, **यस्य पृथिवी शरीरं**= तद्वशत्वात् शरीरभूता **योऽन्तरः**= अन्तःस्थित्वा बाह्यविषयापेक्षां विना रममाणः अतिप्रियो वा, **पृथिवीं**= गरुडं नियमयति, **एष ते**=तव **अन्तर्यामी आत्मा**= नियामकः पुरुषः **अमृतः**=नित्यः, इति सिद्धान्ते अर्थः । पूर्वपक्षे तु प्रतीत एवार्थः । **एतदमृतमिति** (छा. ४.१५.१) व्याख्यातम् (पृ. १६४) । **न ते इति** ॥ (ऋ. ७.९९.२) व्या. पृ.५२) **स योऽत इति** ॥ (ऐ.आ.३.२.४) व्या. (पृ.१४५) ॥१८-१९॥

**(२) स च 'यस्य पृथिवी शरीरम्' इत्यादिना सर्वात्मकत्वात् प्रकृतिस्तत्तज्जीवो वा युक्तः । न हि विष्णोः पृथिव्यादिशरीरत्वमङ्गीक्रियते, इत्यत आह—**

(२) पूर्वपक्षमाहुः-= **स चेति** ॥ अन्तर्यामी चेत्यर्थः । **इत्यादिना सर्वात्मकेति** ॥ आत्मशब्दः स्वरूपशरीरोभयार्थकः । इत्यादिज्ञाप्यसर्वात्मकत्वादित्यर्थः । अनेन- पृथिव्याद्यन्तर्यामी विष्णुः ? प्रकृत्यादिर्वा ? इति संशयोऽपि सूचित इति बोध्यम् । संशयबीजं तु- अन्तरनयः, पृथिव्यादि-

शरीरकत्वश्रवणं चेत्यवसेयम् ॥ विष्णुग्रहणे बाधकमाहुः- **न हीति** ॥ हि= यतः विष्णोः पृथिव्यादिशरीरवत्वं नाङ्गीक्रियते, सिद्धान्तिभिरिति शेषः । अतः प्रकृतिः= जडप्रकृतिः, चित्प्रकृतिर्वा, **तत्तज्जीवो वा** पृथिव्याद्यभिमानितत्तज्जीवो वा युक्त इत्यन्वयः । अङ्गीक्रियत इत्यनेन सिद्धान्तिन एवायं दोषः, न तु पूर्वपक्षिण इति सूचितम् ।

यद्यपि विष्णुवाचकस्य आत्मशब्दस्य 'एष ते आत्मा' इति श्रवणात् पृथिव्यादिशरीरकत्व-लिङ्गापेक्षया आत्मश्रुतेः प्रबलत्वेनायं पूर्वपक्षो न सम्भवति- तथाऽपि लिङ्गेन निरवकाशेन सावकाशा आत्मश्रुतिर्बाध्यते प्रकृतिपक्षेऽपि (एष त आत्मेत्यत्रत्य)आत्मशब्दस्य अभिमानिद्वारा उपपत्तिरिति पूर्वपक्षो युक्त इति भावः ॥

**(अविदितत्वादिब्रह्मधर्मव्यपदेशाद् विष्णुरेवान्तर्यामी)**

## (३) ॥ ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ १८ ॥

(३) **ॐ अन्तर्यामीति** ॥ तत्तु इति वर्तते । तत् इत्यावर्त्य षष्ठ्या विपरिणम्यते । अधिदैवम् आदिः येषामिति विग्रहः । आदिना- अध्यात्माधिभूतयोर्ग्रहणम् । अत्राधिदैवं= पृथिव्याद्यभिमानिदेवताः, अध्यात्मं= देहस्थचक्षुराद्यभिमानिदेवताः, अधिभूतं= सर्वजीवाः । एतदर्थकाधिदैवादिपदेन तत्तत्प्रकरणं लक्ष्यते । **अयमर्थः- अधिदैवादिषु**= 'यः पृथिव्यां तिष्ठन्' इत्याद्यधिदैवप्रकरणे, 'यश्चक्षुषि तिष्ठन्' इत्यध्यात्मप्रकरणे, 'यो विज्ञाने तिष्ठन्' इत्याद्यधिभूतप्रकरणे च, श्रुतः अन्तर्यामी, तत्तु= विष्णुरेव, तस्य अन्तर्यामिणः सम्बन्धितया **तद्धर्मव्यपदेशात्**= ब्रह्मधर्माणां पृथिव्याद्य-विदितत्व-तदन्तरत्वादीनां श्रवणात् (उक्तत्वात्) इति ॥

अन्तर्यामी तद्धर्मव्यपदेशादित्येव सिद्धे- अधिदैवादिष्विति पदं बहुषु स्थलेषु तद्धर्मोक्तिज्ञापनद्वारा तद्धर्माणाम् अभ्यासबोधनार्थम् । पृथिव्यादिष्विति वक्तव्ये अधिदैवादिष्वित्युक्तिः श्रुतिस्थ-पृथिव्यादिपदेन चेतनस्य ग्रहणमिति सूचनायेति बोध्यम् ॥

**(४) 'यं पृथिवी न वेद' 'यः पृथिव्या अन्तरः' इत्यादिना अधिदैवादिषु तद्धर्म-व्यपदेशाद्विष्णुरेवान्तर्यामी । स हि 'न ते विष्णो जायमानो न जातः' (ऋ.सं. ७–९९–२) । 'स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽ-विज्ञातोऽनादिष्टः सर्वेषां भूतानामन्तरपुरुषः' (ऐ.आ. ३–२–४) इत्यादिनाऽविदितोऽन्तरश्च ॥**

(४) श्रुत्युदाहरणपूर्वं सूत्रार्थमाहुः-यं **पृथिवीति** ॥ **अधिदैवादिष्विति** ॥ तत्तत्प्रकरण इत्यर्थः ॥ अविदितत्वादेः वैष्णवत्वे मानमाहुः- **स हि न ते इत्यादि** ॥ **इत्यादिनेति** ॥ इत्यादि-ज्ञाप्याविदितत्वाऽन्तरत्ववानित्यर्थः । हि यतः स विष्णुः अविदितः (साकल्येन) अन्तरश्च= अन्तःस्थित्वा रमणकृच्च । अतो विष्णुरेव अन्तर्यामीत्यन्वयः ॥ १८ ॥

**(त्रिगुणत्व-संसारित्वादीनामभिलापान्न प्रधानजीवावत्रोक्तौ)**

## (५) ॥ ॐ न च स्मार्तमतद्धर्माभिलापात् ॐ ॥ १९ ॥

(५) प्रकृतेः अन्तर्यामित्ववारणाय सूत्रम्- **ॐ न च स्मार्तमिति** ॥ अन्तर्यामीति वर्तते । तत्तु इति च । अन्तर्यामीति च आवर्तते । **अयमर्थः स्मार्तं**= कपिलस्मृत्युक्तं प्रधानम् अन्तर्यामी न । **अतद्धर्माभिलापात्**= तद्धर्माणां= प्रकृतिधर्माणां त्रिगुणात्मकत्व-उपादानत्वादीनामश्रवणात् । च= अपि तु, तत्तु= विष्णुरेव अन्तर्यामी इति ॥

अयं च सूत्रार्थः- 'यदुक्तं प्रकृतेरन्तर्यामित्वम्' इति, एतत्सूत्रावतरणटीकारीत्या उक्तः ।

'यत् जीवान्तर्यामीत्युक्तं तदपि संसारित्वाद्यतद्धर्माभिलापादिना निरस्तमपि विशेषयुक्त्या पराकुर्वत्' इत्युत्तरसूत्रावतरणटीकारीत्या तु अत्र सूत्रे उत्तरसूत्रात् शारीरपदाऽकर्षणेन स्मार्तं= प्रधानं शारीरश्च नान्तर्यामी, अतद्धर्माभिलापात्= प्रकृतिधर्माणामश्रवणात् संसारित्वादिजीवधर्माणाम-श्रवणात्, शेषं प्राग्वत् इत्यर्थो लभ्यते । एवमेवार्थ उक्तः, **तन्त्रदीपिकायाम्** ।

अत्र पक्षे एतत्सूत्रावतरणटीकायां प्रकृतिपदम्, भाष्यस्थप्रधानपदं च, शारीरस्यापि उपलक्षणमिति बोध्यम् ॥

ननु 'न च स्मार्तशारीरावतद्धर्माभिलापात्' इत्येव कुतो न सूत्रितमिति चेत्- उच्यते- उत्तरसूत्रे शारीरपदमात्रस्य सम्बन्ध इति बोधनाय तथा न सूत्रितम् इति ॥

न च उत्तरसूत्रे 'एनम्' इति निर्देशेन एकदेशशारीरपदस्यैव अनुवृत्तिसम्भव इति वाच्यम्-एकदेशानुवृत्तिस्वीकारापेक्षया उत्तरसूत्र एव शारीरपदनिवेशे लाघवात् ॥ मम तु उत्तरसूत्रावतरण-टीकास्थ'निरस्तम्' इत्यस्य तुल्यन्यायेन निरस्तमपीत्यर्थः, न तु सूत्रार्थत्वेन इति भाति ॥

ननु प्रकृतिजीवधर्माणां (श्रुतौ) श्रवणाभावेन कथं पूर्वपक्षोत्थितिरिति चेत्- उच्यते- 'व्याप्तं कार्येषु कारणम्' इति कारणस्य कार्यस्थत्वोक्तेः शरीरपदस्य स्वरूपपरत्वमङ्गीकृत्य, **यस्य पृथिवी शरीरं**= स्वरूपमिति श्रुत्यर्थाभ्युपगमाच्च पूर्वपक्षकरणात् । इदं प्रकृतिपक्षे, जीवपक्षे तु- पृथिव्यादिशरीरकत्वस्य, पृथिव्यादिस्थितेश्च, सम्भवेन पूर्वपक्षः सम्भवतीति ॥

**(६) त्रिगुणत्वादिप्रधानधर्मानुक्तेर्न स्मृत्युक्तं प्रधानमन्तर्यामि ॥ १९ ॥**

(६) सूत्रार्थमाहुः- **त्रिगुणत्वादीति** ॥ १९ ॥

**(काण्वा माध्यन्दिनाश्च शारीरमन्तर्यामिभिन्नमाचक्षते)**

**(७) ॥ ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ ॥ २० ॥**

(७) जीवस्य अन्तर्यामित्वनिराकरणाय सूत्रम्- **ॐ शारीरश्चेति** ॥ अन्तर्यामीति वर्तते, चकारः नञोऽनुकर्षार्थः । यथायथमावृत्तिविपरिणामौ । **अयमर्थः- शारीरः**= जीवः, न अन्तर्यामी । **हि**= यतः, **एनं**= जीवम्, अन्तर्यामिणः सकाशात्, **भेदेन**= **उभयेऽपि** शाखिनः 'आत्मनोऽन्तरः' इति माध्यन्दिनाः, 'विज्ञानादन्तर' इति काण्वाश्च, **अधीयते**= वदन्ति अतः इति ॥

**तत्वप्रदीपे तु**- शारीरश्चेति चेन्न स्मार्तमित्यनुवर्त्य, हि यतः एनं= स्मार्तं 'यस्तेजसि तिष्ठन्' इतीत्यादिना अन्तर्याम्यपेक्षया भेदेन अधीयते । अतः स्मार्तं न अन्तर्यामी इत्यप्यर्थ उक्तः । न चैवं पुनरुक्तिरिति वाच्यम्- हेतोर्भेदेन अदोषात् ॥

**(८) 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः।' (बृ.माध्यन्दिनपाठः)।**

**(९) 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरम्' (बृ. ५-७-२२) इत्युभयेऽपि हि शाखिनो भेदेनैनमधीयते ।**

(८-९) सूत्रसूचितां श्रुतिमाहुः- **य आत्मनीत्यादि** ॥ **उभयेऽपीति** ॥ माध्यन्दिनाः, काण्वाश्चेत्यर्थः ॥ एतद्भाष्यस्य सौत्रहेत्वर्थविवरणरूपत्वात् एतदनुरोधेन विशिष्टसूत्रार्थ ऊह्यः । यद्वा- यतः अधीयते, अतः शारीरोऽन्तर्यामी न, इति सौत्रेण एकवाक्यतयाऽन्वयः ॥

(८) **य आत्मनीति** ॥ (बृ. ५.७.२२) अयं माध्यन्दिनपाठः ॥

(९) **यो विज्ञान इति** ॥ (बृ. ३.७.२२) अयं काण्वपाठः । आत्मविज्ञानशब्दौ जीवसामान्यपरौ। यद्यपि बृहद्भाष्ये- आत्मविज्ञानशब्दौ चतुर्मुखपरतया व्याख्यातौ, तत्वप्रदीपेऽपि- योगिविशेषपरतया । अथापि- सर्वजीवाभिमानियोगिविशेषचतुर्मुखात्, तस्य (अन्तर्यामिणः) भेदसाधने तद(चतुर्मुखा)-भिमन्यमानसर्वजीवात् सुतरां भेदसिद्धिरिति तत्तात्पर्यम् । तथा चायमप्यर्थो भाष्यकारसम्मत एव । एतेन एतत्सूत्रटीकाया बृहद्भाष्यादिविरोध इति शङ्का परिहृता बोध्या ॥

(१०) 'शीर्यते नित्यमेवास्माद्विष्णोस्तु जगदीदृशम् ।
रमते च परो ह्यस्मिन् शरीरं तस्य तज्जगत् ॥'
इति वचनान्न शरीरत्वविरोधः ।

॥ इति अन्तर्याम्यधिकरणम् ॥ ५ ॥

(१०) ननु हरेरन्तर्यामित्वाङ्गीकारे 'यस्य पृथिवी शरीरम्' इत्यादिना पृथिवीशरीरत्वोक्ति-विरोधः, तस्य हरौ असम्भवाद् इत्यत आहुः- शीर्यत इति ॥ शरीरत्वेति ॥ पृथिव्यादिशरीरत्वविरोधो नेत्यर्थः । अयमभिसन्धिः- अविदितत्वादिनिरवकाशलिङ्गबलेन योगार्थबलादेव पृथिव्यादिशरीरकत्वं परमात्मनः । न तु रूढ्या तदात्मकत्वतद्देहकत्वरूपेण इति ॥

ननु आकाशाधिकरणादौ विष्णोरेव आकाशादिशब्दवाच्यत्वे सिद्धान्तिते भूताकाशं नेति यथा पृथङ् नासूत्रि, तथा इहापि 'न च स्मार्तम्' इत्यादि न सूत्र्यताम्, इति चेन्न- इतरनिषेधविषये यत्र विशेष-युक्तिर्वर्तते, तत्र पृथक् पृथगितरनिषेधाय पृथक्सूत्रकरणस्य सूत्रकारशैलीसिद्धत्वात् । दृश्यन्ते हि 'आनन्दमय'नये 'नेतरोऽनुपपत्तेः' (१.१.१६) 'सर्वत्र प्रसिद्ध' (१.२.१अ.) नये, 'अनुपपत्तेस्तु न शारीरः' 'कर्मकर्तृव्यपदेशाच्च' (१.२.४) इति, अन्तरनये (१.२.४) 'अनुपपत्तेस्तु न शारीरः' (१.२.१७) इति पृथक्सूत्राणि सूत्रकृता कृतानि ॥

नन्वेवमपि पूर्वाधिकरणे - 'अनवस्थितेः' इति सूत्रेण जीवस्य अन्तःस्थित्वा नियामकत्वं नेत्युक्तम् । तस्मात् कथमत्र नये जीवस्य अन्तर्यामित्वशङ्का ? कथं वा तन्निराकरणार्थं 'शारीरश्च' इति सूत्रप्रणयनं च सङ्गच्छते ? इति चेन्न- ईश्वरम्, जीवस्य ईश्वरदत्तनियामकत्वं च, अङ्गीकृत्य अन्तर्यामित्वमपि जीवस्यैव स्यादिति तात्पर्यवत्, वाद्यन्तररीत्या शङ्कायां तत्परिहाराय अधिकरणसूत्रयोः प्रवृत्तत्वात् ॥ २० ॥

॥ इति अन्तर्याम्यधिकरणम् ॥ ५ ॥

(१०) शीर्यत इति ॥ अयमर्थः- ईदृशं= वर्तमानजगत्सदृशम्, कालत्रयाबाध्यं वा, जगत् अस्मात्= विष्णोरेव नित्यं= नियतं नियमेनेति यावत् । प्रतिकल्पं शीर्यते= नश्यति, यस्माच्च परः= परमात्मा अस्मिन्= जगति शरीरे स्थित्वा रमते, तत्= तस्मात् तस्य विष्णोः जगत्= शरीरमित्युच्यते । न केवलं रूढ्या लौकिकशरीरवत् इति ॥ २० ॥

॥ इति अन्तर्याम्यधिकरणम् ॥ ५ ॥

## ६. अदृश्यत्वाधिकरणम्

**(१) अदृश्यत्वादिगुणा विष्णोरुक्ताः । तत्र**

अत्र नये अक्षरशब्दसाहित्येन अन्यत्र प्रसिद्धादृश्यत्वादिलिङ्गस्य भगवति समन्वयः ॥ (३ सूत्राणि अ.)

(१) **अदृश्यत्वादिगुणा इति** ॥ अदृश्यत्व-जीवगुणराहित्य-स्वामिराहित्य-पराश्रयराहित्य-साकल्येन निर्वचनाऽनर्हत्वरूपा इत्यर्थः । **उक्ता इति** ॥ 'आनन्दमय'नये 'भेदव्यपेदश' (१.१.१७) सूत्रे उक्ता इत्यर्थः । अनेन तन्नयेन सङ्गतिर्दर्शिता । **तत्र**= बुद्धिस्थे आथर्वणे ।

**(२) 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ।**
**नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥'**
**(मु.उ.१-१-६)**

**इत्युक्त्वा,**

(२) विषयादिकमाहुः- **यत्तदद्रेश्यमिति** ॥ अत्र 'अद्रेश्यम्' इत्यनेन अदृश्यत्वम्, 'अगोत्रमवर्णम् अचक्षुःश्रोत्रं तदपाणिपादम्' इत्येतैः जीवगुणराहित्यम्, 'विभुम्' इत्यनेन स्वामिराहित्यम्, 'भूतयोनिम्' इत्यनेन भूतात्पूर्वं विद्यमानत्वबोधनद्वारा आश्रयराहित्यमुक्तं वेदितव्यम् ॥ **इत्युक्त्वेति** ॥ अनेन एतद्वाक्यबोधितादृश्यत्वादिगुणविशिष्टस्यैव 'यथोर्ण' इति वाक्यस्थाक्षरशब्देन ग्रहणमिति बोधितम् ।

(२) **यत्तदद्रेश्यमिति** ॥ (आ. १.६) **यत्**= परविद्यागम्यम् अक्षरम्, **तत् अद्रेश्यं**= साकल्येन प्रत्यक्षाविषयः, **अग्राह्यं**= मनोग्राह्यभिन्नम्, **अगोत्रं**= वसिष्ठादिगोत्ररहितम्, **अवर्णं**= प्राकृतशुक्लादि-वर्णहीनम्, **नित्यं**= स्वरूपतो नाशरहितं गोत्रवर्णभिन्नं च **यत् अचक्षुःश्रोत्रं**= प्राकृतज्ञानेन्द्रियादिशून्यम्, **तत् अपाणिपादं**= प्राकृतकर्मेन्द्रियहीनम्, **विभुं**= समर्थ **सर्वगतं**= व्याप्तम्, **सुसूक्ष्मं**= अत्यन्ताव्यक्तं **यद्भूतयोनिं**= भूतानां= ब्रह्मादिचेतनानाम्, आकाशादीनां वा, केषाञ्चित् व्यवधानेन, केषाञ्चिद् अव्यवधानेन उत्पादकम्, **धीराः**= ज्ञानिनः **परिपश्यन्ति**, **तदव्ययं**= देहतो नाशरहितमित्यर्थः ॥

**(३) 'यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति ।**
**यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम् ॥'**
**(मु.उ.१–१७) इत्युक्त्वा,**

**(४) तस्माच्च 'अक्षरात्परतः परः' इति परः प्रतीयत इत्यतोऽब्रवीत् ।**

(३-४) **विश्वमित्युक्त्वेति** ॥ प्रवृत्तादिति शेषः । तथा च 'यथोर्णनाभिः' इत्युक्त्वा प्रवृत्तात् 'अक्षरात्परतः परः' इति वाक्यात्, **तस्मात्**= अदृश्यत्वादिगुणविशिष्टात् **अक्षरात्**, विष्णोरिति शेषः, **परः**= अन्यः, प्रतीयत इत्यन्वयः । एवं च विष्णोरदृश्यत्वादिगुणकापेक्षया भिन्नत्वेन तस्मिन् अदृश्यत्वादिगुणा न सम्भवन्तीति भावः । अनेन अदृश्यत्वादिकं विषयः । तच्च किं विष्णोः ? उत प्रकृत्यादेः ? इति संशयः । अदृश्यत्वादिकं विष्णोः न सम्भवति, अत्र प्रकरणे अक्षरशब्दश्रवणात्, इति पूर्वपक्षश्च दर्शितः । सन्देहबीजं तु- आनन्दमये श्रुतत्वम्, अक्षरशब्दश्रवणं चेति ज्ञेयम् ॥

(३) **यथोर्णनाभिरिति** ॥ (आ.मु.उ. १.१.७) **ऊर्णनाभिः**= तन्तुवायः कीटविशेषः, **सृजते**= स्वोपभुक्तवस्तूनि तन्त्वात्मना परिणतानि स्वदेहात् निष्कासयति । **गृह्णते**= चक्राद्याकारतया बहिर्निष्कासितान् तन्तून् पुनः स्वोदरे गृह्णाति, **तथा अक्षरमपि** प्रलये विश्वं गृह्णाति, सृष्टौ अक्षरं सृजते । अन्यदृष्टान्तमाह- **यथा पृथिव्यामिति** ॥ **यथा पृथिव्यां** तदाश्रितत्वेनैव, **ओषधयः**= अङ्कुरादयः, **सम्भवन्ति**, तथा **इह**= अक्षरे विश्वं सम्भवति । अपरं दृष्टान्तमाह- **यथा सत इति** ॥ **सतः**= जीवतः पुरुषात्, शरीरात्, **केशलोमानि केशाः**= शिरस्थाः, तदन्यानि लोमानि सम्भवन्ति, तथा अक्षरात् विश्वं सम्भवति । अत्र **आद्यः** दृष्टान्तः- निमित्तकारणत्वे, **द्वितीयः**- पृथिव्या अङ्कुरादिसृष्टौ बीजादिसापेक्षवत् जीवकर्मसापेक्षत्वे, **तृतीयः**- अनायासेन सृष्टिविषये इति ज्ञेयम् ॥

(४) **अक्षरादिति** ॥ (आ. (मु.) २.१.२) **अक्षरात्**= जडप्रकृतेः **परतः**= श्रेष्ठात् श्रीतत्वात्, **परः**= उत्तम इत्यर्थः । अयं चार्थः सिद्धान्ते । पूर्वपक्षी तु- 'यत्तदद्रेश्यम्' इत्यादि प्रकृत्याद्यन्यपरं मन्यते ॥

**(ऋगादिपरविद्याविषयत्वरूपधर्मोक्तेः विष्णुरेवादृश्यत्वादिगुणकः)**

## (५) ॥ ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ २१ ॥

(५) **ॐ अदृश्यत्वादिगुणेति** ॥ तत्तु इति वर्तते, **अयमर्थः**- अदृश्यत्वादिगुणकः= 'यत्तदद्रेश्यम्' इत्यादिश्रुत्युक्तादृश्यत्वादिगुणविशिष्टः- तत्तु- विष्णुरेव, **धर्मोक्तेः**= उपक्रमे 'अथ परा यया तदक्षर-मधिगम्यते' इत्यादिना अदृश्यत्वादिगुणकस्य परविद्याविषयत्वरूपविष्णवसाधारणधर्मोक्तेः इति ॥

**(६) पृथिव्यादिदृष्टान्तमुक्त्वा 'अक्षरात्सम्भवतीह विश्वम्' इत्यतः परं तत्परतः पराभिधानात्,**

(६) सम्बन्धभाष्ये विष्णोः अदृश्यत्वादिगुणा नेत्युक्तम्, तथा सति 'यत्तदद्रेश्यम्' इत्यादिश्रुतिवाक्यं निर्विषयं स्यात्, इत्यतः तद्वाक्यस्य विषयप्रदर्शनार्थं पूर्वपक्षं विशदयन्ति- **पृथिव्यादीत्यादिना** ॥ अस्य 'यद्यपि' इत्यादिः । **दृष्टान्तमिति** ॥ अनेन प्रकृतिप्रापकोपादानत्वाख्ययुक्तिः सूचिता ॥ **अक्षरात्सम्भवतीति** ॥ इयमपि श्रुतिः पूर्वपक्षयुक्तिसूचनायैव ॥ **इत्यतः परमिति** ॥ इत्यतोऽनन्तरवाक्ये इत्यर्थः । 'अक्षरात् परतः' इति वाक्ये इति यावत् । **तत्परत इति** ॥ तस्मात्= अक्षरशब्दवाच्यजडप्रकृतेः सकाशात्, परतः= उत्तमायाः चेतनप्रकृतेः सकाशात्, **पराभिधानात्=** परस्य=विष्णोः, अभिधानादित्यर्थः । प्रकृतेः=जडप्रकृतेः, प्राप्तिः=अदृश्यत्वादिगुणकत्वप्राप्तिरित्यर्थः। अत्र कल्पे श्रुत्यर्थस्तु- अक्षरात्= जडप्रकृतेः सकाशात्, परतः= उत्तमात् श्रीतत्वात्, परः= उत्तमः विष्णुरिति ॥

## (७) 'कूटस्थोऽक्षर उच्यते' (भ.गी. १५-१६) इति स्मृतेश्च प्रकृतेः प्राप्तिः ।

(७) ननु अक्षरशब्दस्य पुंलिङ्गत्वेन, श्रुतौ च अक्षरशब्दश्रवणात् प्रकृतेः कथं प्राप्तिः ? इत्यत आहुः- **कूटस्थ इति** ॥ **स्मृतेश्चेति** ॥ चेन तत्परतः पराभिधानादिति हेतुर्गृह्यते । **प्रकृतेः=** चेतनप्रकृतेः **प्राप्तिः=** अदृश्यत्वादिगुणकत्वप्राप्तिरित्यर्थः । अत्र कल्पे 'तत्परतः पराभिधानात्' इत्यस्यायमर्थः- परतः= उत्तमायाः, तत्= तस्याः= चेतनप्रकृतेः सकाशात्, पराभिधानात्= परस्य= उत्तमस्य विष्णोः अभिधानात्, इति ।

'अक्षरात् परतः' इति श्रुत्यर्थस्तु- परतः= उत्तमात् अक्षरात्= अक्षरशब्दवाच्यश्रीतत्वात्, परः= उत्तमः विष्णुः इति ॥

(७) **कूटस्थ इति** ॥ (गी. १५.१६) व्याख्यातम् (पृ. १४२) ।

## (८) ब्रह्मशब्दात्तत्परतः पराभिधानादेव च हिरण्यगर्भस्य ।

(८) **ब्रह्मशब्दादिति** ॥ 'स ब्रह्मविद्याम्'(आ.१.१) इति ब्रह्मशब्दादित्यर्थः । **तत्परत इति** ॥ तत्= तस्मात्= अक्षरशब्दवाच्यहिरण्यगर्भात्, परतः= उत्तमात् श्रीतत्वात्, **पराभिधानात्=** परस्य= विष्णोः अभिधानादित्यर्थः ॥ **हिरण्यगर्भस्येति** ॥ प्राप्तिरिति वर्तते । अदृश्यत्वादिगुणकत्वप्राप्तिरिति तदर्थः । अत्र पक्षे- 'अक्षरात्' इति श्रुत्यर्थस्तु- अक्षरशब्दवाच्यात् चतुर्मुखात्, परतः= उत्तमात् श्रीतत्वात्, परः= विष्णुः इति ॥

**(९) 'तमेवं विद्वानमृत इह भवति' (तै.आ. ३-१२-७), 'तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया'**

(९) सिद्धान्तमाहुः- **तमेवमित्यादिना** ॥ अस्य 'तथापि' 'अथ परा यया तदक्षरमधिगम्यते' इति श्रुताविति आदौ शेषः ।

(९) **तमेवमिति** ॥ (तै.आ. ३.१२.७) (व्या. ३९) तत्कर्मेति ॥ यत् हरितोषकरम्, तदेव **कर्म**, यया विद्यया **तन्मतिः**= ब्रह्मज्ञानं भवति, सैव **विद्या** इत्यर्थः ॥

**(१०) 'अथ द्वे वाव विद्ये वेदितव्ये परा चैवापरा च । तत्र ये वेदाः, यान्यङ्गानि, यान्युपाङ्गानि, यानि प्रत्यङ्गानि साऽपरा । अथ परा यया स हरिर्वेदितव्यो, योऽसावदृश्यो निर्गुणः परः परमात्मा' इत्यादिना तद्धर्मत्वेनावगत-परविद्याविषयत्वोक्तेर्विष्णुरेवादृश्यत्वादिगुणकः ॥ २१ ॥**

(१०) **अथ द्वे वावेति** ॥ इदं श्रुत्यन्तरम् । **इत्यादिनेति** ॥ जन्यत्वं तृतीयार्थः । **तद्धर्मत्वेनेति** ॥ तृतीयार्थः प्रकारत्वम् । तथा च यद्यपि प्रकृत्यादेः प्राप्तिः, तथापि 'अथ परा यया तदक्षर-मधिगम्यते' इति श्रुतौ 'तमेवम्' इत्यादिजन्यविष्णुधर्मप्रकारकज्ञानविषयत्वरूप-परविद्याविषय-त्वोक्तेः विष्णुरेव अदृश्यत्वादिगुणक इत्यर्थः । परविद्याविषयत्वं च मोक्षकारणज्ञानविषयत्वमिति ज्ञातव्यम् ॥ २१ ॥

(१०) **अथ द्वे वेति** ॥ 'अथ' इत्यारम्भे । अयमर्थः- 'परा च' इति, 'अपरा च' इति 'द्वे' एव 'विद्ये वेदितव्ये' । **तत्र**= उभयोर्मध्ये **ये वेदाः**= ऋगादयः, **यान्यङ्गानि**= शिक्षादीनि, **यानि उपाङ्गानि**= आयुर्वेदधनुर्वेदादीनि, **प्रत्यङ्गानि**= शिष्टाः कलाविद्याः- **सा अपरा** । **अथ** इत्यर्थान्तरे, **योऽसौ अदृश्यः**= दृश्यादन्यः, **निर्गुणः**= प्राकृतगुणहीनः सत्त्वादिगुणशून्यो वा, **परः**= विलक्षणः, **परमात्मा**= सर्वोत्तमः व्याप्तश्च, **स हरिः यया वेदितव्यः- सा परा** । ऋगादिरूपैव 'परा' इत्युच्यते प्रतिपाद्यभेदात् 'ता एव परमा विद्या यदा विष्णोस्तु वाचकाः' इति **आथर्वणभाष्योक्ते**रिति ॥ २१ ॥

**(सर्वज्ञत्वादिविशेषणात् न प्रकृती विरिञ्चरुद्रौ वाऽदृश्यत्वादिगुणकौ)**

**(११) ॥ ॐ विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ ॐ ॥ २२ ॥**

(११) अर्थान्निराकृतस्यापि प्रकृतिहिरण्यगर्भयोः अदृश्यत्वगुणकत्वस्य विशेषतो निराकरणाय सूत्रम्-

ॐ **विशेषणभेदेति** ।। विशेषणं च भेदव्यपदेशश्चेति द्वन्द्वः । इतरा च इतरश्चेति सह विवक्षायां 'पुमान् स्त्रिया' इत्येकशेषः । एक इतरशब्दः चिदचित्प्रकृतिवाचकः । अन्य इतरशब्दः जीवविशेष-चतुर्मुखरुद्रोभयवाचकः । अत्र यद्यपि- चतस्रो व्यक्तयः उपात्ता सन्ति इतरे इति बहुवचनेन भाव्यम्-तथाऽपि प्रकृतित्वेन चिदचित्प्रकृत्योः एकत्वम्, जीवत्वेन विरिञ्चिरुद्रयोः एकत्वं विवक्षितम् । तथा च जातिद्वयाभिप्रायेण इतरौ इति द्विवचननिर्देश इति ज्ञेयम् । अदृश्यत्वादिगुणक इति वर्तते । **अयमर्थः**:- अदृश्यत्वादिगुणकः **इतरौ**= प्रकृतिजीवविशेषौ न, **विशेषणभेदव्यपदेशाभ्यां चेति** । तत्रायं विवेकः:- अदृश्यत्वादिगुणकः न अचेतनप्रकृतिः । अदृश्यत्वादिगुणकस्य 'यः सर्वज्ञः' इति श्रुत्या सर्वज्ञत्वविशेषतः सर्वज्ञत्व-सर्वलाभवत्व-आप्तकामत्व-आलोचनात्मकतपोवत्वधर्मैः विशेषणात् । नापि चेतनप्रकृतिः- आप्तकामत्व-सर्वोत्पादकत्वादिविष्णुधर्मैः विशेषणात् । न विरिञ्चः- 'तस्मादेतद् ब्रह्म' इत्युत्पत्तिमत्व-रूपभेदकधर्मव्यपदेशात् । नापि रुद्रः- 'जुष्टं यदा पश्यत्यन्यम्' इति भेदव्यपदेशात्, इति ।।

**(१२) 'यस्सर्वज्ञस्स सर्वविद्यस्य ज्ञानमयं तपः' (मु.उ. १-१-९) इति विशेषणान्न प्रकृतिः ।**

**'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' (मु.उ. १-१-९) इति भेदव्यपदेशान्न विरिञ्चः ।**

**'अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।<br>श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया ।।<br>तामक्षरं परं प्राहुः परतः परमक्षरम् ।<br>हरिमेवाखिलगुणमक्षरत्रयमीरितम् ।।'**

**इति स्कान्दे त्र्यक्षराभिधानादक्षरात् 'अक्षरात्परतः परः' इत्यपि विशेषणमेव ।**

**'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' (मु.उ. ३-१-२) इति भेदव्यपदेशादीशपदप्राप्तोऽपि न रुद्रः ।। २२ ।।**

(१२) सूत्रार्थमाहुः- **यः सर्वज्ञ इत्यादिना** ।। **विशेषणादिति** ।। अदृश्यत्वादिगुणकस्य इति शेषः। **प्रकृतिरिति** ।। चित्प्रकृतिः, अचित्प्रकृतिश्चेत्यर्थः । अदृश्यत्वादिगुणक इति वर्तते ।। **न विरिञ्च इति** ।। अदृश्यत्वादिगुणक इति वर्तते । 'अक्षरात् परतः परः' इत्यस्य हरौ उपपत्त्यर्थम् अक्षरपदस्यार्थं स्मृत्या आहुः- **अपरं त्वक्षरमिति** ।। **त्र्यक्षराभिधानादिति** ।। त्रयाणाम् अक्षराणां समाहारः त्र्यक्षरम्,

'पात्राद्यन्तत्वात्' स्त्रीत्वाभावेन 'द्विगुश्च' इति न ङीप् । चिदचित्प्रकृतिपरमात्मनाम् अक्षरशब्द-वाच्यत्वाभिधानादित्यर्थः ॥ **इत्यपीति ॥ अक्षरात्**= जडप्रकृतितः, **परतः**= उत्तमायाः चित्प्रकृतेः महालक्ष्मीतः, **परः**= उत्तमः, इति तत्प्रतिपाद्योऽर्थोऽपि जगत्कारणाक्षरस्य विशेषणमेवेत्यर्थः ।

ननु ईशपदश्रवणाद् शिव एव अदृश्यत्वादिगुणकः स्यादिति शङ्कावारणाय 'भेदव्यपदेशात्' इति सूत्रखण्डं व्याचक्षते- **जुष्टमिति ॥** 'अन्यमीशम्' इति प्रसिद्धशिवापेक्षया भेदेन व्यपदेशात् ईशपदप्राप्तोऽपि= ईशपदवाच्योऽपि रुद्रः न अश्रुतत्वादिगुणक इत्यर्थः ॥ २२ ॥

(१२) **यः सर्वज्ञ इति** ॥ (मु. १.१.९) **यः सर्वज्ञः**= सर्वविषयकसामान्यज्ञानवान्, **सर्ववित्**= सर्वविषयकविशेषज्ञानवान्, सर्वलाभवान् सर्वत्र विद्यमानो, व्याप्तो वा, यस्य तपः **ज्ञानमयम्**- आलोचनात्मकं न तु कायक्लेशादिरूपमित्यर्थः । अस्य 'तस्मादेतत्' इत्युत्तरवाक्येन सम्बन्धः ॥ **तस्मादेतदिति** ॥ (मु. १.१.९) **तस्मात्**= पूर्वोक्तगुणविशिष्टात् अक्षरात्, **एतद् ब्रह्म**= चतुर्मुखाख्यं ब्रह्म, **नाम-रूपम्-अन्नं** च तदभिमानिदैवतं च, **जायते**= उत्पद्यत इत्यर्थः ।

**अपरमिति** ॥ अयमर्थः- **या** जडरूपा **प्रकृतिः, सा अपरम् अक्षरम्,** इत्युच्यत इति शेषः, **या प्रकृतिः** विष्णुसंश्रया, **परा**= उत्तमा, **चेतना प्रकृतिः, श्रीः**= लक्ष्मीः, **तां परम् अक्षरम्** इत्याहुः, **अखिलगुणं हरिमेव परतः परमक्षरम्** आहुः, इति अक्षरशब्दवाच्यत्रयम्, **ईरितं**= कथितम् इति ॥ **जुष्टमिति ॥** (मु. ३.१.२) **अन्यम् ईशं**= प्रसिद्धरुद्रापेक्षया इतरम् ईशशब्दवाच्यं परमात्मानमित्यर्थः ॥ अन्यो भागः व्याख्यातः (पृ. १०४) ॥ २२ ॥

**(विष्ण्वसाधारणस्वर्णवर्णोक्तेः विष्णुरेवादृश्यत्वादिगुणकः)**

## (१३) ॥ ॐ रूपोपन्यासाच्च ॐ ॥ २३ ॥

(१३) हेत्वन्तरेण भगवत एव अदृश्यत्वादिगुणकत्वमिति प्रतिपादनाय सूत्रम्- **ॐ रूपोपन्यासाच्चेति ॥** अदृश्यत्वादिगुणकः, तत्तु इति वर्तते । **अयमर्थः- रूपोपन्यासाच्च**= 'यदा पश्यः पश्यते रुग्मवर्णम्' (मु. ३.१.२) इति शुद्धरुग्मा(क्मा)दिरूपस्य अदृश्यत्वादिगुणकसम्बन्धितया प्रतिपादनाच्च अदृश्यत्वादिगुणकः तत्तु= विष्णुरेव इति ॥

**(१४) 'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्' (मु.उ.३.१.३) इति ।**

**'एको नारायण आसीन्न ब्रह्मा न च शङ्करः । स मुनिर्भूत्वा समचिन्तयत् । तत एते व्यजायन्त विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्रा इति । तस्य**

**हैतस्य परमस्य नारायणस्य चत्वारि रूपाणि शुक्लं रक्तं रौग्मं कृष्णमिति। स एतान्येतेभ्योऽभ्यचीक्लृपत्। विमिश्राणि व्यमिश्रयत्।' अत एतादृगेतद्रूपमिति तस्यैव हि रूपाण्यभिधीयन्ते ॥**

**॥ इति अदृश्यत्वाधिकरणम् ॥**

(१४) **सौत्रहेतुसूचकश्रुतिमाहुः- यदेति ॥ ब्रह्मयोनिमितीति ॥ अस्य सौत्रे 'उपन्यासे' अन्वयः। ननु रूपोपन्यासमात्रेण कथं विष्णुत्वनिर्णयः ? ब्रह्मादीनामपि रूपसद्भावात्, इत्याशङ्क्य सूत्रे शुद्धमेव रूपं विवक्षितम्, तच्च रूपं विष्णोरेव, ब्रह्मादीनां तु मिश्रितमेव रूपमिति मनसि कृतमेव श्रुत्या दर्शयन्ति- एक इति ॥ इतीति ॥ इति वाक्येनेत्यर्थः। अभिधीयन्त इति ॥ तस्यैव= विष्णोरेव, रूपाणि= शुद्धरौग्मा(क्मा)दिरूपाणि उच्यन्ते, हि= प्रसिद्धमिति योजना।**

**(यद्वा- हि= यतः, तस्यैव रूपाण्यभिधीयन्ते, अतः 'रूपोपन्यासात्' इति सूत्रेऽन्वयः। अभिधानाद्धेतोः तस्यैव रूपोपन्यासः, तस्माच्च विष्णुरेव अदृश्यत्वादिगुणक इति भावः।) अथवा- अभिधीयन्त इति ॥ अत्र इतीत्यनुवर्त्य इत्यनेन रूपोपन्यासाच्चेति सूत्रेऽन्वयः, सूत्रस्य अदृश्यत्वादिगुणको विष्णुरेवेति पूर्वभाष्येऽन्वयः। अत्र कल्पे अभिधीयन्त इत्यन्तं श्रुतिवाक्यमिति बोध्यम् ॥ २३ ॥**

**॥ इति अदृश्यत्वाधिकरणम् ॥ ६ ॥**

(१४) **यदेति** ॥ (मु. ३.१.३) अस्य उत्तरार्धम्- 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति ॥ अस्यार्थः- **पश्यः**= जीवः, **रुग्मवर्णं**= शुद्धहेमवर्णम्, **ब्रह्मयोनिं**= हिरण्यगर्भस्य कारणम्, **कर्तारं**= जगत्कर्तारम्, **ईशं**= सर्वस्वामिनम्, **पुरुषं**= पूर्णषड्गुणं विष्णुं **पश्यते, यदा** साक्षात्करोति, तदाऽसौ **विद्वान्**= जीवन्मुक्तः, मुक्तो वा, **पुण्यपापे विधूय**= अप्रारब्धम् अनिष्टपुण्यं पापं च परित्यज्य, **निरञ्जनः**= ज्ञानोत्तरं विकर्मकृताशुचित्वादिदोषरहितः, अञ्जनाख्याविद्यारहितो वा **परमं साम्यं**= पूर्णानन्दत्वादिना **साम्यम्,** निर्दुःखत्वादिना वा साम्यम् 'उपैति' इति ॥

केचित् सम्प्रदायविदस्तु- **मया**= श्रिया सहितः समः, ततः स्वार्थे ष्यञ्, तथा च- **पश्यः रुग्मवर्णं कर्तारम् ईशं ब्रह्मयोनिं पुरुषं**= नारायणं **पश्यते**= यदा पश्यति, तदा **विद्वान्**= अपरोक्षज्ञानी, पुण्यपापे विधूय **निरञ्जनः** सन् **साम्यं**= लक्ष्मीसमेतं **परमं**= विष्णाख्यं ब्रह्मैव **उपैति**= प्राप्नोतीत्यर्थमाहुः।

**एक इति** ॥ अयमर्थः- **नारायणः** प्रलये **एकः**= स्वतन्त्र आसीत्। **ब्रह्मा**= चतुर्मुखः, **शङ्करश्च,**

**नासीत्**= स्वस्वव्यापारवान्नासीत् । **सः**= विष्णुः तदा, **मुनिः**= मननशीलः, मौनी वा, **भूत्वा समचिन्तयत्**= ध्यानमकरोत् एते जायन्तामिति । **ततः**= चिन्तनात्परम्, **विश्वः**= वायुः, **हिरण्यगर्भः, वरुणरुद्रेन्द्राः** इत्येते व्यजायन्त । **तस्य**= प्रसिद्धस्य एतस्य, **सर्वशरीरगतस्य परमस्य**= सर्वोत्तमस्य **नारायणस्य चत्वारि रूपाणि** वर्णा भवन्ति **शुक्लम्, रौग्मम्, रक्तम्, कृष्णमिति** । एतदभिन्नरूपाणि स नारायणः, **विमिश्राणि**= पूर्वमेव स्वेन मिश्रीकृतानि रूपाणि **एतेभ्यः**= वाय्वाद्यर्थे **अभ्यचीक्लृपत्**= क्लृप्तान्यकरोत् । तानि पुनरपि **व्यमिश्रयत्**= मानुषादौ विशेषेण मिश्रीचकार । अथवा= स एतानि रूपाणि व्यमिश्रयत् । विमिश्राणि, एतानि, **एतेभ्योऽभ्यचीक्लृपत्** । **अतः**= मिश्रीकरणात् एतद्रूपं= **विष्णो रूपम्, एतादृगेव**= शुद्धशुक्लादिरूपमेव न तु वाय्वादिरूपमिव मिश्रमितीति ॥ २३ ॥

॥ इति अदृश्यत्वाधिकरणम् ॥ ६ ॥

## ७. वैश्वानराधिकरणम्

**(१) अदृश्यत्वादिगुणेषु सर्वगतत्वं 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छा.उ. ५-१८-१) इति वैश्वानरस्योक्तमित्यत आह—**

अत्र नये पाचकत्वाद्यनेकलिङ्गसमन्वयाय भगवति वैश्वानरनामसमन्वयः ॥ (९ सू. अ.) ॥ **सर्वगतत्वमिति** ॥ विष्णुसम्बन्धितया उक्तादृश्यत्वादिघटकं 'नित्यं विभुं सर्वगतम्' इति वाक्येन बोधितं सर्वगतत्वमित्यर्थः । अनेन- 'अदृश्यत्व'(१.२.६अ.)नयेन सङ्गतिर्दर्शिता ।

(१) विषयादिकमाहुः- **यस्त्वेतमेवेति ॥ उपास्ते इति ॥** इत्यनेनेत्यर्थः । **उक्तमिति ॥** अनेन वैश्वानरो विषयः । विष्णुः ? अन्यो वा ? इति सन्देहः । स वैश्वानरः जाठराग्निरेव, न परमात्मा, वैश्वानरशब्दश्रवणात् इति पूर्वपक्षोऽपि सूचितः । सर्वगतत्वोक्तिः, अन्यत्र प्रसिद्धिश्च सन्देहबीजमिति बोध्यम् ॥

(१) **यस्त्वेतमिति** ॥ (छा. ५.१७. १) **यस्तु**= अधिकारी **प्रादेशमात्रं**= हृदये तावत्परिमाणम्, **अभिविमानम्**= अपगतपरिमाणम्, व्याप्तमिति यावत् । **आत्मानम्**= आततगुणम्, **एतं**= शरीरस्थं वैश्वानरम् उपास्ते । स सर्वलोकादिषु **अन्नम् अत्ति** स्वयोग्यभोग्यम् अनुभवतीत्यर्थः ॥ २४ ॥

**(आत्मशब्देन विशेषणात् नाग्निरत्र वैश्वानरशब्दोक्तः)**

**(२) ॥ ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥ २४ ॥**

(२) **ॐ वैश्वानर इति ॥** तत्तु इति वर्तते । यथायोग्यमावृत्तिविपरिणामौ । अर्थात् अग्नाविष्णोरिति लभ्यते । अयमर्थः- **वैश्वानरः**= 'यस्त्वेतम्' इति श्रुतिस्थवैश्वानरशब्दवाच्यः, तत्तु= विष्णुरेव । **साधारणशब्दविशेषात्**= अग्नाविष्णोः साधारणस्य शब्दस्य वैश्वानरशब्दस्य 'आत्मानम्' इत्यात्मशब्देन, तस्मिन्नेव= परमात्मन्येव प्रसिद्धाऽत्मशब्देन विशेषितत्वादिति ॥

**(३) अग्नाविष्ण्वोः साधारणस्य वैश्वानरशब्दस्य विष्णावेव प्रसिद्धात्मशब्देन विशेषणाद्वैश्वानरो विष्णुरेव ॥ २४ ॥**

(३) सूत्रार्थमाहुः- **अग्नाविष्ण्वोरिति ॥** 'देवताद्वन्द्वे च' (पा.सू. ६.३.२६) इति सूत्रेण अग्निशब्दस्य आनङादेशः । **साधारणस्येति ॥** लिङ्गेन, अन्यत्रप्रसिद्ध्यादिना च हर्यग्न्युभयसाधारणस्य इत्यर्थः॥२४॥

(विष्णोर्वैश्वानरत्वं गीतासिद्धम्)

## (४) ॥ ॐ स्मर्यमाणमनुमानं स्यादिति ॐ ॥ २५ ॥

(४) ननु आत्मशब्दः गौणः किं न स्यात् ? इति शङ्कापरिहाराय सूत्रम्- ॐ **स्मर्यमाणमिति** ॥ वैश्वानरः, तत्तु, इति वर्तते । यथायथमावृत्तिविपरिणामौ । भावप्राधान्यं च । इतिशब्दः समाख्याप्रदर्शकः । अयमर्थः- **स्मर्यमाणं=** 'अहं वैश्वानरो भूत्वा' इति स्मृत्युक्तं तस्य विष्णोः वैश्वानरत्वम्, **वैश्वानरे=** वैश्वानरविद्यायामपि **वैश्वानरः=** वैश्वानरशब्दवाच्यः **तत्तु=** विष्णुरेव भवति इत्यत्र **अनुमानं=** अनुमापकम् इति = गीतास्मृतिसमाख्यानात् इति ॥ अनुमानप्रयोगस्तु- अयं (वैश्वानरविद्योक्तः) वैश्वानरः विष्णुर्भवितुमर्हति, 'अहं वैश्वानरः' इति स्मृतिसमाख्यानात्, स्मृतौ वैश्वानरत्वस्य विष्णुनिष्ठतया उक्तत्वात् इति ॥

**(५) 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' (भ.गी. १५-१४) इति स्मर्यमाणमत्रापि स एवोच्यत इत्यस्यानुमापकम् । समाख्यानात् । इतिशब्दः समाख्याप्रदर्शकः ॥ २५ ॥**

(५) स्मृत्युदाहरणपूर्वं सूत्रार्थमाहुः- **अहं वैश्वानर इत्यादिना** ॥ **अत्रापीति** ॥ 'यस्त्वेतम्' इत्यादिवैश्वानरविद्यायामपीत्यर्थः । **स एव=** गीतोक्तो विष्णुरेव । **समाख्यानादिति** ॥ स्मृतेः वैश्वानरविद्यासमानार्थकत्वात् इत्यर्थः । समाख्यारूपयुक्तिः सूत्रसिद्धैव इत्याहुः- **इतिशब्द इति** ॥ २५ ॥

(५) **अहं वैश्वानर इति** ॥ (गी. ५.१४) **अहं वैश्वानरो भूत्वा=** विश्वनरसम्बन्धिजाठराग्निस्थो भूत्वा, तत्र स्थितः सन्निति यावत् । **प्राणिनां देहमाश्रितः** प्राणापानाभ्यां सम्यक् युक्तः सन्, भक्ष्य-भोज्य-लेह्य-पेयभेदेन **चतुर्विधमन्नम्-** अदनीयं **पचामि=** जीर्णं करोमीत्यर्थः ॥ भगवद्वाक्यमेतत् ॥ २५ ॥

(अत्रोक्तात्मब्रह्मशब्दयोरन्यत्रासम्भवान्नाग्निरत्र वैश्वानरशब्दोक्तः)

## (६) ॥ ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते ॐ ॥ २६ ॥

(६) आक्षेपसमाधानाभ्यां वैश्वानरस्य विष्णुत्वस्थिरीकरणाय सूत्रम्- ॐ **शब्दादिभ्य इति** ॥ तत्तु, वैश्वानरः, इति वर्तते । शब्दः आदिः येषामिति विग्रहः । आदिपदेन लिङ्गस्य सङ्ग्रहः । **अयमर्थः-**

**शब्दादिभ्यः**= 'अयमग्निर्वैश्वानरः', 'वैश्वानरमृत आजातमग्निम्' इत्याद्यग्निशब्दः, 'वैश्वानरे तद्धुतं भवति हृदयं गार्हपत्य' इत्याद्युक्तहोमाधिकरणत्वादिलिङ्गैः, '**अन्तःप्रतिष्ठानात्**= 'येनेदमन्नं पच्यते', 'तद्यद् भक्तम्' इत्याद्युक्तात् पाचकत्वेन अन्तःप्रतिष्ठानरूपाग्निकर्मतः (च) **वैश्वानरः**= 'वैश्वानरमुपास्ते' इत्यत्र वैश्वानरशब्दवाच्यः **न तत्**= न विष्णुः **इति चेन्न- तथा**= मुख्यतया अग्न्यादिनामलिङ्गवत्वेन **दृष्ट्युपदेशात्**= उपासनार्थं प्रतिपादनात्, **असम्भवात्**= उपक्रमस्थयोः 'को न आत्मा किं ब्रह्म' इति आत्म-ब्रह्मशब्दयोः मुख्यतया अन्यत्रासम्भवात् **च**= यतः, **एनं**= वैश्वानर-शब्दवाच्यम्, **पुरुषविधमपि**= पुरुषसूक्तोक्तप्रसिद्धपुरुषाकारमपि अधीयते, छन्दोगाः । अनेन पुरुषसूक्तसमाख्या उक्ता भवति अतश्चेति ॥

**(७) 'अयमग्निर्वैश्वानरः'(बृ.उ.७—९—१)।**

**(८) 'वैश्वानरमृत आजातमग्निम्' (ऋ.सं. ६-७-१) इत्यादिशब्दः।**

**(९) 'वैश्वानरे तद्धुतं भवति' (छा.उ. ५-२४-४) 'हृदयं गार्हपत्यो मनोऽन्वा-हार्यपचन आस्यमाहवनीयः' (छा.उ. ५-१८-२) इत्याद्यग्निलिङ्गम् आदिशब्दोक्तम् । 'येनेदमन्नं पच्यते' (बृ.उ. ७-९-१) 'तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयम्' (छा.उ.५-१९-१) इत्यादिना पाचकत्वे-नान्तःप्रतिष्ठानं च प्रतीयते । तस्मान्न विष्णुरिति चेन्न ।**

(७-९) सूत्रोक्तं पूर्वपक्षं श्रुत्युपन्यासपूर्वं विशदयन्ति- **अयमग्निरित्यादिना चेदित्यन्तेन** ॥ छान्दोग्यस्य प्रकृतत्वेऽपि बृहदारण्यकादिश्रुत्यन्तरोदाहरणम्, तस्या अपि वैश्वानरविद्यात्वेन निर्णेय-त्वात्, संवादार्थत्वाद्वा कृतम् । सौत्रसिद्धान्तांशं व्याचक्षते- **नेत्यादिना** ॥

(७) **अयमग्निरिति** ॥ (बृ. ५.९.१) 'अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे, येनेदं पच्यते यदिदमद्यते' इति तत्र पठ्यते । अस्यार्थः- यः प्रकृतः अयं अन्तःपुरुषे स्थितः भगवान् **अयमग्निः**= अग्निशब्दवाच्यः, **वैश्वानरः**= विश्वगुणपूर्णत्वात्- वैश्वः, न रीयते= न नश्यतीति- नरः । 'अन्येष्वपि दृश्यते' इति डः । ततः कर्मधारये 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घे वैश्वानर इति भवति । ईदृशगुणविशिष्टत्वेन वैश्वानरशब्दवाच्य इत्यर्थः । इदमन्नं= यदिदमद्यते प्राणिभिः, तदिदम्, **येन**= वैश्वानरस्थभगवता पच्यते= जीर्णं क्रियते, अयं वैश्वानर इत्यन्वय इति ॥

(८) **वैश्वानरम् ऋते इति** ॥ (ऋ. ६.७.१) 'मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजात-

मग्निम् । कविं सम्राजमतिथिं जनानामासन् आपात्रं जनयन्त देवाः ॥' इति विशिष्टमन्त्रः । **अस्यार्थः**- **दिवो मूर्धानं**= दिवःकारणभूतं मूर्धानम्, अवयवावयविनोः एकत्वात् अभेदव्यवहारः । **पृथिव्या अरतिं**= कारणभूतं पादं **जनानाम् आ ऋते**= सम्यग्ज्ञानाय **जातम्**= अभिव्यक्तम्, **कविं**= सर्वज्ञम्, **सम्राजं**= सर्वेशम् **अतिथिम्**= अत्यन्तान्नम्, **जनानां पात्रं**= त्रातारं **वैश्वानरं**= विश्वजीवान्तरम्, **अग्निम्**= अङ्गनेतारं विष्णुं **देवा आसन्**= स्वास्यतया **आ जनयन्त**= सर्वकर्मसु अकुर्वत इति । अतिथिमित्यत्र 'थ'शब्दः अन्नवाचक इति ज्ञेयम् ॥

(९) **वैश्वानर इति** ॥ (छा. ५.२४.४) **अस्य पूर्ववाक्यम्**- 'तस्मादु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेत् आत्मनि हास्यैव' इति । अस्यार्थः- **यदि एवंवित्**= उक्तरीत्या वैश्वानरज्ञानी **अपि**= उच्छिष्टाद्यनर्हायापि चण्डालाय उच्छिष्टं **प्रयच्छेत्**= दद्यात्, **तदा**= तद्दत्तमुच्छिष्टम्, **आत्मनि**= चण्डालाद्यन्तर्यामिणि वैश्वानरे हुतं स्यात्, न तु पापकरम्, प्रत्युत महाफलकरमेव इति ।

**हृदयं गार्हपत्य इति** ॥ (छा. ५.१९.२) हृदयस्थो विष्णुः गार्हपत्यपदवाच्य इत्यर्थः । एवमुत्तरत्रापि ज्ञेयम् । **अन्वाहार्यपचनः**= दक्षिणाग्नेः अन्वाहार्यौदनपचनाधिकरणत्वात् अन्वाहार्य इति तस्य नाम । पूर्वपक्षे तु- वैश्वानरस्य प्रसिद्धाग्नेः गार्हपत्यः हृदयमित्यादिरर्थः ॥ **येनेति** ॥ व्याख्यातमत्रैव ।

**तद्यद्भक्तमिति** ॥ (छा. ५.१९.१) **तत्**= तदा भोजनकाले (तत् प्रसिद्धं वा) **यत् भक्तम्**= अन्नम्, **प्रथममागच्छेत्**= आस्यं प्रति प्राणाहुतिरूपेण गच्छेत्, **तद्धोमीयं**= पाचकत्वेन अन्तःस्थितस्याग्नेः (वैश्वानरस्य भगवतः) होमद्रव्यमित्यर्थः । अयं चार्थः सिद्धान्ते । पूर्वपक्षे तु- 'अयमग्निः' इत्यादयः श्रुतयः प्रसिद्धाग्निपराः । तदनुरोधेन अर्थ ऊह्य इति बोध्यम् । तत्प्रकारस्तु स्पष्टः ॥

**(१०) 'अथ हेममात्मानमणोरणीयांसं परतः परं विश्वं हरिमुपासीतेति । सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूप इति ।'**

**(११) 'स य एतमेवात्मानं विश्वं हरिमारादरमुपास्ते तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु देवेषु सर्वेषु वेदेषु कामचारो भवति' इति तत्तन्नामलिङ्गादिना तस्यैव दृष्ट्युपदेशान्महोपनिषदि ।**

(१०-११) उपासनार्थम् अग्न्यादिनामवत्वेनोक्तौ मानमाहुः- **अथ हेममित्यादि** ॥ **तस्यैव**= विष्णोरेव । **दृष्ट्युपदेशात्**= उपासनार्थमुक्तत्वात् । **महोपनिषदीति** ॥ अनेन अग्निश्रुत्यादीनां विष्णौ

**सावकाशत्वमुक्तम् । महोपनिषदि- तत्तन्नामलिङ्गादिप्रकारकविष्णुविशेष्यकोपासनार्थं तथोक्तत्वात् 'इति चेन्न' इत्यत्रान्वयः ।**

(१०) **अथ ह इममिति ॥** अथेत्यर्थान्तरारम्भे । **इममात्मानम्**= आदानादिकर्तारम्, **अणोरणीयांसं**= सूक्ष्मादपि सूक्ष्मम्, **परतः परं**= महतः परम्, **विश्वं**= पूर्णम्, **हरिमुपासीत** । इतिः विधिसमाप्तौ । उपासनाप्रकारमाह- **सर्वेति ॥** सर्वरूप 'इति' इतिशब्दः सर्वनामेत्यादिसप्तसु विषयेषु प्रत्येकं सम्बध्यते, उपासीत इति च । **सर्वनामा**= इन्द्रादिसर्वनामवान् इत्युपासीत, **सर्वकर्मा**= स्वातन्त्र्येण सर्वक्रियाकर्ता इत्युपासीत, **सर्वलिङ्गः**= चक्रधरत्वादिलिङ्गवान् इत्युपासीत, **सर्वगुणः**= ज्ञानानन्दादिसर्वगुणपूर्ण इत्युपासीत, **सर्वकामः**= पूर्णकाम इत्युपासीत, **सर्वधर्मः**= स्वामित्वसम्बन्धेन सर्वधर्मवान्, सर्वज्ञत्वादि-सर्वधर्मवांश्च इत्युपासीत, **सर्वरूपः**= सर्वरूपवान्, तत्तन्नियामकानेकरूपवानिति यावत् । सर्वं रूपं= प्रतिमा यस्य स इति वा, सर्वान्तर्यामीति यावत् उपासीत ।

(११) एवमुपासकस्य फलमाह- **स य इति ॥ सः**= अधिकगुणवान्, **यः**= अधिकारी **एतम्**= अणोरणीयांसं परतः परमात्मानं विश्वं हरिम् **आरात्**= समीपे स्वहृदये **अरम्**= अलं सम्यक् **एवं**= पूर्वोक्तप्रकारेण उपास्ते । **तस्य**= उपासकस्य **सर्वेषु लोकेषु सर्वेषु भूतेषु**= प्राणिषु, **सर्वदेवेषु सर्ववेदेषु कामचारः**= स्वेच्छाचरणं सर्वपूज्यत्वम्, इतरजीवापेक्षया सर्वज्ञत्वम्, भगवद्गुणज्ञत्वं वा, भवतीति ।

**(१२) 'अनात्तत्वादनात्मान ऊनत्वाद्गुणराशितः ।**
**अब्रह्माणः परे सर्वे ब्रह्मात्मा विष्णुरेव हि ॥'**
**इत्यादिना 'को न आत्मा किं ब्रह्म' (छा.उ. ५-११-१) इत्यारम्भाच्च अन्येषामसम्भवाद्विष्णुरेव वैश्वानरः ।**

(१२) आत्मब्रह्मशब्दयोः विष्णौ मुख्यत्वे मानमाहुः- **अनात्तत्वादिति ॥ इत्यादिनेति ॥ ज्ञाप्यत्वं तृतीयार्थः । असम्भवेऽन्वेति । सौत्रासम्भवादित्यादेः व्याख्यानाय श्रुतिमाहुः- को न इत्यादि ॥**

(१२) **अनात्तत्वादिति ॥ हि**= यतः विष्णोः **परे**= अन्ये गुणैः **अनात्तत्वात्**= अव्याप्तत्वात्, **अनात्मानः**= अनात्मशब्दमुख्यार्थाः, **गुणराशितः**= गुणराशिभिः, **ऊनत्वात्**= रहितत्वात् **अब्रह्माणः**, तस्मात् **ब्रह्माऽत्मा**= तच्छब्दमुख्यार्थः विष्णुरेव । **हि** प्रसिद्ध इत्यर्थः ॥

को न आत्मेति ॥ (छा. ४.११.१) नः= अस्माभिः उपास्यः आत्मा कः= किंलक्षणकः ? ब्रह्म च किं= किंलक्षणकम् ? इत्यर्थः ।

**(१३) 'चन्द्रमा मनसो जातश्चक्षोस्सूर्यो अजायत' (तै.आ. ३-१२) इत्यादिना यः पुरुषाख्यो विष्णुरभिहितस्तद्विधमेवात्र 'मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा' (छा.उ. ५-१८३) इत्यादिनैनं वैश्वानरमधीयते ।**

**(१३) समाख्यया पुरुषविधमित्यंशं व्याचक्षते- चन्द्रमा इति ॥ अन्येषामिति षष्ठ्यर्थो विषयत्वम् । असम्भवादिति पदम् असम्भविन इत्यर्थकम् । आरम्भादित्यस्य विशेषणम् । तथा च- इत्यादिज्ञाप्यविष्णवन्यविषयकासम्भवविशिष्टादारम्भात् 'को न आत्मा किं ब्रह्म' इति आत्मत्व-ब्रह्मत्वविचारपूर्वकात् आत्मब्रह्मशब्दघटितात् आरम्भाच्च, उपक्रमात् च= यतः तद्विधमेव= पुरुषसदृशमेव, पुरुषसूक्तोक्त-पुरुषाकारमेवेति यावत् । वैश्वानरं= वैश्वानरशब्दवाच्यम् अधीयते छन्दोगाः, अतश्च, विष्णुरेव वैश्वानर इत्यर्थः ।**

उपक्रमस्तु- प्रकरणस्य वैष्णवत्वज्ञापनद्वारा वैश्वानरस्य विष्णुत्वसाधकः ।

(१३) **चन्द्रमा इति** ॥ (तै.आ. ३.१२.३८) आदिना 'मुखादिन्द्रश्चाग्निश्च' इत्यादेर्ग्रहणम् । स्पष्टोऽर्थः । **मूर्धैवेति** ॥ (छा. ५.१७.२) **मूर्धा**= विष्णोः शिरः, भगवानेव वा, सुतेजस्त्वादिगुणयोगात्, सुतेजश्शब्दितस्वर्गजनकत्वात् सुतेजा इत्युच्यते । **चक्षुः विश्वरूपः**= सर्वप्रकाशकत्वगुणयोगात् विश्वरूपशब्दितसूर्यजनकत्वात्, विश्वरूपशब्देन उच्यते । **प्राणः पृथग्वर्त्मा**= प्राणादिभिः अशक्यकार्यकर्तृत्वात्, पृथग्वर्त्मनामवाय्वाश्रयत्वात् पृथग्वर्त्मपदवाच्य इत्यर्थः । **छान्दोग्यभाष्यदिशा** अर्थान्तरोऽप्यस्य बोध्यः । आदिना- 'सन्दोहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ' (छा. ५.१७.२) इत्यादिकं ग्राह्यम् । तदर्थस्तु- तद्भाष्यत एव अवसेयः ॥

**(१४) चशब्देन सकलवेदतन्त्रपुराणादिषु विष्णुपरत्वं पुरुषसूक्तस्य दर्शयति ।**

**तथा च ब्राह्मे–**

**(१५) 'यथैव पौरुषं सूक्तं नित्यं विष्णुपरायणम् ।**
**तथैव मे मनो नित्यं भूयाद्विष्णुपरायणम् ।** इति ।

**चतुर्वेदशिखायां च-**

**(१६) 'सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात्' इति । 'एष ह्येवाचिन्त्यः परः परमो हरिरादिरनादिरनन्तोऽनन्तशीर्ष्णोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्तरूपः' इति । बृहत्संहितायां च—**

**(१७) 'यथा हि पौरुषं सूक्तं विष्णोरेवाभिधायकम् ।**
**न तथा सर्ववेदाश्च वेदाङ्गानि च नारद ॥' इत्यादि ।**

(१४-१७) अपिपदेनैव समुच्चयस्य सिद्धेः सूत्रे चशब्दो व्यर्थ इत्यत आहुः- **चशब्देनेति ॥ दर्शयतीति ॥** प्रतीतम्, सूत्रकार इति शेषः । किं तद्वेदादिकम् इत्यतः बोद्धृसौकर्याय आदौ पुरुषसूक्तस्य विष्णुपरत्वे स्मृतिमाहुः- **तथा च ब्राह्मे- यथैवेति ॥** तत्रैव श्रुतिमाहुः- **चतुर्वेदशिखायाम्- सहस्रेति ॥** तत्रैव स्पष्टस्मृतिं चाहुः- **बृहत्संहितायां च- यथा हीति ॥ इत्यादीति ॥** आदिना- 'सर्वतः पौरुषे सूक्ते गुणा विष्णोरुदाहृताः' इति 'पुरुषविद्यायाम्' (३.३.२५) इति सूत्रे वक्ष्यमाणं ब्रह्मतर्कवचनम्, 'तस्मिन् काले महाराज राम एवाभिधीयते । यथा हि पौरुषे सूक्ते विष्णुरेवाभिधीयते ॥' इति 'भूतादिपाद'(१.१.२६) इति सूत्रे उदाहृतं स्कान्दवचनम्, अन्यच्च एवंजातीयकं ग्राह्यम् ॥

(१५) **यथैवेति ॥ नित्यं**= नियमेन, **विष्णुपरायणं**= विष्णौ महातात्पर्यवत्, **नित्यं**= सदा नियमेन चेत्यर्थः । (शिष्टं स्पष्टम्)

(१६) **सहस्रेति ॥** 'सहस्रपात्' इतीत्यन्तं पुरुषसूक्तप्रतीकग्रहणं पुरुषसूक्तप्रतिपाद्यो विष्णुरेवेत्युपपादकम् । 'एष ह्येव' इत्यादि उत्तरवाक्यम् । 'सहस्रशीर्षा' इत्यत्र सोः डादेशः । **एष इति ॥ परः**= विलक्षणः, **अचिन्त्यः**= साकल्येन चिन्ताऽविषयः, **परमः**= उत्तमः, **आदिः**= (सर्व)कारणम्, **अनादिः**= उत्पत्तिशून्यः, **अनन्तः**= नाशरहितः, **अनन्तशीर्षः**= अनन्तमूर्धा, सहस्रशीर्षापदव्याख्यानमेतत्, सहस्राक्षपदव्याख्यानम्- अनन्ताक्ष इति, अनन्तबाहुः- उपलक्षणमिदम् अनन्तपादस्यापि 'सहस्रपात्' इत्यस्य व्याख्यानमेतत् । अनन्तगुण इति 'स भूमिं विश्वतः' इत्यादेर्व्याख्यानम् । **अनन्तरूपः**= अनन्ता(वतार)ऽकार इत्यर्थः ॥

(१७) **यथा हीति ॥** स्पष्टोऽर्थः । अत्र **'न तथा'** इत्युत्तरार्धं पुरुषसूक्तस्य मुख्यवृत्त्या महातात्पर्येण च विष्णुपरत्वदार्ढ्यबोधकम्, न तु वेदवेदाङ्गानां परमात्मपरत्वनिषेधकम्, इत्यवसेयम् । ततश्च सर्वप्रकारेण विष्णुरेव पुरुषसूक्तमुख्यप्रतिपाद्य इति भावः । ब्रह्मवाक्यमेतत् ॥

**(१८) 'यस्माद्यज्जायते चाङ्गाल्लोकवेदादिकं हरेः ।**
**तन्नामवाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखम् ॥'**
**इति नारदीयवचनान्नाभेदोक्तिविरोधः ॥ २६ ॥**

(१८) ननु पुरुषसूक्ते पुरुषावयवस्य, तज्जन्यस्य च, 'पद्भ्यां भूमिः' इत्यादौ भेदो दृश्यते, वैश्वानरविद्यायां तु उभयोरभेद उच्यते 'मूर्धैव सुतेजा' इत्यादिना, तथा च उभयोर्भिन्नार्थकत्वात् कथं समाख्यात्वम् ? इत्यत आहुः- **यस्माद् यज्जायत इति ॥ नाभेदोक्तिविरोध इति ॥ 'मूर्धैव सुतेजा'** इति श्रुतौ इति बोध्यम् । तथा च उभयोरेकार्थत्वात् पुरुषसूक्तस्य समाख्यात्वं सिद्धमिति भावः । यद्वा- यतः, अत इति शेषः । **अयमन्वयः**- महोपनिषदि दृष्ट्युपदेशाद् अन्येषामसम्भवात्, आरम्भाच्च, यतो वैश्वानरं पुरुषविधमधीयते- अतः पुरुषसूक्तसमाख्यानात् (इति यावत्) यतः- अभेदोक्तिविरोधो नास्ति, अतो विष्णुरेव वैश्वानरः, तस्मात् 'नेति चेन्न' इति ॥

अत्र पक्षे- 'तथा च ब्राह्मे' इत्यादेरयमर्थः- तथैव ब्राह्मे= विष्णुपरायणमिति वचनम्, 'अनन्तरूप' इति वाक्यम्, इत्यादिवाक्यं च, पुरुषसूक्तस्य विष्णुपरत्वं दर्शयति इति । यतो दर्शयति, अतश्च 'इति चेन्न' इत्यन्वय इत्यपि ज्ञातव्यम् ॥ २६ ॥

(१८) **यस्मादिति** ॥ हरेः= परमात्मनः, यस्मादङ्गात्, यत् लोकवेदादिकं जायते, ततः- कारणात्, तदङ्गम्, तन्नामवाच्यं= तज्जन्यसूर्यादिवाचकसूर्यादिपदवाच्यं भवति । उदाहरणमाह- **यथेति ॥ ब्रह्मादिकं मुखं**= ब्राह्मणादिशब्दवाच्यं मुखादिकं 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादावित्यर्थः । **लोकवेदादिकम्** इत्यत्र लोकपदेन स्वर्गादिः, वेदपदेन ऋगादेः ग्रहणम् ॥ २६ ॥

**(आत्मादिशब्दात्पुरुषसूक्तसमाख्यानाच्चात्रोक्तः विष्णुरेव)**

**(१९) ॥ ॐ अत एव न देवता भूतं च ॐ ॥ २७ ॥**

**अग्निवैश्वानरादिशब्दस्तेजसि भूते अग्निदेवतायां च प्रसिद्धोऽप्यतः पूर्वोक्तहेतुत एवात्र न सा तच्चाभिधीयते ॥**

(१९) वैश्वानरशब्दवाच्ये देवताभूते किं न स्यातामिति शङ्कावारणाय सूत्रम्- **ॐ अत एव नेति ॥ वैश्वानर** इति वर्तते । अयमर्थः- **अत एव**= उपक्रमस्थाऽऽत्मब्रह्मश्रुतेः (शब्दात्) पुरुषसूक्त-समाख्यानाच्चैव, **देवता**= अग्न्याख्यदेवता, **भूतं च**= जडाग्निरपि, **वैश्वानरः**= 'यस्त्वेतम्' इति वैश्वानरविद्यास्थवैश्वानरशब्दवाच्यो **न** भवतीति ॥

सूत्रार्थमाहुः- **अग्निवैश्वानरादीति** ॥ अत्र= अग्न्यादिपदे 'वि मे कर्णा पतयत' इत्याद्यग्निसावित्रविद्योपलक्षणार्थे । एवम् अन्यत्रोक्ताग्न्यादिपदानामपि विष्णुवाचकत्वमेव, न तु देवताभूतवाचकत्वम्, बाधेऽसतीति बोध्यम् । **तेजसीति** ॥ तेजोरूपे भूते इत्यर्थः । जडाग्नौ इति यावत् । **अत इति** ॥ इदं च एकदेशेन सूत्रस्थ'अत एव' इति प्रतीकधारणम् । तस्यार्थः- **पूर्वोक्तेति** ॥ पूर्वसूत्रोक्तेत्यर्थः । **हेतुत एवेति** ॥ आत्म-ब्रह्मश्रुतेः, पुरुषसूक्तसमाख्यानाच्च इत्यर्थः । **अत्र**= वैश्वानरविद्यायाम् । **सा**= अग्निदेवता, **तच्च**= भूतं च, जडाग्निश्च इति यावत् ॥ २७ ॥

ननु पादद्वयेन लोकतोऽन्यत्रप्रसिद्ध(नामलिङ्गात्मक)वैश्वानरान्तशब्दसमन्वय उक्तः । स च समन्वयो लक्षणयैव वक्तव्यः, न तु मुख्यवृत्त्या, तथा हि- उक्तरीत्या (योगादिना) वैश्वानरादिशब्दानाम् अग्निदेवतादिवाचित्वाभावे लोकप्रसिद्धिविरोधः । लोके उक्ताग्न्यादिशब्दानाम् अग्न्यादिदेवतादिषु प्रसिद्धत्वात्, प्रसिद्धौ च तत्तद्वाचकत्वं विना कारणान्तराभावेन तत्तच्छब्दानां प्रसिद्ध्यन्यथाऽनुपपत्त्या च अग्निदेवतादीनां तत्तच्छब्दवाच्यत्वं स्वीकरणीयम् । ततश्च स्ववाच्याग्निदेवतादिसम्बन्धेन लक्षणयैव विष्णुबोधकत्वम्, ततश्च तत्तच्छब्दसमन्वयो लक्षणयैवेति प्राप्तम्, इति शङ्कापरिहाराय सूत्रम्-

**(मुख्यवृत्त्याऽऽग्न्यादिशब्दाः विष्णुवाचका अपि देवतासु अज्ञैर्व्यवह्रियन्ते)**

## (२०) ॥ ॐ साक्षादप्यविरोधं जैमिनिः ॐ ॥ २८ ॥

(२०)ॐ **साक्षादप्यविरोधमिति** ॥ तत्तु, वैश्वानरः, इति 'अत एव न देवताभूतम्' इति वर्तते । यथायथमावृत्तिविपरिणामौ । वैश्वानरशब्दस्य स्वरूपपरत्वम्, उपलक्षणत्वं चाङ्गीकर्तव्यम् । व्यवहरन्ति वक्तीति शेषः । अयमर्थः- वैश्वानरः= वैश्वानरादयः शब्दा न देवताभूतं= नाग्न्यादिदेवताभूताग्न्यादिवाचकाः अपि= तथाऽपि साक्षादेव= वाच्यान्तरधीव्यवहितलक्षणादिकं विना मुख्यवृत्त्यैव, तैः ब्रह्मवाचकैः वैश्वानरैः= वैश्वानरादिभिः शब्दैः ते ज्ञानिनः अत एव= हानोपादानार्थमेव, ते अज्ञाः अत एव= मुख्यवृत्त्या भगवद्वाचकत्वाज्ञानादेव देवतासु= अग्निदेवतादिषु (विषये) व्यवहरन्ति, इति= इत्यभ्युपगमेन अविरोधं=वैश्वानरादिशब्दीयलौकिकप्रसिद्धिविरोधपरिहारं वक्ति जैमिन्याचार्य इति ॥

**(२१) नाग्न्यादयः शब्दा अग्न्यादिवाचकास्तथापि साक्षादेवानन्ययोगेन ब्रह्मवाचकैश्शब्दैः व्यवहारार्थमनभिज्ञानाच्चान्यत्र व्यवहरन्तीत्यभ्युपगमेऽविरोधं जैमिनिर्वक्ति ।**

(२१) सूत्रार्थमाहुः- **नाग्न्यादय इति** ॥ वैश्वानरादय इत्यर्थः । आदिपदं पूर्वपादे निर्णीत-प्राणादिशब्दग्राहकम् । तथाऽपीत्युक्त्या यद्यपीति लभ्यते । यद्यपि न वाचका इत्यन्वयः । ज्ञानिनः तदन्ये इति शेषः । साक्षादेवेत्यस्य विवरणम्- **अनन्ययोगेनेति** ॥ वाच्यान्तरसम्बन्धाभावेनैवेति तदर्थः । लक्षणां विना मुख्यवृत्त्यैवेति यावत् । शब्दैः= वैश्वानरादिशब्दैः । व्यवहारार्थं= हानोपादानसिद्ध्यर्थम् । ज्ञानिनः= पण्डिताः व्यवहरन्तीत्यन्वयः । तदन्ये= अज्ञाः । अनभिज्ञानाच्च= मुख्यवृत्त्या भगवद्वाचकत्वाज्ञानादेव । अन्यत्र= अग्न्यादौ (विषये) व्यवहरन्ति ॥

**अभ्युपगम इति** ॥ निमित्तसप्तमी एषा । अभ्युपगमादित्यर्थः । अविरोधं= प्रसिद्धिविरोधाभावम् । **वक्तीति** ॥ तथा च लौकिकप्रसिद्धिः अज्ञानादिमूलिका, अतो न तद्विरोध इति भावः । उभयत्र प्रसिद्धशब्दानां तु भगवति लक्षणाप्रसक्तिरेव न । भगवत्यपि तेषां शक्तत्वात् इति । (तात्पर्येण उपस्थितत्वेन च) पाद‌द्वयान्त एवायं विचारः कृत इति ध्येयम् ॥

**(२२) 'व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित् ।**
**अन्ये व्यवहरन्त्येतान्यूरीकृत्य गृहादिवत् ॥'**
**इति स्कान्दवचनान्न मतानां परस्परविरोधः ॥ २८ ॥**

(२२) ननु जैमिन्यादिमतानां स्वमताविरुद्धत्वे जैमिन्यादिग्रहणं व्यर्थम् । विरुद्धत्वे कथं विरुद्धराद्धान्तेन (लक्षणयैव समन्वय इति) प्राप्तशङ्कापरिहारः क्रियते ? इत्यत आहुः- **व्यासचित्तेति** ॥ तथा च जैमिन्यादिमतानां स्वमतत्वेऽपि शिष्यप्रसिद्ध्यर्थं तेषां नामनिर्देशः (सूत्रे) इति बोध्यम् । **न मतानामिति** ॥ एकस्य मतस्य मतान्तरोपमर्दकत्वाभावात् **मतानां**= सूत्रोक्तानां मतानां परस्परं न विरोध इत्यर्थः ॥ २८ ॥

(२२) **व्यासचित्तेति** ॥ **अन्ये**= जैमिन्यादयः **व्यासचित्तस्थिताकाशात्**= व्यासचित्तस्थितानेकविषयविशिष्टज्ञानाख्याऽकाशात्, **अवच्छिन्नानि**= परिमितानि, **कानिचित्**= कतिपयानि, मतानि **ऊरीकृत्य**= पृथक्करणपूर्वकं स्वीकृत्य, **गृहादिवत्**= भित्याद्यवच्छिन्नपरिमिताऽकाशरूपगृहादीनीव **व्यवहरन्ति**= इदं मदीयं मतमिति वर्णयन्तीत्यर्थः । यथा भित्याद्यवच्छिन्नमाकाशं स्वीकृत्य मदीयं गृहमिति व्यवहरन्ति, तथा एतेऽपि एकदेशमादाय स्वमतत्वेन वर्णयन्तीति भावः ॥ २८-३० ॥

ननु लौकिकप्रसिद्धेः अज्ञानमूलकत्वेनाऽन्यथोपपत्तावपि वैदिकाग्निसूक्तादिवैश्वानरविद्येत्यादिप्रसिद्धिविरोधः स्यादेव । तत्राज्ञानादिकल्पनाऽयोगात्, अनादित्वाद् वेदस्य ज्ञानिव्यवहार-

सूत्रार्थमाहुः- **अग्निवैश्वानरादीति** ॥ अत्र= अग्न्यादिपदे 'वि मे कर्णा पतयत' इत्याद्यग्निसावित्र-विद्योपलक्षणार्थे । एवम् अन्यत्रोक्ताग्न्यादिपदानामपि विष्णुवाचकत्वमेव, न तु देवताभूत-वाचकत्वम्, बाधेऽसतीति बोध्यम् । **तेजसीति** ॥ तेजोरूपे भूते इत्यर्थः । जडाग्नौ इति यावत् । **अत इति** ॥ इदं च एकदेशेन सूत्रस्थ'अत एव' इति प्रतीकधारणम् । तस्यार्थः- **पूर्वोक्तेति** ॥ पूर्वसूत्रोक्तेत्यर्थः । **हेतुत एवेति** ॥ आत्म-ब्रह्मश्रुतेः, पुरुषसूक्तसमाख्यानाच्च इत्यर्थः । **अत्र**= वैश्वानरविद्यायाम् । **सा**= अग्निदेवता, **तच्च**= भूतं च, जडाग्निश्च इति यावत् ॥ २७ ॥

ननु पादद्वयेन लोकतोऽन्यत्रप्रसिद्ध(नामलिङ्गात्मक)वैश्वानरान्तशब्दसमन्वय उक्तः । स च समन्वयो लक्षणयैव वक्तव्यः, न तु मुख्यवृत्त्या, तथा हि- उक्तरीत्या (योगादिना) वैश्वानरादि-शब्दानाम् अग्निदेवतादिवाचित्वाभावे लोकप्रसिद्धिविरोधः । लोके उक्ताग्न्यादिशब्दानाम् अग्न्यादि-देवतादिषु प्रसिद्धत्वात्, प्रसिद्धौ च तत्तद्वाचकत्वं विना कारणान्तराभावेन तत्तच्छब्दानां प्रसिद्ध्यन्यथाऽनुपपत्त्या च अग्निदेवतादीनां तत्तच्छब्दवाच्यत्वं स्वीकरणीयम् । ततश्च स्ववाच्याग्नि-देवतादिसम्बन्धेन लक्षणयैव विष्णुबोधकत्वम्, ततश्च तत्तच्छब्दसमन्वयो लक्षणयैवेति प्राप्तम्, इति शङ्कापरिहाराय सूत्रम्-

**(मुख्यवृत्त्याऽऽग्न्यादिशब्दाः विष्णुवाचका अपि देवतासु अज्ञैर्व्यवह्रियन्ते)**

## (२०) ॥ ॐ साक्षादप्यविरोधं जैमिनिः ॐ ॥ २८ ॥

(२०)ॐ **साक्षादप्यविरोधमिति** ॥ तत्तु, वैश्वानरः, इति 'अत एव न देवताभूतम्' इति वर्तते । यथायथमावृत्तिविपरिणामौ । वैश्वानरशब्दस्य स्वरूपपरत्वम्, उपलक्षणत्वं चाङ्गीकर्तव्यम् । व्यवहरन्ति वक्तीति शेषः । अयमर्थः- वैश्वानरः= वैश्वानरादयः शब्दा न देवताभूतं= नाग्न्यादिदेवताभूताग्न्यादि-वाचकाः अपि= तथाऽपि साक्षादेव= वाच्यान्तरधीव्यवहितलक्षणादिकं विना मुख्यवृत्त्यैव, तैः ब्रह्म-वाचकैः वैश्वानरैः= वैश्वानरादिभिः शब्दैः ते ज्ञानिनः अत एव= हानोपादानार्थमेव, ते अज्ञाः अत एव= मुख्यवृत्त्या भगवद्वाचकत्वाज्ञानादेव देवतासु= अग्निदेवतादिषु (विषये) व्यवहरन्ति, इति= इत्यभ्युपगमेन अविरोधं=वैश्वानरादिशब्दीयलौकिकप्रसिद्धिविरोधपरिहारं वक्ति जैमिन्याचार्य इति ॥

**(२१) नाग्न्यादयः शब्दा अग्न्यादिवाचकास्तथापि साक्षादेवानन्ययोगेन ब्रह्म-वाचकैश्शब्दैः व्यवहारार्थमनभिज्ञानाद्वान्यत्र व्यवहरन्तीत्यभ्युपगमेऽ-विरोधं जैमिनिर्वक्ति ।**

(२१) सूत्रार्थमाहुः- **नाग्न्यादय इति** ॥ वैश्वानरादय इत्यर्थः । आदिपदं पूर्वपादे निर्णीत-प्राणादिशब्दग्राहकम् । तथाऽपीत्युक्त्या यद्यपीति लभ्यते । यद्यपि न वाचका इत्यन्वयः । ज्ञानिनः तदन्ये इति शेषः । साक्षादेवेत्यस्य विवरणम्- **अनन्ययोगेनेति** ॥ वाच्यान्तरसम्बन्धाभावेनैवेति तदर्थः । लक्षणां विना मुख्यवृत्त्यैवेति यावत् । शब्दैः= वैश्वानरादिशब्दैः । व्यवहारार्थं= हानोपादानसिद्ध्यर्थम् । ज्ञानिनः= पण्डिताः व्यवहरन्तीत्यन्वयः । तदन्ये= अज्ञाः । अनभिज्ञानाच्च= मुख्यवृत्त्या भगवद्वाचकत्वाज्ञानादेव । अन्यत्र= अग्न्यादौ (विषये) व्यवहरन्ति ॥

**अभ्युपगम इति** ॥ निमित्तसप्तमी एषा । अभ्युपगमादित्यर्थः । अविरोधं= प्रसिद्धिविरोधा-भावम् । **वक्तीति** ॥ तथा च लौकिकप्रसिद्धिः अज्ञानादिमूलिका, अतो न तद्विरोध इति भावः । उभयत्र प्रसिद्धशब्दानां तु भगवति लक्षणाप्रसक्तिरेव न । भगवत्यपि तेषां शक्तत्वात् इति । (तात्पर्येण उपस्थितत्वेन च) पादद्वयान्त एवायं विचारः कृत इति ध्येयम् ॥

**(२२) 'व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित् ।**
**अन्ये व्यवहरन्त्येतान्यूरीकृत्य गृहादिवत् ॥'**
**इति स्कान्दवचनान्न मतानां परस्परविरोधः ॥ २८ ॥**

(२२) ननु जैमिन्यादिमतानां स्वमताविरुद्धत्वे जैमिन्यादिग्रहणं व्यर्थम् । विरुद्धत्वे कथं विरुद्ध-राद्धान्तेन (लक्षणयैव समन्वय इति) प्राप्तशङ्कापरिहारः क्रियते ? इत्यत आहुः- **व्यासचित्तेति** ॥ तथा च जैमिन्यादिमतानां स्वमतत्वेऽपि शिष्यप्रसिद्ध्यर्थं तेषां नामनिर्देशः (सूत्रे) इति बोध्यम् । **न मतानामिति** ॥ एकस्य मतस्य मतान्तरोपमर्दकत्वाभावात् **मतानां**= सूत्रोक्तानां मतानां परस्परं न विरोध इत्यर्थः ॥ २८ ॥

(२२) **व्यासचित्तेति** ॥ **अन्ये**= जैमिन्यादयः **व्यासचित्तस्थिताकाशात्**= व्यासचित्त-स्थितानेकविषयविशिष्टज्ञानाख्याऽकाशात्, **अवच्छिन्नानि**= परिमितानि, **कानिचित्**= कतिपयानि, मतानि **ऊरीकृत्य**= पृथक्करणपूर्वकं स्वीकृत्य, **गृहादिवत्**= भित्याद्यवच्छिन्नपरिमिताऽकाश-रूपगृहादीनीव **व्यवहरन्ति**= इदं मदीयं मतमिति वर्णयन्तीत्यर्थः । यथा भित्याद्यवच्छिन्नमाकाशं स्वीकृत्य मदीयं गृहमिति व्यवहरन्ति, तथा एतेऽपि एकदेशमादाय स्वमतत्वेन वर्णयन्तीति भावः ॥ २८-३० ॥

ननु लौकिकप्रसिद्धेः अज्ञानमूलकत्वेनाऽन्यथोपपत्तावपि वैदिकाग्निसूक्तादिवैश्वानरविद्येत्यादि-प्रसिद्धिविरोधः स्यादेव । तत्राज्ञानादिकल्पनाऽयोगात्, अनादित्वाद् वेदस्य ज्ञानिव्यवहार-

कल्पनाऽयोगाच्च । तथा च तदन्यथाऽनुपपत्त्या अग्न्यादीनाम् अग्न्यादिविद्याप्रसिद्धत्वं सिद्धम् । न चाग्न्यादीनाम् अप्रतिपाद्यत्वेऽपि तत्तच्छब्दघटितत्वमात्रेण तत्तत्सूक्तव्यवहार इति वाच्यम् । तथा सति लक्ष्मीसूक्ते लक्ष्मीशब्दाभावेन, अम्भ्रिणीशब्दाभावेन च, लक्ष्मीसूक्तम् अम्भ्रिणीसूक्तमिति व्यवहारानापत्तेः । घर्मसूक्ते तु गत्यन्तराभावात् घर्मशब्दघटितत्वमात्रेण घर्मसूक्तमिति व्यवहाराङ्गीकाराद् इति शङ्कापरिहाराय सूत्रम्-

**(अग्न्यादौ विष्णोरभिव्यक्तिरेवाग्निसूक्तादिव्यवहारनियामिका)**

## (२३) ॥ ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ ॥ २९ ॥

(२३) **ॐ अभिव्यक्तेरिति ॥** वैश्वानरः, तत्तु, अतः वक्तीति वर्तते । यथायथमावृत्तिविपरिणामौ । **अयमर्थः**- तस्य वैश्वानरविद्यया विष्णूपासकस्य, अतः= अनुग्रहार्थम्, वैश्वानरे अग्न्यादौ, तस्य विष्णोः **अभिव्यक्तेः**= स्वेच्छया प्रकाशादेव, वैश्वानरम्= अग्निसूक्तादिनियमं वक्ति **आश्मरथ्याचार्यः** इति ॥ एवं चाग्न्यादौ अभिव्यक्तिरेव अग्निसूक्तादिव्यवहारनियामिका इति ज्ञेयम् ॥

## (२४) तत्र तत्र प्रसिद्धावप्यग्न्यादिषु ब्रह्मणोऽभिव्यक्तेरग्न्यादिसूक्तनियम इत्याश्मरथ्यः ॥ २९ ॥

(२४) सूत्रतात्पर्यार्थमाहुः- **तत्र तत्र प्रसिद्धावपीति ॥** तत्र तत्र अग्न्यादिसूक्तादौ ब्रह्मणः प्रतिपाद्यत्वेन निर्णयेऽपीत्यर्थः । **अभिव्यक्तेरिति ॥** अग्न्यादिसूक्तोक्तप्रकारेण उपासकस्य प्रसादार्थं (उपासकमनुग्रहीतुमिति यावत्) स्वेच्छया अग्न्यादावभिव्यक्तेरित्यर्थः ॥ **आश्मरथ्य इति ॥** वक्तीति शेषः ॥ २९ ॥

**(तत्तत्सूक्तादिभिः अग्न्यादिष्वेव ब्रह्मणोऽनुसन्धानात् तत्तत्सूक्तव्यवहारः)**

## (२५) ॥ ॐ अनुस्मृतेर्बादरिः ॐ ॥ ३० ॥

(२५) प्रकारान्तरेण सूक्तादिव्यवस्थार्थं सूत्रम्- **ॐ अनुस्मृतेरिति ॥** वैश्वानरः, तत्तु, वक्ति, इति वर्तते । यथायथमावृत्तिविपरिणामौ । **अयमर्थः**- वैश्वानरे तु= अग्न्यादावेव तस्य= विष्णोः, **अनुस्मृतेः**= अग्निसूक्तादिभिः उपासकैः अनुसन्धेयत्वात्, वैश्वानरम् अग्निसूक्तादिव्यवस्थां वक्ति- **बादरिः** आचार्य इति ॥

## (२६) तत्र तत्रोक्तस्य विष्णोरग्न्यादिष्वनुस्मर्यमाणत्वात्तन्नियम इति बादरिः ॥

(२६) सूत्रार्थमाहुः - **तत्र तत्रोक्तस्येति** ॥ अग्निसूक्तादावुक्तस्येत्यर्थः **अग्न्यादिषु** = अग्न्यादिष्वेव । **अनुस्मर्यमाणत्वात्**= तत्तत्सूक्तोक्तप्रकारेण उपासकैरनुसन्धेयत्वात् । **तन्नियमः**= अग्निसूक्तादिव्यवस्था । **बादरिरिति** ॥ वक्तीति शेषः ॥ ३० ॥

**(अग्न्यादिसूक्तोपासकानामग्न्यादिप्राप्तेरग्निसूक्तादिव्यवस्थेति जैमिनिः)**

## (२७) ॥ ॐ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॐ ॥ ३१ ॥

(२७) लौकिकप्रसिद्धिविषये प्रकारान्तरेण उपपत्तिं वदन्नेव जैमिनिः वैदिकसूक्तादिविषये रीत्यन्तरेण व्यवस्थामाह इति सूत्रकार आह- **ॐ सम्पत्तेरिति** ॥

तत्, वैश्वानरः, वक्ति, इति वर्तते । यथायथमावृत्तिविपरिणामौ । श्रुतिरिति शेषः । अयमर्थः- हि= यतः, श्रुतिः= 'तं यथायथोपासते तदेव भवति' इति श्रुतिः । **तथा** (अग्न्यादिस्थत्वेनोपास्तौ अग्न्यादिप्राप्तिर्भवतीति) **दर्शयति** । अतः **तस्य**= अग्न्यादिसूक्तेन विष्णूपासकस्य **सम्पत्तेः**= उपस्थिताग्न्यादिप्राप्तिरूपहेतुना, वैश्वानरः अग्निसूक्तादिव्यवस्था **इति जैमिनिः** वक्ति इति ॥

## (२८) साक्षादप्यविरोधं वदन् जैमिनिः सूक्तादिनियममग्न्यादिसम्प्राप्त्या मन्यते ।
## (२९) 'तं यथा यथोपासते तदेव भवति' इति दर्शयति ॥ ३१ ॥

(२८-२९) सूत्रतात्पर्यमाहुः- **साक्षादप्यविरोधेति** ॥ पूर्वोक्तजैमिन्यपेक्षयाऽयं जैमिनिरन्य इति शङ्कां वारयितुम्- साक्षादित्याद्युक्तम् । **सूक्तादीति** ॥ अग्निसूक्तादीत्यर्थः । आदिना- ऐन्द्री ऋक्, आग्नेयी ऋगित्यादेर्ग्रहः । **अग्न्यादिसम्प्राप्त्येति** ॥ अग्निसूक्तादिना विष्णूपासकस्य अग्न्यादिसम्प्राप्त्येत्यर्थः । अग्न्यादौ विष्णूपास्तौ अग्न्यादिप्राप्तिः भवतीत्यत्र 'दर्शयति' इति सूत्रसूचितां श्रुतिमाहुः- **तं यथा-यथेति** ॥ **इतीति** ॥ इति श्रुतिः यतो दर्शयति, अतः अग्न्यादिसम्प्राप्त्येत्यन्वयः ॥ ३१ ॥

(२९) **तं यथायथेति** ॥ तं= परमात्मानम्, **यथा यथा**= येन येन प्रकारेण अधिकारिणः **उपासते, तदेव रूपं** भवति=प्राप्नुवन्तीत्यर्थः ॥ अत्र कल्पे- भवतीत्यत्र छान्दसत्वात् झः अदादेश इति बोध्यम् । अथवा- ये अधिकारिण **उपासते**, तेषां तदेव रूपं भवतीत्यर्थः । प्राप्नुवन्तीति तु - अभिप्रायकथनमित्यवगन्तव्यम् । अथवा- **यः** अधिकारी, **तं** परमात्मानं **यथा** येन प्रकारेण **उपासते**, सः अधिकारी **तदेव**= तथैव= तत्प्रकारेणैव भवतीत्यर्थः । अत्र पक्षे **उपासते** इति - 'अस= गतिदीप्त्यादानेषु' इति भौवादिकस्य गत्यर्थकस्य एकवचनान्ते रूपमिति बोध्यम् ॥ ३१ ॥

(अग्न्यादिस्थितविष्णूपासनया तत्प्राप्तेः सूक्तादिव्यवस्थोपपन्ना)

**(३०) न ह्यन्योपासकोऽन्यं प्राप्नुत इति युज्यत इत्यत आह–**

**॥ ॐ आमनन्ति चैनमस्मिन् ॐ ॥ ३२ ॥**

(३०) सूत्रमवतारयन्ति- **न हीति ॥ हि**= यतः 'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि' (गी. ७.२३) इत्यादिस्मृत्या, **अन्योपासकः अन्यं न प्राप्नुते**= न प्राप्नोति । अतः **अन्योपासकः**= विष्णूपासकः, **अन्यं**= अग्निं प्राप्नोतीति पूर्वोक्तं न युज्यत इत्यत आहेत्यर्थः । अत्र पदानाम् आवृत्तिर्बोध्या ॥

**ॐ आमनन्तीति ॥** चशब्दः सम्पत्तिसमुच्चयविधया शङ्काव्यावर्तकः । तत्तु, वैश्वानरः, सम्पत्तेः, इति वर्तते । यथायोग्यमावृत्तिविपरिणामौ । श्रुतयः, स्थितस्य, इति शेषः । **अयमर्थः**- च= यतः, श्रुतयः= 'योऽग्नौ तिष्ठन्' इति, 'य एष एतस्मिन्नग्नौ' इत्यादयः श्रुतयः, **एनं**= विष्णुम्, अस्मिन्= अग्न्यादौ, **आमनन्ति** अतः, तस्य= वैश्वानरे स्थितस्य (विष्णोः) सम्पत्तेः= अग्निसूक्तादिना विष्णूपासकस्य अग्न्याद्यन्तर्यामिविष्णुप्राप्तेः हेतुतः, वैश्वानरः अग्न्यादिसूक्तव्यवस्था उपपद्यत इति ॥

तथा चाग्न्यादिसम्पत्तेरित्यनेन तत्तदन्तर्यामिभगवत्प्राप्तेरेव विवक्षितत्वेन अन्योपासकः अन्यं न प्राप्नोतीति शङ्का न कार्येति भावः । सूक्तादिव्यवस्था च उक्तदिशा बोध्या ॥

**(३१) एनं विष्णुमस्मिन्नग्न्यादावामनन्ति । 'योऽग्नौ तिष्ठन्' (बृ.उ. ५-७-५) । 'य एष एतस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषः' (बृ.उ. ४-५-३) इत्यादिना ॥ ३२ ॥**

**॥ इति वैश्वानराधिकरणम् ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य द्वितीयः पादः ॥**

(३१) सौत्रपदानि व्याचक्षते- **एनमित्यादि ॥** परमात्मनः अग्निस्थत्वे श्रुतिमाहुः-**योऽग्नावित्यादि ॥ इत्यादिनेति ॥** अभेदे तृतीया । श्रुतय इति शेषः । इत्याद्यभिन्नश्रुतयः आमनन्तीत्यन्वयः ।

यद्वा- इत्यादिना वाक्येन आमनन्ति वेदपुरुषा इत्यर्थः । अत्र पक्षे सूत्रार्थे श्रुतय इति स्थाने श्रुत्या वेदपुरुषा इति योज्यम् ॥ ३२ ॥

**॥ इति वैश्वानराधिकरणम् ॥ ७ ॥**

**॥ इति श्रीमदार्याचार्यकुलावतंसेन, वैयाकरणकेसरी, महामहोपाध्याय इत्यादिविरुदभाजा श्रीमुष्णं सुब्बरायाचार्याभिधेन विद्वद्वरेण विरचितायां श्रीमद्भाष्यार्थसहितसूत्रार्थमणिमञ्जर्यां प्रथमाध्यायस्य लिङ्गसमन्वयः द्वितीयः पादः ॥**

**(३१) योऽग्नाविति ॥ (बृ. ५.७.५) यः अग्नौ**= अग्निमानिनि तिष्ठन्नित्यर्थः । यः पृथिव्याम् इत्यादेरिव शिष्टं योजनीयम् । **य एष इति ॥ (बृ. ४.५.३) तेजोमयः**= तेजोरूपः, **अमृतमयः**= नित्यात्मा **पुरुषः अग्नौ**= तदभिमानिनि वर्तत इत्यर्थः । शिष्टं स्पष्टम् ॥

भाष्ये- 'य एष एतस्मिन्' इति, 'यश्चायमस्मिन्' इति बृहदारण्यकस्थस्य अर्थतोऽनुवादः ॥ ३२ ॥

॥ इति **वैश्वानराधिकरणम्** ॥ ७ ॥

**॥ इति ब्रह्मसूत्रभाष्यव्याख्यायां प्रथमाध्यायस्य द्वितीयपादे श्रीमुष्णं सुब्बरायाचार्यविरचिता व्याख्या समाप्ता ॥**

## ॥ अथ प्रथमाध्यायस्य तृतीयः पादः ॥

## १. द्युभ्वाद्यायतनत्वाधिकरणम्

(प्रथमाध्यायतृतीयपादे उभयत्रप्रसिद्धशब्दसमन्वयः)

**(१) तत्र चान्यत्र च प्रसिद्धानां शब्दानां विष्णौ समन्वयं प्रायेणास्मिन् पादे दर्शयति। विष्णोः परविद्याविषयत्वमुक्तम्।**

(१) एतत्पादप्रतिपाद्यार्थं दर्शयन्ति- **तत्र चेति** ॥ परमात्मनीत्यर्थः। अन्यत्र च = भगवदितरत्र चेत्यर्थः। परस्परसमुच्चये चशब्दौ। **प्रसिद्धानामिति** ॥ उभयपरत्वेन संभावितानामित्यर्थः। तथा च तत्तच्छब्दप्रवृत्तिनिमित्तवत्वेन उभयत्र प्रयुक्तानामिति फलितं बोध्यम्। **शब्दानामिति** ॥ नामलिङ्गात्मकशब्दानामित्यर्थः। नाम च प्रातिपदिकं, तच्च रूढं, यौगिकं(वा)चेत्युभयविधमपि गृह्यते। लिङ्गात्मकशब्दस्तु वाक्यरूपः। समन्वयं - विशेषतो मुख्यवृत्त्या भगवद्वाचित्वमित्यर्थः। देवताद्यधिकरण (१.३.८ अ.) व्यावृत्यर्थं - **प्रायेणेति** ॥

अत्र नये विष्णौ रुद्रादौ चेत्युभयत्र श्रुत्यादिना प्रसिद्धद्युभ्वाद्यायतनत्वलिङ्गस्य भगवति समन्वयः। (७ सूत्रा. अधि.)

**परविद्याविषयत्वमिति** ॥ मोक्षकारण-ज्ञान (जनक 'द्वे विद्ये' इत्यादिपरविद्या) विषयत्वमित्यर्थः। यदिति शेषः। **उक्तम्** = अदृश्यत्वनये (१.२.६) 'द्वे विद्ये वेदितव्ये' इत्यादिना उक्तमित्यर्थः। अनेन - श्रुत्या, अदृश्यत्व (१.२.६) नयेन च, सङ्गतिर्दर्शिता।

**(२) तत्र 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथ आत्मानम्' (मु.उ. २-२-५) इत्यत्र ......**

(२) **तत्र** = तादृशपरविद्याविषयत्वप्रतिपादके, अस्याभेदसम्बन्धेन 'इत्यत्र' इत्यनेनाऽन्वयः। विषयवाक्यमाहुः- **यस्मिन्निति** ॥ **इत्यत्र**= इत्यादिवाक्ये, द्युभ्वाद्यायतनस्य कस्यचित् तत् परविद्याविषयत्वं प्रतीयते। अनेन द्युभ्वाद्यायतनत्वं विषयः। विष्णोः ? अन्यस्य वा ? इति सन्देहः, इति सूचितम्। संशयबीजं तु- 'विष्णावेव ओतश्च प्रोतश्च' इति हरेस्सर्वाधारत्वोक्तिः, 'रुद्रो वाव' इति रुद्रादेर्लोकाधारत्वश्रवणं चेति बोध्यम्।

(२) **यस्मिन्निति** ॥ (आ.२.२.५) 'अमृतस्यैष सेतुः' इत्युत्तरवाक्यम् । अयमर्थः- **यस्मिन्**= परमात्मनि, **द्यौः पृथिवी अन्तरिक्षं च मनः**= तदभिमानी, **सर्वैः प्राणैः**= इन्द्रियैः, तदभिमानिभिश्च सह **ओतं**= प्रविष्टम् इति ॥ **तमेवेत्यादि** ॥ व्याख्यातम् ।

**(३) 'प्राणानां ग्रन्थिरसि रुद्रो माऽऽविशान्तकः' (म.ना.उ.३५), 'प्राणेश्वरः कृत्तिवासाः पिनाकी'(घृतसूक्त) इत्यादिना रुद्रस्य प्राणाधारत्वप्रतीतेः । 'स एषोऽन्तश्चरते बहुधा जायमानः' (मुं.उ. २-२-६) इति जीवलिङ्गाच्च तयोः प्राप्तिरित्यत उच्यते**

**(३) पूर्वपक्षप्रापकश्रुतीराहुः - प्राणानामित्यादि पिनाकीत्यादिनेति ॥ आदिना 'यो ब्रह्मा ब्रह्मण उज्जभार' इत्यादिसम्पूर्णमन्त्रसङ्ग्रहः । तयोः = रुद्रजीवयोः । इदमुपलक्षणं प्रधानवाय्वोरपि । प्राप्तिः= 'यस्मिन् द्यौः' इति वाक्यप्रतिपाद्य-द्युभ्वाद्यायतनत्वप्राप्तिः । एतेन द्युभ्वाद्यायतनत्वं रुद्रादेरेव, न विष्णोः द्युभ्वाद्यायतनत्वसहचरितप्राणाधारत्वस्य रुद्रे श्रवणात्- 'रुद्रो वाव लोकाधारः' इति द्युभ्वाद्यायतनत्वश्रवणाच्च, इति पूर्वपक्षस्सूचितः । तथा च द्युभ्वाद्यायतनत्वस्य अन्यनिष्ठत्वेन परविद्याविषयोऽपि अन्य एव स्यादिति भावः ।**

(३) **प्राणानामिति** ॥ **(महा. ना. उ. ३५)** 'तेनान्नेनाऽप्यायस्व' इत्युत्तरवाक्यम् । रुद्र उ इति पदच्छेदः । अयमर्थः - **उ रुद्र**= हे रुद्र त्वं **प्राणानां ग्रन्थिः**= इन्द्रियाणां आश्रयः **असि, अन्तकः**= संहर्ता चासि । **मा**= माम्, **आविश**= प्रवेशय, मयि सन्निधिं कुरु **तेन**= आहुतिरूपेण दत्तेन अन्नेन, **मा आप्यायस्व**= मां सुखय इति ॥ **प्राणेश्वर इति** ॥ **'यो ब्रह्मा ब्रह्मण उज्जभार प्राणेश्वरः कृत्तिवासाः पिनाकी ईशानो देवस्स नः आयुर्दधातु'** इति (घृतसूक्ते) । अयमर्थः- **यः, ब्रह्मणे**= चतुर्मुखाय, **ब्रह्मा**= वेदान् **उज्जभार**= उज्जहार, **सः प्राणेश्वरः**= इन्द्रियेशः, **कृत्तिवासाः**= चर्मवसनः, **पिनाकी** ईशानः, **नः आयुः दधातु इति** ॥ **स एष इति (आ.२.२.६)** अस्य पूर्ववाक्यम्- **'अरा इव रथनाभौ संहता यत्र नाड्यः'** इति अयमर्थः - **यत्र**= देहे, **नाड्यः, रथनाभौ अरा इव, संहताः**= आश्रिताः, तत्र देहे अन्तः सञ्चरते स एष जीवः, **बहुधा**= बहुशरीरेण, **जायमानः**= उत्पद्यमान इति ॥ पूर्वपक्षेऽयमर्थः । **सिद्धान्ते तु** - प्राणानामित्यादौ रुद्रादिपदानां योगादिना विष्णुरित्यर्थः । 'यस्मिन्' इति श्रुतेः उभयोरपि पक्षे एक एवार्थः । परन्तु - पूर्वपक्षे विष्ण्वन्यपरा सा श्रुतिरिति बोध्यम् ॥

(श्रुत्युक्तद्युभ्वाद्याश्रयः विष्णुरेव, आत्मशब्दात्)

## (४) ॥ ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ ॥ १ ॥

(४) **ॐ द्युभ्वाद्यायतनमिति ॥** द्यौश्च भूश्च = द्युभुवौ, ते आदी येषां ते- द्युभ्वादयः, तेषां आयतनम् । स्वपदं स्वरूपपरं, स्वस्य शब्दात् इति विग्रहः । षष्ठ्यर्थसंबन्धश्च पर्यायत्वरूपः । तथा च- स्वशब्दपर्यायाऽत्मशब्दादिति सिद्धम् । तत्तु इति वर्तते । तदित्यावर्त्य सप्तम्या च विपरिणम्यते । अयमर्थः- **द्युभ्वाद्यायतनं=** 'यस्मिन् द्यौः' इति श्रुत्युक्तद्युभ्वाद्याश्रयः, तत्तु- विष्णुरेव, **स्वशब्दात्=** तत्र श्रुतौ 'तमेवैकं जानथ आत्मानं' इति आत्मशब्दश्रवणात् इति ॥

ननु स्वं= ब्रह्म, तस्य शब्दः= तद्वाचकाऽत्मशब्दः, तस्मादिति व्युत्पत्या 'आत्मशब्दात्' इति हेतुलाभेन निर्वाहे पर्यायेत्यर्थकरणं कुत इति चेत् - उच्यते - शब्दादेव प्रमित (१.३.२४) इत्यादाविव 'शब्दात्' इत्येव सिद्धौ स्वशब्दोपादानं व्यर्थं स्यादिति तथाऽ(पर्यायेत्य)र्थकरणमिति ॥ आत्मशब्दात् इत्येव वक्तव्ये एवमुक्तिस्तु सूत्रस्य अल्पाक्षरत्वानुरोधादिति अन्ये ॥

केचित्तु- स्वस्य शब्दः= स्वशब्दः, वाचकत्वं षष्ठ्यर्थः, स्ववाचकशब्दादित्यर्थः । तथा च आत्मशब्दादिति लभ्यते । पर्यायेत्यादि तु आर्थिकार्थकथनपरम् । न चैवं आत्मशब्दादित्येवालमिति वाच्यम् । असाधारणोऽयमात्मशब्दो भगवति, इति सूचनाय स्वशब्देत्याद्यभिधानात् । अत एव तच्छब्दात्, शब्दादित्यादिनोक्तं सूत्रकृता, इति वदन्ति ।

**(५) 'तमेवैकं जानथ आत्मानम्' (मुं.उ. २-२-५) इत्यात्मशब्दात् द्युभ्वाद्याश्रयो विष्णुरेव ।**

**'आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् ।**
**न सम्भवन्ति यस्मात्तैर्नैवाप्ता गुणपूर्णता ॥' इति ब्रह्मवैवर्ते ॥**

(५)श्रुत्युपन्यासपूर्वं सूत्रार्थमाहुः- **तमेवेति ॥** आत्मशब्देन कथमत्र द्युभ्वाद्यायतनस्य विष्णुत्वनिर्णयः ? इत्यत आहुः- **आत्मेति ॥ ब्रह्मवैवर्त इति ॥** तद्वाचकत्वेन उक्तादिति शेषः । अस्य 'आत्मशब्दात्' इत्यत्र अभेदेनाऽन्वयः ॥ १ ॥

(५) **तमेवेति ॥** व्या. (पृ. ७५) । **आत्मेति ॥ आत्मब्रह्मादयः शब्दाः, अव्ययं=** नित्यनिरतिशयतत्तत्प्रवृत्तिनिमित्तवन्तं, **तं विष्णुं, ऋते=** विना तदन्यमिति यावत् । **न सम्भवन्ति=** मुख्यतो

वाचकत्वेन न प्राप्नुवन्ति, **यस्मात् तैः**= चतुर्मुखादिभिः, **गुणपूर्णता नैवाप्ता,** अतः, इति पूर्वेणान्वयः इत्यर्थः ॥ १ ॥

**(मुक्तप्राप्यत्वोक्तेः विष्णुरेव द्युभ्वाद्याश्रयः)**

## (६) ॥ ॐ मुक्तोपसृप्यव्यपदेशात् ॐ ॥ २ ॥

(६) ननु आत्मशब्दः जायमानत्वजीवलिङ्गबलात् जीवपरः किं न स्यात् ? इति शङ्कावारणाय सूत्रम्- **ॐ मुक्तोपसृप्येति ॥** उपसृप्येति भावप्रधानम् । द्युभ्वाद्यायतनं, तत्तु, इति वर्तते । तदित्यस्य आवृत्तिः । षष्ठ्या विपरिणामश्च (मुक्तैः उपसृप्य इति कर्तृतृतीयासमासः) **अयमर्थः**- द्युभ्वाद्यायतनं तत्तु विष्णुरेव, **मुक्तोपसृप्यव्यपदेशात्**= 'अमृतस्यैष सेतुः' इति श्रुतौ (तस्य विष्णोः) मुक्तप्राप्यत्वोक्तेरिति ॥

**(७) 'अमृतस्यैष सेतुः'(मुं.उ. २-२-५) इति 'ब्रह्मविदाप्नोति परम्'(तै.उ.२-१) 'नारायणं महाज्ञेयं विश्वात्मानं परायणम्' (म.ना.उ. ११) 'मुक्तानां परमा गतिः' (विष्णुसहस्रनाम्नि स्तोत्रे) 'एतमानन्दमयमात्मानमुपसङ्क्रामति' (तै.उ. २-८) इत्यादिना तस्यैव मुक्तप्राप्यत्वव्यपदेशात् ।**

**(८) 'बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ।**
**योगी तावन्न मुक्तस्स्यादेष शास्त्रस्य निर्णयः ॥' इत्यादित्यपुराणे ॥ २ ॥**

(७-८) मुक्तोपसृप्यत्वबोधकश्रुतिमाहुः- **अमृतस्येति ॥ इतीति ॥** इत्यत्रेत्यर्थः । मुक्तप्राप्यत्वस्य विष्णुलिङ्गत्वे मानमाहुः- **ब्रह्मविदेत्यादि ॥ मुक्तप्राप्यत्वव्यपदेशादिति ॥** मुक्तप्राप्यत्वेति लुप्तषष्ठ्यन्तं पृथक्पदम् । मुक्तैः प्राप्यत्वस्येत्यर्थः । उक्तस्येति शेषः । अन्यस्यापि मुक्तप्राप्यत्वं किं न स्यात् ? इत्यत आहुः - **बहुनेति ॥ इत्यादिना= आदित्यपुराणे** इति वचनेन, **तस्यैव**= विष्णोरेव, विष्णुसम्बन्धित्वेनैवेति यावत् । **उक्तस्य**= मुक्तप्राप्यत्वस्य, 'अमृतस्यैष सेतुः' इत्यत्र, **व्यपदेशात्**= उक्तत्वात्, द्युभ्वाद्याश्रयो विष्णुरेवेति पूर्वभाष्येऽन्वयः । तथा च सूत्रार्थोऽपि भाष्यकारैरुक्तप्राय इति बोध्यम् ॥ २ ॥

(७) अमृतस्येति ॥ (आ. २.२.५) ब्रह्मविदिति ॥ (तै.२.१) **ब्रह्मवित्**= ब्रह्मज्ञानी मुक्तस्सन् **परं**= ब्रह्म प्राप्नोतीत्यर्थः । नारायणमिति ॥ (महाना. उ. ११) 'तद्विश्वमुपजीवति' इति वर्तते । अयमर्थः-

तत् **विश्वं**= जगत्, **महाज्ञेयं**= महनीयं ज्ञेयं, पूज्यं ज्ञेयं वा **विश्वात्मानं**= विश्वस्वामिनं, **परायणं**= मुक्ताश्रयं उपजीवतीति ॥ **मुक्तानामिति** ॥(सहस्रनाम्नि) **परमागतिः**= मुख्याश्रय इत्यर्थः । **एतमिति** ॥ (तै.उ.२.२१) (व्याख्यातम्, पृ. १०७) आदिना 'परमं यः परायणम्', 'एतमानन्द-मयमुपसङ्क्रम्य' इत्यादेः सङ्ग्रहः ।

(८) **बहुनेति** ॥ **अत्र**= मोक्षसाधनविषये, **बहुना उक्तेन**= इदं साधनं, इदं साधनमिति प्रत्येकं कथनेन, **किं**= किं प्रयोजनं, न किमपि **श्वेतद्वीपं यावन्न गच्छति**= न प्राप्नोति (न प्राप्स्यति) तत्रस्थं विष्णुं न पश्यति (न द्रक्ष्यति) **योगी**= अपरोक्षज्ञानरूपोपायवान्, **तावत् मुक्तो** न भवति, सम्यगाविर्भूता(तत्स्वरूपा)ऽनन्दवान् **न भवति**= न भविष्यति । **एषः**= उपदेशः **शास्त्रस्य विनिर्णयः**= शास्त्रजन्यतत्त्वविषयकनिर्णयसाधनम् ॥ यद्वा- **एषः**= अर्थः, **शास्त्रस्य निर्णयः**= शास्त्रनिश्चितः ॥ २ ॥

**(न रुद्र-प्रधाने द्युभ्वाद्यायतने)**

## (९) ॥ ॐ नानुमानमतच्छब्दात् ॐ ॥ ३ ॥

**(९) रुद्रप्रधानयोः द्युभ्वाद्यायतनत्ववारणाय सूत्रम् - ॐ नाऽनुमानमिति ॥ द्युभ्वाद्यायतनं इति वर्तते । तच्च आवर्त्य सप्तम्या च विपरिणम्यते । अयमर्थः - द्युभ्वाद्यायतनं आनुमानं= अनुमान-सिद्धप्रामाण्यकत्वेन पराभिमत-पाशुपताद्यागमसिद्ध-रुद्र-प्रधाने, न भवतः, अतच्छब्दात्= तत्प्रकरणे (द्युभ्वाद्यायतनप्रकरणे) रुद्रप्रधानासाधारणशब्दाभावात् इति ॥**

## (१०) नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्यः । भस्मधरोग्रत्वादि-तच्छब्दाभावात् ।

**(१०) सूत्रार्थमाहुः- नानुमानात्मेत्यादिना ॥ अनुमानं, आत्मा= स्वरूपं यस्य सः, अनुमाना-त्मकः । तत्वं च - अनुमानसिद्धप्रामाण्यकत्वेन पराभिमतत्वम् । आगमपरिकल्पित इति ॥ तादृशागमजन्यसर्वाधारत्वप्रकारकभ्रमविषयः । रुद्र इति ॥ प्रधानस्याप्युपलक्षणमिदम् । अत्र= 'यस्मिन् द्यौः' इति श्रुतौ । वाच्यः= द्युभ्वाद्यायतनत्वेन प्रतिपाद्यो न, इति सम्बन्धः । हेत्वंशं व्याचक्षते- भस्मधरेति ॥ भस्मधरोग्रत्वादिप्रकारक-रुद्रादि-विशेष्यकोट्युपस्थितिजनक-शब्दाभावादित्यर्थः । तथा च- रुद्रादिविषये नामलिङ्गात्मकशब्दाऽभावात् इति यावत् । नामलिङ्गविवेकस्तु बुद्ध्या कार्यः ।**

ननु भस्मधरोग्रादिशब्दाभावादिति वक्तव्ये उग्रत्वादीति कुत उक्तम् ? इति चेत्- उच्यते- रुद्रत्वादिप्रवृत्तिनिमित्तस्य 'रुजं द्रावयते' इत्यादिप्रमाणेन विष्णुनिष्ठत्वसमर्थनवत् भस्मधरत्वादि-प्रवृत्तिनिमित्तस्य विष्णुनिष्ठत्वं न समर्थितम् । अतः तत् रुद्रासाधारणमिति जगत्प्रसिद्धिद्योतनाय तथोक्तम्, इति ॥

**(११) 'सोऽन्तकः स रुद्रः स प्राणभृत्स प्राणनायकः स ईशो यो हरिर्योऽनन्तो यो विष्णुर्यः परः परोवरीयान्' इत्यादिना प्राणग्रन्थिरुद्रत्वादेर्विष्णोरेवोक्त-त्वात् ।**

(११)'प्राणानां ग्रन्थिः' इति श्रुत्यन्तरे प्राणाद्याधारत्वं रुद्रस्योक्तमस्तीत्यत आहुः- **सोऽन्तक इत्यादि ॥ प्राणग्रन्थीति ॥ ग्रन्थिः**=आधारः । **रुद्रत्वादेरिति ॥** त्वप्रत्ययस्य प्रत्येकं सम्बन्धः ॥

(११) **सोऽन्तक इति ॥ यो हरिः**= संहारकत्वादिगुणयोगात् हरिशब्दवाच्यः । **योऽनन्तः**= देशादिपरिच्छेदशून्यत्वात् अनन्तशब्दवाच्यः । **यो विष्णुः**= विष्णुत्वेन प्रसिद्धः । **यः परोवरीयान्** रुद्राद्यपेक्षया उत्तमायाः वाण्याः उत्तमात् वायोः उत्तमात् श्रीतत्वात् उत्तमः, स विष्णुः **अन्तकः**= मारकत्वात् हेतोः, श्रुत्यन्तरस्थान्तकशब्दवाच्यः ! **स रुद्रः**= रोगनिवारकत्वात् रुद्रशब्दवाच्यः, **स प्राणभृत्**= प्राणाधारत्वात् तद्बोधकप्राणग्रन्थिशब्दवाच्यः, **स प्राणनायकः**= प्राणनियमनाद्धेतोः प्राणेश्वरशब्दवाच्यः, **स ईशः**= सर्वोत्तमत्वादीशपदवाच्य इत्यर्थः ॥

**(रुद्रादिशब्दाः विष्णुनिष्ठाः)**

**(१२) ब्रह्माण्डे च–**

**'रुजं द्रावयते यस्माद् रुद्रस्तस्माज्जनार्दनः ।**
**ईशनादेव चेशानो महादेवो महत्त्वतः ॥**
**पिबन्ति ये नरा नाकं मुक्तास्संसारसागरात् ।**
**तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः ॥**
**शिवः सुखात्मकत्वेन शर्वः शंरोधनाद्धरिः ।**
**कृत्यात्मकमिदं देहं यतो वस्ते प्रवर्तयन् ॥**

**कृत्तिवासास्ततो देवो विरिञ्चश्च विरेचनात् ।**
**बृंहणाद्ब्रह्मनामाऽसावैश्वर्यादिन्द्र उच्यते ॥**
**एवं नानाविधैश्शब्दैरेक एव त्रिविक्रमः ।**
**वेदेषु स पुराणेषु गीयते पुरुषोत्तमः ॥' इति ॥**

(१२) रुद्रादिशब्दानां केवलरूढ्या शिवादिपरत्वेऽपि महायोगविद्वद्रूढिभ्यां विष्णुपरत्वमिति स्मृत्या आहुः- **ब्रह्माण्डे च, रुजं द्रावयत इति ॥**

(१२) **रुजमिति** ॥ अयमर्थः । **जनार्दनः**= जनान् अर्दयतीति जनार्दनः विष्णुः, **यस्मात् रुजं**= रोगं (जन्मादिकं) **द्रावयते**= निवर्तयति, **तस्मात् रुद्रः**= रुद्रशब्दवाच्यः, **ईशनादेव**= चतुर्मुखादि-चेष्टकत्वादेव **ईशानः**= तच्छब्दवाच्यः, **महत्वतः**, द्योतनादेश्चेति शेषः, **महादेवः**= महत्वादिमत्वात् महादेवशब्दवाच्यः, **ये नराः**= जनाः **संसारसागरात् मुक्ताः** सन्तः **नाकं**= परमसुखं, **पिबन्ति**= अनुभवन्ति, ते पिनाकाः, **यतो विष्णुः तदाधारः**= तेषां मुक्तानां आधारः, **ततः** कारणात् **पिनाकीति स्मृतः हरिः सुखात्मकत्वेन** हेतुना शिवशब्दवाच्यः, **शं रोधनात्**= संसारे स्वरूपसुखाऽवरकत्वात् शर्वशब्दवाच्यः **देवः**= हरिः **कृत्यात्मकम् इमं देहं**= चर्मात्मकं देहं **प्रवर्तयन्**= सृजन् नियमयन् वा, **वस्ते**= तद्देहेन जीवं स्वञ्च आच्छादयति, ततः कारणात् **कृत्तिवासाः**= तच्छब्दवाच्यः, **विरेचनात्**= जगत्सर्जनात् **विरिञ्चः**= तच्छब्दवाच्यः, **असौ** विष्णुः, **बृंहणात्**= वर्धनात् **ब्रह्मनामा** भवति, **ऐश्वर्यात् इन्द्र उच्यते, नानाविधैः**= अनेकैः **शब्दैः** एक एव **त्रिविक्रमः** उच्यते ॥

**(नारायणादिनामानि ऋते, स्वकीयनामानि विष्णुर्देवानां प्रादात्)**

**(१३) वामने च–**

**'न तु नारायणादीनां नाम्नामन्यत्र सम्भवः ।**
**अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तितः ॥' इति ।**

**स्कान्दे च-**

**'ऋते नारायणादीनि नामानि पुरुषोत्तमः ।**
**प्रदादन्यत्र भगवान् राजेवर्ते स्वकं पुरम् ॥' इति ।**

**'चतुर्मुखश्शतानन्दो ब्रह्मणः पद्मभूरिति ।**
**उग्रो भस्मधरो नग्नः कपालीति शिवस्य च ।**
**विशेषनामानि ददौ स्वकीयान्यपि केशवः ॥' इति (च) ब्राह्मे ॥ ३ ॥**

(१३) नारायणादिपदानामेव रुद्रादिपरत्वं योगेन किं न स्यात् ? इत्यत आहुः- **वामने च, न तु नारायणेति** ॥ ननु विष्णुनामत्वाविशेषात् नारायणादिनाम्नां अन्यत्र वृत्तिः किं न स्यात् इत्यत आहुः- **स्कान्दे च, ऋते नारायणादीनि इति** ॥ नन्वेवं चेत् भस्मधरादितच्छब्दाभावात् इति कथं? इत्यत आहुः- **चतुर्मुख इति** ॥ 'ब्रह्माण्डे च' इत्यादिसप्तम्यन्तचतुष्टयस्य, 'विष्णोरेवोक्तत्वात्' इत्यत्रान्वयः ॥ ३ ॥

(१३) महायोगमुक्त्वा विद्वद्रूढिं चाह- **वेदेष्विति** ॥ **पुरुषोत्तमः**= विष्णुरित्यर्थः । शिष्टं स्पष्टम् । **न त्विति** ॥ **अन्यत्र**= रुद्रादौ, **सम्भवः**= मुख्यतो वाचकत्वम् । **गतिः**= मुख्यवाच्य इत्यर्थः ॥ **अन्यनाम्नां**= रुद्रादिशब्दानाम् । अन्यत् स्पष्टम् । **ऋते इति** ॥ **नारायणादिनामानि ऋते**= विना, अन्यनामानि **अन्यत्र**= रुद्रादिभ्यः प्रादात्, अत्र दृष्टान्तमाह - **राजेति** ॥ **ऋते**= विना, अन्यत् सुगमम् । **चतुर्मुख इति** ॥ **केशवः ब्रह्मणः**= हिरण्यगर्भाय चतुर्मुखादिनामानि ददौ । **शिवस्य**= शिवाय उग्र इत्यादि **विशेषनामानि स्वकीयान्येव** ददावित्यर्थः ॥ ३ ॥

**(उक्तहेतोरेव न जीववायू द्युभ्वाद्यायतने)**

**(१४) ॥ ॐ प्राणभृच्च ॐ ॥ ४ ॥**

**एतैरेव हेतुभिर्न जीवो वायुश्च । 'अजायमानो बहुधा विजायते' (तै.आ. ३-१३-१) इति तस्यैव बहुधा जन्मोक्तेः ॥ ४ ॥**

(१४) जीववाय्वोः द्युभ्वाद्यायतनत्ववारणाय सूत्रम्- **ॐ प्राणभृदिति** ॥ चः पूर्वसूत्रत्रयोक्त-हेतुसमुच्चये, द्युभ्वाद्यायतनं, न, इति वर्तते । अयमर्थः - **प्राणभृत्**= जीवः, वायुश्च, द्युभ्वाद्यायतनं न, आत्मशब्दात् मुक्तोपसृप्यत्वव्यपदेशात् अतच्छब्दात्= (जीवादिवाचकशब्दाभावात्) जीवादि-प्रापक (अजायमानेति) श्रुतेः विष्णुपरत्वाच्च इति ॥

सूत्रार्थमाहुः- **एतैरेव हेतुभिरिति** ॥ आत्मशब्दादिहेतुभिरित्यर्थः । **वायुश्चेति** ॥ 'वाच्य' इत्यनु-वर्तते । ननु द्युभ्वाद्यायतनं जीव एव स्यात्, 'स एष' इति बहुधा जन्मोक्तेरित्यत आहुः- **अजायमान**

**इति ॥ तस्यैव**= विष्णोरेव । **जन्मोक्तेः**= कृष्णादिरूपेण आविर्भावोक्तेरित्यर्थः । एवं च जायमानत्वलिङ्गं सावकाशमिति भावः ॥ ४ ॥

(१४) **अजायमान इति** ॥ (तै.आ.३.१३.१) **अजायमानः**= देहतोऽविकुर्वाणः **बहुधा**= रामकृष्णादिरूपेण **विजायते**= प्रादुरभूदित्यर्थः ॥ ४ ॥

**('अन्यम् ईशम्' इति भेदव्यपदेशात् न जीवब्रह्मणोरैक्यम्)**

**(१५) ॥ ॐ भेदव्यपदेशात् ॐ ॥ ५ ॥**

**न चैक्यं वाच्यम् । 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम्' (मुं.उ.३-१-२) इति भेदव्यपदेशात् ॥**

(१५) ननु आत्मशब्दादिहेतुः जीवेऽपि सम्भवति, जीवब्रह्मणोरैक्यात् इति शङ्कावारणाय सूत्रम्- **ॐ भेदव्यपदेशादिति** ॥ तत्तु इति वर्तते । तयोरिति विपरिणम्यते । आवर्तते च । भेदेति लुप्तप्रथमाकम् पृथक्पदं च ॥ **अयमर्थः**- **भेदव्यपदेशात्**= 'जुष्टं यदा' इति श्रुतौ तयोः= जीवब्रह्मणोः भेदोक्तेः, तयोः जीवब्रह्मणोः भेदस्तु= भेद एव न त्वैक्यम् इति ॥

अनुवृत्तावधारणलब्धं साध्यमाहुः- **न चैक्यमिति** ॥ जीवब्रह्मैक्यमित्यर्थः । भेदबोधकश्रुतिमाहुः- **जुष्टमिति** ॥ ५ ॥

**(परविद्याविषयविष्णुप्रकरणत्वान्न जीव-रुद्रयोर्भेदोऽत्र साध्यते)**

**(१६) ॥ ॐ प्रकरणात् ॐ ॥ ६ ॥**

**'द्वे विद्ये वेदितव्ये' (मुं.उ.१–१–४) इति तस्य ह्येतत्प्रकरणम् ॥ ६ ॥**

(१६) नन्वत्र श्रुतौ जीवब्रह्मभेदः नोच्यते, किन्तु जीवरुद्रयोर्भेद एवेति शङ्कावारणाय सूत्रम्- **ॐ प्रकरणादिति** ॥ भेदः, तत्तु इति वर्तते । तस्य तयोरिति च आवर्त्य विपरिणम्यते । ईश इति शेषः। **अयमर्थः**- ईशः 'जुष्टम्' इति श्रुतिस्थ-ईशशब्दवाच्यः तत्तु= विष्णुरेव । न तु रुद्रः, तस्य प्रकरणात्= 'द्वे विद्ये वेदितव्ये' इति परविद्याविषयवस्तुनः आरभ्य अधीतत्वेन 'जुष्टम्' इत्यत्र श्रुतेः विष्णुप्रकरणत्वात्, अतः तयोस्तु = जीवब्रह्मणोरेव भेदः इति ॥

सूत्रं व्याचक्षते- **द्वे विद्ये इति** ॥ हि= यतः इति परविद्याविषयवस्तुन आरभ्याधीतत्वेन, **एतत्**= 'यस्मिन् द्यौरिति, 'जुष्टम्' इति च वाक्यं, तस्य विष्णोरेव प्रकरणम् । अतो 'नैक्यं वाच्यम्' इति

पूर्वभाष्येण सम्बन्धः । प्रकरणं स्वघटकेशपदस्य विष्णुपरत्वबोधनद्वारा जीवेशयोः ऐक्याभावे हेतुरिति भावः ।

ननु परविद्याविषयत्वमाक्षिप्य समाधानाय अयं नयः प्रवृत्तः, तत्कथं तेनैव हेतुना प्रकरणस्य वैष्णवत्वनिर्णय इति चेत्- न, परविद्याविषयत्वहेतुना 'जुष्टम्' इति श्रुतौ ईशपदेन विष्णुग्रहणे बाधकाभावात् । तेनैव हेतुना तस्यैव विधाने एव दोषात्(च) ॥ ६ ॥

जुष्टमिति ॥ (आ.५-२)(व्या. पृ. १०४) ॥५॥ 'द्वे विद्ये' इति ॥ (आ. १-४) व्याख्यास्यते अन्यार्थम् (१.४.१९) इति सूत्रे ॥ ६ ॥

**(अनशन ईशः, कर्मफलात्ता जीवः)**

## (१७) ॥ ॐ स्थित्यदनाभ्यां च ॐ ॥ ७ ॥

(१७) हेत्वन्तरेण भेदसाधनाय सूत्रम्- **ॐ स्थित्यदनाभ्यां चेति** ॥ **स्थितिः=** अनशनेऽपि प्रकाशमानतयाऽवस्थानम् । **अदनं=** कर्मफलाशनम् । भेदस्त्विति वर्तते । तत्, प्राणभृत्, इत्यनुवर्त्य षष्ठ्या विपरिणम्यते । **अयमर्थः- स्थित्यदनाभ्यां च=** ईशजीवसम्बन्धितया 'द्वा सुपर्णा' इति श्रुत्युक्तस्थित्यदनाभ्यामपि, **भेदस्तु=** (ब्रह्मजीवयोः) भेद एव इति ॥

**(१८) 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मुं.उ.३-१-१) इति ईशजीवयोः स्थित्यदनोक्तेः ॥**

**॥ इति द्युभ्वाद्यायनत्वाधिकरणम् ॥ १ ॥**

(१८) सौत्रहेतुबोधकश्रुतिमाहुः- **द्वा सुपर्णेति** ॥ **अदनोक्तेरिति** ॥ इदं च 'नैक्यं वाच्यम्' इत्यत्रान्वेति ॥

यत्तु 'द्युभ्वाद्यायतनं स्वशब्दात्', 'मुक्तोपसृप्यव्यपदेशात्', 'भेदव्यपदेशात्', 'प्रकरणात्', 'स्थित्यदनाभ्यां च' इति पञ्चसूत्र्यां द्युभ्वाद्यायतनं परमात्मैवेति प्रतिज्ञावाक्यं इति, तन्न । तथा सति- 'नानुमानमतच्छब्दात्', 'प्राणभृच्च' इति सूत्रद्वयस्य पञ्चसूत्र्यनन्तरमेव कर्तव्यतापातात् ।

इदमत्रावधेयम्- 'स्थित्यदन' (१.३.७) इति सूत्रेण 'ईशजीवौ पारमार्थिकभेदवन्तौ, विरुद्ध-धर्माधिकरणत्वात्' इति युक्तिस्सूचिता भवति । एतेन सूत्रकृता 'द्वा सुपर्णा' इति श्रुतिः पारमार्थिक-

**भेदपरत्वेन व्याख्यातेति ध्येयम्। परेणाप्यङ्गीकृतं- भेदपरा इयं श्रुतिरिति, अतः 'तत्वमसि' इत्यादिकमपि भेदपरमेव। अभेदपरं 'तत्वमसि' इत्यादिवाक्यमिति वर्णनं तु अयुक्तमेव। सूत्रकृता तथाऽनुक्तेः।**

**किञ्च- 'सुषुप्त्युत्क्रान्त्योर्भेदेन' (१-३-४२) इति सूत्रेणापि मुक्तावपि पारमार्थिकभेद एव समर्थितस्सूत्रकृता, इति सर्वासामपि श्रुतीनां पारमार्थिकभेदपरत्वमेव युक्तमिति ॥ ७ ॥**

**॥ इति द्युभ्वाद्यायतनत्वाधिकरणम् ॥ १ ॥**

**(१८) द्वा सुपर्णेति ॥ (मु.३.१.१) अयमर्थः- सयुजा**= संयुक्तौ **सखाया**= सखायौ= प्रीत्या एकदेहस्थितौ, **द्वा**= द्वित्ववन्तौ, **सुपर्णा**= सुपर्णसरूपौ, सज्जीवमात्रपरत्वपक्षे परमानन्दरूपौ जीव-परमात्मानौ **समानं**= एकं **वृक्षं**= देहाख्यमश्वत्थं, **परिषस्वजाते**= आलिलिङ्गतुः। **तयोः**= सुपर्णयोः मध्ये, **अन्यः**= ईशादन्यः जीवः **पिप्पलं**= अश्वत्थफलरूप-देहजनित-कर्मफलं **स्वादु अत्ति**= अस्वाद्वपि स्वादुतयाऽश्नाति। **अन्यः**= जीवादन्यः ईश्वरस्तु, **अनश्नन्**= पिप्पलं अभुञ्जानस्सन्, **अभि**= अभितः, **चाकशीति**= प्रकाशते इति ॥ द्वा इत्यत्र औ इत्यस्य डादेशः छान्दसः ततः टिलोपः। सयुजा, सुपर्णा, सखाया इत्यस्य आ इत्यादेशः छान्दसः ॥ ७ ॥

**॥ इति द्युभ्वाद्यायतनत्वाधिकरणम् ॥ १ ॥**

## २. भूमाधिकरणम्

**(१) 'प्राणो वा आशाया भूयान्' इत्युक्त्वा 'यो वै भूमा तत्सुखम्' (छां.उ. ७-२३) इत्युक्तेस्तस्यैव भूमत्वप्राप्तिः ।**

अत्र नये श्रुत्या विष्णुवायुसाधारणभूमनाम्नः हरौ समन्वयः ॥ २ सूत्रे. अ. ॥

(१) श्रुत्युदाहरणपूर्वं विषयादिकं दर्शयन्ति - **प्राणो वा इत्यादिना ॥ इत्युक्त्वेति ॥** उपक्रम्येत्यर्थः । **यो वै भूमेति ॥** अनेन भूमाशब्दोऽत्र विषय इति बोध्यम् । **तत्सुखमिति ॥ इत्युक्तेरिति ॥** अनेन 'आनन्दमय'नयेन सङ्गतिर्दर्शिता । सः भूमा किं विष्णुः ? वायुर्वा ? इति संशयश्चानेनोक्तो वेदितव्यः । 'प्राणो वा आशाया भूयान्' इति उपक्रमः, 'विष्णुर्वै भूयान्' इति श्रुतिश्च सन्देहबीजम् । **तस्यैव**= वायोरेव । **भूमत्वप्राप्तिः**= भूमशब्दवाच्यत्वप्राप्तिः । एतेन वायुरेव भूमा, प्राणस्य आशाया उत्तमत्वमभिधाय, तदपेक्षया उत्तमानुक्तेः तस्यैव भूमत्वाऽम्नानादिति - पूर्वपक्षस्सूचितः ॥

(१) **प्राणो वा** इति (छा.९.१५.१) **आशायाः**= भारत्याः, **प्राणः**= मुख्यप्राणः, **भूयान्**= गुणादितः श्रेष्ठ इत्यर्थः । **यो वै भूमेति ॥** (छा.७.२३.१) **यः**= प्रकृतो **भूमा**= श्रेष्ठत्वेनोक्तः **तत् सुखं**= पूर्णसुखरूपमित्यर्थः । **दीपिकायां तु** - यत्सुखं स भूमा इति उद्देश्यविधेयभावव्यत्यास उक्तः ।

**(२) 'उत्क्रान्तप्राणान्' (छा.उ. ७–१५–३) इत्यादितल्लिङ्गात् प्राणशब्दश्च वायुवाची इति- अतो वक्ति–**

(२) ननु 'अत एव प्राणः' (१.१.२३) इत्यादिना प्राणशब्दस्य विष्णुवाचित्वनिर्णयात् कथमत्र प्राणशब्देन वायुः इति पूर्वपक्षः क्रियत इत्यत आहुः- **उत्क्रान्तप्राणानिति ॥ तल्लिङ्गात्**= तस्य= वायोः उत्क्रमणरूपलिङ्गात् । **प्राणशब्दश्च** - 'प्राणो वा आशाया' इत्यत्रत्यप्राणशब्दश्चेत्यर्थः ॥ **इतीति ॥** अस्य- 'तस्यैव भूमत्वप्राप्तिः' इत्यत्रान्वयः ॥

(२) **उत्क्रान्तप्राणानिति ॥** (छा.७.१५.३) **'उत्क्रान्तप्राणान् शूलेन समासं व्यतिषं दहेत् नैनं ब्रूयुः पितृहाऽसि'** इत्यादि तत्र श्रूयते । अयमर्थः - पूर्वं सप्राणान् पित्रादीन् पुत्रादिः किञ्चिद् भृशं वा, वदेच्चेत् एनं पुत्रादिकं प्रति, त्वं पितृहाऽसीत्यादि जनाः ब्रूयुः इति पूर्वं प्रसक्तम् । **उत्क्रान्तप्राणान्**= अप्राणान् पित्रादीन् **समासं**= साकल्येन **व्यतिषं**= एकदेशेन विलुण्ठ्य दहेत् पुत्रादिः, तदा पुत्रादिकं त्वं

पितृहाऽसीति जना न ब्रूयुरित्यर्थः । एवं च - 'प्राणो वा' इति श्रुतिः पूर्वपक्षे मुख्यप्राणपरा । सिद्धान्ते तु प्राणतदन्तर्याम्युभयपरा इति बोध्यम् ।

**(पूर्णसुखरूपत्वान्नामादिसर्वोत्तमत्वाच्च भूमा विष्णुरेव)**

## (३) ॥ ॐ भूमा सम्प्रसादादध्युपदेशात् ॐ ॥ ८ ॥

(३) **ॐ भूमेति ॥** तत्तु इति वर्तते । भूमेत्यस्य आवृत्तिः, विपरिणामश्च । प्रपूर्वकसदधातोः आनन्दोऽर्थः । प्रसन्न इत्यादौ तथा दर्शनात् । संशब्दः पूर्णार्थकः । उपरित्वस्य सावधिकत्वात् सङ्कोचे मानाभावात् सर्वेषामिति लभ्यते । यद्यपि भूमशब्दः बहुशब्दप्रकृतिकभावप्रत्ययान्तः (धर्मपरः) बहुशब्दश्च सङ्ख्यावाची, विपुलवाची च, अथापि 'यो वै भूमा' इति श्रुतौ भूमशब्दः उत्तमार्थकः । 'प्राणो वा आशाया भूयान्' इति श्रुतौ भूयाञ्छब्दस्य उत्तमार्थकत्वेन तदर्थस्यैव 'यो वै भूमा' इति अनुवादात् सूत्रेऽपि तस्यैवाऽनुवादात्(च) न दोष इति बोध्यम् ॥ **अयमर्थः - भूमा=** 'यो वै भूमा' इत्यत्रत्यभूमशब्दवाच्यः, तत्तु= विष्णुरेव । **सम्प्रसादात्=** 'तत्सुखम्' इति भूम्नः पूर्णसुखत्वोक्तेः, सर्वेषाम् **अधि=** नामादिप्राणपर्यन्तदेवानां उपरि **उपदेशात्=** उत्तमत्वेन उक्तेः, इति । हेतुद्वय-सत्वेऽप्यत्र सूत्रे चशब्दाभावस्तु समुच्चयस्थले चशब्दप्रयोगनियमाभावाभिप्रायात् । अत एव 'मुक्तोप-सृप्यव्यपदेशात्' (१.३.२) इत्यादौ चशब्दाभावः । 'धर्मोपपत्तेश्च' (१.३.९) इत्यत्र तृतीयहेतु-प्रतिपादके चशब्दसत्वाद्वा प्रकृते न दोषः ॥

**(४) 'सम्प्रसादात्' पूर्णसुखरूपत्वात् 'अध्युपदेशात्' सर्वेषामुपर्युपदेशाच्च विष्णुरेव भूमा ।**

**(५) 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् ।**
**विश्वं नारायणं देवमक्षरं परमं पदम् ॥**
**विश्वतः परमां नित्यम् ।' (म.ना.उ.११) इति हि श्रुतिः ।**

(४-५) सूत्रार्थमाहुः- **सम्प्रसादादित्यादिना ॥ सुखरूपत्वादिति ॥** विष्णुसम्बन्धिसुख-रूपत्वाभिधानादित्यर्थः । विष्णोः पूर्णसुखत्वादौ मानमाहुः- **सहस्रेत्यादि ॥ श्रुतिरिति ॥** हि यतः इति श्रुतिरस्ति, अतः विष्णुसम्बन्धीत्यन्वयः ।

(५) **सहस्रशीर्षमिति** ॥ (महाना.११) अयमर्थः- **सहस्रशीर्षं=** सहस्रोपलक्षितामितमूर्धानं, **देवं=**

प्रकाशरूपं, **विश्वाक्षं**= विश्वतो दर्शनयोग्याक्षिमन्तं, **विश्वशम्भुवं**= पूर्णसुखाश्रयम्, **विश्वं**= विश्वस्मिन् प्रविष्टं, **नारायणं**= मुक्तसङ्घे व्यक्तम्, **अक्षरं**= स्वरूपतो नाशरहितं, अक्षेषु रममाणं वा, **परमं**= परेभ्यो ब्रह्मादिभ्योऽधिकत्वेन मीयते इति परमं, चतुर्मुखादिभ्य उत्तमं इति यावत्। **पदं**= प्राप्यम्, **विश्वतः परमां**= सर्वस्मादुत्तमं अकारवाच्यं, परमश्चासौ अश्चेति विग्रहः। आन्ध्रपाठमनुसृत्य इदमुक्तम्। 'विश्वतः परमं' इत्येवं द्राविडपाठः, अत्र पाठे **परमं**= उत्तममित्यर्थः। **नित्यं**= देहतो नाशरहितं, **विश्वं**= पूर्णं हरिं विश्वं व्याप्तं, **पुरुषं**= पूर्णषड्गुणं **नारायणं**= परमात्मानं **तद्विश्वं**= जगत् उपजीवति इति ॥

**(६) 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृ.उ. ६-४-२) इत्यादिना नोत्क्रमणादिलिङ्गविरोधोऽपि ॥ ८ ॥**

(६) ननु अत्र प्राणपदं विष्णुवाचि चेत्- प्रागुक्तोत्क्रमणविरोधः, अत आहुः- **तमिति ॥** नन्वत्र प्राणपदस्य विष्णुपरत्वे 'व्यतिहारो विशिंषन्ति' (३.३.३८) इति सूत्रेण प्राणापेक्षया सत्याख्यविष्णोः उत्तमत्वं वक्ष्यते, तद्विरुद्ध्येत, इति चेन्न- श्रुतिस्थप्राणपदस्य उभयपरत्वाङ्गीकारेण प्रकृतभाष्यस्य अन्तर्यामिविवक्षया प्रवृत्तत्वात् 'व्यतिहार' इति सूत्रस्य अधिष्ठानविवक्षया प्रवृत्तत्वात्, अदोषात्। प्राणपदस्य अर्थद्वयपरत्वं प्रकृतटीकायां, 'व्यतिहार' इति सूत्रभाष्यटीकयोः, छान्दोग्यभाष्ये सप्तमे च, स्पष्टम् ॥ ८ ॥

(६) **तमिति** ॥ (बृ. ६.४.२) ज्ञानिदेहात् **उत्क्रामन्तं**= निर्गच्छन्तं, **तं**= पूर्वप्रकृतं परमात्मानं अनुसृत्य **प्राणः**= मुख्यवायुः, **उत्क्रामति** = (ज्ञानिदेहाद् बहिः) गच्छतीत्यर्थः ॥ ८ ॥

**(सर्वगतत्वादीनां विष्णावेवोपपत्तेः विष्णुरेव भूमा)**

**(७) ॥ ॐ धर्मोपपत्तेश्च ॐ ॥ ९ ॥**

**सर्वगतत्वादिधर्मोपपत्तेश्च ॥ ९ ॥**

**॥ इति भूमाधिकरणम् ॥**

(७) हेत्वन्तरेण विष्णोः भूमत्वप्रतिपादनाय सूत्रम्- **ॐ धर्मोपपत्तेश्चेति ॥** तत्तु, भूमा, इति वर्तते। भूमेत्यावर्त्य सप्तम्या च विपरिणम्यते। अयमर्थः - **धर्मोपपत्तेश्च**= **'स एवाधस्तात्'** इत्यादिना उक्तसर्वगतत्वादिधर्माणां 'यत्र नान्यत्पश्यति' इत्यादिना उक्तगुणादिमहिमभेदशून्यत्वधर्माणां च, भूम्येव, **उपपत्तेः**= उपपन्नत्वाच्च, भूमा तत्तु= विष्णुरेव इति ॥

**सर्वगतत्वेति ॥ स एवाधस्तादित्यादिना** उक्तेति आदौ शेषः । **उपपत्तेश्चेति ॥ परमात्मन्येव उपपत्तेरित्यर्थः । अस्य- 'विष्णुरेव भूमा' इति पूर्वसूत्रभाष्येऽन्वयः ॥ ९ ॥**

**॥ इति भूमाधिकरणम् ॥ २ ॥**

**(७) स एवाधस्तादिति ॥ (छा.७.२५.१)** तत्र 'स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्वं, यत्र नान्यत्पश्यति, नान्यच्छृणोति नाऽन्यद्विजानाति स भूमा स भगवः कस्मिन् प्रतिष्ठितः स्वे महिम्नि' इति श्रूयते । तत्र 'स एवेदं सर्वं' इत्यन्तम्- सर्वगतत्वबोधकं, 'विजानाति' इत्यन्तं - स्वातन्त्र्यबोधकम् । (शिष्टं वाक्यं अन्यानाश्रयत्वबोधकम्) अयमर्थः- **स एव**= विष्णुरेव, इदं सर्वं स एव, **सर्वं** = जगत् विष्णुव्याप्तमेव, यत्र यद्विना अन्यत् न पश्यति, किन्तु तदधीनमेव पश्यति । यद्वा - यत्र दृष्टे सति अन्यत् स्वतन्त्रं न पश्यति एवमेव शृणोतीत्यादावप्यर्थः । **हे भगवः**= भगवन् सनत्कुमार ! स भूमा कस्मिन् प्रतिष्ठित इति नारदस्य प्रश्नः । **स्वकीये महिम्नि,** महिमात्मके स्वस्मिन्निति वा, **प्रतिष्ठितः**= आश्रितः इति । शिष्टं स्पष्टम् ॥ ९ ॥

**॥ इति भूमाधिकरणम् ॥ २ ॥**

## ३. अक्षराधिकरणम्

### (१) अदृश्यत्वादिगुणा विष्णोरुक्ताः । 'अदृष्टं द्रष्टृश्रुतं श्रोतृ' (बृ.उ. ५-८-११) इत्यादिना ।

अत्र नये विष्णौ श्रीतत्वे च प्रसिद्धस्य (अविनाशित्वेन साधारणस्य) अक्षरनाम्नः हरौ समन्वयः ॥ ३सू. अ.॥

(१) **विष्णोरुक्ता इति** ॥ अदृश्यत्वनये (१.२.६) इति भावः । एवं च तेन नयेन सङ्गतिरुक्ता भवति । विषयवाक्यमाहुः- **अदृष्टमिति** ॥ **इत्यादिनेति** ॥ विष्णोरुक्ताः अदृश्यत्वादयः इत्यादिना मध्यमाक्षरस्योक्ताः श्रीतत्वस्योक्ता इत्यन्वयः । अनेन अक्षरशब्दोऽत्र विषय इति सूचितम् ।

(१) **अदृष्टमिति** ॥ (बृ.५.८.११) 'तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ, नान्यदतोऽस्ति श्रोतृ, नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ' इति श्रूयते । अयमर्थः - **तत्**= आकाशाश्रयत्वेन वक्ष्यमाणं **अक्षरं**= क्षरणाऽभावात् अक्षरशब्दवाच्यं, **एतत्**= अदृष्टमित्यादिना वक्ष्यमाणलक्षणकं, **वै**= प्रसिद्धम् । तदेवाह- **अदृष्टमित्यादिना** । साकल्येन अन्यैरदृष्टत्वात् **अदृष्टं**, साकल्येन सर्वद्रष्टृत्वात् **द्रष्टृ** इति । शिष्टं स्पष्टम् । सिद्धान्तेऽयमर्थः । पूर्वपक्षे तु मध्यमाक्षरपरा इयम् ॥

### (२) 'अहं सोममाहनसं बिभर्मि' (ऋ.सं. १०-१२५-२) इत्यादेस्तस्यापि सम्भवान्मध्यमाक्षरस्योक्ता इति—

(२) नन्वत्र 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादिना पूर्वं श्रुतं चन्द्राद्याधारत्वं श्रीतत्वे न सम्भवतीति अदृश्यत्वादयोऽपि तस्य नेति शङ्कावारणाय श्रीतत्वस्य चन्द्राद्याधारत्वमस्तीत्यत्र मानमाहुः - **अहं सोममिति** ॥ **तस्यापि**= चन्द्राद्याधारत्वस्यापि । **सम्भवात्**= श्रीतत्वे सम्भवादित्यर्थः । अनेन किं तदक्षरशब्दवाच्यत्वं विष्णोः ? उत चेतनप्रकृतेः? इति संशयः, तदक्षरशब्दवाच्यं च मध्यमं श्रीतत्वमेव (चेतनप्रकृतिरेव) । तत्रैव अक्षरशब्दस्य प्रसिद्धत्वात्, इत्यादिपूर्वपक्षश्च सूचितः । सन्देहबीजं तु - देहाक्षरणरूपाविनाशित्वाख्यप्रवृत्ति-निमित्तस्य उभयत्र सत्वमिति बोध्यम् । तथा च श्रीतत्वमेव अदृश्यत्वादिगुणकमिति भावः ॥

(२) **अहमिति** ॥ (ऋ.१०.१२५.२) **आहनसं**= यागेषु अभिषूयमाणं **सोमं**= सोमलताभिमानिनं चन्द्रं,

**त्वष्टारं**= तन्नामकं सूर्यं, **पूषणं उत**= तन्नामकं सूर्यं च, **भगं**= तन्नामकं सूर्यं च **बिभर्मि**= दधामि इत्यर्थः ॥

**(आकाशान्तप्रपञ्चधारकत्वश्रुतेः 'एतस्मिन्' इत्यत्र विष्णुरेव वाच्यः)**

**(३) अतो ब्रूते—**

**॥ ॐ अक्षरमम्बरान्तधृतेः ॐ ॥ १० ॥**

(३) **ॐ अक्षरमम्बरान्तधृतेरिति ॥** तत्तु इति वर्तते । **अयमर्थः- अक्षरं**= 'एतस्मिन् खल्वक्षरे' इत्यत्रत्याक्षरशब्दवाच्यं तत्तु= विष्णुरेव, **अम्बरान्तधृतेः**= उक्तश्रुतौ आकाशान्तप्रपञ्चधारकत्व-रूपविष्णुधर्मश्रवणात् इति ॥

**(४) 'एतस्मिन् खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च' (बृ.उ. ५-८-११) इत्यम्बरान्तस्य सर्वस्य धृतेर्ब्रह्मैवाक्षरम् ।**

**(५) 'य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा' (ऋ.सं. १-१२५-४) 'भर्ता सन् भ्रियमाणो बिभर्ति । एको देवो बहुधा निविष्टः । यदा भारं तन्द्रयते स भर्तुम् । पराऽस्य भारं पुनरस्तमेति' (तै.आ. ३—१४) ।**

**(६) 'यस्मिन्निदं सञ्च वि चैधि सर्वं यस्मिन्देवा अधि विश्वे निषेदुः' (म.ना.उ. १—२) इत्यादिश्रुतेः ।**

**'पृथिव्यादिप्रकृत्यन्तं भूतं भव्यं भवच्च यत् ।**
**विष्णुरेको बिभर्तीदं नान्यस्तस्मात्क्षमो धृतौ ॥' इति च स्कान्दे ॥ १० ॥**

(४-६)श्रुत्युपन्यासपूर्वं सूत्रार्थमाहुः-**एतस्मिन्नित्यादिना ॥** अम्बरान्तधृतेः विष्णुधर्मत्वे मानमाहुः-**य उ त्रिधेति ॥** विष्णुवत् अन्यस्यापि सर्वाऽधारत्वं किं न स्यात्? इत्यत आहुः-**पृथिव्यादीति ॥ स्कान्दे इति ॥** विष्णुधर्मादिति शेषः । श्रुतेः, स्कान्दे इत्युक्तेश्च, विष्णुधर्मात् धृतेरिति सम्बन्धः। विष्णुधर्माद्धृतेरित्यस्य विष्णुधर्मभूतधारकत्वश्रवणात् इत्यर्थः । तस्य अन्वयः स्फुटः ॥ १० ॥

(४) **एतस्मिन्निति ॥** (बृ.३.८.११) **एतस्मिन्**= पूर्वत्र द्यावापृथिव्याधारत्वेन उक्ताऽकाशशब्दित-चित्प्रकृत्याधारत्वेन प्रतिपिपादयिषिते ब्रह्मणि, **आकाशः**= श्रीतत्वं **ओतश्च प्रोतश्च**= सर्वथाऽऽश्रित-मेवेत्यर्थः ।

(५) **य उ इति ॥ व्या. जन्मनये भर्तेति ॥** (तै. आ. ३-१४-४२) **भर्ता**= जगतो मूलभर्ता, **देवः**= प्राणाख्यो भगवान् **भ्रियमाणः**= जगता जीवेन हृदा धार्यमाणः **सन्**, तत्र स्थित इति यावत् । तत् जगत्, **बिभर्ति**= धत्ते, पुष्णाति च । **एकः** अपि **बहुधा**= भर्तृत्वादिबहुरूपेण **निविष्टः**= व्याप्तः, प्रविष्टो वा, अस्य पूर्ववाक्येनान्वयः । **सः**= भगवान्, **यदा भारं परास्य**= अधो निधाय **पुनः भर्तुं तन्द्रयते**= नेच्छति, तदा असौ भारः, **अस्तमेति**= नश्यतीत्यर्थः ।

(६) **यस्मिन्निदमिति ॥** (महाना. १.२) **यस्मिन् इदं**= जगत्, **सं च**= सम्यक्, **वि च**= विविधं च, **ऐधि**= अवर्धत, एधतेर्लङि छान्दसमेतद्रूपं शपो लुकि । यद्वा - एधि = अस्तीति वाऽर्थः । अस्तेः लोटि छान्दसत्वात् लकार-पुरुषव्यत्यये रूपमेतत् । **यस्मिन् देवाः, विश्वे**= सर्वेऽपि, **अधिनिषेदुः**= यं अध्यगुः, तदेव ब्रह्मेत्यर्थः । **पृथिवीति ॥ भूतं**= अतीतं, **भव्यं**= भविष्यं, **भवत्**= वर्तमानं च, **यत्**= पृथिव्यादि वर्तते । **इदं**= पृथिव्यादिकं, **तस्मात्**= विष्णोः, **अन्यः**= इतरः, **धृतौ**= पृथिव्यादिभरणे **न क्षमः**= न समर्थः, इत्यर्थः ॥ १० ॥

**(अम्बरान्तधृतिः 'एतस्य वा' इति श्रुत्युक्तः विष्णोरेव)**

## (७) ॥ ॐ सा च प्रशासनात् ॐ ॥ ११ ॥

(७) **विष्णोरेव अक्षरत्वे युक्त्यन्तरप्रतिपादनाय सूत्रम् - ॐ सा च प्रशासनादिति ॥ तत्तु, अक्षरं, इति वर्तते । चो हेतौ । उक्तेति शेषः । तदित्यस्य आवृत्तिविपरिणामौ । अयमर्थः- च**= यतः, **सा**= अम्बरान्तधृतिः, **तस्य**= अक्षरस्य **प्रशासनात्**= आज्ञामात्रेण भवतीत्युक्ता 'एतस्य वा' इति श्रुतौ प्रतिपादिता, अतः अक्षरं तु= विष्णुरेवेति ॥

**(८) सा च धृतिः प्रशासनादुच्यते 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ.उ. ५-८-९) इत्यादिना । तच्च प्रशासनं विष्णोरेव ।**

(८) सूत्रार्थमाहुः- **सा चेत्यादिना ॥** सौत्रहेतौ श्रुतिमाहुः- **एतस्येति ॥ इत्यादिनेति ॥** अस्य प्रशासनादित्यत्रान्वयः । ननु प्रशासनोक्तिमात्रेण कथं विष्णुत्वनिश्चयः ? इत्यत आहुः- **तच्चेति ॥** यत इति शेषः । प्रशासनस्य विष्णुनिष्ठत्वे मानमाहुः- **सत्येत्यादि ॥ इत्यादेश्चेति ॥ स्मृतेरिति** शेषः । तथा च- इत्यादिश्रुतेः, इत्यादिस्मृतेश्च यतः तत्प्रशासनं च विष्णोरेवेति ज्ञायते अतश्च, ब्रह्मैवाक्षरमिति पूर्वसूत्रभाष्येण सम्बन्ध इति ॥ ११ ॥

(८) **एतस्येति** ॥ (बृ. ५.८.९) **एतस्याक्षरस्य विष्णोः प्रशासने** = आज्ञायां आज्ञामात्रादिति यावत् । **सूर्याचन्द्रमसौ**= रविविधू, ब्रह्मरुद्रौ वा, विधृतौ तिष्ठत इत्यर्थः ॥

## (९) 'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ।' (ऋ.सं.१-१६४-३६), 'चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत्' (ऋ.सं. १–१५५–६) इत्यादिश्रुतेः । 'एकः शास्ता न द्वितीयोऽस्ति शास्ता' (भारते), 'यो हृच्छयस्तमहमिह ब्रवीमि ।'

(९) **सप्तार्धेति** ॥ (ऋ.१.१६४.३६) **भुवनस्य**= लोकस्य, **रेतः**= रेतसः रतिप्रदाः, सारभूता वा, भुवनस्य **विष्णोः** रेतोरूपा वा, **आर्धगर्भा**= आ = सम्यक् समृद्धब्रह्माण्डाख्यगर्भवन्तः, तदावरणभूता इति यावत् । **सप्त**= महदहङ्कारपञ्चमहाभूताख्याः ब्रह्मादयो देवाः **विष्णोः प्रदिशा**= आज्ञया, **विधर्मणि**= विविधविश्वधारणे तिष्ठन्ति, इत्यर्थः । **चतुर्भिरिति** ॥ (ऋ. १-१५५-६) (व्या. पृ. ५२) । **एकः शास्तेति** ॥ (भार. सभाप.) अस्य शेषवाक्यम्- **'गर्भे शयानं पुरुषं कोऽस्ति शास्ता'** इति ॥ अयमर्थः- **शास्ता**= सर्वधृतिहेत्वाज्ञाकर्ता, **एकः**= विष्णुरेक एव, **न द्वितीयः**= तदन्यो नास्तीति भावः । गर्भे शयानं पुरुषं शास्ता, कः = विष्ण्वन्यः कः ? न कोऽपीति ॥ **यो हृच्छय इति** ॥ इदं वाक्यान्तरम् । **यः हृच्छयः**= सर्वधृतिहेतुप्रशासनाय सर्वहृदयनिवासी, **तमहं, इह**= स्थाने ब्रवीमि इत्यर्थः ।

## (१०) 'न केवलं मे भवतश्च राजन् स वै बलं बलिनां चापरेषाम्' (भागवते) इत्यादेश्च ॥ ११ ॥

(१०) **न केवलमिति** ॥ (भाग. ७-८) हे राजन् **केवलं मे, भवतश्च, सः**= भगवान्, **बलं**= बलप्रदः धृतिहेतुः **न, किन्तु अपरेषां बलिनां च बलम्**, इत्यर्थः । हिरण्यकशिपुं प्रति प्रह्लादवाक्यमेतत् ॥११॥

### ('अस्थूलमनणु' इत्याद्या गुणा विष्णोरेव)

## (११) ॥ ॐ अन्यभावव्यावृत्तेश्च ॐ ॥ १२ ॥

(११) **हेत्वन्तरेण विष्णोरेव अक्षरशब्दवाच्यत्वमिति प्रतिपादनाय सूत्रम्- ॐ अन्यभावव्यावृत्तेश्चेति ॥** अक्षरं, तत्तु, इति वर्तते । तदित्यस्यावृत्तिविपरिणामौ । **अयमर्थः**- अक्षरं तत्तु= विष्णुरेव । **अन्यभावव्यावृत्तेश्च= अन्येषां भावाः= स्वभावभूतप्रसिद्धस्थौल्यादिधर्माः, तेषां 'अस्थूलम्' इत्यादिना तस्मिन् परमात्मनि निषेधाच्च - इति ॥**

**(१२) 'अस्थूलमनणु' (बृ.उ. ५-८-८) इत्यादिना स्थूलाण्वादीनामन्यवस्तुस्वभावानां व्यावृत्तेश्च । 'अस्थूलोऽनणुरमध्यमो मध्यमोऽव्यापको व्यापको योऽसौ हरिरादिरनादिरविश्वो विश्वः सगुणो निर्गुणः' इत्यादेर्विष्णोरेव हि ते धर्माः ।**

(१२) श्रुत्युपन्यासपूर्वं सौत्रहेतुं व्याचक्षते- **अस्थूलमित्यादिना ॥ स्थूलाऽण्वादीनामिति ॥** लौकिकस्थूलत्वाणुत्वादीनामित्यर्थः । **अन्यवस्तुस्वभावानां=** भगवदितरसकलवस्तुस्वरूपभूतानाम् । अस्थूलत्वादेः विष्णुधर्मत्वे मानमाहुः- **अस्थूल इत्यादि ॥ ते धर्मा इति ॥** उक्ता अस्थूलत्वादिधर्मा इत्यर्थः ।

(१२) **अस्थूलमिति ॥** (बृ. ५.८.८) 'स होवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति- अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन' इति समग्रवाक्यम् । अस्यार्थः- **तत्=** आकाशाश्रयत्वेन वक्ष्यमाणं, **अक्षरं=** तच्छब्दितं ब्रह्म, **एतत्=** एतल्लक्षणकमिति, **ब्राह्मणाः=** ज्ञानिनः, **अभिवदन्ति** इति गार्गीं प्रति याज्ञवल्क्य उवाच ह इति सम्बन्धः । **वै=** प्रसिद्धम् । किं तल्लक्षणमिति चेत् तदेवाह- **अस्थूलमित्यादि ॥ अस्थूलमनणु अह्रस्वमदीर्घं=** प्राकृतस्थौल्यादिरहितं, **अलोहितं=** लोहितोपलक्षितप्राकृतसर्ववर्णरहितं, **अस्नेहं=** प्राकृतस्नेहशून्यं, **अच्छायं=** अविद्याहीनं, प्रसिद्धछायारहितं च, **अतमः=** आवरणरहितं, **अवायुं=** श्वासोच्छ्वासरूपवायुरहितं, देहाऽरम्भकवायुरहितं वा, **अनाकाशं=** आकाशाऽऽरब्धशरीररहितं, **असङ्गं=** सङ्गप्रयुक्तलेपरहितं, **अरसमगन्धं=** लक्षणया प्राकृतरसस्पर्शगन्धवर्जितम्, **अचक्षुष्कमश्रोत्रमवागमनः=** प्राकृतचक्षुरादिशून्यं, **अतेजस्कं=** प्राकृतवर्चोरहितं, तेजआरब्धशरीररहितं वा **अमुखं=** प्राकृतमुखादिरहितं, तादृशदेहरहितं वा, **अमात्रं=** परिमाणशून्यं (शरीरारम्भकपञ्चतन्मात्राशून्यं वा), **अनन्तरमबाह्यम्** इत्याभ्यां अन्तरबाह्य(त्व)शून्यत्वबोधनेन स्वयमेव सर्वान्तरं सर्वबाह्यं चेति फलतीति ज्ञेयम् । **तत्** (पूर्वोक्तलक्षणयुक्तं ब्रह्म) **किञ्चन=** अन्नादिकं शुभाशुभं वा **नाश्नाति, कश्चन=** कोऽपि **तत्=** ब्रह्म **नाश्नाति=** न संहरति इति ॥

**अस्थूल इति ॥ अमध्यमः=** प्राकृतमध्यमपरिमाणरहितः **मध्यमः=** स्वरूपभूतमध्यमपरिमाणवान्, **अव्यापकः=** व्यापकान्तरशून्यः, **व्यापकः=** देशादिव्याप्तिमान्, **आदिः=** सर्वकारणभूतः, **अनादिः=**

कारणशून्यः, उत्पत्तिशून्यो वा, **अविश्वः**= न विश्वः= पूर्णः यस्मात्सः, **विश्वः**= पूर्णः, **सगुणः**= ज्ञानाऽनन्दादिगुणवान्, **निर्गुणः**= सत्वादिगुणरहितः इत्यर्थः । शिष्टं स्पष्टम् ॥

**(१३) 'अस्थूलोऽनणुरूपाऽसावविश्वो विश्व एव च ।**
**विरुद्धधर्मरूपोऽसावैश्वर्यात् पुरुषोत्तमः ॥' इति च ब्राह्मे ॥**

**॥ इति अक्षराधिकरणम् ॥**

(१३) **ननु लौकिकपरिमाणादिराहित्यं विष्णोर्न युक्तम्, सर्वपदार्थेषु प्राकृतपरिमाणस्यैव दर्शनात् । भगवतश्च पदार्थत्वाविशेषात्, इत्यत आहुः-अस्थूल इति ॥ ब्राह्मे इति ॥** तत्र इत्युक्तेरित्यर्थः । **अस्य ते धर्मा इत्यत्रान्वयः । यतोऽत इति शेषः । यतः ते धर्माः विष्णोरेव, अतः अन्यवस्तुस्वभावानां व्यावृत्तेश्च 'ब्रह्मैवाक्षरम्' इति व्यवहितपूर्वसूत्रभाष्येणान्वयः** ॥ १२ ॥

॥ इति **अक्षराधिकरणम्** ॥ ३ ॥

(१३) **अस्थूल इति** ॥ यतः **असौ** भगवान् **पुरुषोत्तमः**= पूर्णषड्गुणः सर्वोत्तमश्च, अतः **ऐश्वर्यात्** विरुद्धधर्मरूपः स्वरूपभूत(विरुद्ध)स्थूलाणुत्वादिमान्, **अतोऽसौ अस्थूलः अनणुः**= लौकिकतत्तद्धर्म-शून्यः, **विश्वः अविश्वश्च**= लोकान्तर्गतः, लोकबहिर्गतश्च, भवतीत्यर्थः ॥ १२ ॥

॥ इति **अक्षराधिकरणम्** ॥ ३ ॥

## ४. सदधिकरणम्

**(१) 'सदेव सोम्येदमग्र आसीत्' (छां.उ.६-२-१) इत्यादिना सतः स्रष्टृत्वमुच्यते।**

**(२) तच्च सत् 'बहु स्यां प्रजायेय' (छा.उ. ६-२-३) इति परिणामप्रतीतेर्न विष्णुः।**

**(१-२) अत्र सदधिकरणे कारणत्वेन विष्णु-जडप्रकृतिसाधारणस्य सन्नाम्नो हरौ समन्वयः (१. सू.अ.)। विषयवाक्यमाहुः-सदेवेति ॥ उच्यत इति ॥ अनेन जन्मनयेन सङ्गतिरुक्ता वेदितव्या। सच्छब्दो विषयः, सच्छब्दवाच्यं किं ब्रह्म ? उत जडप्रकृतिः ? इति संशयोऽप्यूह्योऽनेनैव। उभयत्र कारणत्वदर्शनं सन्देहबीजमिति बोध्यम्। पूर्वपक्षमाहुः- तच्चेति ॥ तत्प्रापकमाहुः-बहु स्यामिति ॥ न विष्णुरिति ॥ किन्तु प्रधानमिति भावः।**

(१) सदेवेति (छा.६.२.१) हे **सोम्य**= ज्ञानभक्त्यादिलक्षणसोमार्ह हे श्वेतकेतो **इदमग्रे**= अस्य जगतोऽग्रे= सृष्टेः पूर्वं प्रलये इति यावत्। **सदेव**= ब्रह्मैव **आसीत्**= अवर्तत। **एकमेव**= स्वगत-स्वावयव-भेद-भेदाभेदशून्यमेव **अद्वितीयं**= समाभ्यधिकहीनं, सर्वोत्तमं इत्यर्थः सिद्धान्ते। आदिना - 'सन्मूलाः सोम्य' (छा. ६.८.६) 'सता सोम्य तदा सम्पन्नः' (छा. ६.८.१) इत्यादि गृह्यते। पूर्वपक्षे तु - सच्छब्दः प्रधानवाची। अन्यत् सर्वं समानमिति बोध्यम्।

(२) **बहु स्यामिति** ॥ (छा.६.२.३) **प्रजायेय**= नियम्यं बहु सृजामि, तदर्थं **बहु स्यां** नियामकनानारूपी भवेयम्। **बहु स्यां** तदर्थं प्रजायेयेति वा। **तत्**= सच्छब्दवाच्यं ब्रह्म **ऐक्षत**= व्यचारयदित्यर्थः। अयं च सिद्धान्ते। पूर्वपक्षे तु - सच्छब्दः अन्यवाचीत्यादि पूर्ववत्। ईक्षणं च प्रधाने अभिमानिद्वारा गौणमिति बोध्यम्।

**(३) स 'ह्यविकारस्सदा शुद्धो नित्य आत्मा सदा हरिः' इत्यादिनाऽविकारः प्रसिद्ध इति—**

(३) ननु तत्र परिणामप्रतीतावपि कुतो न विष्णुः ? इत्यत आहुः - **स ह्यविकार इति** ॥ न विद्यते विकारो यस्येति बहुव्रीहिरयम्। हि= यत इत्यादिना अविकार इति प्रसिद्धः, अतो न विष्णुरिति सम्बन्धः।

(३) अविकार इति ॥ सदा अविकारः=परिणामादिविकाररहितः, शुद्धः= सत्वादिगुणरहितः इत्यर्थः । शिष्टं स्पष्टम् ।

**('सदेव' इत्यत्रोक्त ईक्षणाख्यव्यापारविशिष्टः विष्णुः)**

## (४) अतो ब्रवीति–

## ॥ ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ ॥ १३ ॥

(४) ॐ **ईक्षतिकर्मेति** ॥ विषयवाक्यबलात् सदिति लभ्यते । ईक्षतेः कर्मेति विग्रहः । ईक्षधातु-वाच्यव्यापार इति तस्यार्थः, तस्य व्यपदेशः तस्मात् । तु इति वर्तते । **अयमर्थः**- सत्= 'सदेव सोम्य' इति श्रुतिस्थसच्छब्दवाच्यः **स तु**= विष्णुरेव, न जडप्रकृतिः, **ईक्षतिकर्मव्यपदेशात्**= 'तदैक्षत' इति श्रुतौ ईक्षणाख्यव्यापारस्य श्रवणादिति (उक्तत्वादिति) तादृशेक्षणस्य हरावेव सम्भवादिति भावः ।

ननु 'ईक्षतिव्यपदेशात्सः' इत्येवास्तु, ईक्षतिः= ईक्षणं, तथा च कर्मपदं मास्तु- इति चेन्न । ईक्षतिरिति श्तिपा निर्देशेन तस्य धातुपरत्वेन ईक्षणपरत्वासम्भवात् ।

न च 'ईक्षतेर्नाऽशब्दम्' (१.१.५) इत्यत्रेव ईक्षतिपदं लक्षणया ईक्षणपरमस्तु इति वाच्यम्- लक्षणाया अगतिकागतित्वात्, 'नासूया कर्तव्या यत्रानुगमः क्रियते' इति महाभाष्योक्तन्यायेन गत्यन्तराभावस्थल एव तदङ्गीकारात् ।

न चैवमपि 'ईक्षणव्यपदेशात्' इति सूत्रमस्त्विति वाच्यं - कर्मपदस्य कारकपरत्वाङ्गीकारपक्षेऽपि तस्य (ईक्षणीयव्यपदेशादित्येव सिद्धौ यथाश्रुतन्यासवैयर्थ्यापादनस्य) तुल्यत्वात् । किञ्च ईक्षतिश्च कर्म च इति द्वन्द्वे, ततस्तयोर्व्यपदेशादिति षष्ठीसमासे ईक्षणस्य 'तदैक्षत' इति ईक्षणस्य 'तत्तेजोऽसृजत' इति सर्जनाख्यव्यापारस्य च निर्देशात् इत्यर्थोऽप्यत्र विवक्षितः। एतदर्थं तस्य आवश्यकत्वमिति बोध्यम् ॥

ननु सूत्रे 'तत्तु' इत्यनुवृत्या सिद्धे 'स' इति व्यर्थम् । न च ईक्षतिलिङ्गेन जडप्रकृतेः सच्छब्द-वाच्यत्वनिरासेऽपि बहुभवनाश्रयाभिमानित्वेन चित्प्रकृतेः प्राप्तस्य सच्छब्दवाच्यत्वस्य वारणार्थं 'स' इति पुल्लिङ्गशब्दोपादानं, तेन पुंस्त्वावच्छिन्नस्य सच्छब्दवाच्यत्वे बोधिते प्रजाकारणत्वं 'सदेव सोम्य' इति तत्प्रकरणोक्तं युक्तं भवति । न तु स्त्रियाः, पुरुषाननुगृहीतस्त्रियाः कारणत्वादर्शनात्, पूर्वपक्षिमते आदिसृष्टेः पूर्वं पुंसोऽभावात् इति वाच्यम् । स इत्यस्य हेतुकोटिप्रवेशे एतत्सिद्धावपि साध्यकोटि-प्रविष्ट(विधेयबोधक)त्वात् तदसिद्धेः ॥ साध्यशून्यचित्प्रकृतौ ईक्षणसत्वेन व्यभिचाराच्च, इति चेत्,

न । 'तत्सत्यं स आत्मा' (छा.६) इत्यत्र स इति पुल्लिङ्गव्यपदेशाच्चेति सूत्रार्थेन स इत्यस्य हेतुकोटिप्रवेशसम्भवात् ।

वैयाकरणैस्सङ्केतितस्य पुंस्त्वादिलिङ्गस्य चेतनाचेतनसाधारणत्वेऽपि चेतनस्य अनियतलिङ्गक-विशेष्यशब्दवाच्यत्वविवक्षायां तच्छब्दवाच्यं सङ्केतितं पुंस्त्वादिकं- 'स्तनकेशवती स्त्री स्यात् लोमशः पुरुषस्स्मृतः' इति लोकसिद्ध-पुंस्त्वादिसमानाधिकरणमेव ग्राह्यमिति नियमेन तादृशपुंस्त्वस्य श्रौतत्वे अभावाच्च ॥

एतेन 'स' इति पुंस्त्वेनैव जडप्रकृतेरपि वारणसम्भवात् ईक्षतिकर्मव्यपदेशादिति व्यर्थमित्य-पास्तम् । प्रधानस्य स इति पदवाच्यत्वविवक्षायां सङ्केतितपुंस्त्वस्यैव ग्राह्यत्वेन तस्य प्रधाने अबाधात् तद्व्यावृत्त्ययोगात् । वस्तुतः ईक्षतिकर्मव्यपदेशादित्यस्य ईक्षणपूर्वकसर्जनाख्यव्यापारव्यपदेशादित्यर्थेन चिदचित्प्रकृत्योर्वारणात् स इति पदं 'एको नारायण आसीत्, स मुनिर्भूत्वा' इति श्रुतिसमाख्या-सूचकमिति ज्ञेयम् ।

**(५) 'तदैक्षत' इतीक्षतिकर्मव्यपदेशात् स एव विष्णुरत्रोच्यते । 'नान्योऽतोऽस्ति द्रष्टा' (बृ.उ. ५-७-२३), 'नान्यदतोऽस्ति द्रष्टृ' (बृ.उ. ५-८-११) इत्यादिना तस्यैव हि तल्लक्षणम् । बहुत्वं चाविकारेणैवोक्तम्— 'अजाय-मानो बहुधा विजायते' (तै.आ. ३-१३-१) इति ॥**

**॥ इति सदधिकरणम् ॥**

(५) श्रुत्युपन्यासपूर्वं सूत्रार्थमाहुः- **तदैक्षतेति** ॥ स इत्यनुवादः विष्णुरिति तदर्थः । **एवेति** ॥ अनुवृत्त-तु-शब्दार्थः । अत्र= 'सदेव सोम्य' इत्यत्र वाक्ये । ईक्षणादिकं च विष्णोरेव मुख्यम् । न त्वन्यस्य कस्यापीत्यत्र मानमाहुः- **नान्य इति** ॥ **लक्षणमिति** ॥ ज्ञायते इति शेषः । निर्विकारश्रुतिविरोधं परिहरन्ति - **बहुत्वं चेति** ॥ स्रक्ष्यमाणतेजःप्रभृतिजगन्नियामकस्वरूपबहुभवनमेव तत्त्वम् । यथोक्तम्-

'सृष्ट्वा जगदिदं सर्वं नियामकतयाऽस्य तु ।
बहुरूपो भवानीति स्याज्जगचेत्यचिन्तयत् ॥'

इति **तैत्तिरीयभाष्ये** । अन्यत्र च-

'बहु स्यामिति सङ्कल्प्य तेजःप्रभृतिसर्जनम् ।
गुरुः स्यादिति सङ्कल्प्य शिष्यसम्पादनादिवत् ॥' इति ।

तथा च **बहुभवनसङ्कल्पः पूर्वं**, ततः **सृष्टिरिति** ज्ञेयम् । **अविकारेणेति** ॥ विकारित्वं विनैवेत्यर्थः । **स्वरूपबहुत्वेनेति** यावत् । अत्र मानमाहुः- **अजेति** ॥ **इतीति** ॥ इत्यनेनेत्यर्थः । **हि**= यतः इत्यादिना **तत्**= **ईक्षणं**, **तस्यैव**= **विष्णोरेव लक्षणम्** = (मुख्य) धर्मः इति ज्ञायते, **च**= यतश्च **विजायते** इत्यनेन बहुत्वं च **अविकारेणैवोक्तम्**, अतो **विष्णुरेवात्रोच्यत** इति भाष्यार्थः ॥१३॥

॥ इति सदधिकरणम् ॥ ४ ॥

(५) **तदैक्षतेति** ॥ (छा.६.२.३) **तत्**= सच्छब्दवाच्यं (ब्रह्म) **ऐक्षत**= वक्ष्यमाणविषयकाऽऽलोचनाऽत्मकज्ञानवदित्यर्थः । **नान्य इति** ॥ (बृह. ५.७.२३) **अतः**= ब्रह्मणस्सकाशात्, **अन्यः** द्रष्टा नास्तीत्यर्थः । **अजायमान इति** ॥ (तै.आ. ३.१३.४०) व्याख्यातम् (पृ. २०६) ॥ १३ ॥

॥ इति सदधिकरणम् ॥ ४ ॥

## ५. दहराधिकरणम्

**(१) चन्द्रादित्याद्याधारत्वं विष्णोरुक्तम् । तच्च 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः .... किं तदत्र विद्यते ....' । (छा.उ.८–१–२)**

**'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते ।**
**उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ । विद्युन्नक्षत्राणि' (छा.उ. ८-१-३)**
**इत्यादिनाऽऽकाशस्य प्रतीयते ।**

अत्र नये ('ये वेद' - 'तस्यान्ते' - 'हृदि ह्येष' इत्यादिश्रुत्या) ब्रह्माऽऽकाशजीवसाधारणस्य हृत्पद्मस्थत्वलिङ्गस्य हरौ समन्वयः ॥ (८ सूत्रा. अ.) ॥

(१) सङ्गतिमाहुः- **चन्द्रेति ॥ आधारत्वमिति ॥** तत्प्रशासनेन तस्य तत्वम् । **उक्तमिति ॥** 'एतस्य वै' इत्यादिना अक्षर(१.३.३)नये उक्तमित्यर्थः । अनेन तेन नयेन सङ्गतिर्दर्शिता । विषयादिकमाहुः- **तच्च अथ यदिति ॥ तच्च=** चन्द्राद्याधारत्वं च । **अन्तर आकाश इति ॥** यद्यपि एतदनन्तरं 'तस्मिन् यदन्तर' इत्यादिवाक्यानि सन्ति, तथाऽपि तानि विहाय उपयुक्तांशमात्रमुदाहृतम् अत्र । एवम् अन्यत्रापि बोध्यम् । **प्रतीयत इति ॥** अनेन हृत्पद्मस्थत्वं विषयः । किं भगवतः? उत आकाशस्य? अथ जीवस्य? इति संशयश्च सूचितः । सन्देहबीजं तु- 'यो वेद' इत्यादिषु त्रयाणामपि हृत्पद्मस्थत्वश्रवणमिति बोध्यम् ॥

(१) **अथ यदिदमिति** (छा.८.१.१) 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः, तस्मिन् यदन्तः तदन्वेष्टव्यम्, तद्वाव विजिज्ञासितव्यम् इति **तं चेद् ब्रूयुः** किं तदत्र विद्यते यदन्वेष्टव्यम् यद्वाव विजिज्ञासितव्यमिति । **स ब्रूयात्** यावान् वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि' इति श्रूयते । **अयमर्थः - अथ=** प्रमेयान्तरं (विद्यान्तरं) आरभ्यते । **अस्मिन् ब्रह्मपुरे=** परिदृश्यमाने ब्रह्मणो निवासस्थानभूते देहे, **यदिदं दहरं पुण्डरीकं=** अल्पं कमलरूपं, **वेश्म=** सद्म अस्ति, **अस्मिन्=** पुण्डरीकरूपवेश्मनि, **दहरः=** अल्पः, **अन्तराकाशः=** भूताऽकाशोऽस्ति, **तस्मिन्=** पुण्डरीकान्तस्थदहराऽकाशे, **अन्तः=** यदस्ति, **तदन्वेष्टव्यम्=** ज्ञातव्यम्, तत् **वाव विजिज्ञासितव्यं=** तदेव

मीमांसितव्यं = श्रवणमननध्यानविषयीकर्तव्यम् । अन्वेष्टव्यमित्युक्तान्वेषणमेव 'तद्भाव' इत्यनेन विवृतं ध्येयम् । इति गुरुणोक्ते, तं गुरुं प्रति (यदिदमित्यादि आकाश इत्यन्तं गुरूक्तानुवादरूपं) शिष्या अत्र हृदयाकाशे (हृदयपुण्डरीकस्थाऽकाशे) यदन्वेष्टव्यं, यद्वा व विजिज्ञासितव्यं, **विद्यते,** तत् किंस्वरूपकं किंमहिमकमिति **चेद्ब्रूयुः**= यदि पृच्छेयुः । **सः**= एवं शिष्यैः पृष्टः गुरुः वक्ष्यमाणरीत्या **ब्रूयात्** ॥ (उक्तिप्रकारमाह) **यावान् वाऽयमिति ॥ अन्तर्हृदये**= हृदोऽन्तः (मध्ये) अन्तर्हृत्-तस्मिन् अयत इति अन्तर्हृदयः हृत्पद्मस्थभूताऽकाशे, **आकाशः**= तदाख्यः परमात्मा अस्ति, अयं बहिस्थितः आकाशः परमात्मा **यावान्**= यावद्गुणवान्, यावत्परिमाणवांश्च, **एषः**= अन्तर्हृदय आकाशः परमात्मा **तावानेव** ॥

किंमहिमकमिति प्रश्नस्य उत्तरम्- **उभे इति ॥ अस्मिन् अन्तरेव**= हृत्पद्मगताऽकाशस्थहर्यन्तरेव, **उभे**= मुक्तामुक्ते, द्यावापृथिव्यौ (तदभिमानि) देव्यौ, **समाहिते**= समवस्थिते, **उभौ**= (मुक्तामुक्तत्वेन) उभयविधौ **अग्निश्च वायुश्च** इत्येतौ देवौ समाहितौ, **उभौ**= मुक्तामुक्तौ **सूर्याचन्द्रमसौ विद्युत् नक्षत्राणि च** समाहितानि इति ॥ **अयं च सिद्धान्ते**- अस्मिन् सिद्धान्तेऽर्थे 'य एषोऽन्तर्हृदय आकाशः, तस्मिन्नयं पुरुषो मनोमयः' (तै.उ.१.१५) इति, 'दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा सम्प्रतिष्ठितः' (आ.४.८) इति, 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते', (बृ. ६-४-२२) इति, 'तत्रापि दहरं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' (माहाना. १०) इति, 'यो वेद निहितं गुहायां परमे व्योमन्' (तै.उ.२.२.) इत्यादयः श्रुतयः अनुकूलाः । **पूर्वपक्षे तु**- अस्मिन् ब्रह्मपुरे देहे दहरं वेश्म पुण्डरीकमस्ति अस्मिन् पुण्डरीके अन्तः दहर अकाशोऽस्ति, तस्मिन्नाकाशे अन्तः यदस्ति तदन्वेष्टव्यं तद्भाव विजिज्ञासितव्यमित्युक्ते, शिष्यः पृच्छति - यदन्वेष्टव्यं विजिज्ञासितव्यमाकाशे विद्यते, तत् किमिति ? उत्तरमाह- गुरुः, अयं बहिस्थ आकाशो यावान् एषः पूर्वमुक्तो हृदयेऽन्तराकाशः **तावानिति** ॥ पुण्डरीकस्थाऽकाशं गुणोक्तिपूर्वकमनूद्य, किमिति प्रश्नविषयीभूतवस्तून्याह - **उभे** इत्यादिनेत्यर्थः ॥ अत्र पक्षे 'तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम्' इति श्रुतिः आपाततोऽनुकूला इति बोध्यम् ॥

**(२) स चाऽकाशो न विष्णुः । 'तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम्' (म.ना.उ.११) इति श्रुतेः, इति—**

**(२) ननु तत्रत्याऽकाशशब्दः 'आकाश' (१.१.६) नयोक्तयोगेन विष्णुपरः किं न स्यात् ? इत्यत आहुः- स चेति ॥ कुतो न विष्णुरित्यत आहुः- तस्यान्ते इति ॥ श्रुतेरिति ॥ इति श्रुतेः न विष्णुरित्यन्वयः । अनेन हृत्पद्मस्थो विष्णुर्न, किन्तु आकाशादिरेवेति पूर्वपक्षस्सूचितः ।**

अयं भावः- तत्र श्रुतौ 'तस्मिन् सर्वं प्रतिष्ठितम्' इत्यनेन सुषिरशब्दिताऽकाशस्य सर्वाधारत्व-प्रतिपादनात् तत्समाख्यया प्रकृतश्रुतावपि तथैव (आकाशशब्देन प्रसिद्धाऽकाशपरतया) भाव्यत्वात् अत्रत्याऽकाशो न विष्णुः, तत्र सुषिरपदेनापि विष्णुर्ग्रहीतुं न शक्यः, 'तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम् । तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता । तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः' इति विष्णोः (सुषिरस्य) उपरि श्रवणात् इति ॥

अत्र टीकायाम्- सर्वाऽधारतया हृत्पद्मस्थत्वं आकाशस्येति तावत्पूर्वःपक्ष इत्युक्तम् । तत्रेयं शङ्का- सर्वाधारतया हृत्पद्मस्थत्वस्य पूर्वपक्षविषयत्वे तत्रैव सन्देहोऽपि वक्तव्यः, स च न सम्भवति । तथा सति सन्देहबीजत्वेनोदाहृतानां- 'तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम्' इति 'हृदि ह्येष आत्मा' इति 'यो वेद निहितं गुहायां' इति- श्रुतीनां मध्ये प्रथमायाः सर्वाऽधारतया हृत्पद्मस्थत्व-बोधकत्वेऽपि, उत्तरयोस्तदभावेन संशयबीजत्वानुपपत्तेः ।

किञ्च साक्षात् हृत्पद्मस्थस्य विषयत्वे सिद्धान्तासङ्गतिः । सिद्धान्ते तस्य विष्णुत्वानङ्गीकारात् । परम्परया हृत्पद्मस्थस्य विषयत्वे पूर्वपक्षासङ्गतिः । पूर्वपक्षिणा तस्याऽकाशत्वानङ्गीकारात्, परम्परया हृत्पद्मस्थस्य सर्वाधारत्वेन श्रुत्यर्थतया पूर्वपक्षिणाऽनङ्गीकाराच्च ॥

न चोक्तश्रुत्यर्थपर्यालोचनायां दहराऽकाशे महाऽकाशोऽस्तीति लभ्यते । स चाऽकाशः परम्परया हृत्पद्मस्थः, स च प्रसिद्धाकाश इति पूर्वपक्षी । सिद्धान्ती तु विष्णुरिति । अतः (विशयादेः समानविषयत्वेन) नोक्तासङ्गतिरिति वाच्यम् । 'हृदि ह्येष आत्मा' इति श्रुत्या तस्याऽकाशस्य जीवत्वाप्राप्त्या तस्याः श्रुतेस्संशयबीजत्वायोगात्, जीवनिरासाय 'इतरपरामर्शात्सः' (१.३.८) इत्यादिगुणसूत्रकरणायोगाच्च, भाष्ये 'स च आकाशो न विष्णुः, सुषिरश्रुतिविरोधात्' इति कथनानुप-योगाच्च इति ॥

अत्रोच्यते- सङ्गतिस्तु चन्द्राद्याधारत्वं विष्णोरुक्तम् । तच्च छान्दोग्येऽष्टमे 'अथ यत्' इत्यनेन आकाशस्योक्तं प्रतीयते । अतः सा श्रुतिः निर्णेया इति । तच्छ्रुतौ चन्द्राद्याधारत्वविधानार्थं उद्देश्यतावच्छेदकतया उक्तं हृत्पद्मस्थितत्वं साक्षाद्विवक्षितम् ? उत आकाशान्तरितपरम्परया ? इति संशयः । श्रुत्यर्थे विवादः सन्देहबीजम् । टीकोक्तं तु- संशयबीजादिफलितार्थाभिप्रायेण । साक्षादिति पूर्वःपक्षः, श्रुतौ- दहराऽकाशे किमस्तीति प्रश्ने 'यावान् वाऽयमाकाशः' इत्यादिना पूर्वोक्ताकाशानुवादेन द्यावापृथिव्यादेस्सर्वस्य विधानात् ।

एवं च 'सुषिर'श्रुतिरप्यनुकूलिता भवति । एवं श्रुत्यर्थे स्थिते दहराऽकाश एव चन्द्राद्याधार इति फलति । फलीभूतपूर्वपक्षः भाष्यादौ दर्शित इति सर्वमनवद्यम् । इति ॥

(२) **तस्यान्ते इति** ॥ (महाना.उ.११) **तस्य**= पूर्वं प्रसक्तस्य ('पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम्' इति पूर्ववाक्ये प्रसक्तस्य) हृत्पद्मकोशस्य, **अन्ते**= मध्ये, **सूक्ष्मं सुषिरं**= छिद्रमस्ति । तस्मिन् सर्वं जगत् प्रतिष्ठितमित्यर्थः । अयं च पूर्वपक्षरीत्या । **सिद्धान्ते तु** - सुषिरस्थपरमात्मवृत्तिद्वारा सुषिरवृत्तित्वं जगत इति बोध्यम् । वक्ष्यते च एवमेव भाष्यकारैः 'प्रसिद्धेश्च' (१.३.१७) इति सूत्रे तदन्तस्थत्वेत्यादिना ॥

**(हृदयाकाशस्थो विष्णुर्न जीवोऽपहतपाप्मत्वाद्युक्तेः)**

**(३) अत आह—**

**॥ ॐ दहर उत्तरेभ्यः ॐ ॥ १४ ॥**

(३) **ॐ दहर उत्तरेभ्य ॐ इति** ॥ द्युभ्वाद्यायतनं, तत्तु, इति वर्तते । वर्तते इति शेषः । यथायथमावृत्तिविपरिणामौ भावप्राधान्यं च । **अयमर्थः**:- तत् = विष्णवाख्यं ब्रह्म द्युभ्वाद्यायतनत्वेन, **दहरे**= दहरपुण्डरीके, वर्तते तु= दहराकाशद्वारा वर्तते एव, तथा श्रुत्या प्रतिपाद्यत एवेति यावत् । **उत्तरेभ्यः**= 'य आत्माऽपहतपाप्मा' इत्याद्युत्तरवाक्योक्तापहतपाप्मत्वादिगुणेभ्यः इति ॥ विष्णोः दहरपुण्डरीकवृत्तित्वानङ्गीकारे प्रसिद्धाऽकाशस्योक्तगुणाभावेन श्रुतेरसङ्गतिरिति भावः । तथा च सिद्धान्ते दहराऽकाशद्वारा हृत्पद्मे स्थितत्वं चन्द्राद्याधारतोद्देश्यतावच्छेदकमिति बोध्यम् ।

एतेन च परम्परया हृत्पद्मस्थः परमात्मैव चन्द्राद्याधार इति फलति । फलितसिद्धान्त एव भाष्यादावुक्त इति ज्ञेयम् । सुषिरश्रुतिविरोधपरिहारस्तु- 'प्रसिद्धेश्च' (१.३.१७) इति सूत्रे भाष्ये एव व्यक्तीभविष्यति । 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः' इति श्रुतिस्तु शिखामध्येऽपि भगवद्रूपाङ्गीकारादुपपन्ना भवति ।

**(४) 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छा.उ. ८-७-३) इत्यादिभ्य उत्तरेभ्यो गुणेभ्यो दहरे विष्णुरेव ।**

(४) श्रुत्युपन्यासपूर्वकं सूत्रार्थमाहुः- **य आत्माऽपहतपाप्मा इति** ॥ यद्यपि 'एष आत्माऽपहतपाप्मा' इति वाक्यं समीपस्थं, तथाऽपि उत्तरप्रकरणे श्रूयमाणे- 'य आत्मा' इति वाक्ये स्पष्टं तद्गुणानां परमात्मवृत्तित्वं भासते इति तदुपन्यासः कृतः ।

(४) **य आत्मेति ॥** (छा.६.७.१) **यः**= दहराकाशस्थः विष्णुः शरीरनाशेऽपि अवध्यत्वेन प्रसक्तः, स आत्मा- **अपहतपाप्मा**= नित्यं पापात्यन्ताभाववान्, **विजरः**= जरारहितः, **विमृत्युः**= मरणशून्यः, **विशोकः**= दुःखादिहीनः, **अविजिघत्सः**= बुभुक्षादिरहितः, **अपिपासः**= पानेच्छादिरहितः बुभुक्षा-पिपासाकृतपीडारहितः इति यावत् । **सत्यकामः**= स्वतः सिद्धकाम्यवान्, **सत्यसङ्कल्पः**= अप्रतिहतसङ्कल्पवान्, इत्यर्थः । शिष्टं स्पष्टम् ।

**(५) 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' (बृ.उ. ५-५), 'स एष सर्वेभ्यः पाप्मभ्य उदितः' (छा.उ. १-६-७) इत्यादिना विष्णोरेव हि ते गुणाः ।**

(५) उक्तगुणानां विष्णुधर्मत्वे मानमाहुः- **योऽशनायेत्यादि ॥ स एष इति ॥ यद्यपि अपहतपाप्मत्वस्य प्राथमिकत्वेन इदमेव प्रथममुदाहर्तव्यम् । तथाऽपि क्रमस्याविवक्षितत्वात् (अविवक्षया) न दोषः । ते गुणा इति ॥ अपहतपाप्मत्वादिगुणा इत्यर्थः ।**

(५) **योऽशनायेति ॥** (छा.५.५.१) **अशनाया**= अशनेच्छा, **मोहं**= मूर्च्छा, **अत्येति**= अतिक्रम्य वर्तते, इत्यर्थः । शिष्टं स्पष्टम् । यमित्यस्य 'तमात्मानं विदित्वा' इत्युत्तरवाक्येन सम्बन्धः ॥ **स एष इति ॥** (छा.१.६.७) **स एषः**= परमात्मा, **पाप्मभ्यः**= पापेभ्यः **उदितः**= नित्यं स्वत एव उद्गतः पापरहित इत्यर्थः ।

**(६) 'नित्यतीर्णाशनायादिरेक एव हरिः स्वतः ।**
**अशनायादिकानन्ये तत्प्रसादात्तरन्ति हि ॥' इति पाद्मे ।**
**सापेक्षनिरपेक्षयोश्च निरपेक्षं स्वीकर्तव्यम् ॥**
**'सत्यकामः परो नास्ति तमृते विष्णुमव्ययम् ।**
**सत्यकामत्वमन्येषां भवेत्तत्काम्यकामिता ॥' इति स्कान्दे ॥ १४ ॥**

(६) अपहतपाप्मत्वादेर्लक्ष्मीसाधारणत्वेन विष्णुसाधकत्वं न स्यादित्यत आहुः- **नित्येति ॥ ननु यथाकथञ्चित् अन्यत्र एते गुणास्सन्त्येव, अतस्तैः कथं विष्णुत्वनिश्चय इत्यत आहुः- सापेक्षेति ॥ सापेक्षत्वं च अन्याधीनत्वम् । निरपेक्षत्वं च अन्यानधीनत्वम् । ननु सत्यकामत्वादीनां अभिमानिद्वारा आकाशे उपपत्तिः, अत आहुः - सत्यकामेति ॥ स्कान्द इति ॥ तथा च इत्यादिना, पाद्मे इत्युक्तेश्च,**

**यतो निरपेक्षं स्वीकर्तव्यं अतः, स्कान्दे इत्युक्तेश्च, विष्णोरेव ते गुणाः, इति हि निश्चितमिति सम्बन्धः ॥ १४ ॥**

(६) **नित्यतीर्णेति ॥ स्वतः**= अन्यानपेक्षया, नित्यं तीर्णाः अशनायादयो येन सः **हरिः एक एव, हि** यस्मात् **हरेरन्ये**= ब्रह्मादयः **तत्प्रसादात्**= ईश्वरप्रसादात्, अशनायादीन् तरन्ति, अतः (एक एवेत्यन्वयः) इत्यर्थः । **सत्यकाम इति ॥ अव्ययम्**= अक्षीणमेव, तं= सत्यकामत्वादिना प्रसिद्धं, **विष्णुं ऋते**= हरिं विना, **परः**= अन्यः **सत्यकामः**= सत्यसङ्कल्पो नास्ति । **अन्येषां**= रमादीनां **सत्यकामत्वं** श्रुत्यादौ प्रतिपादितं तु **तत्काम्यकामिता**= विष्णुकामनाविषय(विषयक) कामनावत्वरूपमेव **भवेत्** । तदधीनमेव भवतीति यावत् इत्यर्थः ॥ १४ ॥

**(सुप्तप्राप्यत्वब्रह्मशब्दाभ्यां हेतुभ्यां हृत्पद्मस्थो विष्णुः)**

## (७) ॥ ॐ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॐ ॥ १५ ॥

(७) युक्त्यन्तरेण चन्द्राद्याधारतया विष्णोर्हृत्पद्मस्थत्वप्रतिपादनाय सूत्रम्- **ॐ गतिशब्दाभ्यामिति ॥** दहरे, द्युभ्वाद्यायतनं वर्तते, तत्तु, इति वर्तते । **हिः** प्रसिद्धौ, हेतौ च । **यथायथमावृत्तिविपरिणामौ । भावप्राधान्यं च । अयमर्थः**- तत्= ब्रह्म, द्युभ्वाद्यायतनत्वेन दहरे **पुण्डरीके, वर्तते तु**= वर्तते एव । दहरे= दहरविद्यायां **गतिशब्दाभ्यां**= सुप्तप्राप्यत्वब्रह्मशब्दरूपलिङ्गश्रुतितः, **तथा**= सुप्तप्राप्यत्वादिवत्, तस्मिंस्तु= विष्णावेव **हि**= प्रसिद्धं **लिङ्गम्**= अरण्याख्यसुधासमुद्राऽश्रयलोकवत्वरूपलिङ्गं **च दृष्टम्** अतश्चेति ॥

**उक्तं लिङ्गं हृत्पद्मस्थे न श्रूयते इति शङ्कावारणाय तथाशब्दः । यथा ब्रह्मलोकशब्दश्रवणात् सुप्तप्राप्यत्वं ब्रह्मधर्मः, तथा तद्बलादेवायमपि ब्रह्मधर्म इति भावः ।**

## (८) 'अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति'(छा.उ. ८-३-२) इति सुप्तस्य तद्गतिर्ब्रह्मशब्दश्चोच्यते ।

(८) **सौत्रगतिशब्दाभ्यामित्यंशं व्याचक्षते- 'अहरहर्गच्छन्त्य' इत्यादिना ॥ तद्गतिः=ब्रह्मगतिः ।**

(८) **अहरह इति ॥** (छा.८.३३.२) इमाः सुप्ताः सर्वाः प्रजाः **अहरहः**= प्रतिदिनं, **एतं गच्छन्त्यः**= प्राप्नुवन्त्यः **ब्रह्मलोकं**= विष्णोरावासस्थानभूतं हृत्पद्म तत्रत्यं लोकं आश्रयं ब्रह्म वा, **न विन्दन्ति**= न जानन्ति ॥ कुतो न जानन्ति ? इत्यत आह- **अनृतेनेति** ॥ 'अनृतेन हि प्रत्यूढाः । स वा एष आत्मा

हृदि तस्यैतदेव निरुक्तं, हृद्ययमिति, तस्माद्धृदयमहरहर्वा एवंवित्स्वर्गं लोकमेति ॥'(छा.८.३.३) **अनृतेन**= अज्ञानेन, ताः प्रजाः, **हि**= यस्मात् **प्रत्यूढाः**= आवृताः, अतो न जानन्तीत्यन्वयः ॥ **सः**= तादृशः, **एष आत्मा** हृदि अयं = हृदयं, हृदि वर्तते इति पूर्वोत्तरवाक्यसहितस्यार्थः ।

**(९) 'सता सोम्य तदा सम्पन्नो भवति'( छा.उ. ६-८-१) इति श्रुतेस्तं हि सुप्तो गच्छति । 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोक' (छा.उ. ८-५-३) इति लिङ्गं च, तथा दृष्टम् । 'अरश्च वै ण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वौ' इत्यादिना तस्यैव हि तल्लक्षणत्वेनोच्यते ॥ १५ ॥**

(९) **सुप्तकर्तृकगतेः विष्णुधर्मत्वे मानमाहुः- सतेति ॥ तथाहीत्याद्यंशं व्याचक्षते- अरश्चेति ॥ लिङ्गस्य विष्णुसम्बन्धित्वे मानमाहुः- अरश्चेति ॥ (इयं च स्मृतिः प्रसिद्धार्थकसौत्रहिशब्दसूचिता) च इत्यावर्तते । तथा च यतो- 'न विन्दन्ति' इति श्रुत्या सुप्तस्य तद्गतिः = तस्मिन् = ब्रह्मणि गतिः= प्राप्तिरुच्यते, ब्रह्मशब्दश्च वर्तते, हि = यतः, इति श्रुतेः तं हि = तमेव सुप्तो गच्छति, च = यतः, लिङ्गं, तथा =गत्यादिवत् ब्रह्मसम्बन्धित्वेनेति 'ब्रह्मलोक' इति वाक्येन दृष्टं (दर्शितं) हि = यतः, इत्यादिना, तस्यैव = विष्णोरेव, तत् = उक्तगुणकलोकवत्वलिङ्गं लक्षणत्वेनोच्यते, अतः 'दहरे विष्णुरेव' इति पूर्वभाष्येणान्वयः ॥ १५ ॥**

(९) **सता सोम्येति** ॥ (छा.६.८.१) हे **सोम्य**= भक्तिज्ञानार्ह हे श्वेतकेतो, **तदा**= सुप्तिकाले, **सता**= ब्रह्मणा सम्पन्नो भवतीत्यर्थः ॥ **अरश्चेति** ॥ (छा.८.५.३) **ब्रह्मणः**= विष्णोः, **लोके** श्वेतद्वीपे, **अरश्च ण्यश्च** इति संज्ञकौ= **अर्णवौ**= सुधासमुद्रौ, अर्णवोपमसुधासरसी वा स्तः, ह **वै**= प्रसिद्धमित्यर्थः । **अरश्चेति** ॥ **तत्रैव**= क्षीराब्धिमध्यगतविष्णुलोके एवेत्यर्थः ॥ शिष्टं स्पष्टम् ॥ १५ ॥

**(सर्वाधारत्व-सर्वेश्वरत्वादिकं हृत्पद्मस्थविष्णोरेव)**

## (१०) ॥ ॐ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॐ ॥ १६ ॥

(१०) युक्त्यन्तरेण विष्णोः हृत्पद्मस्थत्वं साधयत्सूत्रं पठन्ति- **ॐ धृतेश्च महिम्न इति** ॥ द्युभ्वाद्यायतनम्, तत्तु, दहरे, वर्तते, इति वर्तते । यथायथमावृत्तिविपरिणामौ, भावप्राधान्यं च । **अयमर्थः**- तत् द्युभ्वाद्यायतनत्वेन दहरे वर्तते तु- **धृतेश्च**= 'स सेतुर्विधृतिः' इति सर्वाऽधारत्व-श्रवणात्(च) **अस्मिन्** प्रकरणे अस्य= विष्णोः **महिम्नः**= 'सर्वे पाप्मानोऽतो निवर्तन्ते' इति सर्वपाप्मोज्झितत्वादिमाहात्म्यस्य **उपलब्धेः**= हृत्पद्मस्थवृत्तितया श्रवणात् इति ॥

किञ्च- वाजसनेयकसमाख्याप्रदर्शनार्थमप्येतत्सूत्रम्, तथाहि- 'य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते' इत्युक्तस्य हृत्पद्मस्थस्य 'एष सेतुर्विधरणः' इति सर्वाधारत्वश्रवणाच्च अस्मिन् समाख्याऽऽगमे अस्य विष्णोर्महिम्नः 'एष सर्वेश्वरः' इत्यादिना सर्वेश्वरत्वादिमाहात्म्यस्य उपलब्धेः = दृष्टत्वात् इति ॥

## (११) 'एष सेतु'र्विधृतिः' (छा.उ. ८-४-१) इति धृतेः, एष भूताधिपतिरेष भूतपालः' (बृ.उ. ६-४-२१) इत्याद्यस्य महिम्नोऽस्मि-न्नुपलब्धेः ।

(११) श्रुत्युपन्यासपूर्वं सूत्रार्थमाहुः- **एष सेतुर्विधृतिरिति** ॥ 'एष सेतुः' इति वाजसनेयकप्रतीकग्रहणम् । 'विधृतिः' इति छान्दोग्यप्रतीकग्रहणम् । वाजसनेयकोदाहरणं तु (तस्याप्युपसंहारार्थं) समाख्यार्थं वा, 'एष सेतुर्विधरणः' इति धृतेः सर्वाधारत्वश्रवणात्, 'स सेतुर्विधृतिः' इति धृतेः सर्वाधारत्वश्रवणाच्चेत्यर्थः । समाख्यया (ससेतुरित्यस्य) विष्णुपरत्वं स्पष्टयितुं सूत्रं (सूत्रशेषं) समाख्यापरतया व्याख्यान्ति- **एष भूतेति** ॥ **इत्यादीति** ॥ इत्यादिनेत्यर्थः । इत्यादिनाऽस्य विष्णोः सर्वेश्वरत्वादिमाहात्म्यस्य अस्मिन् समाख्यारूपे वेदे= (अस्य विष्णोः सर्वपाप्मोज्झितत्वस्य अस्मिन्= दहरप्रकरणे 'सर्वे पाप्मानोऽतो निवर्तन्ते'इति वेदे) उपलब्धेः = **श्रवणात्** इत्यर्थः ॥

(११) **एष सेतुरिति** ॥ (छा.८.४.१) (बृह. ६.४.२९) व्याख्यास्यते चेयं 'एष भूताधिपतिः' इति वाक्यव्याख्यावसरे । **विधृतिरिति** ॥ (छा.८.४.१) 'अथ य आत्मा स सेतुर्विधृतिः एषां लोकानामसम्भेदाय' इत्यादि श्रूयते । अयमर्थः -अथ हृत्पद्मस्थपरमात्मनः महिमान्तरमारभ्यते । **यः=** हृत्पद्मगतः, **आत्मा**= परमात्मा स हरिः, **एषां**= भूरादीनां **लोकानाम्**, **असम्भेदाय**= अविदारणाय, वर्णाश्रमधर्मसाङ्कर्याभावाय वा, **विधृतिः**= धारणपोषणसमर्थः अत एव **सेतुः**= आश्रय इति ॥

**एष भूताधिपतिरिति** ॥ (बृह.६.४.२२) 'य एषोऽन्तर्हृदय आकाशः, तस्मिन् शेते सर्वस्य वशी' इत्यारभ्य, 'एष भूताधिपतिः एष भूतपालः एष सेतुर्विधरणः एषां लोकानामसम्भेदाय' इति श्रूयते । यः **एष भूताधिपतिः**- भूतश्चासौ अधिपतिश्चेति कर्मधारयः एवं भूतपाल इत्यत्रापि । भूत एव अधिपतिः = अनादितया अधिपतिरिति यावत् । **भूतपालः**= भूत एव पालकः = अनादितया पालक इति यावत् । **एषां**= भूरादिलोकानां, **असम्भेदाय**= अमेलनाय **विधरणः**= धारण(पोषण)समर्थः, **सेतुः**= आश्रय इत्यर्थः । यच्छब्दस्य 'तमेतं वेदानुवचनेन' इत्युत्तरत्र सम्बन्धः ॥

**(१२) 'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' (बृ.उ. ५-८-११), 'एतस्य वा अक्षरस्य प्रशासने गार्गि' (बृ.उ. ५-८-९) 'स हि सर्वाधिपतिः स हि सर्वपालः स ईशः स विष्णुः', 'पतिं विश्वस्याऽत्मेश्वरम्' (म.ना.उ. ११) इत्यादिश्रुतिभ्यस्तस्य ह्येष महिमा ।**

**'सर्वेशो विष्णुरेवैको नान्योऽस्ति जगतः पतिः' इति च स्कान्दे ॥**

(१२) उक्तसर्वाधारत्वसर्वेश्वरत्वादेर्विष्णुधर्मत्वे क्रमेण मानमाहुः- **एतस्मिन्नित्यादि** ॥ तस्य हि= विष्णोरेव एषः= सर्वेश्वरत्वादिरूपः । ज्ञायते इति शेषः । **स्कान्दे इति** ॥ स्कान्दे इत्युक्तत्वादित्यर्थः । अस्य 'एष महिमा ज्ञायते' इत्यत्रान्वयः । एवं च धृतेः= उपलब्धेः, हि= यतः तस्य ह्येष महिमा अतश्च, 'दहरे विष्णुरेव' इति पूर्वभाष्येणान्वयः ॥

ननु सर्वाधारतया हृत्पद्मस्थत्वमाकाशादेरिति पूर्वपक्षः उक्तः टीकायाम् । तादृशपूर्वपक्षिणं प्रति सर्वाधारत्वश्रवणादिति हेतुना समाधानं कथं सङ्गच्छेत ? इति चेन्न- 'चन्द्राद्याधारत्वं विष्णोरुक्तम्' इति भाष्यरीत्या द्यावापृथिव्यादिरूपसर्वस्यैव तत्रोक्तस्य टीकायां पूर्वपक्षे सर्वपदेन ग्रहणात्, अत्र सूत्रे निरुपचरितसर्वाधारत्वग्रहणेनादोषात् ॥ १६ ॥

(१२) एतस्मिन्निति ॥ (बृ.५.६.११) व्याख्यातम् (पृ.२२४) ॥ एतस्येति ॥ (बृ. ५.३.९) व्या. २१६) ) **स हीति**॥ विष्णुरित्यन्तं श्रुत्यन्तरम् । **सः**= प्रकृतः **हि**= प्रसिद्धौ । शिष्टं स्पष्टम् ॥ **पतिमिति** ॥ (महाना. ११) **विश्वस्य**= अचेतनप्रपञ्चस्य **पतिं**, **आत्मेश्वरं**= चेतनेश्वरं नारायणं, तद्विश्वमुपजीवतीत्यर्थः । **सर्वेश इति** ॥ एक एव विष्णुः **सर्वेशः**= सर्वचेतनेशः **जगतः**= अचेतनप्रपञ्चस्य **पतिः**= स्वामी **अन्यस्तु नास्ति**, यद्वा **सर्वेशः** चेतनाचेतनप्रपञ्चस्य ईशः, **जगतः**= सर्वजगतः **पतिः**= पालकः, **विष्णुरेक एव**, अन्यो नास्त्येवेत्यर्थः ॥ १६ ॥

**('दहरं विपापम्' इत्यादिश्रुतौ विष्णोरेव हृत्पद्मत्वोक्तेः)**

## (१३) ॥ ॐ प्रसिद्धेश्च ॐ ॥ १७ ॥

(१३) तैत्तिरीयसमाख्ययाऽपि हृत्पद्मस्थस्य विष्णुत्वं साधयत्सूत्रं पठन्ति- **ॐ प्रसिद्धेश्चेति** ॥ तत्तु, वर्तते, दहरे, इति वर्तते । तदित्यस्यावृत्तिविपरिणामौ । **अयमर्थः**- तत् = ब्रह्म, दहरे, वर्तते तु= वर्तते एव । तस्मिन्= विष्णौ **प्रसिद्धेश्च**= 'तत्रापि दहरं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' इति दहरस्थितत्वप्रसिद्धेश्च इति ॥

**(१४) 'तत्रापि दहरं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' (म.ना. उ. १०-७) इति प्रसिद्धेश्च । तदन्तःस्थत्वापेक्षत्वान्न सुषिरश्रुतिविरोधः ॥ १७ ॥**

(१४) श्रुत्युपन्यासपूर्वं सूत्रार्थमाहुः- **तत्रापीति ॥ प्रसिद्धेश्चेति ॥** परमात्मनीति शेषः । अस्य 'दहरे विष्णुरेव' इति पूर्वभाष्येणान्वयः ॥

ननु दहर-उत्तरगतिशब्दलिङ्गधृतिप्रसिद्धिभ्यश्चेत्येव सूत्रमस्तु । किञ्च गतिशब्दलिङ्गधृतीनां छान्दोग्ये दहरवाक्यापेक्षया उत्तरत्र सत्त्वात् उत्तरशब्देनैव गत्यादीनां ग्रहणे सिद्धे, चतुर्णां पृथग्ग्रहणं कुतः ? इति चेन्न- धृतेश्चेति सूत्रस्य समाख्यार्थत्वात् लिङ्गस्य हिशब्देन प्रसिद्धिद्योतनाय पृथग्ग्रहणस्यावश्यकत्वात् । उत्तरेभ्य इत्यनेन स्वरूपभूतापहतपाप्मत्वादीनामेव ग्रहणं स्यादिति शङ्का स्यादित्यत अस्वरूप-भूतगतिशब्दलिङ्गानां पृथग्ग्रहणाच्च इति ॥

सुषिरश्रुतिविरोधं परिहरन्ति- **तदन्तस्थत्वेति ॥** सुषिरवृत्तिविष्ण्वभिप्रायकत्वादित्यर्थः । 'मन्दिरे मणिमाला' इत्यत्र मन्दिरपदस्य मन्दिरस्थमञ्जूषापरत्ववत् 'तस्मिन् सर्वं प्रतिष्ठितम्' इति सुषिरश्रुतौ तस्मिन्नित्यस्य सुषिरस्थविष्णुपरत्वेन विरोधपरिहार इति भावः ॥ १७ ॥

(१४) **तत्रापीति** ॥ (महाना. १०) अस्य पूर्ववाक्यम् - 'दहरं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम्' इति । देहाख्यपुरमध्यसंस्थं हृदयकमलं प्रकृतम्, **तत्रापि**= प्रकृतपुण्डरीकेऽपि, **यत् परवेश्मभूतं**= हरेः सद्मभूतं, ततः कारणात्, **विपापं दहरं पुण्डरीकं, दहरं**= अल्पं, गगनं अस्ति, **तस्मिन्नन्तः**= अन्तरे, **विशोकः**= शोकोपलक्षितजरादिशून्यः **यद्**= ब्रह्म अस्ति, **तत् उपासितव्यम्** (जिज्ञास्यम्) इत्यर्थः । एवं 'दिव्ये ब्रह्मपुरे ह्येष व्योम्नि आत्मा सम्प्रतिष्ठितः' (आ.४.७) 'य एषोऽन्तर्हृदय आकाशः तस्मिन्नयं पुरुषो मनोमयः' (तै.उ.१.६.१) 'यो वेद निहितं गुहायाम्' (तै.उ. २.१) इत्यादिकं प्रसिद्धस्थलं ग्राह्यम् ॥ १७ ॥

**(स्वतोऽपहतपाप्मत्वादीनां जीवेऽसम्भवादत्रोक्तः विष्णुः)**

## (१५) ॥ ॐ इतरपरामर्शात्स इति चेन्नासम्भवात् ॐ ॥ १८ ॥

(१५) परमात्मनः हृत्पद्मस्थत्वमाक्षिप्य समादधत्सूत्रं पठन्ति- **ॐ इतरपरामर्शेति ॥** दहरे, वर्तते, तु, तत्, न, इति वर्तते । स इत्यस्यावृत्तिविपरिणामौ । **अयमर्थः- इतरपरामर्शात्**= इतरस्य 'य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मा इति

होवाच' इति श्रुतौ यच्छब्देन प्रकृतस्य ब्रह्मान्यजीवस्य परामर्शात्, आत्मपदेन 'य आत्मा अपहतपाप्मा' इत्याद्युक्तदहरस्थत्वाऽऽत्मत्वविधानार्थं उद्देश्यबोधक-'एष आत्मा'-इत्येतच्छब्द-श्रवणात्, एतच्छब्देन बोधनाद्वा, **स तु**= जीव एव दहरे पद्मे वर्तते, **न तत्**= न विष्णुः- **इति चेत्-न, असम्भवात्**= स्वतोऽपहतपाप्मत्वादेः तस्मिन् जीवेऽयोगात् । तस्मिन्नेव= भगवत्येव सम्भवात् इति ॥ स्वत इति विशेषणं तु - 'मुख्यामुख्य'न्यायलब्धम् । तत्प्रयोजनं तु - मुक्तियोग्यजीवस्यैव प्रकृतश्रुतावुक्तत्वेन, तस्य भाविनमपहतपाप्मत्वादिकमादाय इदानीं हृत्पद्मस्थत्वमुच्यत इति शङ्कावारणमिति बोध्यम् ॥

**(१६) 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छा.उ. ८-१२-३) 'एष आत्मेति होवाच' (छा.उ. ४-१५-१) इति जीवपरामर्शात् स इति चेन्न । तस्य स्वतोऽपहतपाप्मत्वाद्यसम्भवात् ॥ १८ ॥**

(१६) श्रुत्युदाहरणपूर्वकं सूत्रार्थमाहुः- **परं ज्योतिरिति ॥ इतीति ॥** इत्यत्रत्यैतच्छब्देनेत्यर्थः । **स इति ॥** जीव इत्यर्थः । दहरस्थ इति शेषः । अत्र दहराऽऽकाश एव जीव इति पूर्वपक्ष इति ज्ञेयम् । **तस्येति ॥** सौत्र 'स' इत्यस्यावृत्तिविपरिणामाभ्यां लब्धमिदम् । **जीवस्येत्यर्थः** ॥१८॥

(१६) परं ज्योतिरिति ॥ (छा. ८.१२.३) अस्य पूर्ववाक्यम् - 'अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय' इति ॥ **यः**= जीवः, यस्य परमात्मनः **सम्प्रसादः**= उत्तमप्रसादवान् एष (जीवः) **अस्मात् शरीरात्**= चरमदेहात्, **समुत्थाय**= उत्क्रम्य, **परं ज्योतिः**= परमात्मानं, **उपसम्पद्य, स्वेन रूपेण**= आनन्दादिरूपेण, **अभिनिष्पद्यते**= अभिव्यज्यते, **एषः**= प्रसादकर्ता परंज्योतिः, **आत्मेति**= हृत्पद्म-स्थाऽऽकाशस्थ, इति मन्त्रद्रष्ट्री लक्ष्मीः उवाचेत्यर्थः । अयं च सिद्धान्ते । पूर्वपक्षी तु - य एष जीवो मुक्तो भवति **स आत्मा**= पूर्वोक्तपरमात्मा इति मन्यते ॥ १८ ॥

**(मुक्तजीवस्य सत्यकामत्वादिसत्त्वेऽपि न जीवमात्रस्य नापि स्वत इति नात्र तस्य हृत्पद्मस्थत्वम्)**

**(१७) ॥ ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ ॥ १९ ॥**

(१७) जीवस्य स्वतोऽपहतपाप्मत्वाद्यसम्भवमाक्षिप्य समादधत्सूत्रं पठन्ति- **ॐ उत्तराच्चेदिति ॥** दहरे, वर्तते, अस्य, अस्मिन्, उपलब्धेः, न, सः, द्युभ्वाद्यायतनं इति वर्तते । यथायथमावृत्ति-विपरिणामौ । **अयमर्थः- उत्तरात्**= परामर्शवाक्योत्तरं श्रूयमाण-'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' इत्यादिवाक्यात्, **अस्मिन्**= जीवे **अस्य**= स्वतोऽपहतपाप्मत्वादेः, **उपलब्धेः**= प्रतीतेः ।

अत एवास्य विशोकत्वादेरुपलब्धेः= सिद्धेश्च, दहरे, स तु= जीव एव वर्तते, द्युभ्वाद्यायतनत्वेन इति **चेत्** न, **तु**= यतः, उत्तरे वाक्ये (तत्रैव) परञ्ज्योतिरुपसम्पद्य स्वेन रूपेण (छा.८.१२.३ इत्यनेन) **उत्तरात्**= सर्वोत्तमाद्विष्णोः तत्प्रसादादिति यावत्, **आविर्भूतस्वरूपः**= अभिव्यक्तापहतपाप्मत्वादिस्वधर्मवान् मुक्त उच्यते, अत इति ॥ 'स्वेन रूपेणाभिनिष्पद्यते' इत्युक्तेर्मुक्त एवात्र उच्यते, तस्य तच्छरीरानभिमानित्वेन हृत्पद्मस्थत्वं न युज्यते, मुक्तत्वानुपपत्तेरिति भावः ।

ननु पूर्वत्रापि 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते (छा.८.३.४) इत्येवोक्तम् । ततश्च पूर्ववाक्यं उक्तविषये कुतो नोदाहृतम् ? इति- चेन्न, पूर्ववाक्ये 'अभिनिष्पद्यते' इत्युक्त्वा न कश्चन मुक्तधर्मः स्पष्टं प्रतिपादितः । किन्तु 'एष आत्मा' इत्येवोक्तम् । अत्र तु बहूनां मुक्तधर्माणामुक्तत्वात् स्पष्टं मुक्तविषयकत्वप्रतीतेः । मुक्त इत्येव वक्तव्ये अभिव्यक्तस्वरूपत्वोक्तिः मुक्तस्वरूपं एतादृशमिति बोधनार्था ॥

**(१८) 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' (छा.उ. ८-१२-३) इत्याद्युत्तरवचनाज्जीव एवेति चेन्न । तत्र हि परमेश्वरप्रसादादाविर्भूतस्वरूपो मुक्त उच्यते । यत्प्रसादात्स मुक्तो भवति स भगवान् पूर्वोक्तः ॥ १९ ॥**

(१८) श्रुत्युदाहरणपूर्वकं सूत्रार्थमाहुः- **स तत्रेति** ॥ **उत्तरवचनादिति** ॥ दहरवाक्यापेक्षया ('एष आत्मेति' (छा.८.३.४) परामर्शवाक्यापेक्षया) उत्तरवचनबोधितजीवीयस्वतस्सत्यकामत्वादेरित्यर्थः॥ **जीव इति** ॥ दहरस्थ इति शेषः । **तत्र हीति** ॥ 'स तत्र पर्येति' इति वाक्ये त्वित्यर्थः । नन्वस्य वाक्यस्य मुक्तविषयत्वेऽपि भाविमुक्तविषयत्वमेव स्वीक्रियते, ततश्च भाविनमपहतपाप्मत्वादिकमादाय इदानीं हृत्पद्मस्थतया जीव एव उच्यते इति किं न स्यादित्यत आहुः- **परमेश्वरप्रसादादिति** ॥ स्वतोऽपहतपाप्मत्वादिकं ईश्वरेतरस्य नेति भावः । **आविर्भूतस्वरूप इति** ॥ ईश्वरप्रसादेन अभिव्यक्तापहतपाप्मत्वादिस्वधर्मवानित्यर्थः । अस्य व्याख्यानम्- **मुक्त इति** ॥ **उच्यते इति** ॥ यतोऽत इति शेषः । यत एवमुच्यते तत्र, अतो 'जीव इति चेन्न' इति सम्बन्धः ।

ननु 'परं ज्योतिरुपसम्पद्य' इति श्रुतौ मुक्तस्यापहतपाप्मत्वादिगुणा एवोच्यन्ते । न तु तेषां परमेश्वरप्रसादाधीनत्वम्, अतः ते गुणाः मुक्तस्य स्वत एवेत्यत आहुः- **यत्प्रसादादिति** ॥ यस्य परमात्मनः, प्रसादादित्यर्थः । **सः**= जीवः, **मुक्तः**= अपहतपाप्मत्वादिमान् । **सः**= (निरुक्त)-गुणदाता, **भगवान् पूर्वोक्तः**= 'स तत्र पर्येति' इति वाक्यापेक्षया पूर्वभूत 'परं ज्योतिरूपसम्पद्य'

इति वाक्ये, **उक्तः= गुणदातृतयोक्त इत्यर्थः** । **यद्वा-** जीवेऽपि अन्याधीनापहतपाप्मत्वादि-गुणजातमस्त्येव, य आत्माऽपहतपाप्मा' इत्यादिश्रुतौ च स्वत इति न श्रूयते । ततश्च जीव एव हृत्पद्मस्थः किं न स्यादित्यत आहुः- **यत्प्रसादादिति** ॥ अत्र कल्पे 'पूर्वोक्त' इत्यस्य य आत्माऽपहतपाप्मा (छा.८.१.५) इत्यादि पूर्ववाक्ये भगवान् गुणदातृतया उक्त इत्यर्थः । दातृ-प्रतिग्रहीत्रोर्मध्ये दातुरेवाधिक्यादिति भावः ॥ १९ ॥

(१८) **स तत्रेति** ॥ (छा.८.१२.३) 'एवमेव एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेण अभिनिष्पद्यते । स उत्तमः पुरुषः स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा, अज्ञातिभिर्वा' इति पठ्यते । अस्यायमर्थः- **एवमेव**= वाय्वादिवदेव **सम्प्रसादः**= परमात्मप्रसादवान्, **एषः**= जीवः, अस्मात् शरीरात् समुत्थाय, यत्परं ज्योतिरुपसम्पद्य स्वेन रूपेण, **अभिनिष्पद्यते**= स्वीयाऽनन्दादिरूपेणाभिव्यक्तो भवति, **सः**= परञ्ज्योतीरूपः परमात्मा उत्तमः पुरुषः, **स** मुक्तः, **तत्र**= मुक्तिस्थाने **जक्षन्**= स्वापेक्षितं भक्ष्यन्, **हसन्** वा, **ज्ञातिभिः**= स्वेन सह मुक्तिं प्राप्तैः **अज्ञातिभिः**= पूर्वकल्पीयमुक्तैस्सह **क्रीडन् स्त्रीभिः रममाणः**= रतिं कुर्वाणः, **यानैः** रममाणः, **पर्येति**= परितः सञ्चरतीति ॥ १९-२० ॥

**('य एष' इत्यादिवाक्ये न जीवपरामर्शः, अपि तु विष्णोः)**

## (१९) ॥ ॐ अन्यार्थश्च परामर्शः ॐ ॥ २० ॥

(१९) **ननु 'य एष सम्प्रसादोऽस्मात्' इत्यादि - 'एष आत्मा' इत्यन्तवाक्ये श्रुत-'यत्'शब्देन मुक्त-जीवस्य, 'एष आत्मा' इत्येतच्छब्देन परामर्शः प्रतीयते । तद्बलात् अमुख्यापहतपाप्मत्वादिगुणो जीव एव हृत्पद्मस्थो भवेत्, अन्यथा परामर्शवाक्यं निर्विषयं स्यात्, इति शङ्कां परिहरत्सूत्रं पठन्ति- ॐ अन्यार्थश्चेति** ॥ अन्यः अर्थः = अभिधेयः यस्येति विग्रहः । इतरपरामर्शादिति चेन्न, सः, दहरे, तु, वर्तते, इति वर्तते । चः समुच्चये, हेतौ च । **अयमर्थः**- इतरपरामर्शात्= 'एष आत्मा' इति जीवपरामर्शात्, स तु= जीव एव, दहरे वर्तते- इति चेन्न- **च**= यतः **परामर्शः**= 'एष आत्मा' इति पूर्वोक्ताऽर्थपरामर्शकैतच्छब्दः, **अन्यार्थः**= जीवान्यपरमात्माऽभिधायकः, अतश्च इति ॥

### (२०) यं प्राप्य स्वेन रूपेण जीवोऽभिनिष्पद्यते स एष आत्मेति परमात्मार्थश्च परामर्शः ॥

(२०) श्रुत्यर्थवर्णनपूर्वकं सूत्रार्थमाहुः- **यमित्यादि** ॥ श्रुतौ इत्यत्र 'सुपां सुलुक्' इति सूत्रेण अमः

सुः आदेशः । आत्मशब्दानुरोधेन पुल्लिङ्गत्वम् । **यं**= परञ्ज्योतिराख्यं परमात्मानम् । उपसम्पद्य इत्यस्यार्थः- **प्राप्येति ॥ स्वेन रूपेण**= निजज्ञानानन्दादिशुद्धरूपेण, एष इत्यस्यार्थः= **जीव इति ॥ परामर्श इति ॥** 'स एष आत्मा' इति परामर्शः । परमात्मार्थः= परमात्माऽऽभिधायक इत्यर्थः। तथा च - परामर्शस्य जीववाचित्वा (विषयकत्वा) भावात् जीवसाधकत्वं नास्तीति भावः ॥२०॥

**(व्योमवत्सर्वगतस्यापि विष्णोरल्पस्थानस्थितत्वं युज्यते)**

## (२१) ॥ ॐ अल्पश्रुतेरिति चेत्तदुक्तम् ॐ ॥ २१ ॥

(२१) दहरे विष्णुरित्युक्तं न युक्तमित्याशङ्क्य समादधत्सूत्रं पठन्ति- **ॐ अल्पश्रुतेरिति ॥** दहरे, तत्तु, न इति, वर्तते । यथायथमावृत्तिविपरिणामौ । **अयमर्थः- अल्पश्रुतेः**= 'दहरे' इति अल्पस्थान-स्थितत्वश्रवणात्, दहरे न तत् = न विष्णुः **इति चेन्न**- तु = यतः, **तत्**= तत्समाधानम् । **उक्तं तु**= 'निचाय्यत्वादेवं व्योमवच्च' (१.२.७) इत्यत्र व्योमवत् सर्वगतस्यापि अल्पस्थानस्थितत्वं युक्तमित्युक्तमेव । 'एष मे आत्माऽन्तर्हृदय' इति श्रुतावुक्तं च, अत इति ॥

**(२२) 'दहर' (छा.उ.८-१-१) इत्यल्पश्रुतेर्न, इति चेन्न- 'निचाय्यत्वादेवं व्योम-वच्च' इत्युक्तत्वात् । 'एष म आत्माऽन्तर्हृदये ज्यायान्' इति (छा.उ.३-१४-३) श्रुत्युक्तत्वाच्च ।**

**॥ इति दहराधिकरणम् ॥**

(२२) श्रुत्युदाहरणपूर्वकं सूत्रार्थमाहुः- **दहर इति ॥ अल्पश्रुतेरिति ॥** दहर इति अल्पस्थान-स्थितिश्रवणादित्यर्थः । सूत्रे नञः अनुवृत्त्यावृत्ती अभ्युपेत्य व्याचक्षते- **नेतीति ॥** (दहरे) विष्णुरिति शेषः । सिद्धान्तमाहुः - **नेति ॥ इतीति ॥** इत्यत्रेत्यर्थः । **उक्तत्वादिति ॥** समाधानस्येति शेषः । इदं च फलितार्थपरम् । ननु व्योमवत् ईश्वरस्य अल्पस्थानत्वं न युक्तम्, व्योम्नः अंशेन अल्पस्थानत्वसम्भवात् । अस्य तु परमात्मनः अंशेनापि व्याप्तत्वात्, इत्यतस्सूत्रशेषं श्रुत्युदाहरणपूर्वं प्रकारान्तरेण व्याचक्षते- **एष मे इति ॥** व्याप्तरूपेणैव आत्मनो दहरस्थत्वोक्तेरचिन्त्यशक्त्या भगवति सर्वमुपपद्यत इति भावः ॥ २१ ॥

॥ इति दहराधिकरणम् ॥ ५ ॥

(२२) दहर इति ॥ (छा. ८.१.१) (व्या. पृ.२१३) **एष मे इति ॥** (छा. ३.१४.३) **मे**= मम, **हृदये, य आत्मा**= परमात्मास्ति, **एष**= भगवान्, **ज्यायान्**= देशादिभिः पूर्ण इत्यर्थः ॥ २१ ॥

॥ इति दहराधिकरणम् ॥ ५ ॥

## ६. अनुकृत्यधिकरणम्

### (१) अदृश्यत्वादयः परमेश्वरगुणा उक्ताः । 'तेषां सुखं शाश्वतं नेतरेषाम् ।'

अत्र नये भगवति ज्ञानिसुखे च सुखशब्दस्य ('यो वै भूमा तत्सुखम्' (छा.७.२३.१) इति भगवति 'तेषां सुखं' (का.२.२.१२)इति ज्ञानिसुखे च) प्रयोगात् साधारणस्यानुकूल्येन गृह्यमाणत्वलिङ्गस्य हरौ समन्वयः । आनुकूल्येन गृह्यमाणत्वं च ज्ञानार्थं (ज्ञेयस्य) प्रार्थितत्वम् (ज्ञानार्थं आविर्भाव-रूपभानप्रार्थितत्वं वा) ॥ २ सूत्रा. अधि. ॥

(१) **गुणा इति ॥** असाधारणगुणा इत्यर्थः । **उक्ताः**- अदृश्यत्व(१.२.६) नये उक्ताः । तद्घटकमिति शेषः । अस्य अदृश्यत्वमज्ञेयत्वमित्यत्रान्वयः । अनेन तन्नयेन सङ्गतिर्दर्शिता ॥ श्रुत्युपन्यासमुखेन विषयादिकमाहुः- **तेषामिति ॥** ज्ञानिसुखस्यैव पूर्वं प्रसक्तत्वादिति पूर्वपक्षयुक्तिसूचनार्थम् इदमुपन्यस्तम् ।

(१) **तेषामिति ॥** (का. २.२.१२) अस्य पूर्ववाक्यम्- 'एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीराः' इति । **य** आत्मा **एकः**= ज्ञानाऽनन्दाद्यभिन्नः, **सर्ववशी**= सर्वं वशेऽस्यास्तीति । तथा **सर्वभूतान्तरात्मा**= सर्वभूतान्तर्नियामकः, **एकं रूपं**= स्वस्वरूपं **बहुधा करोति**= नियम्यानन्त्यात्, (तदनुगुणबहुरूपं करोति) **तं आत्मस्थं**= जीवहृदयस्थितं, **ये धीराः**= ज्ञानिनः, **अनुपश्यन्ति, तेषामेव शाश्वतं सुखम्**= नित्याभिव्यक्तसुखं भवति । नेतरेषामित्यर्थः (सिद्धान्ते)॥

### (२) 'तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम्' (क.उ. ५-१२,१४) इत्यादिना ज्ञानिसुखस्याप्यनिर्देश्यत्वमज्ञेयत्वं चोच्यत इत्यतो वक्ति-

(२) **तदेतदिति ॥** इदमेव विषयवाक्यम् । **उच्यत इति ॥** एतेन- आनुकूल्येन गृह्यमाणत्वं विषयः । तच्च किं विष्णोः ? उत ज्ञानिसुखस्य ? इति सन्देहः । भगवति, ज्ञानिसुखे च, सुखशब्दप्रयोगः सन्देहबीजम् । ज्ञानिसुखमेव आनुकूल्येन गृह्यमाणत्ववत्, सुखशब्दश्रवणादिति पूर्वपक्षोऽप्युक्त इति बोध्यम् ।

(२) **तदेतदिति ॥** (का.२.२.४) आदिना 'कथं नु तद्विजानीयां किमु भाति न भाति वा' इत्युत्तरार्धं ग्राह्यम् । अयमर्थः- टीकायाम्- यत् **अनिर्देश्यं**= निर्देष्टुमशक्यं **परमं सुखं किमु भाति ? वा**= अथवा

**न भाति ? कथं नु तद्विजानीयामिति** आनुकूल्येन गृह्णन्ति । (ज्ञानार्थं प्रार्थयन्ति ) । **तत्**= अनिर्देश्यं, **एतत्**= प्रकृतमात्मनो रूपं, **इति मन्यन्ते** ज्ञानिनः इत्युक्तः । (अयं न्यायविवणरीत्या) । काठकभाष्यरीत्या तु- **तत्**= गुह्यं ब्रह्मेत्युपक्रान्तम् **एतत्**= एकं रूपमिति मध्ये चोक्तं (प्रसक्तं) ब्रह्मणो रूपम् **अनिर्देश्यम्**= इदमित्थमिति निर्देष्टुमशक्यम् **परमं सुखं**= अनिर्देश्यपरमसुखात्मकमिति ज्ञानिनो **मन्यन्ते । तत्**= तादृशसुखात्मकभगवद्रूपं **कथं नु विजानीयां** तत्प्रसादं ऋते **किमु भाति ? न भाति वा ?** इत्यर्थान्तरमप्यस्य बोध्यम् । (योजनाद्वयेऽपि तात्पर्यमेकमेव । परन्तु पूर्वयोजनायां परमसुखोद्देशेन परमात्मस्वरूपत्वविधिः प्रतीयते । द्वितीयायां तु भगवत्स्वरूपोद्देशेन परमसुखरूपत्वविधिः प्रतीयते इति भेदः । तथा च इदं वाक्यं व्यवहितपरमात्मविषयकमेव, न तु ज्ञानिसुखविषयकम् । ज्ञानिसुखस्य विप्रुण्मात्रत्वात्, परमिति विशेषणात् परमात्मसुखस्यैव निरतिशयितत्वाच्चेति भावः ।) पूर्वपक्षी तु- 'तदेतद्' इति वाक्यं ज्ञानिसुखविषयकमेवेति मन्यते ॥

**(न ज्ञानिसुखस्यानिर्देश्यत्वाज्ञेयत्वादि)**

## (३) ॥ ॐ अनुकृतेस्तस्य च ॐ ॥ २२ ॥

(३) ॐ **अनुकृतेस्तस्य चेति ॥** हेतुबलात् आनुकूल्येन गृह्यमाणमिति लभ्यते । तत्तु इति वर्तते । **यथायथमावृत्तिविपरिणामौ । सूत्रे तस्येति 'तस्य भासा सर्वमिदं विभाति' इति श्रुतिप्रतीकम् । 'तस्य भासा' इति श्रुतेरिति फलितम् । अयमर्थः**- आनुकूल्येन गृह्यमाणं 'कथं नु तद्विजानीयाम्' इति **श्रुत्युक्तं ज्ञानार्थं प्रार्थितं वस्तु- तत्तु= विष्णुरेव, अनुकृतेः**= 'तमेव भान्तमनुभाति सर्वं' इति श्रुतौ **प्रकाशाऽश्रयसूर्यादिजगद्भानप्रयोजकभानाश्रयत्वश्रवणात् । तस्य च**= सर्वजगत्प्रकाशकप्रकाशाश्रय इत्यर्थक- 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेश्च इति ॥

**(४) 'तमेव भान्तमनुभाति सर्वम्' (क.उ. ५-१५) इत्यनुकृतेः, 'तस्य भासा सर्वमिदं विभाति' (क.उ. ५-१५) इति वचनाच्च परमात्मैवानिर्देश्य-सुखरूपः । न हि ज्ञानिसुखमनुभाति सर्वम् । न च तद्भासा । 'अहं तत्तेजो रश्मीत्' इति नारायणभासा हि सर्वं भाति ॥ २२ ॥**

(४) श्रुत्युदाहरणपूर्वकं सूत्रार्थमाहुः- **तमेव भान्तमिति ॥ इतीति ॥** इत्यत्रेत्यर्थः । **अनुकृते-रिति ॥** अनुभानप्रयोजकभानाश्रयत्वरूपानुकृतिश्रवणादित्यर्थः । **तस्य च** इति सौत्रखण्डं व्याख्यान्ति- **तस्य भासेति ॥** उक्तहेतुद्वयं ज्ञानिसुखे अनुपपन्नमित्याहुः- **न हीति ॥** हि= यतः, ज्ञानिसुखं नानुभाति= नानुकरोति, सर्वं= सूर्यादिप्रकाशाश्रयवस्तुजातं सर्वजगच्च, च= यतश्च सर्वं

**तद्भासा**= ज्ञानिसुखभासा, न भातीति शेषः। **हि**= यतः 'अहं तत्' इति, श्रुत्या नारायणाधीनभासा, नारायणभासा, सूर्यादिसर्वं जगच्च, भातीति, भास्यते इति च ज्ञायते, अतश्च परमात्मैवाऽनिर्देश्यसुखरूप इत्यन्वयः। परमात्माऽधीनभासा, परमात्मभासैव च सर्वं भातीत्यत्र मानमाहुः- **अहमिति** ॥ इयं च श्रुतिः समुच्चयपरेण उत्तरसूत्रस्थापिना सूचिता। आवश्यकत्वादत्रोदाहृतेति बोध्यम्। **इतीति** ॥ श्रुत्या इति शेषः। अन्वय उक्तः ॥ २२ ॥

(४) **तमेव भान्तमिति** ॥ (काठ.२.२.१५) अस्य पूर्ववाक्यम् - 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' इति। अस्यार्थः- **तत्र**= ज्ञानार्थं प्रार्थितवस्तुनि, **भाति सति**= भासयति सति, **तमेव भान्तमनुसृत्य**, **सर्वं**= सूर्यादि तेजोजातं **भाति**= प्रकाशयति। **तस्य**= विष्णोः **भासा इदं**= जगत् **विभाति**= प्रकाशते इति ॥ **अहं तत्तेज इति** ॥ (व्या. पृ. ११२) ॥ २२ ॥

**(जगद्भानप्रयोजकभानवत्त्वं विष्णोरेवेति गीतासिद्धम्)**

## (५) ॥ ॐ अपि स्मर्यते ॐ ॥ २३ ॥

(५) अनुकृतिसर्वभासकत्वरूपलिङ्गद्वयस्य श्रुत्या विष्णुनिष्ठत्वमुपपाद्य स्मृत्याऽपि विष्णुनिष्ठत्वोपपादनाय सूत्रम्- **ॐ अपि स्मर्यत इति** ॥ तत्तु, अनुकृतेः तस्य च, इति वर्तते। **अपिः** समुच्चये, त्वर्थेऽपि। तस्येत्यनेन 'तस्य भासा' इति वाक्यप्रतिपाद्यं गृह्यते। यथायथमावृत्तिविपरिणामौ। **अयमर्थः**- अनुकृतिः= सर्वप्रकाशाश्रयसूर्यादिजगद्भानप्रयोजकभानवत्त्वम्। **तच्च**= सर्वजगत्प्रकाशकत्वं च, **तस्यैव**= विष्णोरेवेति न केवलं श्रूयते, किन्तु **स्मर्यते अपि**= 'यदादित्यगतं तेज' इति स्मृत्याऽपि प्रतिपाद्यत इति ॥

किञ्च- आनुकूल्येन गृह्यमाणस्य सूर्याद्यप्रकाश्यत्वमिति शेषः। अनुवृत्यादिकं पूर्ववत्। **अयमर्थः**- 'कथं नु तद्विजानीयाम्' इति श्रुत्युक्ताऽनुकूल्येन गृह्यमाणस्य सूर्याद्यप्रकाश्यत्वं 'न तत्र सूर्यो भाति' इति श्रुत्युक्तसूर्याद्यप्रकाश्यत्वं, **तस्यैव**= विष्णोरेवेति **स्मर्यतेऽपि**= 'न तद्भासयते सूर्यः' इति स्मृत्याऽपि प्रतिपाद्यत इति ॥

अत्र पूर्वसूत्रे चशब्देन सूर्याद्यप्रकाश्यत्वं समुच्चीयते। अनुकृत्यादिहेतुत्रयस्य भगवन्निष्ठत्वेन ब्रह्मैव आनुकूल्येन गृह्यमाणमिति पूर्वसूत्रस्यार्थमुक्त्वा, पूर्वोक्तसर्वतेजोनियन्तृत्वसर्वभासकत्वसूर्याद्यप्रकाश्यत्वरूपलिङ्गत्रयं भगवन्निष्ठमेवेति श्रुत्या स्मृत्या प्रतिपादनाय 'अपि स्मर्यते' इति सूत्रमिति **तन्त्रदीपिका** ॥

**(६) 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इति ॥ (भ.गी. १५–१२)**
**'न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' इति (भ.गी. १५–६) च ॥ २३ ॥**

**॥ इति अनुकृत्यधिकरणम् ॥**

(६) एवमभिमतार्थद्वये स्मृतिद्वयमुदाहरन्ति- **यदादित्येत्यादि ॥ मामकमितीति ॥** अस्य 'स्मर्यते' इति सौत्रेणान्वयः ॥ **न तदिति ॥** इयं च द्वितीयेऽर्थे प्रमाणम् । **इति चेति ॥** अस्यापि 'स्मर्यते' इति सूत्रेऽन्वयः ॥ २३ ॥

॥ इति अनुकृत्यधिकरणम् ॥ ६ ॥

(६) **यदादित्येति ॥ (गी. १५.१२) मामकं**= मदधीनं मदीयं च, ममैव आदित्यादिषु तेजोरूपेण प्रवेशात् मदीयत्वं बोध्यम् । **चन्द्रमसि** इत्यादौ गतमिति शेषः । शिष्टं स्पष्टम् । **न तदिति** ॥ (गी. १५.६.)**यत्**= धाम मत्स्वरूपं प्रभूतं **तेजः गत्वा**= प्राप्य, **न निवर्तन्ते**= पुनः संसारं न प्राप्नुवन्ति ज्ञानिनः, **तत्**= उत्तमं **धाम**= स्वरूपं, **मम**= मदीयं तत् मत्स्वरूपम् । **सूर्यः न भासयते**= न प्रकाशयतीत्यर्थः । शिष्टं स्पष्टम् ॥ २३ ॥

॥ इति अनुकृत्यधिकरणम् ॥६ ॥

## ७. वामनाधिकरणम्

**(१) विष्णुरेव जिज्ञास्य इत्युक्तम् । तत्र–**
**'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।**
**मध्ये वामनमासीनं विश्वेदेवा उपासते ॥' (क.उ. ५-३)**
**इति सर्वदेवोपास्यः कश्चित्प्रतीयते । स च–**

**अत्र नये भगवति, वायौ च, प्रेरकत्वेन साधारणस्य ईशाननाम्नो विष्णौ समन्वयः । २ सू. अ.॥** **जिज्ञास्य इत्युक्तमिति ॥** जिज्ञासानये इति भावः । एतेन तन्नयेन सङ्गतिर्बोध्या । **तत्र** = उपास्यत्व-विषये ।

(१) **ऊर्ध्वमिति ॥** इदं पूर्वपक्षयुक्तिसूचनार्थमुपन्यस्तम् । विषयवाक्यं तु 'अङ्गुष्ठमात्रः पुरुषः' (का. २.१.१२) इति वाक्यम् । **कश्चित्**= ईशानपदवाच्यः । एतेन ईशानशब्दोऽत्र विषय इति बोध्यम् । कश्चिदित्युक्तिः- स च ईशानपदवाच्यः विष्णुः ? अन्यो वा ? इति संशयप्रदर्शनार्था । संशयबीजं तु प्रेरकत्वसाम्यात् उभयत्र ईशानपदप्रयोगः । पूर्वपक्षमाहुः- **स चेति ॥** ईशानशब्दवाच्य इत्यर्थः ।

(१) **ऊर्ध्वं प्राण इति ॥** (काठ.२.२.३) यः प्राणाख्यरूपेण **प्राणं** = तदाख्यं वायुम् **ऊर्ध्वमुन्नयति** । अपानाख्यरूपेण **अपानं**= तन्नामकवायुं **प्रत्यक्**= अधः **अस्यति**= प्रेरयति, तं **मध्ये**= देहमध्ये, हृदये इति यावत्, **आसीनं**= उपविष्टं, **वामनं**= वामनशब्दितं सौन्दर्यप्रधानस्त्रीजननेतारं विष्णुं **विश्वे**= सर्वे, **देवाः उपासते**= जिज्ञासन्ते इत्यर्थः, सिद्धान्ते । पूर्वपक्षी तु - इदं वायुपरमिति अभिप्रेत्य 'मध्य आत्मनि तिष्ठति' (का.२.१.१२) इत्यत्र मध्यशब्दः मध्यमेश्वरप्रधानवायुपर इति मत्वा 'अङ्गुष्ठ' इति श्रुतिः वायुपरा इति मन्यते ।

**(२) 'एवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव सन्निधत्ते'( प्र.उ.३–४) ।**

(२) **सर्वदेवोपास्यत्वादिलिङ्गं वायुनिष्ठमित्यत्र मानमाहुः- एवमेवैष इत्यादि ॥ इत्यादिनेति ॥ 'सन्निधत्ते' इत्यस्य व्यवस्थापकत्वे, प्राण इत्यस्य मध्यमत्वे, कुविदङ्गेत्यस्य उपास्यत्वेऽन्वयः।**

(२) **एवमेवैष इति ॥** (षट् प्र.३.४.) अस्य पूर्ववाक्यम्- 'यथा सम्राट् अधिकृतान् विनियुङ्क्ते एतान् ग्रामान् अधितिष्ठस्व' इति । अयमर्थः- **सम्राट्**= सार्वभौमः, यथा **अधिकृतान्**= नियोज्यान्, **एतान् ग्रामान्**

**अधितिष्ठस्व**= तदाधिपत्ये वर्तस्व, इति **विनियुङ्क्ते** एवमेव **एष प्राणः**= आत्म(परमात्म)जातत्वेन उक्तः **प्राणः**= मुख्यप्राणः, **इतरान् प्राणान्**= प्राणाऽपानादीन् **पृथक् पृथगेव**= हृदयादिस्थानेषु **सन्निधत्ते**= स्थापयति, इति ॥ अयमर्थः पूर्वपक्षे । **सिद्धान्ते तु- प्राण** इति पदं मुख्यप्राणनियामकपरमात्मपरम् । शिष्टं समानमिति बोध्यम् ॥

## (३) 'योऽयं मध्यमः प्राणः' (बृ.उ.३–५–२१)

**(३) योऽयं मध्यम इति ॥** (बृ.उ.३.५.२१) तत्र हि - वागादिप्राणानां मृत्युग्रस्तत्वमुक्त्वा 'अथैनमेव नाऽप्नोत्' इत्यनेन मृत्योरभावमुक्त्वा 'योऽयं मध्यमः प्राणः' इत्युक्त्या इतरप्राणापेक्षया उत्तमत्वं, विष्ण्वपेक्षया अवरत्वं, अनेकमानसिद्धं इति मध्यमेश्वरत्वमुक्तमिति बोध्यम् । 'अयं वा व शिशुः योऽयं मध्यमः प्राणः' (बृ.४.२.१) इति श्रुत्यन्तरं प्राणस्य मध्यमेश्वरत्वे प्रमाणतया ग्राह्यम् ॥

## (४) 'कुविदङ्ग' (ऋ.सं. ७-९१-१) इत्यादिना प्राणव्यवस्थापकत्वात् मध्यमत्वात्सर्वदेवोपास्यत्वाच्च, वायुरेवेति प्रतीयते । अतोऽब्रवीत्–

(४) **कुविदङ्गेति ॥** (ऋ.७.९१.१)

'कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् ।
ते वायवे मनवे बाधितायावासयन्नुषसं सूर्येण ॥'

इति पठ्यते । अस्यायमर्थः- **अङ्ग ये देवाः** ससूर्याः वायोः **नमसा**= नमस्कारेण एतदुपलक्षितसेवया, **वृधासः**= वृद्धाः ज्ञानादिगुणपूर्णाः, **अनवद्यासः**= अज्ञानादिदोषहीनाश्च पुरा **आसन्, ते कुवित्**= क्वचित् रहसि **सूर्येण** साकं **मनवे**= ज्ञानिने **बाधिताय**= संसारक्लेशवद्भिः शरणं गताय, **वायवे**= वायुमुद्दिश्य **उषसं**= बुद्धिम् **अवासयन्**= तद्विषयामकुर्वन् इति । अयमर्थः पूर्वपक्षे । **सिद्धान्ते** - वायुशब्दः 'अन्तस्तत्' (१.१.७) इति न्यायेन विष्णुपर इत्यर्थः । शिष्टं समानम् ।

**(निरवकाशवामनश्रुतेः विष्णुरेव ईशानः)**

## (५) ॥ ॐ शब्दादेव प्रमितः ॐ ॥ २४ ॥

**(५) ॐ शब्दादेव प्रमित इति ॥** तत्तु इति वर्तते । विषयवाक्यबलात् ईशान इति लभ्यते । **अयमर्थः- ईशानः**= 'ईशानो भूतभव्यस्य' इति श्रुतिस्थ-ईशानशब्दवाच्यः, तत्तु= विष्णुरेव इति **प्रमितः**=

निश्चितः, शब्दादेव= 'वामनमासीनम्' इति वामनश्रुतेरेव इति ॥ अत्र प्रमितपदेन, प्रसिद्ध्यर्थक-एवेन च, विष्णौ प्रसिद्धिबोधनद्वारा श्रुतेः निरवकाशत्वं, लिङ्गात् श्रुतेः बलवत्वं च, सूचितम् ॥

ननु ईशानशब्दः 'अङ्गुष्ठ' इति विषयवाक्यगत 'भूतभव्यस्य' इत्यनुरोधेन यौगिकः, न तु रूढ इति प्रतीयते, ततश्च नामसमन्वय इति, टीकायां च ईशाननाम्नस्समन्वयः इति च, कथमुक्तमिति चेत् - न - अत्र नामपदेन प्रातिपदिकस्य ग्रहणेनादोषात् ।

यद्वा- 'ईशानः प्राणदः प्राणः' इति भगवति ईशानशब्दप्रयोगवत् 'ईशानो मारुतः प्राणो वायुर्विष्णुस्तथैव च' इति बृहदारण्यकप्रथमाध्यायभाष्योक्तवचनेन वायावपि प्रयोगात् रूढत्वेन, रूढ्यर्थयोगार्थताऽवच्छेदकयोः समावेशे असति बाधके रूढ्यर्थताऽवच्छेदकस्य परित्यागे कारणाभावात् । प्रकृते- ईशानपदे रूढ्यर्थापरित्यागेन उभयसम्भवेनादोषात् ।

**(६) वामनशब्दादेव विष्णुरिति प्रमितः । न हि श्रुतेर्लिङ्गं बलवत् ।**
**'श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा ।**
**पूर्वं पूर्वं बलीयः स्यादेवमागमनिर्णयः ॥' इति स्कान्दे ।**
**तच्च लिङ्गं विष्णोरेव । तस्यैव प्राणत्वोक्तेः 'तद्वै त्वं प्राणो अभवः' इति ॥**

(६) सूत्रार्थमाहुः- **वामनेति** ॥ ननु (व्यवस्थापकत्वादि) वायुलिङ्गात् वायुरेव ईशानः किं न स्यादित्यत आहुः- **न हीति** ॥ हि= यतः, श्रुतेः लिङ्गं बलवत् न, अतः वामनशब्दादेव' इति सम्बन्धः। उक्तार्थे मानमाहुः- **श्रुतिरिति** ॥ **स्कान्द इति** ॥ तत्र इत्युक्ते न बलवदित्यन्वयः । ननु लिङ्गबाहुल्यं श्रुतेर्बाधकं किं न स्यात् ? इत्यत आहुः- **तच्चेति** ॥ प्राणव्यवस्थापकत्वादिलिङ्गमपीत्यर्थः । **प्राणत्वोक्तेः**= प्राणशब्दवाच्यत्वोक्तेः । इदमुपलक्षणं वायुशब्दवाच्यत्वोक्तेरपि । विष्णोः प्राणशब्द-वाच्यत्वे श्रुतिमाहुः- **तद्वै त्वमिति** ॥ **इतीति** ॥ इति श्रुत्या प्राणत्वोक्तेरित्यन्वयः ॥ २४ ॥

(६) **श्रुतिरिति** ॥ अत्र येन क्रमेण श्रुत्यादिकं निर्दिष्टं, तेन क्रमेणैव पूर्वं पूर्वं प्रबलमिति न शङ्क्यम् 'श्रुतिः' इति वचनस्य श्रुत्यादिस्वरूपमात्रबोधनार्थं प्रवृत्तत्वात् । उपलक्षणविधया एतद्वचनस्थचशब्देन, तथाशब्देन वा, **स्थानमपि** ग्राह्यम् । तच्च समाख्यातः पूर्वं बोध्यम् । **पूर्वं पूर्वं**= पूर्वोपदिष्टम् । एकत्र समवेतं विरुद्धमिति शेषः **बलीयः**= बलवत्, **एवं**= अनेन क्रमेण बलवता पूर्वेण उत्तरबाधनेन, **आगमनिर्णयः**=

विप्रतिपन्नाऽगमार्थस्य एकतरकोटिनिश्चय इत्यर्थः । श्रुत्यादिस्वरूपाणि तदुदाहरणानि च 'समन्वय'नये (१-१-४) उक्तानि (पृ. ६३) ॥

**तद्वै त्वं प्राण इति** ॥ (तै. आ. ३) (व्या. पृ. ११८) ॥ २४-२५ ॥

॥ इति वामनाधिकरणम् ॥

**(अधिकारिमनुष्यहृद्येव तत्तदङ्गुष्ठमितः हृत्स्थो विष्णुः)**

## (७) ॥ ॐ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॐ ॥ २५ ॥

(७) ननु ईशानस्य विष्णुत्वं न सम्भवति, विष्णोर्व्यापकत्वात्, ईशानस्य चाङ्गुष्ठमात्रत्वोक्तेः, इति शङ्कावारणाय सूत्रम्- **ॐ हृद्यपेक्षयेति** ॥ विषयवाक्यबलात् अङ्गुष्ठमात्रमिति लक्ष्यते । तत्तु इति वर्तते । **मनुष्य** इति लुप्तषष्ठ्यन्तं, पृथक् पदं च । **अधिकारत्वात्** इति ल्यब्लोपे पञ्चमी । तुः एवार्थे, अप्यर्थे च । **अयमर्थः**- तत्तु= व्यापकमपि ब्रह्म (तिरश्चामङ्गुष्ठाभावेऽपि) **मनुष्याधिकारत्वात्**= वेदविद्याधिकारिमनुष्यमात्राधिकारिकाङ्गुष्ठमात्रत्वोपासनमनुसृत्य, **हृदि**= मनुष्याणां हृदये, **अपेक्षया तु**= हृदयस्थाङ्गुष्ठमात्रावकाशापेक्षयैव, अङ्गुष्ठमात्रं= तत्परिमाणसमानपरिमाणवदपि भवति, तथोपचर्यते वा इति ॥

एवं च मनुष्याणामेव वेदविद्याधिकारत्वेन तेषां हृद्येव विष्णोरङ्गुष्ठमात्रत्वं, न तु तिरश्चां हृदि तेषामङ्गुष्ठाभावात् । (अत एव च जरितार्यादीनां अङ्गुष्ठमात्रोपासनं न) ततश्च अङ्गुष्ठमात्रत्वं विष्णोर्युक्तमिति भावः ॥

## (८) सर्वगतस्यापि तस्याङ्गुष्ठमात्रत्वं हृद्याकाशापेक्षया युज्यते । इतरप्राणिनामङ्गुष्ठाभावेऽपि मनुष्याधिकारत्वान्न विरोधः ॥

**॥ इति वामनाधिकरणम् ॥**

(८) सूत्रार्थमाहुः- **सर्वगतस्येत्यादिना** ॥ ननु अङ्गुष्ठमात्रत्वं किं यत्किञ्चिदङ्गुष्ठमात्रत्वं वा ? तत्तद्धृदये तत्तदङ्गुष्ठमात्रत्वं वा विवक्षितम् । नाद्यः - यत्किञ्चिदङ्गुष्ठमात्रत्वे अङ्गुष्ठमात्रत्वकथनस्य वैयर्थ्यात् । न द्वितीयः- तिरश्चामङ्गुष्ठाभावेन तद्धृदये तन्मात्रत्वस्याऽयोगात् अत आहुः- **इतरेति** ॥ **मनुष्याधिकारत्वादिति** ॥ मनुष्यमात्राधिकारित्वादित्यर्थः । अङ्गुष्ठमात्रेति विद्यया इति शेषः । **न विरोध इति** ॥ पश्वादिहृदये विष्णोः तत्तदङ्गुष्ठमात्रत्वाभावेऽपि न दोष इत्यर्थः ॥ २५ ॥

॥ इति वामनाधिकरणम् ॥ ७ ॥

## ८. देवताधिकरणम्

**(१) मनुष्याणामेव वेदविद्या(याम)धिकार इत्युक्तम् । तिर्यगाद्यपेक्षयैव मनुष्यत्वविशेषणमुक्तम्, न तु देवाद्यपेक्षया, इत्याह–**

(१) अत्र नये देवानां वेदविद्याधिकारसमर्थनम् ॥ ८.सू.अ. ॥ अस्य प्रासङ्गिकत्वात् न अध्यायपादसङ्गती । श्रुत्यादिसङ्गतिं दर्शयन्ति- **मनुष्याणामेवेति** ॥ **उक्तमिति** ॥ 'हृद्यपेक्षया' इति सूत्रे इति भावः । अनेन 'वामन' (१.३.७) नयेन प्रस[ङ्ग]सङ्गतिरुक्ता । एतेन वेदविद्याधिकारो विषयः । स च- देवानामस्ति ? न वा ? इति सन्देहोऽपि दर्शितः । मनुष्याणामेवेति कथनं 'विश्वे देवा उपासते' इत्यादिश्रुतिश्च सन्देहबीजम् । पूर्वपक्षस्तु- 'विरोधः' (१.३.२७) इत्यादिगुणसूत्रेषु अग्रे स्पष्टः । सूत्रमवतारयन्ति- **तिर्यगादीति** ॥ आदिना स्वेदजादीनां ग्रहणम् । **अपेक्षयेति** ॥ व्यावृत्त्यभिप्रायेणेत्यर्थः । मनुष्यपदं विशिष्टबुद्ध्यादिरहिततिर्यगादिव्यावृत्त्यर्थमेवोक्तं (पूर्वसूत्रे), न तु देवादिव्यावृत्त्यर्थमिति भावः ।

**(देवानामपि वेदविद्याधिकारोऽस्ति)**

**(२) ॥ ॐ तदुपर्यपि बादरायणः सम्भवात् ॐ ॥ २६ ॥**

(२) **ॐ तदुपर्यपि इति** ॥ मनुष्याधिकारेति वर्तते । मनुष्येति लुप्तषष्ठीकम् अधिकारेति लुप्तप्रथमाकं च भिन्ने पदे । वेदविद्यायामिति प्रकृतम् । **अयमर्थः**- मनुष्याणां= देवादित्वयोग्यानां मनुष्याणां **तदुपर्यपि**= देवतादित्वप्राप्त्यनन्तरमपि (देवानामपीति यावत्) वेदविद्यायामधिकारो वर्तते । **सम्भवात्**= वेदविद्याधिकारोपयोगिविशिष्टबुद्ध्यादिसम्भवात् (सत्वात्) इति बादरायणाचार्यो मन्यत इति ॥

**(३) तदुपरि मनुष्याणां सतां देवादित्वप्राप्त्युपरि । सम्भवति हि तेषां विशिष्टबुद्ध्यादिभावात् । तिर्यगादीनां तदभावादभावः ।**

(३) सूत्रार्थमाहुः- **तदुपरीति** ॥ **मनुष्याणामिति** ॥ देवत्वयोग्यानां मनुष्याणामित्यर्थः । अत्रार्थे तात्पर्यग्राहकम्- **सतामिति** ॥ **देवादित्वप्राप्त्युपरीति** ॥ वेदविद्याधिकार इति वर्तते । **तेषां**= देवत्वं प्राप्तानाम् । **विशिष्टबुद्ध्यादिभावादिति** ॥ वाक्यार्थज्ञानोपयुक्तत्वं विशिष्टत्वम् । तादृशबुद्धिविशेषसत्वादित्यर्थः । आदिना अर्थित्वादग्रहः ।

ननु- 'देवाः न वेदाधिकारिणः, अमनुष्यत्वात्, तिर्यगादिवत्' इत्यनुमानविरोधः, अत आहुः- **तिर्यगादीनामिति ॥ तदभावात्**= विशिष्टबुद्ध्याद्यभावात्, **अभावः**= वेदाधिकाराभावः । एवं च 'देवाः न वेदाधिकारिणः' इत्यादिपूर्वपक्ष्यनुमानस्य विशिष्टबुद्ध्यादिराहित्यं उपाधिरित्युक्तं भवति ।

**(४) तेषामपि यत्र विशिष्टबुद्ध्यादिभावस्तत्राविरोधः । निषेधाभावात् । दृश्यन्ते हि जरितर्यादयः ॥ २६ ॥**

(४) ननु विशिष्टबुद्ध्यादिमतामपि तिरश्चां वेदविद्याऽधिकाराभावात् उपाधिः साध्याव्यापक इत्यत आहुः - **तेषामपीति ॥** निर्धारणे षष्ठी । तिर्यगादीनामपि मध्ये इत्यर्थः । **यत्र**= यादृशव्यक्तौ । **विशिष्टबुद्ध्यादिभावः**= विशिष्टबुद्ध्यादिसत्वम् । **तत्र**= तादृशव्यक्तौ । अधिकाराङ्गीकारेऽपीति शेषः । **अविरोधः**= निषेधशास्त्रलोकानुभवाभावविरोधो न । **निषेधाभावादिति ॥** निषेधशास्त्राभावादित्यर्थः । एवं च 'देवाः वेदविद्याधिकारिणः, अनिषिद्धत्वे सति विशिष्टबुद्ध्यादिमत्वात्' इत्यनुमानं सिद्धान्ते उक्तं भवति । हिशब्दः- भारतादिप्रसिद्धिं च द्योतयति । हि= यतः, दृश्यन्ते जरितर्यादयः वेदाधिकारितया, अतोऽविरोध इत्यन्वयः । 'दृश्यन्ते हि' इत्यनेन 'देवा' इत्यादि सिद्धान्त्यनुमाने मनुष्यत्वं उपाधिर्न भवति (जरितर्यादौ) साध्याव्यापकत्वादित्युक्तं भवति ॥२६॥

**(देवताप्रवाहः नित्यः)**

**(५) ॥ ॐ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॐ ॥ २७ ॥**

**मनुष्या एव देवादयो भवन्तीति तदुपरीत्युक्तम् ।**

(५) उक्तमाक्षिप्य समादधत्सूत्रम्- **ॐ विरोध इति ॥** इति चेत् इत्यावर्तते । श्रुताविति शेषः। **अयमर्थः- इति चेत्**- मनुष्याणामेव देवादित्वप्राप्त्यङ्गीकारे, **कर्मणि**= देवादित्वप्राप्तिपूर्वकालिकदेवतोद्देश्यकयागादिकर्मणि **विरोधः**= द्रव्यत्यागोद्देश्यभूतेन्द्रादिदेवताभावप्रयुक्तवैयर्थ्याख्यदोषः, **इति चेन्न- अनेकप्रतिपत्तेः**= अनेकेषां तत्तद्देवतापदप्राप्तेः देवतापदार्हाणां पूर्वं पूर्वं देवतापदप्राप्तेः, श्रुतौ= 'ते ह नाकम्' इति श्रुतौ **दर्शनात्**= दृष्टत्वात् इति ॥ एवं च एकस्या देवतायाः मुक्तिसत्वेऽपि सर्वदा अन्यस्याः तादृशदेवतायाः सत्वस्य प्रमाणसिद्धत्वात् नोक्तदोष इति भावः ॥

**(६) तत्र यदि मनुष्याः सन्तो देवादयो भवन्ति तत्पूर्वं देवताऽभावाद् देवतोद्दिष्टकर्मणि विरोध इति चेन्न । अनेकेषां देवतापदप्राप्तेर्दर्शनात् ।**

(६) पूर्वपक्षमाहुः-**मनुष्या इत्यादिना ॥ इतीति ॥** इति तात्पर्येणेत्यर्थः। **तत्रेति**=तर्हीत्यर्थः। अस्य च तत्पूर्वमित्यत्रान्वयः। **भवन्तीति ॥** उच्यत इति शेषः। **कर्मणि विरोधः**= (पूर्वकल्पीय) कर्मविषये विरोधः। तद्वैयर्थ्यमिति यावत्। परिहारांशमाहुः- **नेत्यादिना ॥ देवतापदेति ॥** विद्याकर्मभ्यामिति भावः।

## (७) 'ते ह नाकं महिमानः सचन्ते। यत्र पूर्वे साध्याः सन्ति देवाः ॥'
## (तै.आ.३.१२) इति ॥ २७ ॥

(७) अनेकदेवतासत्वबोधकश्रुतिमाहुः - **ते ह नाकमिति ॥ देवा इतीति ॥** इत्यत्र दर्शनादित्यन्वयः ॥ २७ ॥

(७) **ते ह नाकमिति ॥** (तै.आ.३.३९) अस्य पूर्ववाक्यम्- 'यज्ञेन यज्ञमयजन्त देवाः तानि धर्माणि प्रथमान्यासन्' इति। अयमर्थः- **ये देवाः**= देवत्वयोग्याः मनुष्याः, ज्ञानकर्मात्मकेन **यज्ञेन, यज्ञं**= विष्णुं, **अयजन्त**= अपूजयन्। तेन कारणेन **तानि**= ते देवाः देवपदं प्राप्य, **प्रथमानि**= मुख्याः, **धर्माणि**= लोकधारकाः **आसन्, महिमानः**= महात्मानः, महिमगुणाऽत्मका वा, **ते**= देवाः, **ह**= पुनः अनन्तरं स्वाधिकारावसाने, **नाकं**= पूर्णसुखात्मकं मोक्षं **सचन्त**= आप्नुवन्, **यत्र**= मोक्षे **पूर्वे**= पूर्वकल्पीयमुक्ताः, **साध्याः**= साध्यादयो देवाः सन्तीति ॥ २७ ॥

**(महतां प्रत्यक्षात् देवानां प्रवाहत उत्पत्त्यादिसाधकलिङ्गाच्चास्ति देवताप्रवाहः)**

## (८) ॥ ॐ शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॐ ॥

(८) देवानां वेदाधिकाराक्षेपसमाधानाय सूत्रम्- **ॐ शब्द इति चेन्नेति ॥** तदुपर्यपि, विरोधः, अनेकप्रतिपत्तेः, न, दर्शनात्, इति वर्तते। यथायथमावृत्तिविपरिणामौ। अयमर्थः- तदुपर्यपि= तदुपरितनानामपि देवादीनां दर्शनात्= मोक्षदर्शनात्, तदुपर्यपि= तदग्रे च (विद्यमानदेवानां मोक्षप्राप्त्यनन्तरमिति यावत्) अनेकप्रतिपत्तौ न दर्शनात्= देवान्तरसत्वे प्रमाणाभावात्, **शब्दे**= अनन्याधीनप्रामाण्यके श्रुतिसिद्धनित्यत्ववति वेदे, विरोधः= वाच्यहीनतयाऽवाचकत्वरूपदोषः स्यात् **इति चेन्न- अतः** अपि= 'सूर्याचन्द्रमसौ' इति श्रुतेरेव, तेषां देवानां, **प्रभवात्**= उत्पत्तिनियमावगमात्, **प्रत्यक्षानुमानाभ्यां**= महतां प्रत्यक्षात्, 'उपरितनकालः देवादिमान्, अप्रलयकालत्वात्, सम्प्रतिपन्नकालवत्' इत्यनुमानाच्च इति ॥

यद्यपि पूर्वसूत्रे कर्मण्यविरोधाय अनेकेन्द्रादिदेवताऽङ्गीकृता । तदैव शब्दविषयेऽपि विरोधपरिहारः सम्भवति, तथाऽपि उत्तरकाले देवसद्भावे प्रमाणाभावेन, तादृशदेवप्रवाहस्य विच्छेदाभिप्रायेणाऽस्मिन् सूत्रे पूर्वःपक्षः सिद्धान्तस्तु - तादृशप्रवाहस्य विच्छेदो नेति ॥

ननु यदि देवप्रवाहस्य अनित्यत्वाभिप्रायेण पूर्वपक्षः, तर्हि कर्मण्यपि विरोधस्तदवस्थः, त्यागोद्देश्यदेवताऽभावात् इति चेन्न-तदा कर्मकर्तॄणामपि अभावाङ्गीकारात् कर्माप्रसक्तेः वेदस्य तु नित्यत्वात् उच्छेदाभावादप्रामाण्यं स्यादित्याशयात् । अत्र देवादिपदेन तत्तत्पदस्थानामेव ग्रहणम् ॥

## (९) 'वाचा विरूप नित्यया' (ऋ.स. ८-६४-६) इत्यादिश्रुतेराप्त्यनिश्चयानित्यत्वापेक्षत्वाच्च मूलप्रमाणस्य ।

(९) शब्दे विरोधाऽपादनस्य नित्यत्वं तत्प्रामाण्यं च विनाऽनुपपन्नत्वात् शब्दनित्यत्वादिकं 'न विलक्षणत्वा' (२.१.२)धिकरणसिद्धं श्रुत्यादिनोपपादयन्ति- **वाचेत्यादिना** ॥ आदिना 'नित्ययाऽनित्यया स्तौमि' इत्यादेः परिग्रहः । **आप्त्यनिश्चयादिति** ॥ इदमावर्तते । आवर्तितस्य आप्तिमत्प्रणीतत्वानिश्चयादित्यर्थः । वेदकर्तृत्वेन पूर्वपक्ष्यभिमते वेदप्रामाण्याभ्युपगमं विना इति शेषः । एवञ्च वेदप्रामाण्याभ्युपगमं विना वेदकर्तृत्वेन पूर्वपक्ष्यभिमते आप्त्यनिश्चयाद्धेतोः आप्तिमत्प्रणीतत्वानिश्चयादिति फलितम् ।

अत्र प्रमाणत्वे सतीति विशेषणं देयम् । श्रुतेः, आप्तिमत्प्रणीतत्वानिश्चयात्, इत्युभयत्रापि पञ्चम्यर्थो ज्ञाप्यत्वम् । अस्य नित्यत्वाद्वेदस्य इत्यत्रत्यनित्यत्वे अन्वयः । **मूलप्रमाणस्य**= वेदरचनायां मूलत्वेन अभिमतप्रमाणान्तरस्य । **नित्यत्वापेक्षत्वात्** ॥ नित्यत्वं अपेक्षत इति= नित्यत्वापेक्षं, तस्य भावः, तस्मात् । तदपेक्षत्वं च नित्यत्वं विनानुपपद्यमानप्रामाण्यकत्वम् । वेदनित्यत्वस्य एतद्धेतुकत्वं च एतद्घटक (मूलप्रमाणगत)नित्यत्वावधिकलाघवप्रयुक्तत्वम् ।

अत्र प्रसङ्गादुपस्थितं वेदापौरुषेयत्वं समर्थितम् । 'न विलक्षण' इति (२.१.२) सूत्रे सूत्रकारो वक्ष्यत्येतत् । सुधायां जिज्ञासाधिकरणे, तत्वनिर्णये गीताभाष्यादौ 'देहिन' (२.१३) इति श्लोकव्याख्यावसरे, तर्कताण्डवे (१ परि) च सम्यग्विचारितमेतत् ।

(९) **वाचा विरूपेति** ॥ (ऋ.८.७५.६) 'तस्मै नूनमभिद्यवे **वाचा विरूप नित्यया** वृष्णे चोदस्व सुष्टुतिम्' इति पठ्यते । अस्य मन्त्रस्य द्वौ द्रष्टारौ- यमो, विरूपश्चेति ॥ तत्र यमः देवजातिः, विरूपः

ऋषिजातिः । आद्ये विरूपाख्य-ऋषिं प्रति यमकर्तृकसम्बोधनं **विरूप** इति । द्वितीये विरूपान्तर्यामिणं वा, स्वं जीवं प्रति वा, विरूपकर्तृकसम्बोधनं विरूपेति, उभयथाऽपि सम्भवात् । अयमर्थः- **हे विरूप, अभिद्यवे**= अभितः प्रकाशवते, **वृष्णे**= वर्षिणे अतिसमर्थाय वा, श्रेष्ठाय वा, **तस्मै**= भगवते एतमुद्दिश्य **नूनं**= निश्चितं **नित्यया** अनादिनिधनया (उत्पत्तिनाशरहितयेति यावत्) **वाचा**= वेदेन, **सुष्टुतिं**= शोभनां स्तुतिं, **चोदस्व**= कुरु(प्रेरय) इति ॥

**(१०) स्वतः प्रामाण्यप्रसिद्धेश्च नित्यत्वाद् वेदस्य, तदुदितानां देवानामनित्यत्वात्, पुनरन्यभावनियमाभावाच्च शब्दे विरोध इति चेन्न–**

(१०) ननु वेदस्य नित्यत्वे प्रामाण्यं न स्यात्, प्रामाण्यस्य (यथार्थज्ञानजनकत्वरूपस्य) कर्तृगुणजन्यत्वादत आहुः- **स्वत इति** ॥ अन्यगतगुणनैरपेक्ष्येणेत्यर्थः । ज्ञानजनकसहजशक्त्यभिन्नमिति यावत् । **प्रामाण्यप्रसिद्धेश्चेति** ॥ ज्ञानगतप्रमात्वजनकत्वरूपप्रामाण्यस्य निश्चयाच्चेत्यर्थः । वेदनित्यत्वस्य एतन्निश्चयहेतुकत्वं तु- 'वेदः सकर्तृकः, कर्तृगतगुणजन्यप्रामाण्यकत्वात्' इति शङ्कावारणद्वारा एतन्निश्चयजन्यज्ञानविषयत्वमेव । 'प्रामाण्यसिद्धेश्च' इत्यस्य (वेद)नित्यत्वे हेतुत्वमुक्तंपूर्वपक्षोपसंहारटीकायाम् । उपक्रमटीकायां तु - विरोध इत्यापाद्यमानस्य अनिष्टत्वे हेतुत्वमुक्तम् । अतः पक्षभेदेन अस्य नित्यत्वात्, विरोध इत्युभयत्रान्वयो बोध्यः । एवं च- उक्तश्रुतिज्ञाप्यं, आप्तिमत्प्रणीतत्वानिश्चयज्ञाप्यं, मूलप्रमाणस्य नित्यत्वापेक्षत्वहेतुकं स्वतःप्रामाण्यसिद्धिहेतुकं च यन्नित्यत्वं तद्वत्त्वादस्येत्यर्थः ।

**पुनरन्यभावनियमाभावादिति** ॥ **पुनः**= अग्रे, **अन्येषां** = अन्यदेवादीनां, **भावे** = उत्पत्तौ, **नियमाभावात्** = प्रमाणाभावादित्यर्थः । सिद्धान्तांशं व्याचक्षते- **नेत्यादिना** ॥

**(११) 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (म.ना.उ.५–७)**

**'यथैव नियमः काले सुरादिनियमस्तथा ।**

**तस्मान्नानीदृशं क्वापि विश्वमेतद्भविष्यति ॥'**

**इत्यादेः, अत एव शब्दात्तेषां प्रभवनियमात्, महतां प्रत्यक्षात् । यथेदानीं तथोपर्यपि देवा भविष्यन्ति, इतीतरेषामनुमानाच्च ॥ २८ ॥**

(११) अतःपदार्थमाहुः- **सूर्येति** ॥ अत्रैव स्पष्टस्मृतिमाहुः- **यथैवेति** ॥ **अत इति** ॥ सौत्र-

पदानुवादोऽयम् । **एवेति** ॥ इत्यादेरेवशब्दादित्यर्थः । **महतां प्रत्यक्षात्**=संवादिप्रत्यक्षादित्यर्थः । अस्मदादिप्रत्यक्षं तु न साधकमिति भावः । **इतरेषां**= महदन्येषामित्यर्थः । **अनुमानाच्चेति** ॥ श्रुतिस्मृतिसिद्धाऽनुमानाच्चेत्यर्थः । अनुमानाऽऽकारस्तु- सूत्रार्थे दर्शितः । शब्दात्, प्रत्यक्षात्, अनुमानाच्च हेतोः, प्रभवनिमादिति सम्बन्धः । तस्य 'चेन्न' इत्यत्रान्वयः ।

(११) **सूर्याचन्द्रमसाविति** ॥ (महाना. १.३८) **धाता**= जगद्धारणपोषणकर्ता विष्णुः, **पूर्वं**= पूर्वकल्पे, **सूर्याचन्द्रमसौ यथा अकल्पयत्**= सृष्टवान्; तथा अस्मिन् कल्पेऽपि अकल्पयदित्यर्थः ।

**यथैवेति** ॥ **यथा**= पूर्वयुगात्यये, पूर्वकल्पात्यये वा, पुनः युगकल्पान्तरोत्पत्तिरिति **काले**= कालविषये, **नियमः**= प्रभवनियमः **तथा**= सुरादेः पूर्वपूर्वकल्पात्यये पुनः **अन्यभावनियमः** अन्यदेवताद्युत्पत्तिनियमः अस्ति, **तस्मात्**= विष्णोः सकाशात् **एतत्**= विश्वं **क्वापि**= कदाऽपि **अनीदृशं**= पूर्वपूर्वविसदृशं देवतादिप्रभवशून्यं **न भविष्यति,** किन्तु तद्भावोपेतमेव भविष्यति । यद्वा- **एतत्**= चेतनाऽचेतनात्मकं विश्वं **अनीदृशं**= इन्द्रादिनामादिरहितं न भविष्यति) किन्तु (इन्द्रादि) नामरूपाभ्यां (ईदृशं) युक्तमेव भविष्यतीत्यर्थः ॥ २८-२९ ॥ **यथापूर्वमिति** ॥ (महाना. १.३८)

**(वेदनित्यत्वादेव देवप्रवाहनित्यत्वम्)**

## (१२) ॥ ॐ अत एव च नित्यत्वम् ॐ ॥ २९ ॥

## अत एव शब्दस्य नित्यत्वादेव च देवप्रवाहनित्यत्वं युक्तम् ॥

(१२) युक्त्यन्तरेण देवप्रवाहस्य नित्यत्वसाधनाय सूत्रम्- **ॐ अत एव च नित्यत्वमिति** ॥ देवादीनामिति प्रकृतम् । चः समुच्चये । **अयमर्थः**- **अत एव च**= वेदनित्यत्वादेव च देवादीनां, **नित्यत्वं** = प्रवाहतो नित्यत्वम् इति ॥

सूत्रार्थमाहुः- **अत एवेतीत्यादिना** ॥ २९ ॥

## (१३) ॥ ॐ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॐ ॥

(१३) नन्वेवमपि भविष्यद्देवानां नानाविधनामरूपत्वेन एक(विध)त्वाभावात् एकविधतद्वाचकस्य पाठभेदरहितस्य नित्यस्य वेदस्य अप्रामाण्यं कथं न स्यात् ? इत्याशङ्कापरिहाराय सूत्रम्- **ॐ समाननामेति** ॥ देवादीनामिति प्रकृतम्, तच्चावर्तते । शब्द इत्यनुवर्त्य षष्ठ्या विपरिणम्यते ॥ **अयमर्थः**- देवादीनां = अतीतकल्पीयदेवादीनां अवृत्तावपि = मुक्तिप्राप्त्या स्वपदे असत्वेऽपि **दर्शनात्**= 'धाता

यथा' इति श्रुतेः, **स्मृतेश्च**= 'अनादिनिधना' इति स्मृतेश्च, देवादीनां= त्रैकालिकदेवादीनां **समाननामरूपत्वाच्च** = एकविधेन्द्रादिनामसहस्राक्षत्वादिरूप(धर्म)वत्त्वावगमाच्च, **शब्दस्य अविरोधः**= तत्तन्नामरूपविशिष्टदेवताबोधकश्रुतेः अविद्यमानबोधकत्वदोषा न, इति ।

## (१४) अतीतानागतानां देवानां समाननामरूपत्वात् प्राप्तपदानां मुक्त्याऽवृत्तावप्यविरोधः । 'यथापूर्वम्' इति (म.ना.उ.५–७) दर्शनात् ।

(१४) सूत्रार्थमाहुः- **अतीतानागतानामिति** ॥ सार्वकालिकदेवानामित्यर्थः । **समाननामरूपत्वादिति** ॥ वर्तमानदेवादिसमाननामरूपत्वादित्यर्थः । इदं च 'अविरोध' इत्यत्र हेतुः । **मुक्त्या**= मुक्तिप्राप्त्या । **अवृत्तावपि**= स्वपदे असत्वेऽपीत्यर्थः । समाननामरूपत्वे श्रुतिस्मृती आहुः- **यथेत्यादि** ॥ दर्शनात्, स्मृतेश्च, इत्युभयोः समाननामरूपत्वेऽन्वयः ॥ ३० ॥

**(प्राप्तपदानां देवानां माध्वादिविद्यास्वनधिकारं जैमिनिर्मन्यते)**

## (१५) 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
## ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।
## वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥' इति स्मृतेश्च ॥ ३० ॥

(१५) **अनादिनिधनेति** ॥ आदौ= सृष्टिकाले, **स्वयम्भुवा**= स्वतन्त्रेण येन विष्णुना, **अनादिनिधना**= उत्पत्तिनाशरहिता, अत एव **नित्या**= नित्यत्ववती, उत्पत्तिनाशरहितत्वरूपनित्यत्ववतीति यावत्, **या वाक्**= वेदरूपा, **उत्सृष्टा**= उच्चारिता, **स महेश्वरः**= हरिः, **वेदशब्देभ्यः**= तादृशवेदशब्देभ्य एव, **ऋषीणां**= ब्रह्मादिविबुधानां **नामधेयानि निर्ममे**= तानेव शब्दात् प्रतिकल्पं 'अयं शब्दः अत्र शक्तः' इति ज्ञापितवान् । **याश्च ऋषीणां**= ब्रह्मादिदेवानां **दृष्टयः**= रूपाणि **वेदेषु** दृश्यन्ते ताश्च तत्सदृशरूपाणि च (महेश्वरः) निर्ममे ॥ ३० ॥

## (१६) ॥ ॐ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॐ ॥ ३१ ॥

(१६) प्रकारान्तरेण वेदविद्याऽधिकाराक्षेपाय सूत्रम् - **ॐ मध्वादिष्विति** ॥ देवादीनामिति प्रकृतम् । **अयमर्थः**- देवादीनां= स्वस्वयोग्यवस्वादिपदप्राप्तिमतां देवादीनां, **असम्भवात्**= 'वसूनामेवैको भूत्वा' इत्यादिनोक्ते तत्तद्विद्याफले इच्छाया अयोगात् स्वायोग्यस्वोत्तमपदे इच्छाया अयोगाच्च **मध्वादिषु**= 'असौ वा आदित्यो देवमधु' इत्यादिनोक्तमधुविद्यादिब्रह्मविद्यासु, रुद्रादिपदप्रापककर्मविद्यासु च, **अनधिकारं मन्यते जैमिनिः**, इति ॥

**(१७) 'वसूनामेवैको भूत्वा' (छा.उ .३-६-२) इत्यादिना प्राप्यफलत्वात् प्राप्त-पदानां देवानां मध्वादिविद्यास्वनधिकारं जैमिनिर्मन्यते ॥ ३१ ॥**

(१७) श्रुत्युपन्यासपूर्वकं सूत्रार्थमाहुः- **वसूनामेवैकेति ॥ प्राप्यफलत्वादिति ॥** वस्वादिपद-प्राप्तिरूपप्राप्तव्यफलत्वावगमादित्यर्थः । मध्वादिविद्यानामिति शेषः । **प्राप्तपदानामिति ॥** वस्वादिपदप्राप्तिप्रयुक्ताऽधिक्यवतामपि देवानामित्यर्थः । **मध्वादीति ॥** आदिना वस्वादिपद-प्रापकासाधारणकर्मविद्यापरिग्रहः । विद्या द्विविधा मोक्षफलका, तदितरफलका चेति । द्वितीयाऽपि ब्रह्मविद्या, कर्मविद्या चेति द्विविधा । तत्र द्विविधमोक्षेतरफलकविद्यासु देवानामधिकारो नेति भावः ॥ ३१ ॥

(१७) **वसूनामिति** ॥ (छा.३.६.३) 'स य एतदेवामृतं वेद वसूनामेवैको भूत्वा अग्निनैव मुखेन एतदेवाऽमृतं दृष्ट्वा तृप्यति' ॥ इति पठ्यते । उपक्रमे- 'असौ वा व आदित्यः' (छा.३.१.१) इत्यादिना आदित्यस्य = तच्छब्दितविष्णोः परमाऽनन्दत्वेन, देवोपजीव्यत्वेन च, देवमधुत्वमुक्त्वा, मधुशब्दितभगवतः आदित्यमण्डलसम्बन्धि-पूर्व-दक्षिण-पश्चिम-उत्तर-ऊर्ध्वरश्मिषु स्थितानां प्रथमाऽमृतादिशब्दपञ्चकवाच्य-वासुदेव-सङ्कर्षण-प्रद्युम्न-अनिरुद्ध-नारायणाख्य-पञ्चरूपाणां मध्ये प्राच्यादितत्तद्दिगवस्थितैः वसु-रुद्र-आदित्य-मरुत्साध्यपदोक्तऋजुरूपपञ्चगणस्थैः देवैः क्रमेण अग्नि-वायु-इन्द्र-सोम-विरिञ्च-प्रधानकैः अग्न्यादिमुखेन (उपदेशेन) एकैकोपास्तौ कृतायां तदपरोक्षज्ञानजनिततत्प्रसादद्वारा वस्वादिपदप्राप्तिर्भवति तद्गणस्थानामिति (उच्यते) । प्रकृतखण्डार्थस्तु - **यः**= अधिकारी **एतदमृतं**= वासुदेवाख्यं रूपं, **एवं**= उक्तप्रकारेण **वेद**= जानाति । **स वसूनामेको भूत्वा**= वसुभोग्यदेशकालाधिपो भूत्वा **अग्निना मुखेन**= तत्प्राधान्येन तदुपदेशेनेति यावत् । **एतदेवाऽमृतं**= वासुदेवाख्यं **दृष्ट्वा** अपरोक्षीकृत्य **तृप्यति**= मुक्तो भवतीति ॥ ३१-३२ ॥

**(विद्यावतां देवानां मोक्षसाधनब्रह्मविद्यास्वनधिकारं जैमिनिर्मन्यते)**

**(१८) ॥ ॐ ज्योतिषि भावाच्च ॐ ॥ ३२ ॥**

(१८) **मोक्षफलकविद्याऽधिकाराऽक्षेपाय सूत्रम् - ॐ ज्योतिषीति ॥** देवादीनां विद्यास्विति **प्रकृतम् । अनधिकारं, जैमिनिरिति वर्तते । चः**= विद्यानां नित्यसिद्धत्वादित्यनुक्तसमुच्चये । **यथायथमावृत्तिः । सर्वेषामिति शेषः । अयमर्थः**- देवादीनां **ज्योतिषि**= तदीयसर्वविषयकज्ञाने, **सर्वेषां**= सर्वपदार्थानां **भावात्**= विषयतया अन्तर्भावात्, विद्यया विचार्यवस्तुनोऽपि (विद्या-

विचारात्) पूर्वमेव ज्ञातत्वादिति यावत् । विद्यानां नित्यसिद्धत्वाच्च, ज्योतिषि विद्यासु च, मोक्षकारण 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिज्ञानविद्यास्वपि अनधिकारं मन्यते जैमिनिः इति ॥

**(१९) ज्योतिषि सर्वज्ञत्वे भावाच्च । आदित्यप्रकाशेऽन्तर्भाववत्तज्ज्ञाने सर्व-वस्तूनामन्तर्भावात् । नित्यसिद्धत्वाच्च विद्यानाम् ॥ ३२ ॥**

(१९) सूत्रार्थमाहुः- **ज्योतिषीति** ॥ स्वपदे वर्णयन्ति - **आदित्य इति** ॥ आदित्यप्रकाशेऽन्तर्भावो नाम तत्प्रकाश्यत्वं, प्रकृते च तद्विषयत्वमन्तर्भाव इति बो॰॰न् । इदं बोध्यम्- सौत्रज्योतिषीत्यस्य सर्वविषयकत्वम् अनन्तर्भाव्य ज्ञानमात्रार्थकत्वेऽङ्गीकृते यद्विषयकं ज्ञानं पूर्वमनिष्पन्नं (असिद्धम्) तज्ज्ञानार्थं ज्ञानविद्याधिकार इति अनधिकारसाधकत्वं न स्यादस्य सूत्रस्य इति । ज्योतिषि सर्वविषयकत्वं च अनधिकारकथनासामर्थ्यादिव लभ्यम् । ननु विद्यायाः पूर्वमभावात् देवादीनां पूर्वमेव कथं सर्वज्ञत्वम् ? अत आहुः- **नित्यसिद्धत्वाच्चेति** ॥ नित्यत्वादित्यस्य 'अनधिकारं मन्यते' इति पूर्वभाष्येणान्वयः ॥ ३२ ॥

**(तत्तद्विद्याफलादिमतां देवानां फलविशेषप्राप्त्यर्थं वा तदितरफलकविद्यायामधिकारभावं बादरायणो मन्यते)**

**(२०) ॥ ॐ भावं तु बादरायणोऽस्ति हि ॐ ॥ ३३ ॥**

**फलविशेषभावात् प्राप्तपदानामपि देवानां मध्वादिष्वप्यधिकारं बादरायणो मन्यते । अस्ति हि प्रकाशविशेषः ।**

(२०) स्वमतप्रतिपादनाय सूत्रम्- **ॐ भावं त्विति** ॥ देवादीनां विद्यास्विति प्रकृतम् । अधिकारकथनेन फलमिति लभ्यम् । हिः हेतुप्रसिद्ध्योः । तुः अप्यर्थे । **अयमर्थः- हि**= यतो हि श्रुत्यादिप्रसिद्धं फलं विद्याफलं भगवद्गुणेषु स्पष्टतारव्यविषयत्वरूपम्, अवरपदात् उत्तमपदप्राप्तिरूपं, उत्तमपदस्थानां मोक्षे आनन्दातिशयावाप्तिरूपं च अस्ति, अतः देवादीनां तु= प्राप्तपदानामपि देवादीनां विद्यासु= मध्वादिविद्यासु, भावं= अधिकारभावं मन्यते **बादरायणाचार्यः** । इति ॥

**(२१) 'यावत्सेवा परे तत्वे तावत्सुखविशेषता ।**
**सम्भवाच्च प्रकाशस्य परमेकमृते हरिम् ॥**

**तेषां सामर्थ्ययोगाच्च देवानामप्युपासनम् ।**
**सर्वं विधीयते नित्यं सर्वयज्ञादिकर्म च ॥' इति स्कान्दे ॥**
**उक्तफलानधिकारमात्रं जैमिनिमतम् । अतो न तन्मतविरोधः ।**

**(२१) सूत्रार्थमाहुः- फलविशेषेति ॥ उक्तार्थे मानमाहुः- यावदिति ॥ स्कान्द इति ॥ स्कान्दोक्तेरित्यर्थः । हि यतः स्कान्दोक्तिज्ञाप्यप्रकाशोऽस्ति, अतः फले विशेषभावादित्यन्वयः । जैमिनिमतविरोधं परिहरन्ति- उक्तेति ॥ तत्तद्विद्याप्रकरणोक्त(वस्वादिपदरूप)फलोद्देशेन तत्तद्विद्यायां (प्राप्ततत्तत्पदानां देवानां) अधिकारो नेति जैमिनिमतम् । तदितरफलकविद्यायां अधिकार इति भगवतो बादरायणस्य मतम् । अतो न विरोध इत्यन्वयः ।**

(२१) **यावत्सेवेति** ॥ **अयमर्थः**:- यतः **परे तत्वे**= परमात्मनि, **देवानां**= वस्वादिदेवैरिति, **यावत्**= अधिकं **सेवा**= मधुविद्याद्युपासनादि क्रियते, **तावत्**= अधिकं, तेषां **सुखविशेषता**= स्वर्गापवर्गादौ सुखातिशयोऽस्ति । अतः **परं**= स्वतन्त्रं हरिं **एकं ऋते**, अन्येषां **प्रकाशस्य**= ज्ञानविशेषस्य **सम्भवात्**= उत्पाद्यमानत्वात्, **तेषां**= देवानां **सामर्थ्ययोगाच्च**= अर्थित्वसम्भवाच्च **देवानामपि**= प्राप्तपदानामपि देवानां, तादृशैर्देवैः **सर्वमुपासनं**= सर्वविद्योक्तोपासनं **सर्वयज्ञादिकर्म च नित्यं**= नियमेन **विधीयते**= कर्तव्यत्वेन श्रुतिषु बोध्यते इति ॥

**(२२) 'सर्वज्ञस्यैव कृष्णस्य त्वेकदेशविचिन्तितम् ।**
**स्वीकृत्य मुनयो ब्रूयुस्तन्मतं न विरुद्ध्यते ॥' इति ब्राह्मे ॥**

**॥ इति देवताधिकरणम् ॥**

**(२२) मतयोरविरोधे मानमाहुः - सर्वज्ञस्येति ॥ ब्राह्म इति ॥ मतयोरविरोध उक्त इति शेषः ॥ ३३ ॥**

**॥ इति देवताधिकरणम् ॥ ८ ॥**

(२२) **सर्वज्ञस्येति** ॥ यतो **मुनयः**= जैमिन्याद्याः **सर्वज्ञस्य**= निरुपचरितसार्वज्ञवतः, **कृष्णस्य**= व्यासस्य, **एकदेशविचिन्तितं**= विचिन्तितार्थैकदेशं, तन्मतमेव स्वीकृत्य तदेव, **ब्रूयुः**= वदन्ति, अतः **तन्मतं**= व्यासतदितरमुनीनां मतं **न विरुद्ध्यते**= परस्परं न विरुद्ध्यते इत्यर्थः ॥ ३३ ॥

॥ इति देवताऽधिकरणम् ॥ ८ ॥

# ९. अपशूद्राधिकरणम्

## (१) मनुष्याधिकारत्वादित्युक्तेऽविशेषाच्छूद्रस्यापि 'अह हारेत्वा शूद्र' इति (छा.उ. ४-२-३) पौत्रायणोक्तेरधिकार इति, अत आह–

(१) अत्र नये शूद्रस्य वेदविद्याधिकारो निषिध्यते (५ सू.अ.) अस्य नयस्य प्रासङ्गिकत्वात् अध्यायपादसङ्गती न ॥ 'वामन'(१.३.७) नयेन सङ्गतिं, विषयवाक्यं (संशयं) सयुक्तिकपूर्वपक्षं च दर्शयन्ति- **मनुष्येत्यादिना ॥** मनुष्यपदं जातिपरम्, विशिष्टबुद्ध्यादिमत्परं वा भवतु । **इत्युक्ते इति ॥** सतीति शेषः । **अविशेषादिति ॥** द्विजादिभ्यो विशिष्टबुद्ध्यादिमद्भ्यो वा, व्यावर्तकविशेषाभावादित्यर्थः । विषयवाक्यमाहुः- **अह हेति ॥ पौत्रायणोक्तेः=** पौत्रायणं प्रति रैक्वोक्तेश्चेत्यर्थः। **अधिकार इति ॥** वेदविद्याधिकार इत्यर्थः । प्राप्नोतीति शेषः । अनेन वेदविद्याधिकारोऽत्र विषयः। शूद्रस्यास्ति ? न वा ? इति सन्देहः, शूद्रस्यापि वर्ततेऽविशेषात् इति पूर्वपक्षश्च दर्शितो भवति । मनुष्येत्युक्तिः, अदर्शनं च सन्देहबीजमिति बोध्यम् ।

(१) अह हारे इति ॥ (छा.४.२.३) 'तमु ह परः प्रत्युवाच-**अह हारेत्वा शूद्र** तवैव सह गोभिरस्तु' इति पठ्यते । विद्याग्रहणार्थं उपहारमादायागतं पौत्रायणं प्रति रैक्वऋषिवाक्यमेतत् । अयमर्थः- **अह शूद्र=** हे शूद्र, **हार=** हारः= कण्ठभूषणाख्यं मध्यममणिसंयुतं मुक्ताहारादिकं इत्वा **रथः गोभिः** (षट्शती-सङ्ख्याकाभिः गोभिः) सह **तवैवाऽस्तु** इति **परः=** मुनिपुङ्गवो रैक्वः **तं=** विद्योपदेशग्रहणायागतं पौत्रायणं **प्रत्युवाच=** प्रत्युत्तरमवादीत् इति ॥

### (तुरीयवर्णजस्य वेदविद्याधिकारो नास्ति)

## (२) ॥ ॐ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॐ ॥ ३४ ॥

(२) पौत्रायणोक्तेरिति हेतुनिराकरणाय सूत्रम्- **ॐ शुगस्येति ॥** वेदविद्यास्विति प्रकृतम् । शूद्रशब्दनिर्वचनबलात् शूद्र इति लभ्यते । दर्शनादस्ति, अनधिकारं इति वर्तते । न अधिकारमिति बुद्ध्या विवेक्तव्यम् । यथायथमावृत्तिविपरिणामौ । अस्येति, तदिति च श्रुत्युक्तार्थपरामर्शकौ । यौगिकः जातेति शेषः ।

**अयमर्थः-** वेदविद्यासु शूद्रस्य अधिकारो नास्ति, **न दर्शनात्=** क्वापि अदृष्टत्वात् । यतः दर्शने= 'अह हार' इति श्रुतौ, **शूद्रः=** पौत्रायणे प्रयुक्तः शूद्रशब्दः, **यौगिको हि=** यौगिक एव, न तु जातिपरो रूढः । **अस्य=** पौत्रायणस्य **तदनादरश्रवणात्=** 'कम्वर एनम्' इति हंसकृताऽनादरश्रवणात्, **शुक्=**

शोकः, जाता **सूच्यते**= 'सञ्जिहान एव' इत्युत्तरवाक्येन अनुमीयते **तदाद्रवणात्**= तया= शुचा, **आद्रवणात्**= चित्तविक्षेपात्, आशुगमनाद्वा, प्रवृत्तिनिमित्तादिति यावत् । अतः, इति ॥ तथा च शूद्रस्यापि अधिकारो वर्ततेऽविशेषात्, पौत्रायणोक्तेश्च, इत्युक्तयोर्हेत्वोर्मध्ये- प्रथमहेतोः 'संस्कार-परामर्शात्' (१.३.३६) इति सूत्रेण निराकरिष्यमाणत्वात्, द्वितीयहेतोः पौत्रायणं प्रति शूद्रेत्युक्ति-रूपस्य अन्यथासिद्धिरुक्तेति बोध्यम् ।

**(३) नासौ पौत्रायणश्शूद्रः, शुचाऽऽद्रवणमेव शूद्रत्वम् ।**

(३) सूत्रतात्पर्यार्थमाहुः- **नासौ पौत्रायण इत्यादिना** ॥ असौ= शूद्रेति सम्बोधितः न शूद्रः= जातिशूद्रो नेत्यर्थः । **शुचा आद्रवणमेव शूद्रत्वमिति** ॥ शूद्रशब्दप्रवृत्तिनिमित्तमित्यर्थः ।

**(४) 'कम्वर एनमेतत्सन्तम्' (छा.उ.४—१—३) इत्यनादरश्रवणात् । 'स ह सञ्जिहान एव क्षत्तारमुवाच' इति (छा.उ. ४—१—५) सूच्यते हि ॥ ३४ ॥**

(४) शोकोत्पत्तौ कारणं श्रुत्या आहुः- **कम्वरे इति** ॥ **श्रवणादिति** ॥ जातेति शेषः । अस्य शुचा इति पूर्वत्रान्वयः । सूच्यत हीति सौत्रभागं श्रुत्युपन्यासेन व्याचक्षते- **स ह सञ्जिहान इति** ॥ **इतीति**॥ इत्यनेनेत्यर्थः । **सूच्यते**= जातेत्यनुमीयते । हि यतः अनुमीयते अतः, शूद्रत्वं शुचा द्रवणमेव शूद्रशब्दप्रवृत्तिनिमित्तं, अतो नासौ शूद्र इत्यन्वयः । शुक्शब्दोपपदात् रु-धातोः ड-प्रत्यये टिलोपे शुक्शब्द-मकारस्य दकारे, उकारस्य दीर्घे च । यद्वा- शुक्शब्दोपपदात् आङ्पूर्वात् द्रु-धातोः औणादिके डप्रत्यये टिलोपे पृषोदरादित्वात् चकारलोपे पूर्वसवर्णदीर्घे च श्रौतशूद्रशब्दनिष्पत्तिर्बोध्या ॥ ३४ ॥

(४) **कम्वर इति** ॥ (छा.४.१.३) तमु ह परः प्रत्युवाच - **कम्वर एनमेतत्सन्तं** सयुग्वानमिव रैक्वमात्थ' इति श्रूयते । कं, उ, अरे, इति छेदः । उ **इति** निन्दायाम्, तं= पौत्रायणस्तुतिं कुर्वाणं हंसं प्रति, **परः**= अन्यः हंस उवाच- **अरे** हंस, एतत्= वचनं **कं एनम्** उद्दिश्य **सयुग्वानं**= सशकटं **रैक्वं**= तन्नामकऋषिमिव **आत्थ**= ब्रवीषि उ एतत् पौत्रायणविषये निन्दितमित्यर्थः । **स ह सञ्जिहान इति** ॥ (छा.उ.४.१.५) **सः**= श्रुताऽनादरः पौत्रायणः, **सञ्जिहान एव**= शयनात् उत्तिष्ठन्नेव **क्षत्तारं**= सारथिं प्रति रैक्वगवेषणाय **उवाच** इत्यर्थः ॥ ३४ ॥

**(क्षत्रियः पौत्रायणः चित्ररथसम्बन्धित्वात्)**

**(५) ॥ ॐ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॐ ॥ ३५ ॥**

(५) ननु श्रौतशूद्रशब्दो रूढ एव स्यात् रूढेर्बलवत्वात्, इति **शङ्कावारणाय सूत्रम्- ॐ क्षत्रियेति ॥** अस्य, शूद्र इति वर्तते। यौगिक इति च। चित्रश्चासौ रथश्च, तस्यायं चैत्ररथः। भावप्रधानं च, व्यत्ययेन तृतीया । चित्ररथसम्बन्धित्वस्याभेदसम्बन्धे लिङ्गादित्यत्रान्वयः । लिङ्गादिति पञ्चम्यर्थः= जन्यत्वं, अवगतौ अन्वेति श्रूयमाणादिति शेषः । **अयमर्थः**, **उत्तरत्र=** 'अयमश्वतरीरथः' (छा.४.२.२) इत्युत्तरवाक्ये श्रूयमाणात्- **चैत्ररथेन=** चित्ररथसम्बन्धित्वात् **लिङ्गात्**, अस्य पौत्रायणस्य **क्षत्रियत्वावगतेश्च=** उक्तलिङ्गजन्यक्षत्रियत्वज्ञानाच्च शूद्रः= असौ श्रौतशूद्रशब्दः यौगिक इति ॥ तथा च न शूद्रस्य वेदाधिकार इति भावः ।

ननु 'यत्र वेदो रथस्तत्र न वेदो यत्र नो रथः' इति न्यायेन जातिशूद्रस्य स्वाभाविकं रथसम्बन्धित्वं नास्त्येव। प्रकृते च स्वाभाविकस्यैव तस्य ग्रहणम्, तथा च 'रथेन' इत्यनेनैव क्षत्रियत्वाऽवगतिसिद्धौ चित्रेति विशेषणं व्यर्थमिति - चेत् - न, स्वरूपकीर्तनार्थत्वात्। 'रथित्वेनैव क्षत्रियत्वावगतौ किमु वक्तव्यं चित्ररथित्वेन क्षत्रियत्वसिद्धिः' इति कैमुत्यबोधनार्थत्वाच्च ।

न चैवमपि 'अयमश्वतरीरथः' इति चित्ररथ एव प्रतीयते, न तु चित्ररथसम्बन्धित्वं पौत्रायणस्येति वाच्यम् - दीयमानस्य दातृसम्बन्धित्वं विना दानायोगात् तत्सिद्धेः। 'तवैवास्तु' (छा.४.२.२) इति वाक्येन पौत्रायणसम्बन्धित्वबोधनाच्च। ननु 'चैत्ररथेन' इत्येव सिद्धेः 'उत्तरत्रे'ति विशेषणं कुत इति चेत्- उच्यते-उत्तरत्र चेति चशब्दसम्बन्धेन, उत्तरत्र पूर्वत्र च श्रूयमाणात् चित्ररथित्वलिङ्गादित्यर्थः । तेन लिङ्गस्याभ्यासो बोधितः । यद्वा- उत्तरत्र श्रूयमाणलिङ्गाच्चेत्यर्थः, तेन पूर्वत्रोपक्रमे श्रूयमाण-चैत्ररथत्वलिङ्गबहुदायित्वबहुवाक्यत्वादिलिङ्गसङ्ग्रह इति ॥

## (६) अयमश्वतरीरथ इति चित्ररथसम्बन्धित्वेन लिङ्गेन पौत्रायणस्य क्षत्रियत्वावगतेश्च ।

(६) श्रुत्युपन्यासपूर्वं सूत्रं विवृण्वते- **अयमश्वतरीति ॥** एतद्वाक्यप्रतिपाद्येत्यर्थः । **लिङ्गेनेति ॥** लिङ्गादित्यस्य तात्पर्यकथनम् । **अवगतेश्चेति ॥** इदं भाष्यं सौत्रपदार्थविवरणरूपम्, अतो नास्यान्वयाऽपेक्षा । यद्वा- 'नासौ पौत्रायणः' इति पूर्वसूत्रभाष्येऽन्वयः ।

(६) **अयमश्वतरीरथ** इति ॥ (छा.४.२.२,४) अश्वतरीसहितो रथः, गवादिकं च दक्षिणात्वेन आनीतमस्ति, एतद्गृहीत्वा मामनुशाधि इति रैक्वं पौत्रायणोऽर्थयांचक्रे इत्यर्थः । अश्वतरीस्वरूपं चानुपदं स्फुटीभविष्यति ॥

**(७) 'रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते' इति ब्राह्मे ।**

(७) **ननु श्रुतौ चित्ररथ इति न श्रूयते । अतःश्रुतिसूत्रयोरानुगुण्यं नेत्यत आहुः- रथस्त्वश्वतरीति ॥ ब्राह्म इति ॥ चित्ररथपदार्थ उक्त इति शेषः । तथा च श्रुतिसूत्रयोर्न विरोध इति भावः ।**

(७) **रथस्त्विति ॥** अश्वात् गर्दभ्यां, गर्दभात् अश्वायां वा जाता = अश्वतरीत्युच्यते । तया युक्तो रथस्तु रथविशेष एव चित्र इत्युच्यते इत्यर्थः । अत्र रथ इति स्वरूपकीर्तनं, न तु शक्यकोटिप्रविष्टः, यथा 'हरतेर्दृतिनाथयोः पशौ' इति पाणिनिसूत्रे पशौ इत्युक्तेऽपि पशुत्वं तत्सूत्रव्युत्पादितनाथहर-शब्दवाच्यकोटिप्रविष्टं न, अत एव नाथहरः पशुः इति प्रयोगो भवति, तथेति ज्ञेयम् । अत एव सूत्रे रथशब्दग्रहणमुपपन्नं भवति ॥

**(८) 'यत्र वेदो रथस्तत्र न वेदो यत्र नो रथः' इति च ब्रह्मवैवर्ते ॥**

(८) **ननु चित्ररथसम्बन्धित्वं क्षत्रियत्वगमकं कथं स्यादित्यत आहुः- यत्रेति ॥ ब्रह्मवैवर्त इति ॥ ब्रह्मवैवर्ते इत्युक्तव्याप्तिकेनेत्यर्थः । अस्य लिङ्गेनेत्यत्र अभेदेनान्वयः ।**

**ननु वैदिकमात्रे विद्यमानं रथित्वं तद्विशेषं क्षत्रियत्वं कथमवगमयेदिति चेत् - न । स्वाभाविकस्यैव रथित्वस्य ग्रहणं प्रकृते, तस्य च क्षत्रियमात्रवृत्तित्वेन क्षत्रियत्वानुमापकत्वोपपत्तेः । 'मुख्यामुख्य' न्यायेन मुख्यस्यैव ग्रहणौचित्यात्, स्वाभाविकस्यैव मुख्यत्वात् ।**

**न चैवं 'उत्तरत्र चैत्ररथेन लिङ्गात्' इत्येव सूत्रमस्तु, स्वाभाविकचैत्ररथलिङ्गेन 'यत्र वेदो रथस्तत्र' इति स्मृत्या, रथित्वस्य वेदव्याप्यत्वेन च, अयं पौत्रायणो न शूद्र इत्यर्थोऽस्तु । तथा च मध्ये क्षत्रियत्वसाधनं व्यर्थमिति वाच्यम्- पौत्रायणस्य क्षत्रियत्वजातिनिर्णयार्थं तथा सूत्रकरणात् । अन्यथा शूद्रत्वाऽभावे सिद्धेऽपि जातिविशेषनिर्णयो न स्यात् । ननु जातिपरिज्ञानेन किमिति चेत् ,शूद्रेतरस्य ब्राह्मणभिन्नस्यापि वेदाधिकार इति ज्ञापनाय ॥ ३५ ॥**

(८) **यत्र वेद इति ॥ यत्र वेदः**= वेदाधिकारः, **तत्र रथः**, यत्र वेदो न, तत्र रथो **नो**= नास्ती-त्यर्थः । अनेन वेदरथयोः समव्याप्तिरुक्ता भवतीति बोध्यम् । यद्वा - यत्र वेदोऽस्ति, तत्रैव रथः एवकारार्थस्यैव व्यक्तीकरणं - यत्र न वेदः, तत्र नो रथ इत्यर्थः । अनेन रथस्य वेदव्याप्यत्वमुक्तमिति ज्ञेयम् ॥ ३५ ॥

(वेदाधिकारप्रयोजकसंस्काराद्यभावान्न ब्रह्मविद्याधिकारः)

## (९) ॥ ॐ संस्कारपरामर्शात्तदभावाभिलापाच्च ॐ ॥ ३६ ॥

(९) ननु स्वाभाविकमेव रथित्वमत्र ग्राह्यमित्यत्र न मानं, दुर्वचं न स्वाभाविकत्वं, रथित्वमात्रं तु कथञ्चित् जातिशूद्रेऽपि सम्भवेत्, शूद्रस्यापि वेदाधिकार इति पूर्वपक्षिणो मते वेदाऽविनाभावस्यापि शूद्रीयरथित्वे अनपायात्, उपक्रमे श्रूयमाणबहुदायित्वादिलिङ्गानामपि कथञ्चित् जातिशूद्रेऽपि सम्भवात्, तथा च (तल्लिङ्गेन) जातिशूद्रस्य वेदविद्यास्वधिकारो नेत्ययुक्तमिति शङ्कावारणाय सूत्रम्- **ॐ संस्कारपरामर्शादिति** ॥ वेदविद्यासु, अधिकारः, न, शूद्रस्य, इति वर्तते । यथायोग्यमावृत्तिविपरिणामौ । चः स्मृतिसमुच्चये । **अयमर्थः**- शूद्रस्य वेदविद्यासु अधिकारो न, वेदविद्यायै= वेदविद्याऽध्ययनार्थं **संस्कारपरामर्शात्**= उपनयनाख्यसंस्कारस्य 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' इति श्रुत्या, 'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना' इति स्मृत्या चोक्तत्वात्, शूद्रे **तदभावाभिलापाच्च= तदभावस्य=** उक्तसंस्काराऽभावस्य 'नाग्निर्न यज्ञ' इति श्रुतौ प्रतिपादितत्वाच्च इति ॥ एवञ्च शूद्रे (संस्काराभावेन) वेदाभावेन तदविनाभाविरथित्वस्याप्यभावेन रथित्वलिङ्गात् पौत्रायणे क्षत्रियत्वानुमितिर्युक्तेति भावः ।

### (१०) 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत' इत्यध्ययनार्थं संस्कारपरामर्शात् ।

(१०) श्रुत्युपन्यासपूर्वं सूत्रार्थमाहुः- **अष्टवर्षमिति** ॥ अत्र 'उपनयीत', 'अध्यापयीत', इत्युभयत्रापि 'विध्यादि' सूत्रेण विध्यर्थे लिङ्, न तु 'हेतुहेतुमतोर्लिङ्' इति सूत्रेण हेतुहेतुमद्भावे । तथा सति अष्टवर्षब्राह्मणोद्देशेन उपनयनस्य विधानानुपपत्तेः अष्टवर्षमित्यस्य वैयर्थ्यञ्च स्यात् । उपनयन-अध्ययनयोरङ्गाङ्गिभावस्तु 'तमध्यापयीत' इत्यत्रत्य तं इत्यस्य कृतोपनयनमित्यर्थकत्वेन बोध्यः । **इतीति** ॥ इदमुपलक्षणं, 'वेदः कृत्स्नोऽधिगन्तव्यः' इति स्मृतेरपि ।

(१०) **अष्टवर्षमिति** ॥ **ब्राह्मणं**= ब्राह्मणकुलोत्पन्नं, **उपनयीत**= ब्रह्मोपदेशार्थं आचार्यः स्वसमीपं नयेत । **तं**= समीपमुपनीतम् 'अध्यापयीत' इत्यर्थः ।

### (११) 'नाग्निर्न यज्ञो न क्रिया न संस्कारो न व्रतानि शूद्रस्य' इति पैङ्गिश्रुतौ संस्काराभावाभिलापाच्च । उत्तमस्त्रीणां तु न शूद्रवत् ।

(११) ननु तर्हि- संस्कारस्याध्ययनाङ्गत्वे संस्कारोऽपि स्यादित्यत आहुः- **नाग्निरिति** ॥ अभि-

**लापादिति ॥** प्रतिपादनादित्यर्थः । शूद्रस्य न वेदाधिकार इति शेषः । ननु उत्तमस्त्रीणामुपनयनाभावेऽपि वेदाधिकारत्वात् शूद्रस्यापि वेदाधिकारः किं न स्यादित्यत आहुः- **उत्तमस्त्रीणामिति ॥ न शूद्रवदिति ॥** षष्ठ्यन्ताद् वतिः । संस्काराभावेनाभाव इति वाक्यमपकृष्यते । तथा चायं भाष्यार्थः- शूद्रस्येव उत्तमस्त्रीणां संस्काराभावेन अभावः । अधिकारस्याभावो न वाच्य इति । एवञ्च स्त्रीवत् शूद्रस्याप्यस्तु अधिकार इति शङ्का न कार्येति भावः ।

(११) **नाग्निरिति ॥** (पैङ्गिश्रुतिरियम्) **अग्निः**= श्रौतः, स्मार्तश्च । **यज्ञः**= अग्निहोत्रादियज्ञः, दैवपित्र्यादियज्ञो वा । **क्रिया**= सन्ध्यावन्दनादिः, उत्तरक्रिया वा, **व्रतानि**= कृत्स्नचान्द्रायणादीनि, संस्कार इत्यत्र नञोऽनुवृत्तिः, न उपनयनादिसंस्कारः, क्रियया सहितसंस्कार इति एकपदं वा, पूर्वमुक्त एवार्थः ॥

## (१२) 'सपत्नीं मे पराधम' (मन्त्रप्रश्न. १-१६) इत्यादिष्वधिकारदर्शनात् । संस्काराभावेनाभावस्तु सामान्येन ।

(१२) कुतोऽयं निर्णय इत्यतः श्रुतिमाहुः- **सपत्नीमिति ॥ दर्शनादिति ॥** द्रष्टृत्वेन स्त्रीणां वेदाधिकारदर्शनादित्यर्थः । **अभावस्त्विति ॥** वेदाधिकाराभावस्त्वित्यर्थः । **सामान्येनेति ॥** अपवादाविषयस्थलानुरोधेनेत्यर्थः । उक्त इति शेषः ॥ तथा च येषामुपनयनसंस्कारं विनाऽपि महतामाचारेण वेदाधिकारो बोधितः, तदतिरिक्तचेतनसम्बन्धिवेदाधिकारं प्रति उपनयनस्य प्रयोजकत्वमिति सामान्यन्यायाभिप्रायः ।

(१२) **सपत्नीं मे इति ॥** (मन्त्रप्रश्न १.१६) **'सपत्नीं मे पराधम पतिं मे केवलं कुरु, उत्तराहमुत्तरेदुत्तर उत्तराभ्यः'** इति पठ्यते । मन्त्रद्रष्टृशचीवाक्यमेतत् । हे भगवन् **मे सपत्नीं**= मदन्यां मत्पतिपाणिगृहीतीं, **पराधम**= पराणुद, मम पतिं केवलं मय्येवाऽसक्तं कुरु, अहं **उत्तराभ्यः**= सौन्दर्येणोत्कृष्टाभ्यः, मदन्तराभ्यो वा, स्त्रीभ्यः, **उत्तरा**= उत्कृष्टा सती, **उत्तरा इत्**= प्रियोत्तमैव वर्ते, **उत्तरे**= सपत्नीक्लेशादुत्तरेयमित्यर्थः । (अत्र 'इत्' इति इण्धातोः क्विपि तुकि रूपम् । छान्दसत्वात् व्यत्ययेन उत्तरे इति आत्मनेपदं चेति बोध्यम्)

## (१३) अस्ति च तासां संस्कारः । 'स्त्रीणां प्रदानकर्मैव यथोपनयनं तथा' इति स्मृतेः (व्याससमृतिः) ॥ ३६ ॥

(१३) अधिकारप्रयोजकः उपनयनप्रतिनिधिसंस्कारविशेषोऽपि स्त्रीणामस्तीत्याहुः-**अस्ति चेति** ॥ **तासामिति** ॥ उत्तमस्त्रीणामित्यर्थः । **संस्कारः**- वेदाधिकारोपयोग्युपनयनसदृशविवाहाख्य-संस्कारोऽस्त्येवेत्यर्थः । अत्र स्मृतिमाहुः- **स्त्रीणामिति** ॥ स्मृतावपि उत्तमस्त्रीणामित्येवार्थः । अतः स्मृतौ सामान्योक्तेस्सर्वासामपि स्त्रीणां वेदाधिकार इति शङ्काऽनवकाशः । अत एव च शूद्रस्त्रीणामपि नेति बोध्यम् ॥ ३६ ॥

(१३) **स्त्रीणामिति** ॥ (व्यासस्मृतिरियम्) पुंसामिति शेषः, संस्कार इति च । पुंसां यथा **उपनयनं**= वेदाध्ययनादिप्रयोजकसंस्कारः, तथा स्त्रीणामपि **प्रदानकर्मैव**= विवाहक्रियैव अध्ययनाङ्गभूतसंस्कार इत्यर्थः ॥ ३६ ॥

**(सत्यकामोपनयनसंस्कारेऽब्राह्मणत्वाभावनिश्चयेनैव प्रवृत्तिः)**

## (१४) ॥ ॐ तदभावनिर्धारणे च प्रवृत्तेः ॐ ॥ ३७ ॥

(१४) ननु शूद्रस्यापि संस्कारोऽस्तु, 'नाग्निर्न यज्ञः' इत्यनेन अग्न्याद्यभाव एव उक्तः । न तु संस्कारनिषेधः कृतः, इति शङ्कावारणाय सूत्रम्- **ॐ तदभावेति** ॥ सत्यकामस्य हारिद्रुमतस्येति विषयवाक्यबलाल्लभ्यते । संस्कारेत्येकदेशः, शूद्रस्य, न, इति वर्तते । यथायोग्यमावृत्तिविपरि-णामौ । **अयमर्थः**- सत्यकामस्य **तदभावनिर्धारणे**= 'नैतदब्राह्मणः' इति शूद्रत्वाभावनिश्चये सत्येव **संस्कारे**= सत्यकामोपनयनसंस्कारे हारिद्रुमतस्य (गौतमस्य) **प्रवृत्तेश्च**= शूद्रस्य संस्कारः= उपनयनाख्यः न इति ॥

**(१५) 'नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि' इति (छा.उ. ४-४) सत्यवचनेन सत्यकामस्य शूद्रत्वाभावनिर्धारणे हारिद्रुमतस्य 'नैतदब्राह्मणो विवक्तु-मर्हति' इति (छा.उ. ४५) तत्संस्कारे प्रवृत्तेश्च ॥ ३७ ॥**

(१५) श्रुत्युपन्यासेन सूत्रं व्याचक्षते= **नाहमिति** ॥ **अर्हतीति** ॥ निश्चित्येति शेषः । **तत्संस्कारे**= सत्यकामसंस्कारे । **प्रवृत्तेश्चेति** ॥ सूत्रे चकारो भिन्नक्रमः इति भावः । अस्य भाष्यस्य सौत्रपदार्थविवरणपरत्वात् नान्वयापेक्षा ॥ ३७ ॥

(१५) **नाहमेतदिति** ॥ (छा.४.४.४) तत्र इत्थमाख्यायिका- सत्यकामो नाम ऋषिर्जाबालः वेदाध्ययनार्थं, तदङ्गोपनयनसंस्कारार्थं च, आचार्यकुलं उपगच्छेयमिति मनसि कृत्वा यद्गोत्रोऽहमस्मीति

जबालां मातरं पप्रच्छ। सा तु पुत्रमब्रवीत्। हे तात ! त्वं यद्गोत्रोऽसीत्येतत् नाहं वेद, इत्युक्तः सत्यकामः आचार्यं गौतममेत्य आह- हे भगवान् ब्रह्मचर्यार्थं त्वामुपेयामिति वदन्, 'किं गोत्रस्त्वमसीति गौतमेन पृष्टः, पुनः गौतमं प्रत्याह- **नाहमेतद्** इत्यादिना, मद्गोत्रज्ञानं मम नेत्याह इति ॥ तत्र सत्यकामवचनमिदम्- **नाहमिति** ॥ अस्यायमर्थः- हे **भगवन्**= पूज्य गौतम, अहं यद्गोत्रोऽस्मीत्येतत् वेद्यं **न वेद**= न जानामीति ॥ **नैतदिति** ॥ (छ.४.४.५) **एतत्**= आर्जवसंयुक्तवचनम्, **अब्राह्मणः**= त्रैवर्णिकेतरः शूद्रः **विवक्तुं**= सर्वथा वक्तुं, **नार्हति**= न योग्य इत्यर्थः ॥ ३७ ॥

**(प्रत्यवायश्रवणाच्च न तुरीयस्य वेदाधिकारः)**

## (१६) ॥ ॐ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॐ ॥ ३८ ॥

(१६) ननु शूद्रः- वेदविद्याऽधिकारी, विशिष्टबुद्ध्यादिमत्वात्, द्विजवत्। विशिष्टबुद्धिमत्वेऽपि अधिकाराभावे देवानामप्यधिकारो न स्यादिति शङ्कावारणाय सूत्रम् - **ॐ श्रवणेति** ॥ श्रवणं च, अध्ययनं च, अर्थः= अर्थावधारणं, स चेति द्वन्द्वः, तेषां प्रतिषेधात्। श्रवणं= नियमं विनाऽपि अन्योच्चारणजन्यं ज्ञानम्। अध्ययनं = नियमपूर्वकं गुरुमुखोच्चारणानूच्चारणरूपम्। अर्थावधारणम्= गुरुमुखात्, अन्यमुखाद्वा स्वयं पुस्तकावलोकनाद्वा। वेदस्येति शेषः, शूद्रस्य, वेदविद्यासु, अधिकारः, न इति वर्तते। **अयमर्थः**- शूद्रस्य वेदविद्यासु अधिकारो न, **श्रवणाध्ययनार्थप्रतिषेधात्**= 'श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणम्' इत्यादि(श्रुत्युक्त)विपरीतफलश्रवणेन निषेध ऊह्यत इत्याशयः, 'नाग्निर्न यज्ञश्शूद्रस्य' इति स्मृतेश्च इति ॥

**(१७) 'श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणम्। अध्ययने जिह्वाच्छेदः। अर्थावधारणे हृदयविदारणम्' इति (गौ.ध. १२-४-७) प्रतिषेधात्।**

**'नाग्निर्न यज्ञश्शूद्रस्य तथैवाध्ययनं कुतः।**
**केवलैव तु शुश्रूषा त्रिवर्णानां विधीयते ॥' इति स्मृतेश्च।**

(१७) सूत्रार्थं वक्तुं श्रुतिमाहुः-**श्रवणेति** ॥ श्रुतौ शूद्रपदाश्रवणात् सूत्रोक्तस्मृतिमाहुः- **नाग्निरिति** ॥ **स्मृतेश्चेति** ॥ अस्य, प्रतिषेधादित्यस्य, च, 'शूद्रस्य नाधिकारः' इत्यध्याहृतव्यवहितपूर्वभाष्येण सम्बन्धः। एवञ्च- अनिषिद्धत्वे सति विशिष्टबुद्ध्यादिमत्वं वेदाधिकारे प्रयोजकमिति फलितम् ॥

(१७) **श्रवणे इति** ॥ (गौतमधर्म १२.४.७) शूद्रविषयत्वेन प्रवृत्तोऽयम्। **श्रवणे**= शूद्रेण वेदश्रवणे कृते

सति **त्रपुजतुभ्यां**= द्रुतवङ्गलाक्षाभ्यां, **श्रोत्रपरिपूरणम्**= श्रोत्रविवरे पूरणं राजा भटैः कारयेत् । **अध्ययने**= पठने, **अर्थावधारणे**= मननादिना वाक्यार्थनिश्चये इत्यर्थः । शिष्टं स्पष्टम् ।

**नाग्निरिति** ॥ अयमर्थः- **शूद्रस्य**= शूद्रेण अग्निर्नाधातव्यः, **यज्ञः**= पञ्चविधयज्ञोऽपि नानुष्ठेयः, तथैव वैदिकज्ञानमपि न सम्पादनीयम् । अध्ययनं कुतो भवेत् ? न कुतोऽपि भवेत् (कस्मादपि प्रमाणान्न भवेत्) इति हृदयम् । तर्हि तेन किमनुष्ठेयं परलोकाय इत्यत आह- **केवलैवेति** ॥ **तु**= किन्तु **त्रिवर्णानां**= ब्राह्मणक्षत्रियवैश्यानां, **शुश्रूषा, केवलैव**= भृतिशून्या परिचर्यैव शूद्रस्य **विधीयते**= परलोकप्राप्त्यै कर्तव्यत्वेन विधीयते इत्यर्थः। तथा च त्रिवर्णानां सेवैव परमलोकसाधनतया शूद्रेण कर्तव्येति भावः ॥३८॥

## (१८) विदुरादीनां तु उत्पन्नज्ञानत्वात्कश्चिद्विशेषः ॥ ३८ ॥

**॥ इति अपशूद्राधिकरणम् ॥**

**(१८) नन्वेवं शूद्रस्य विदुरादेः कथं वेदार्थावधारणं, कथं क्षत्रियस्यापि अनुपनीतस्य कर्णस्य समस्तवेदाध्ययनमित्यत आहुः- विदुरादीनामिति ॥ आदिना धर्मव्याधादिग्रहः ॥ उत्पन्नज्ञानत्वादिति ॥ जातापरोक्षज्ञानवत्वादित्यर्थः । विशेष इति ॥ इतरशूद्रापेक्षया वैलक्षण्यमित्यर्थः । तथा च- अयमपवादविषय इति भावः । अपवादश्च शास्त्रेण ज्ञातो महतामाचारः ।**

**न चैवं 'न च वाच्यमयमपवादविषय इति- अविहितोपनयनानामेव अपवादविषयत्वसम्भवात्' इति टीकाविरोध इति वाच्यम् । अस्याः टीकाया अवतारिकारूपत्वेन पूर्वपक्षतुल्यतया, सिद्धान्ते अपवादविषयत्वाङ्गीकारे बाधकाभावात् ।**

**न चैवमपि- 'विहितत्वाच्चाऽश्रमकर्माऽपि' (३.४.३२) इति सूत्रोक्तदिशा अपरोक्षज्ञानिनामपि निषेधसत्वेन (विदुरादीनां) विध्युल्लङ्घनं कथं युक्तमिति वाच्यम्- मनुष्याणामपरोक्षज्ञानिनां विधिनियतत्वेन तदुल्लङ्घने दोषसद्भावेऽपि देवानामनियतत्वेन विध्युल्लङ्घने बाधकाभावात् । अनियतत्वं च अनुष्ठेयानां मध्ये कतिपयानां कामतोऽनुष्ठातृत्वम् । प्रकृते च विदुरादीनां देवांशत्वान्न कश्चिद्दोषः ॥ ३८ ॥**

॥ इति अपशूद्राधिकरणम् ॥ ९ ॥

## १०. कम्पनाधिकरणम्

**(१) 'यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् ।**
**महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥'**
**इत्युद्यतवज्रज्ञानान्मोक्षः उक्तः इति, अतोऽब्रवीत्—**

**(१) अत्र नये - भगवति, आयुधविशेषे च भगवल्लिङ्गेन, लोकप्रसिद्ध्या च प्रसिद्धवज्रनाम्नो हरौ समन्वयः । १ सू.अ. ॥ विषयवाक्यमाहुः- यदिदमिति । वज्रज्ञानात् इति ॥ अनेन 'आनन्दमय' (१.१.६) नयेन अव्यवहितपूर्वाधिकरणेन वा सङ्गतिरुक्ता भवति ॥ तत्र आद्ये हि- 'नेतरोऽनुपपत्तेः' (१.१.१६) इति सूत्रे 'तमेवं विद्वानमृत इह भवति' इति ब्रह्मज्ञानान्मोक्ष उक्तः, पूर्वाधिकरणे तु- त्रैवर्णिकानां वेदोत्पन्नब्रह्मज्ञानादेव मोक्ष उक्तः, इत्युभयथाऽपि सङ्गतिस्सुवचा । एतेन- वज्रशब्दोऽत्र विषय इत्यपि सूचितम् । मोक्ष उक्त इति ॥ अनेन किं वज्रः विष्णुः ? उत इन्द्रायुधम् ? इति संशयः। इन्द्रायुधमेव वज्रशब्दवाच्यं, वज्रशब्दस्य तत्र रूढत्वादिति पूर्वपक्षश्च दर्शितः । उक्तसाधारण्यं सन्देह-बीजम् ।**

(१) **यदिदं किञ्चेति** ॥ (का.२.३.२) **यत्किञ्च**= यत्किञ्चित् दृष्टं श्रुतं **सर्वं जगत् प्राणे**= प्राणनाम्नि हरौ स्थितं प्राणात् **निःसृतं**= ततो जातं च, **तदिदं**= सर्वं जगत् **यस्मात्**= यत्प्रेरणया, **एजति**= चेष्टते, तत् **महत्**= महनीयं **भयं**= दुष्टानां भयङ्करं, **उद्यतं**= सर्वप्रयत्नवत् **वज्रं**= दोषवर्जितं, अप्रियवर्जितं वा, **एतत् ये विदुः**= अपरोक्षतो जानन्ति, **ते अमृताः**= मुक्ताः भवन्तीत्यर्थः । यद्वा- **प्राणः**= मुख्यप्राणः, **इदं**= दृष्टं **किञ्च**= अन्यत् श्रुतं सर्वं जगच्च, यस्मान्निःसृतं, यस्मात् एजति तदेतद् वज्रं इति ये विदुरित्यर्थः । शेषं पूर्ववत् । अथवा- यत्किञ्चित् सर्वं जगत् यस्मात् निस्सृतं, स मुख्यप्राणः यस्मात् **एजति**= चेष्टते= चेष्टयते, तदेतद् वज्रं ये विदुरित्यर्थः । शिष्टं समानम् । अयं चार्थः **सिद्धान्ते** । पूर्वपक्षी तु- इन्द्रायुधस्यैव वज्रशब्दवाच्यत्वं उद्यमनकर्तृत्वरूपं उद्यतत्वं च तस्यैव लिङ्गमिति मन्यते । उक्तार्थकमेव समग्रवाक्यं इन्द्रायुधपरतयैव नेयं तत्पक्षे ॥

**(प्राणादिसर्वचेष्टकत्वश्रवणात् वज्रशब्दवाच्यः विष्णुः)**

**(२) ॥ ॐ कम्पनात् ॐ ॥ ३९ ॥**

(२) **ॐ कम्पनादिति ॥** तत्तु इति वर्तते । विषयवाक्यबलात् वज्र इति लभ्यते । स चावर्त्य

षष्ठ्या विपरिणम्यते । **अयमर्थः**- वज्रः= 'महद्भयं वज्रमुद्यतं, इति श्रुतिस्थवज्रशब्दवाच्यः, तत्तु= विष्णुरेव । वज्रस्य **कम्पनात्**= 'जगत्सर्वम्' इति श्रुतौ प्राणादिसर्वजगच्चेष्टकत्वश्रवणात्, जगच्चेष्टक-प्राणचेष्टकत्वश्रवणाद्वा इति ॥

## (३) एजतीति कम्पनवचनादुद्यतवज्रो भगवानेव ।

(३) श्रुत्येकदेशाऽनुवादपूर्वं सूत्रार्थमाहुः- **एजतीति** ॥ **कम्पनवचनादिति** ॥ एजतीत्यन्तेन कम्पकत्वप्रतिपादनादित्यर्थः । **उद्यतवज्र इति** ॥ समन्वयार्थं वज्र इत्येव वक्तव्ये उद्यतग्रहणम्, उद्यतशब्दः उत्पूर्वकात् यमधातोः अन्तर्भावितण्यर्थात् कर्तरि क्तप्रत्ययान्तः, उद्यमितार्थकः, सर्व-चेष्टानुकूलप्रयत्नवदिति यावत्, इति बोधनद्वारा पूर्वपक्ष्यभिमतलिङ्गस्य अन्यथोपपत्तिप्रदर्शनार्थम् । उत्पूर्वकयतधातोर्वा रूपमेतत् (निरुक्त)प्रयत्नवदित्यर्थः ।

## (४) 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्'(तै.उ. २-७) इति हि श्रुतिः । 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः' इति (बृ.उ.६-४-१८) च ।

(४) कम्पकत्वादिति लिङ्गस्य निरवकाशत्वे श्रुतिमाहुः-**को हीति** ॥ **इति हि श्रुतिरिति** ॥ हिः ज्ञाप्यत्वरूपहेतौ । तस्य 'कम्पनवचनात्' इति कम्पने= सर्वजगच्चेष्टकत्वादिरूपेऽन्वयः इति श्रुतिज्ञान-जन्यविष्णुनिष्ठत्वप्रकारक-ज्ञानविषयीभूत-सर्वजगच्चेष्टकत्वप्रतिपादनादित्यर्थः । हीति निपातेन अभि-हितत्वात् हेतौ पञ्चमी न । सर्वप्रवर्तक-प्राणचेष्टकत्वं तदेकनिष्ठमित्यत्र श्रुतिमाहुः- **प्राणस्येति** ॥ **इति चेति** ॥ श्रुतिरिति वर्तते । हेत्वर्थादिकं पूर्ववत् । एतच्छ्रुत्युपन्यासः 'सर्वप्रेरकत्वस्य भगवन्निष्ठत्वे सिद्धे सर्वान्तःपाति-प्राणप्रेरकत्वं भगवत एवेत्यत्र किमु वक्तव्यम्' इति कैमुत्यन्यायप्रदर्शनार्थः ।

(४) **को हीति** ॥ (तै.उ.२-७) (व्याख्यातम् पृ. ९५) **प्राणस्य प्राणमिति** ॥ (बृ.६.४.१८) **प्राणस्य**= सर्वचेष्टकमुख्यप्राणस्य **प्राणं**= प्रकृतचेष्टकत्वरूपप्राणत्वप्रदम्, उत= तथा, **चक्षुषः चक्षुः**= दर्शन-कारणत्वरूपचक्षुष्ट्वप्रदम् । एवं 'मनसो मनः' इत्यादावपि तत्तत्सामर्थ्यप्रदमित्यर्थः । तादृशं विष्णुं ये विदुः, ते ब्रह्म **निचिक्युः**= प्रापुयुरित्यर्थः । निचिक्युरित्यत्र व्यत्ययेन लिट् ।

## (५) 'नभस्वतोऽपि सर्वाः स्युश्चेष्टाः भगवतो हरेः । किमुतान्यस्य जगतो यस्य चेष्टा नभस्वतः ॥' इति च स्कान्दे ॥

(५) कैमुत्यन्यायप्रदर्शकस्मृतिमुदाहरन्तो लिङ्गस्य निरवकाशत्वमेवाहुः-**नभस्वत इति** ॥ कैमुत्य-न्यायोहः स्पष्टः । **स्कान्द इति** ॥ स्कान्द इत्युक्तेश्च ज्ञापितात् कम्पनवचनादिति सम्बन्धः ।

(५) **नभस्वत इति** ॥ **अपि**= जगत्प्रेरकस्यापि, **नभस्वतः**= वायोः यदा सर्वाः चेष्टाः **भगवतः**= तत्सकाशात् **स्युः**= भवेयुः, तदा **किमुत अन्यस्य**= प्रेर्यस्य वायुभिन्नस्य **जगतश्चेष्टा** हरेर्भवन्तीति वक्तव्यम्, **यस्य**= जगतः चेष्टा **नभस्वतः**= सकाशाद् भवन्ति, तस्य वायुभिन्नस्येति पूर्वेण सम्बन्धः ॥

**(६) 'चक्रं चङ्क्रमणादेष वर्जनाद्वज्र उच्यते ।**
**खण्डनादूखड्ग एवैषः हेतिनामा स्वयं हरिः ॥' इति ब्रह्मवैवर्ते ॥ ३९ ॥**

**॥ इति कम्पनाधिकरणम् ॥**

(६) **वज्रशब्दोऽपि विष्णौ सावकाश इत्यत्र स्मृतिमाहुः- चक्रमिति ॥ ब्रह्मवैवर्त इति ॥ ब्रह्मवैवर्ते इत्युक्तमित्यर्थः । एतेन वज्रशब्दस्य विष्णौ रूढिरुक्ता ज्ञेया । ततश्च वज्रशब्दः विष्णौ सावकाशः, निरवकाशेन (सर्वचेष्टकत्व) लिङ्गेन बाध्यते इति भावः ॥ ३९ ॥**

॥ **इति कम्पनाधिकरणम्** ॥

(६) **चक्रमिति** ॥ **एषः**= विष्णुः **चङ्क्रमणात्**= संसारे जीवपरिभ्रामकत्वात् **चक्रं**= तच्छब्दवाच्यम् । **वर्जनात्**= दैत्यैर्दूरादेव वर्ज्यः, तैः न सन्मुखीक्रियते दुष्टैर्वर्ज्यते इति वा, सर्वदोषवर्जनाद्वा- **वज्रमुच्यते एषः**= विष्णुः **खण्डनात्**= दुष्टाङ्गच्छेदनात्, दमनाच्च- **खड्गः** एवं **हरिः स्वयं**= साक्षात् अन्य-सम्बन्धमन्तरेण **हेतिनामा**= आयुधवाचकसर्वशब्दानां मुख्यवाच्य इत्यर्थः । ३९ ॥

॥ इति **कम्पनाधिकरणम्** ॥ १० ॥

## ११. ज्योतिरधिकरणम्

**(१) हृदय आहितं ज्योतिः परमात्मेत्युक्तम् । तत्र**

(१) अत्र नये जीवे, परमात्मनि च हृदये आहितत्वेन रूपेण प्रसिद्धस्य ज्योतिर्नाम्नो हरौ समन्वयः (१ सू.अ.) **हृदय आहितमिति ॥** अनेन 'ज्योतिश्चरण' (१.१.१०) इति नयेन सङ्गतिरुक्ता भवति । ज्योतिश्शब्दोऽत्र विषय इति च सूचितम् । तज्ज्योतिश्शब्दवाच्यश्च किं विष्णु ? उत जीवः? इति संशयः । जीव एव ज्योतिःपदवाच्यः, 'समानस्सन्' इत्यादौ जीवलिङ्गश्रवणात्, इति पूर्वपक्षश्चेति दर्शयन्ति- **तत्रेति ॥** वाजसनेयके इत्यर्थः । सन्देहबीजं तु- जीवेशयोः ज्ञानरूपत्वं, हृदयाहितत्वं चेति ज्ञेयम् ।

**(२) 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ.उ.६–३–७)**

**(३) इत्यत्र 'उभौ लोकावनुसञ्चरति' (बृ.उ. ६-३-७) इति वचनाज्जीव इति प्रतीयत इत्यत उच्यते –**

(२) **योऽयमिति ॥** विषयवाक्यमिदम् । **इत्यत्रेति ॥** इत्यत्र वाक्ये इत्यर्थः । ज्योतिरिति शेषः । ज्योतिः जीव इति प्रतीयते इति सम्बन्धः ॥

(२-३) **योऽयं विज्ञानमय इति ॥** (बृ.४.३.७) तत्र जनको याज्ञवल्क्यं पप्रच्छ- 'किं ज्योतिरयं पुरुषः' (बृ.४.३.२) इति । जीवस्य ज्ञानसाधनं किमिति तदर्थः । उत्तरमाह- याज्ञवल्क्यः- **आदित्य इत्यादि ॥** 'आदित्ये अस्तङ्गते चन्द्रमाः, चन्द्रमसि अस्तङ्गते अग्निः, तस्मिन्नपि शान्ते वाक्, वाचि शान्तायां आत्मैवास्य ज्योतिः' (बृ.३.६) इति उत्तरं उक्तवान् । एते प्रश्नोत्तरे स्वप्नसुषुप्तिविषयके, ततः 'कतम आत्मा' इति जनकः पप्रच्छ, कीदृश आत्मा ? इति तदर्थः । याज्ञवल्क्य उत्तरमाह- **योऽयं विज्ञानमय इत्यादि ॥ यः विज्ञानमयः**= विज्ञानपूर्णः, **प्राणेषु**= इन्द्रियेषु अन्तः **हृद्यन्तश्च** नियन्तृत्वेन वर्तमानः- **ज्योतिः**= जीवस्य बुद्ध्यादिद्योतकः, **पुरुषः**= पूर्णषड्गुणोऽस्ति- **स आत्मेत्यर्थः ॥** तस्य महिमानमाह- **स इति ॥ सः**= आत्मा विष्णुः **समानः**= अविकारः सदा एकरूपस्सन् **उभौ लोकौ**= भूद्युलोकौ, जाग्रत्सुषुप्ती वा, प्रतिजीवमादाय तं अनुसञ्चरतीत्यर्थः ॥ महिमान्तरम्- **ध्यायतीति ॥** जीवं ध्यायतीव लेलायतीव जीवं ग्राहयति । इवशब्दो जीवस्य ध्यानादौ स्वातन्त्र्यं नेति बोधयति । **स**= हरिः **स्वप्नो भूत्वा**= स्वापकः, भूलोकप्रापको वा भूत्वा, **मृत्यो रूपाणि**= पापसाधनतया मृत्युरूपात्मकं

जाग्रदाख्यं भूलोकाख्यं वा, **अतिक्रामति**= अतिक्रामयतीत्यर्थः । तथा च जीवं दक्षिणाक्षिरूपजाग्रद्देशात् निष्क्राम्य सुप्तिदेशरूपहृदयस्थं करोति । भूलोकात् निष्क्राम्य द्युलोकस्थं करोति परमात्मेति भावः । अयं चार्थः सिद्धान्ते । पूर्वपक्षी तु- आत्मपदं जीवपरं, लोकद्वयसञ्चरणमपि कर्माधीनं विवक्षितं, तच्च लिङ्गकर्मवशात् जीवस्येति मन्यते ।

**उभौ लोकाविति** ।। तत्रैवं श्रूयते- 'ज्योतिः पुरुषः स समानस्सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि' इति । अर्थस्तूक्तः ।

**('योऽयम्' इत्यादिश्रुत्युक्तज्योतिश्शब्दवाच्यः न जीवः)**

**(४) ।। ॐ ज्योतिर्दर्शनात् ॐ ।। ४० ।।**

**'विष्णुरेव ज्योतिर्विष्णुरेव ब्रह्म विष्णुरेवाऽत्मा विष्णुरेव बलं विष्णुरेव यशो विष्णुरेवाऽनन्दः' इति दर्शनाच्चतुर्वेदशिखायाम्, ज्योतिर्विष्णुरेव ।**

**(५) 'प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जद् याति' (बृउ. ६-३-३५) इति वचनात् तस्यापि लोकसञ्चरणमस्त्येव ।।**

**।। ज्योतिरधिकरणम् ।।**

(४) **ॐ ज्योतिर्दर्शनादिति** ।। तत्तु इति वर्तते । **अयमर्थः- ज्योतिः**= 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः' इत्यत्र ज्योतिश्शब्दवाच्यं, तत्तु= विष्णुरेव, **दर्शनात्**= 'विष्णुरेव ज्योतिः' इति चतुर्वेदशिखायां हरेः ज्योतिश्शब्दवाच्यत्वदर्शनात् इति ।।

श्रुत्युपन्यासपूर्वं सूत्रार्थमाहुः- **विष्णुरिति** ।। विष्णोः लोकसञ्चरणे मानमाहुः- **प्राज्ञेनेति** ।। **तस्यापि**= विष्णोरपि ।। ४० ।।

।। इति ज्योतिरधिकरणम् ।। ११ ।।

(४) **विष्णुरेव ज्योतिरिति** ।। बलं= बलप्रदः, स्पष्टमन्यत् ।।

(५) **प्राज्ञेनात्मनेति** ।। (बृ.४.३.३५) तत्र 'तद्यथाऽनः सुसमाहितमुत्सर्जद्यायात् एवमेवाऽयं शारीर आत्मा **प्राज्ञेनात्मनाऽन्वारूढः उत्सर्जद् याति** यत्रैतदूर्ध्वोच्छ्वासी भवति' इति पठ्यते । मरणमपि भगवदधीनमिति मरणस्वरूपं वक्तीदं वाक्यम् । तत् मरणं यथेत्यादिना वक्ष्यमाणस्वरूपम् । **सुसमाहितं**=

पुमधिष्ठितं **अनः**= शकटं, ग्रामादिकं च **उत्सर्जत् यथा यायात्**= गच्छेत्, **एवमेव अयं शारीरः**= शरीराभिमानी **आत्मा**= जीवः, **यत्र**= काले **ऊर्ध्वोच्छ्वासी** भवति (मृतो भवति) **एतत्**= एतस्मिन् काले, **प्राज्ञेन**= सर्वज्ञेन, **आत्मना**= परमात्मना, **अन्वारूढः**= अधिष्ठितः तद्वाहनभूत इति यावत्। **उत्सर्जत्**= प्राक्तनदेहं उत्सृजन् देहान्तरं लोकान्तरं च, **याति**= गच्छतीत्यर्थः ॥ ४० ॥

**॥ इति ज्योतिरधिकरणम् ॥ ११ ॥**

## १२. आकाशाधिकरणम्

**(१) सर्वाधारत्वं विष्णोरुक्तम् । तच्च 'आकाशो वै नाम नामरूपयोर्निर्वहिता' (छा.उ .८-१४-१) इत्यत्राऽऽकाशस्य प्रतीयते । वै नामेति प्रसिद्धोपदेशात् प्रसिद्धाकाशश्चाङ्गीकर्तव्य इत्यत उच्यते—**

(१) अत्र नये प्रयोगवशेन भगवति अव्याकृताऽऽकाशे च प्रसिद्धाऽऽकाशनाम्नो हरौ समन्वयः । (सू.१ अ.) । श्रुत्यधिकरणसङ्गती दर्शयन्ति- **सर्वाधारेति** ।। अनेन 'द्युभ्वादि' (१.३.१)नयेन सङ्गतिरुक्ता । **तच्च** = सर्वाधारत्वं च । विषयवाक्यमाहुः- **आकाशो वा इति** ।। अनेन आकाश-शब्दवाच्यो विषय इति सूचितम् । **प्रतीयत इति** ।। अनेन स आकाशः किं भगवान् ? उत प्रसिद्धा-काशः? इति संशयः सूचितः । आकाशशब्दस्य भगवति, अन्यत्र च प्रयोगः सन्देहबीजम् । **प्रसिद्धोप-देशात्**= प्रसिद्धिद्योतक-वै-नामेति श्रवणात् । **प्रसिद्धाकाशश्चेति** ।। प्रसिद्धः= साक्षिसिद्धः, आकाशः= अव्याकृताकाश एव, लोकप्रसिद्धाऽऽकाश एव वा । **अङ्गीकर्तव्यः**= अत्र वाच्यत्वेनाङ्गी-कर्तव्यः । अनेन तदाकाशशब्दवाच्यः प्रसिद्धाकाश एव, तस्य शब्दस्य तत्रैव रूढत्वादिति पूर्वपक्षो दर्शित इति बोध्यम् ।।

(१) **आकाशो वै इति** ।। (छा. ८.१४.१) **आकाशः**= परमात्मा **नामरूपयोः**= शब्दाऽऽत्म-कार्थाऽऽत्मकप्रपञ्चयोः, **निर्वहिता**= आश्रयः कर्ता चेत्यर्थः- **सिद्धान्ते** । पूर्वपक्षी तु- एतद्वाक्यं प्रसिद्धाकाशपरं मन्यते । तत्पक्षे- शब्दाद्याश्रयत्वमाकाशस्य स्पष्टमेव ।

**('आकाशो वै' इति श्रुत्युक्तः नाव्याकृताकाशः, अपि तु विष्णुः)**

**(२) ।। ॐ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॐ ।। ४१ ।।**

(२) **ॐ आकाश इति** ।। तत्तु इति वर्तते । आकाश इत्यस्य आवृत्तिविपरिणामौ । अन्योऽर्थोऽर्थान्तरं, तस्य भावः - अर्थान्तरत्वं, विषयवाक्यबलात् नामरूपयोः प्रतियोगित्वं लभ्यते । नामरूपरहित-विलक्षणवस्तुत्वमिति यावत् । आदिना ब्रह्मत्वं गृह्यते । तेन रूपेण व्यपदेशात् । **अयमर्थः- आकाशः**= 'आकाशो वा' इति श्रुतिस्थाऽऽकाशशब्दवाच्यः, तत्तु विष्णुरेव, आकाशस्य **अर्थान्तरत्वव्यपदेशात्**= अर्थान्तरत्वेन ब्रह्मत्वेन च निर्देशात् इति ।।

**(३) 'ते यदन्तरा तद्ब्रह्म' (छा.उ. ८-१४-१) इत्यर्थान्तरत्वादिव्यपदेशादाकाशो हरिरेव ।**

(३) श्रुत्युपन्यासपूर्वं सूत्रं व्याचक्षते- **ते यदन्तरेति ॥ इतीति ॥** इत्यनया श्रुत्येत्यर्थः ।

(३) **ते यदन्तरेति ॥** (छा.८.१४.१) **ते**= निर्वाह्यतया प्रकृते नामरूपे **अन्तरा**- भेदेन **यत्**= नामरूपप्रपञ्चाद् भिन्नमिति यावत् । यद्वा- ते इति पदेन रूपात्मकप्रपञ्चैकदेशशुक्लादिरूपं नामात्मकं च गृह्यते, ते नामरूपे **अन्तरा**= विना नामरूपरहितमिति यावत् । यद् वर्तते तत् **ब्रह्मेत्यर्थः । वै नाम** प्रसिद्धम् । नामराहित्यं च- साकल्येन नामावाच्यत्वरूपं, रूपराहित्यं च- यावदर्थात्मकप्रपञ्चराहित्यमिति वक्तुं न शक्यते । प्रपञ्चस्य स्वस्मिन् सत्वात्, किन्तु प्राकृतशुक्लादिरूपस्य स्वरूपसम्बन्धेन भ्रान्त्या प्राप्तस्य निषेध इत्येवोच्यते इति बोध्यम् । प्रपञ्चभेदो वा रूपराहित्यमिति ज्ञेयम् ॥

**(४) 'अवर्णं' (अवर्णमचक्षुश्श्रोत्रम्' इत्याद्याथर्वणी श्रुतिः), 'यतो वाचो निवर्तन्ते' (तै.उ. २-४) इत्यादिश्रुतेस्तस्यैव हि तल्लक्षणम् । 'अनामा सोऽप्रसिद्धत्वादरूपो भूतवर्जनात्' इति (हि) ब्राह्मे ॥**

**॥ इति आकाशाधिकरणम् ॥**

(४) विष्णोरनामरूपत्वे श्रुतीराहुः- **अवर्णमित्यादि ॥ तस्यैव**= विष्णोरेव । **तत्**= **लौकिकनामरूपराहित्यम् । लक्षणमिति ॥** असाधारणधर्म इत्यर्थः । ज्ञायते इति शेषः । उक्तार्थे **स्मृतिमाहुः- अनामेति ॥ ब्राह्म इति ॥** ब्राह्मे इत्युक्तेरित्यर्थः । अस्य 'लक्षणं ज्ञायते' इत्यत्रान्वयः ॥ ४१ ॥

॥ इति आकाशाधिकरणम् ॥ १२ ॥

(४) **अवर्णमिति ॥** (आ. १-६) प्राकृतशुक्लादिरहितं तद्भिन्नं चेत्यर्थः । **यतो वाच इति ॥** (व्याख्यातम् पु. ६६) **अनामेति ॥ सः**= असौ हरिः **अप्रसिद्धत्वात्**= साकल्येन इत्यर्थः । अत्रत्य-**आदिना** 'अशब्दम्' इत्यादि (का.१.३.१५) वाक्यं ग्राह्यम् (व्याख्यातम् पृ. ६६)॥ ४१ ॥

॥ इति आकाशाधिकरणम् ॥ १२ ॥

## १३. सुषुप्त्यधिकरणम्

**(१) असङ्गत्वं परमात्मन उक्तम् । तच्च—**
**'स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः' (बृ.उ. ६-३-१५) इति स्वप्रादिद्रष्टुः प्रतीयते । स च जीवः, प्रसिद्धेरित्यत आह—**

**(१) अत्र नये असङ्गत्वलिङ्गेन, लोकप्रसिद्ध्या च भगवति जीवे च साधारणस्य स्वप्रादिद्रष्टृत्वलिङ्गस्य हरौ समन्वयः ॥ सू.१ अ. ॥**

**श्रुत्यधिकरणसङ्गती दर्शयन्ति- असङ्गत्वमिति ॥ उक्तमिति ॥ 'अक्षर'नये (१.३.४) 'अन्याभाव' (१.३.१२) इति सूत्रोदाहृत'अस्थूलम्' इति श्रुतावुक्तमित्यर्थः । एतेन तेन नयेन सङ्गतिर्बोध्या । तच्चेति ॥ असङ्गत्वमित्यर्थः । विषयवाक्यमाहुः-स यदिति ॥ स्वप्रादिद्रष्टुरिति ॥ अनेन स्वप्रादिद्रष्टृत्वं विषयः, तच्च किं विष्णोः ? उत जीवस्य ? इति संशयः । असङ्गत्वलिङ्गश्रवणं, लोकप्रसिद्धिश्च सन्देहबीजमिति च सूचितम् । पूर्वपक्षमाहुः- स चेति ॥ स्वप्रादिद्रष्टेत्यर्थः । तथा च परमात्मासाधारणासङ्गत्वस्य स्वप्रादिद्रष्टरि जीवे श्रवणात् ईशजीवयोरैक्यमिति पूर्वपक्ष्याशयः ।**

(१) **स यत्तत्रेति** ॥ (बृ.६.३.१५) 'स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्रायैव' इति पूर्ववाक्यम् । सम्यक् प्रसीदत्यस्मिन्निति- **सम्प्रसादः**= सुप्तिः, **सः**= परमात्मा, **सम्प्रसादे**= सुप्तौ, **रत्वा**= रमणं कृत्वा, कारयित्वा **चरित्वा**= सञ्चरित्वा, जीवगतं **पुण्यं च पापं च दृष्ट्वैव** न त्वनुभूय, **प्रतिन्यायं**= अवस्थान्तरं प्रवर्तनीयमिति न्यायमनुसृत्य, तत्तत्कर्माऽनुसृत्य वा, **प्रतियोनि**= प्रतिदेहं सर्वदेहेषु तत्तन्मार्गमनुसृत्य वा, **पुनः स्वप्रायैव**= जीवस्य स्वप्रप्राप्तये एव, **आद्रवति**= कण्ठदेशमागच्छति । **सः**= परमात्मा **तत्र**= स्वप्रावस्थायां **यत्किञ्चिद्** अनिष्टं **पश्यति** । **तेन**= तत्कृतपापफलेन दुःखेन **अनन्वागतः**= असंस्पृष्टो भवति । तत्र हेतुः- **असङ्ग इति** ॥ **हि**= यतः **पुरुषः**= भगवान्, **असङ्गः**= पापफलसम्बन्धशून्यः प्रमितः, तस्मादनन्वागत इति पूर्वेणान्वय इत्यर्थः । अयं चार्थः **सिद्धान्ते** । पूर्वपक्षी तु श्रौत 'स' इत्यनेन जीवं परामृश्य सर्वं वाक्यं जीवपरतया नयति । श्रुतौ प्रतियोनीति अव्ययीभावः ॥

**(सुषुप्त्युत्क्रान्तिप्रकरणयोः जीवेशभेद एवोक्तः)**

**(२) ॥ ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ ॥ ४२ ॥**

(२) **ॐ सुषुप्तीति ॥** तत्तु, व्यपदेशात्, इति वर्तते । ईशजीवयोरिति शेषः । विषयवाक्यबलात् स्वप्नादिद्रष्टेति लभ्यते । व्यपदेशादिति कर्मघञन्तमत्र, विपरिणम्यते च तृतीयया । **अयमर्थः**- **सुषुप्त्युत्क्रान्त्योः**= 'प्राज्ञेनात्मना सम्परिष्वक्तः' इति सुषुप्तिप्रकरणे, 'प्राज्ञेनात्मनाऽन्वारूढः' इति उत्क्रान्तिप्रकरणे च, **व्यपदेशेन**= व्यपदिश्यमानेन ईशजीवयोः **भेदेन**= भेदप्रयोज्यजीवावृत्तित्व-विशिष्टासङ्गत्वरूपधर्मस्य 'असङ्गो ह्ययं पुरुषः' इत्यत्र श्रवणेन, स्वप्नादिद्रष्टा तत्तु= विष्णुरेव इति ॥

सुषुप्तिप्रकरणस्य मोक्षपरत्वेनाप्यङ्गीकारात् मोक्षेऽपि भेद एवेति सिद्धेः, अयं भेदो व्यावहारिक इति परास्तम् ।

ननु उक्तभेदव्यपदेशेन असङ्गत्वमेव साध्यताम् । किमसङ्गत्वं हेतावन्तर्भाव्य स्वप्नादिद्रष्टृत्व-साधनेनेति चेत् -न, स्वप्नादिद्रष्टृत्वासाधने, तस्य जीववृत्तित्वेन तद्बलादसङ्गत्वमपि तस्यैव स्यादिति शङ्काया अवारणात् ।

नन्वेवमपि उत्क्रान्तिप्रकरणस्य भेदव्यपदेशस्य प्रकृते क उपयोग इति चेत्- उच्यते- इह प्रघट्टके अनेकप्रकरणे भेदो व्यपदिश्यत इति सूचनार्थत्वादिति ॥

(३) **'प्राज्ञेनाऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नाऽन्तरम्' (बृ.उ. ६-३-२१) 'प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जयाति' (बृ.उ. ६-३-३६) इति भेदव्यपदेशान्न जीवः । पर एवासङ्गः । स्वप्नादिद्रष्टृत्वं च सर्वज्ञत्वात्तस्यैव युज्यते ॥ ४२ ॥**

**॥ इति सुषुप्त्यधिकरणम् ॥**

(३) श्रुत्युपन्यासपूर्वं सूत्रस्य फलितार्थमाहुः-**प्राज्ञेनेति ॥ न जीव इति ॥** जीवो नासङ्ग इत्यर्थः । **पर एवेति ॥** किन्त्वित्यादिः । **परः**= परमात्मा । यत इति शेषः, स्वप्नादिद्रष्टृत्वं तस्यैवेत्यप-कृष्यते । यतोऽसङ्गः, अतः स्वप्नादिद्रष्टृत्वं, तस्यैव= परमात्मन एवेति, सम्बन्धः ।

ननु अशरीरस्येश्वरस्य कथं स्वप्नादिदर्शनमित्यत आहुः- **स्वप्नादीति ॥** आदिना जीवीया-वस्थादेर्ग्रहणम् । **सर्वज्ञत्वादिति ॥** अनेन अशरीरत्वेऽपि परमात्मनस्तद्दर्शनं युक्तमिति सूचितम् ॥ ४२ ॥

॥ इति सुषुप्त्यधिकरणम् ॥ १३ ॥

(३) **प्राज्ञेनाऽत्मनेति** ॥ (बृह.४.३.२१) **प्राज्ञेन**= सर्वज्ञेन, **आत्मना**= विष्णुना, **सम्परिष्वक्तः**= समाश्लिष्टः, सुप्तः मुक्तश्च, देहाद् **बाह्यं आन्तरं** च **किञ्चन** विषयादिकं न **वेद** इत्यर्थः ॥ ४२ ॥

॥ इति सुषुप्त्यधिकरणम् ॥ १३ ॥

## १४. ब्राह्मणाधिकरणम्

**(१) 'एष नित्यो महिमा ब्राह्मणस्य' (बृ.उ. ६-४-२२) इति ब्राह्मणस्यापि नित्यमहिमा प्रतीयते । स च ब्राह्मणः 'स वा एष महानज आत्मा' (बृ.उ. ६-४-२४) इत्यजशब्दाद्विरिञ्च इति प्राप्तम् ।**

अत्र नये विष्णौ विरिञ्चे च नित्यमहिमत्वलिङ्गेन, अज इति श्रुत्या च, साधारणस्य ब्राह्मणनाम्नो हरौ समन्वयः ॥ १ सू.अ. ॥

(१) सङ्गत्यादिसूचनाय विषयवाक्यमाहुः- **एष नित्य इति ॥ नित्यमहिमा प्रतीयत इति ॥** अनेन विष्णोः 'जन्मादि' नये सृष्ट्यादिकथनद्वारा नित्यमहिमत्वं यदुक्तं, तदाक्षेपेण तेन नयेन, श्रुत्या च, सङ्गती दर्शिते । 'विष्णुर्वा नित्यमहिमा ? अन्यो वा ? इति संशयोऽपि सूचितः । नित्यमहिमत्व-लिङ्गश्रवणं, अजशब्दश्रवणं च, सन्देहबीजम् ॥ पूर्वपक्षमाहुः- **स चेति ॥** श्रुतिस्थ इत्यर्थः । **ब्राह्मण इति ॥** तच्छब्दवाच्य इत्यर्थः । अनेन ब्राह्मणशब्दवाच्योऽत्र विषय इति सूचितम् । पूर्वपक्षे श्रुतिमाहुः- **स वा इति ॥ अजशब्दादिति ॥** अजशब्दश्च 'एष नित्यो महिमा' इति वाक्यसन्निधौ खण्डचतुष्टये वर्तते । तथा च श्रुतेरभ्यासो बोध्यः ॥

(१) **एष नित्य इति** ॥ (बृ.६.४.२२) अस्य शेषवाक्यम्- 'न कर्मणा वर्धते नो कनीयान्' इति । यतोऽयं भगवान् **कर्मणा**= शुभकर्मजन्यसुखेन **न वर्धते । कर्मणा**= पापकर्मजनितदुःखेन **नो कनीयान्**= न ह्रसते, अतः **ब्राह्मणस्य**= वेदप्रतिपाद्यस्य विष्णोः, **एषः**= पूर्वोक्तो महिमा **नित्य** इत्यर्थः । **स वा एष इति ॥** (बृ.६.४.२४) **स एषः**= परमात्मा **महान्**= अपरिमितः, महनीयो वा, **अजः**= जन्मादिरहित इत्यर्थः । अयं च **सिद्धान्ते** । पूर्वपक्षी तु- ब्राह्मणाजशब्दौ विरिञ्चिपरौ मन्यते ॥

**(२) देवानां च विद्याकर्मणोः पदप्राप्तिः सूचिता तदुपर्यपीति । अतो ब्रवीति–**

(२) ननु विरिञ्चस्य देवत्वात् देवानां च विद्याकर्मभ्यां देवपदप्राप्तेः - 'देवता' (१.३.७) नये उक्तत्वात् अनित्यपदकविरिञ्चस्य नित्यमहिमत्वं न सम्भवतीत्यत आहुः- **देवानां चेति ॥** देवानामेवेत्यर्थः । **विद्याकर्मणोरिति ॥** सकाशादिति शेषः । विरिञ्चस्तु न देवः । किन्तु ईश्वरस्वरूपान्तर्भूत इति तस्य नित्यमहिमत्वं युक्तमिति पूर्वपक्षिणो भावः । **तदुपर्यपीति ॥** 'तदुपर्यपि' (१.३.२६) इति सूत्रे इत्यर्थः ।

(३) **प्राज्ञेनाऽत्मनेति** ॥ (बृह.४.३.२१) **प्राज्ञेन**= सर्वज्ञेन, **आत्मना**= विष्णुना, **सम्परिष्वक्तः**= समाश्लिष्टः, सुप्तः मुक्तश्च, देहाद् **बाह्यं आन्तरं च किञ्चन** विषयादिकं न वेद इत्यर्थः ॥ ४२ ॥

॥ इति सुषुप्त्यधिकरणम् ॥ १३ ॥

## १४. ब्राह्मणाधिकरणम्

**(१) 'एष नित्यो महिमा ब्राह्मणस्य' (बृ.उ. ६-४-२२) इति ब्राह्मणस्यापि नित्यमहिमा प्रतीयते। स च ब्राह्मणः 'स वा एष महानज आत्मा' (बृ.उ. ६-४-२४) इत्यजशब्दाद्विरिञ्चि इति प्राप्तम्।**

**अत्र नये विष्णौ विरिञ्चे च नित्यमहिमत्वलिङ्गेन, अज इति श्रुत्या च, साधारणस्य ब्राह्मणनाम्नो हरौ समन्वयः ॥ १ सू.अ. ॥**

(१) सङ्गत्यादिसूचनाय विषयवाक्यमाहुः- **एष नित्य इति ॥ नित्यमहिमा प्रतीयत इति ॥** अनेन विष्णोः 'जन्मादि' नये सृष्ट्यादिकथनद्वारा नित्यमहिमत्वं यदुक्तं, तदाक्षेपेण तेन नयेन, श्रुत्या च, सङ्गती दर्शिते। विष्णुर्वा नित्यमहिमा ? अन्यो वा ? इति संशयोऽपि सूचितः। नित्यमहिमत्व-लिङ्गश्रवणं, अजशब्दश्रवणं च, सन्देहबीजम् ॥ पूर्वपक्षमाहुः- **स चेति ॥** श्रुतिस्थ इत्यर्थः। **ब्राह्मण इति ॥** तच्छब्दवाच्य इत्यर्थः। अनेन ब्राह्मणशब्दवाच्योऽत्र विषय इति सूचितम्। पूर्वपक्षे श्रुतिमाहुः- **स वा इति ॥ अजशब्दादिति ॥** अजशब्दश्च 'एष नित्यो महिमा' इति वाक्यसन्निधौ खण्डचतुष्टये वर्तते। तथा च श्रुतेरभ्यासो बोध्यः ॥

(१) **एष नित्य इति ॥** (बृ.६.४.२२) अस्य शेषवाक्यम्- 'न कर्मणा वर्धते नो कनीयान्' इति। यतोऽयं भगवान् **कर्मणा**= शुभकर्मजन्यसुखेन **न वर्धते। कर्मणा**= पापकर्मजनितदुःखेन **नो कनीयान्**= न ह्रसते, अतः **ब्राह्मणस्य**= वेदप्रतिपाद्यस्य विष्णोः, **एषः**= पूर्वोक्तो महिमा **नित्य** इत्यर्थः। **स वा एष इति ॥** (बृ.६.४.२४) **स एषः**= परमात्मा **महान्**= अपरिमितः, महनीयो वा, **अजः**= जन्मादिरहित इत्यर्थः। अयं च **सिद्धान्ते**। पूर्वपक्षी तु- ब्राह्मणाजशब्दौ विरिञ्चिपरौ मन्यते ॥

**(२) देवानां च विद्याकर्मणोः पदप्राप्तिः सूचिता तदुपर्यपीति। अतो ब्रवीति—**

(२) ननु विरिञ्चस्य देवत्वात् देवानां च विद्याकर्मभ्यां देवपदप्राप्तेः - 'देवता' (१.३.७) नये उक्तत्वात् अनित्यपदकविरिञ्चस्य नित्यमहिमत्वं न सम्भवतीत्यत आहुः- **देवानां चेति ॥** देवानामेवेत्यर्थः। **विद्याकर्मणोरिति ॥** सकाशादिति शेषः। विरिञ्चस्तु न देवः। किन्तु ईश्वरस्वरूपान्तर्भूत इति तस्य नित्यमहिमत्वं युक्तमिति पूर्वपक्षिणो भावः। **तदुपर्यपीति ॥** 'तदुपर्यपि' (१.३.२६) इति सूत्रे इत्यर्थः।

**(सर्वाधिपत्यादिवाचिश्रुतिभ्यः 'एष नित्यः' इति श्रुत्युक्तः विष्णुः)**

## (३) ॥ ॐ पत्यादिशब्देभ्यः ॐ ॥ ४३ ॥

(३) **ॐ पत्यादिशब्देभ्य इति ॥** पतिः आदिः येषां ते पत्यादयः, पत्युः आदी= पतिशब्दात् पूर्ववर्तिनौ= पत्यादी, तयोरेकशेषः, ततः कर्मधारयः । तेभ्यः= पत्यादिशब्देभ्यः । पूर्वपक्षोत्तरपक्षबलेन विष्णुविरिञ्चयोरिति, विषयवाक्यबलेन ब्राह्मण इति च लभ्यते । भेदेन, व्यपदेशात् इति वर्तते । **अयमर्थः-** ब्राह्मणः= 'एष महिमा ब्राह्मणस्य' इति श्रुतिस्थब्राह्मणशब्दवाच्यः, तत्तु= विष्णुरेव, **पत्यादिशब्देभ्यः=** सर्वाधिपत्यादिबोधक-'सर्वस्य वशी, सर्वस्येशानः, सर्वस्याधिपतिः, एष सर्वेश्वरः, एष भूताधिपतिः, एष भूतपालः' इत्यादिशब्देभ्यः विष्णुविरिञ्चयोः भेदेन व्यपदेशात्- 'एतावतः कालस्य परस्तादसृजत' इति वाक्ये भेदेनोक्तत्वादिति ॥ एतेन विष्णुविरिञ्चयोरभेदेन नित्यमहिमत्वं विरिञ्चनिष्ठमिति परास्तम् ।

ननु श्रुतौ 'सर्वस्य वशी' इत्यस्यैव आदित्वात् 'वश्यादिभ्यः' इति वक्तव्यमिति चेत्, उच्यते- सर्वस्य वशे वर्तते इत्यर्थस्यापि प्रतीत्या, तस्य प्रकृतार्थसाधने दार्ढ्याभावेन, पतिशब्द-स्यार्थान्तराभावेन च ग्रहणम्, पतिशब्दसमभिव्याहारात् वशीत्यस्यार्थान्तरकल्पनं, श्रुतौ पतिशब्द-स्याभ्यासाच्च सूत्रे ग्रहणम् इति ॥

## (४) 'सर्वस्याधिपतिः सर्वस्येशानः, स वा एष नेति नेति' (बृ.उ. ६-४-२१) इत्यादिशब्देभ्यो नित्यमहिमा विष्णुरेव ।

(४) श्रुत्युदाहरणपूर्वकं सूत्रार्थमाहुः- **सर्वस्याधिपतिरित्यादिना ॥ इत्यादिशब्देभ्य इति ॥** इत्यादिश्रुतिस्थपत्यादिशब्देभ्य इत्यर्थः । **नित्यमहिमेति ॥** इदं फलकथनम् । शब्दमर्यादया तु ब्राह्मणशब्दसमन्वय एवेति बोध्यम् ।

(४) **सर्वस्येति** ॥ (बृ.६.४.२२) **सर्वस्य**= ब्रह्मरुद्रादेः तदपेक्षया **अधि**= गुणैः अधिकः, सर्वस्य **पतिः** पालकश्च, **सर्वस्य ईशानः**= **सर्वेशानां**= ब्रह्मादीनां **अनः**= चेष्टकः= प्रेरक इत्यर्थः । **स वा एष इति** ॥ (बृ.६.४.२१) 'स वा एष नेति नेति- आत्माऽगृह्यो न गृह्यते अशीर्यो न हि शीर्यते असङ्गो न हि सज्जते असितो न व्यथते, एतमु ह वै ते न तरत' इति श्रूयते । अयमर्थः- **सः**= प्राणशब्दोक्तः **एषः**= अपानशब्दोक्तः **आत्मा**= परमात्मा, **इति न**= दृष्टवत् न, **इति न**= श्रुतवत् न, किन्तु - दृष्टश्रुतविलक्षणः, **वै** प्रसिद्धम् । **हि**= यतः **न गृह्यते** इति प्रमितम्, अतस्साकल्येन न ग्राह्यः, अतो नेति

नेतीति पूर्वेण सम्बन्धः । हि यतः **न शीर्यते, अतोऽशीर्यः**, यतो **न सज्जते, अतोऽसङ्गः, असितः**= न कदाचित् बद्धः । **न व्यथते**= न कदाचित् दुःखी भवति **न रिष्यः**= कालत्रयेऽपि नाशरहितः, अत्र हेतुतया 'न हि रिष्यते' इति वाक्यं योजनीयं प्रकरणाऽनुगुण्यात्, एतं मुक्तं अतः भगवत्प्रेरणया **ते**= पापमकरवं कल्याणमकरवमिति भावने **नैव तरतः**= नैव प्राप्नुतः इति ॥

**(५) 'उतामृतत्वस्येशानो यदन्नेनातिरोहति' (तै.आ. ३-१२) 'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि' (ऋ.सं. १-१६४-३६) 'स योऽतोऽश्रुतः' (ऐ.आ.३-२-४) इत्यादिश्रुतिभ्यस्तस्यैव हि ते शब्दाः ॥**

**॥ इति ब्राह्मणाधिकरणम् ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य तृतीयः पादः ॥**

(५) सर्वाधिपत्यस्य विष्णुधर्मत्वे मानमाहुः- **उतामृतत्वस्येति ॥** ईशानपदोक्तसर्वप्रेरकत्वे मानमाहुः- **सप्ताऽर्धेति ॥ स योऽत इति ॥** इदं 'नेति नेति' इत्युक्तश्रुतदृष्टवैलक्षण्ये मानम् । **तस्यैव हीति ॥** वाचकत्वं षष्ठ्यर्थः । तद्वाचकत्वेन प्रसिद्धा इत्यर्थः । ते शब्दाः= पत्यादिशब्दा इत्यर्थः ॥ ४३ ॥

॥ इति **ब्राह्मणाधिकरणम्** ॥ १४ ॥

॥ इति **प्रथमाध्यायस्य** तृतीयः पादः ॥

(५) **उतामृतत्वस्येति** ॥ (तै.आ.३.१२.३३) 'पुरुष एवेदं सर्वम् । यद्भूतं यच्च भव्यम्' इति पूर्ववाक्यम् । यत् **भूतं**= अतीतं, **भव्यं**= भविष्यत्, वर्तमानं च तत्सर्वं **पुरुष एव**= परमपुरुषाधीनमेव, यतः, **अमृतत्वस्य उत**= मुक्तवर्गस्यापि **ईशानः**= अधिपतिः, **यत्**= यस्मात् **अन्नेन**= अन्नं= मर्त्यभूत-संसारिसमूहं, **अतिरोहति**=अतिशेते, अत इत्यर्थः । **सप्तार्धेति** ॥ (व्या. पृ. २१६) **स योऽत इति** ॥ (ऐ.आ.३.२.४) व्याख्यातम् (पृ. २४५) ॥ ४३ ॥

॥ इति **ब्राह्मणाधिकरणम्** ॥ १४ ॥

॥ इति **ब्रह्मसूत्रभाष्यव्याख्यायां प्रथमाध्यायस्य** तृतीयः पादः ॥

# अथ प्रथमाध्यायस्य चतुर्थः पादः

## १. आनुमानिकाधिकरणम्

**(प्रथमाध्यायचतुर्थपादेऽन्यत्रैवप्रसिद्धशब्दसमन्वयः)**

**(१) श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानामपि शब्दानां सामस्त्येन विशेषहेतुभिः विष्णावेव प्रवृत्तिं दर्शयत्यस्मिन् पादे ।**

(१) एतत्पादप्रतिपाद्यं दर्शयन्ति- **श्रुतिलिङ्गादिभिरिति** ॥ अन्यत्रैवेत्येवकारोऽत्रापि सम्बध्यते- श्रुत्यादिभिरेवेति । एवः प्रसिद्धौ । प्रसिद्धश्रुत्यादिभिरित्यर्थः । प्रसिद्धत्वं च- लोकप्रसिद्ध्यतिरिक्त-बलवत्वम् । अनेन 'सर्वत्र प्रसिद्ध' नये(१.२.१) आदित्येऽनुक्तिरूपलिङ्गसहितब्रह्मादित्यश्रुतिभिः, आदित्ये प्रसिद्धस्य सर्वगतत्वलिङ्गस्य समन्वयेऽपि, पादसाङ्कर्यं नास्ति । लोकतः प्रसिद्धत्वेऽपि तेषां बलवत्वाऽभावात् इति बोध्यम् । बलवत्वं च- विष्ण्वपेक्षया अर्थान्तरपरत्वकल्पनाऽभाव-प्रयुक्तानुपपद्यमानत्वम् ।

किञ्च अनेन अन्यत्रैव प्रसिद्धनामलिङ्गात्मकानां, उभयत्र प्रसिद्धनामलिङ्गात्मकानां च, शब्दानां पादत्रये समन्वितत्वेन, तदतिरिक्तशब्दाभावादयं पादो व्यर्थ इति शङ्काऽपि परास्ता । पादत्रये बलवच्छ्रुतिलिङ्गादिभिरन्यपरत्वेन निर्णीतशब्दानां समन्वयानुक्तेः ।

नन्वेवमपि एतत्पादो व्यर्थ एव । 'जन्मादि' सूत्रेणोक्ते जगत्कारणत्वे शास्त्रं प्रमाणीकृतम् । तथा च कारणवाक्यमेव समन्वेतव्यम् । तस्य च एतावता प्रबन्धेन कृतत्वात् इति चेत्- न, ब्रह्मशब्देन प्रसक्तसर्वगुणसिद्ध्यर्थं 'तत्तु समन्वयात्' (१.१.४) इति सूत्रेण सर्वशास्त्रप्रतिपाद्यत्वस्यापि प्रतिज्ञात-त्वेन तत्समन्वयस्यावश्यकत्वात् ॥ **सामस्त्येनेति** ॥ समस्ताः- स्वरवर्णपदात्मकाः शब्दाः, तेषां भावः= सामस्त्यं= स्वरत्वादिधर्मः, तेन, विशिष्टानामिति शेषः । **विशेषहेतुभिरिति** ॥ पूर्वपक्षीयश्रुतिलिङ्गाद्यपेक्षया प्रबलतमैः विष्णुपरत्वं विनाऽनुपपद्यमानैर्हेतुभिः, तदधीनत्व-ज्ञेयत्वावचनादिभिरित्यर्थः । अपिशब्दानामित्यावर्तते । **अयमर्थः**- बलवच्छ्रुतिलिङ्गादिभिः अन्यत्रैव प्रसिद्धानामपि शब्दानां सामस्त्येन= स्वरत्व-वर्णत्व-पदत्व-धर्मैर्विशिष्टानामपि शब्दानां **विशेष-हेतुभिर्विष्णावेव प्रवृत्तिं (विष्णुविषयकत्वमेव) दर्शयत्यस्मिन् पादे इति** ॥ सूत्रकार इति शेषः । अत्राऽपादसमाप्ति नयेषु 'समन्वय' (१.१.४) नयेन सङ्गतिरिति ज्ञेयम् ।

अत्र नये (श्रुते) लिङ्गादिभिरन्यत्रैव प्रसिद्धाऽव्यक्तादिशब्दानां हरौ समन्वयः । अव्यक्तादिशब्दवाच्यो विषयः, विष्णुः? अन्यो वा ? इति सन्देहः । समन्वयसूत्रं, अन्यत्रैव प्रसिद्धिश्च तद्बीजम् । सू. ९.अ. ॥

(अव्यक्त-महत्-जीवनिष्ठस्य विष्णोरेवाव्यक्तादिशब्दाः)

**(२) ॥ ॐ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॐ ॥ १ ॥**

(२) सूत्रे पूर्वपक्षकरणात् आदौ सूत्रं पठन्ति- **ॐ आनुमानिकमिति ॥** अनुमानेन परिकल्पितं= आनुमानिकं प्रधानम् । इदमुपलक्षणं महदादीनां जीवादीनां च । समन्वयप्रकरणात् विषय-वाक्यबलाच्च- अव्यक्तमहज्जीवादिशब्दा इति लभ्यते । शरीररूपकविन्यस्तगृहीतेः- रूपशब्दः= सदृशे, कप्रत्ययः कुत्सने; शरीरस्य सदृशं शरीररूपं, कुत्सितं च शरीरं, विशिष्टात् कप्रत्ययेऽपि प्रकृत्यर्थैकदेशे शरीरे एव कुत्सनस्यान्वयः । ('व्योर्लघुप्रयत्नतरः शाकटायनस्य' इत्यत्र समुदायोत्तर-तरबर्थस्य-वृत्त्येकदेशलघुपदार्थेऽन्वयवत् ।)

शरीरस्य कुत्सितत्वं च - अस्वरूपत्वं प्राकृतशरीरमिति लब्धम् । सादृश्यं च परतन्त्रत्वेन । शरीररूपकमस्वतन्त्रं प्रधानादीति फलितम् । तत्र विन्यस्तस्य स्थितस्य गृहीतेरित्यर्थः । अस्वतन्त्रे इत्येव वक्तव्ये एवमुक्तिः- 'यस्याऽत्मा शरीरम्' (बृ.४.७.२२) इत्यादिश्रौतव्यवहारः सादृयेनेति बोधयितुम् । अपिः एवार्थे । चः स्मृतिसमुच्चये ॥

ज्योतिर्दर्शनादित्यतः- दर्शनात् इति, तत्तु इति वर्तते । दृश्यतेऽनेनेति दर्शनं= प्रापकश्रुति-लिङ्गादि । शाखास्विति शेषः । यथायथमावृत्तिविपरिणामौ । **अयमर्थः- एकेषां=** कठादीनां शाखासु 'महतः परमव्यक्तं, जीवा एव तु दुःखिनः' (इदं शाखान्तरम्) इत्यादिषु अव्यक्तमहज्जीवादिशब्दाः तत्तच्छब्दवाच्याः, **आनुमानिकमपि=** प्रधानमहत्तत्वजीवादय एव दर्शनात्= तत्तत्प्रापकाव्यक्त-जीवादिश्रुति-पुरुषावरत्व-दुःखित्वादिलिङ्गसद्भावात्- इति चेत्- न, अव्यक्तमहज्जीवादिशब्दैः **शरीररूपकविन्यस्तगृहीतेः=** अस्वतन्त्रप्रधानादौ= स्थितस्य परमात्मन एव ग्रहणात् । **च=** यतः 'अव्यक्तमचलं शान्तम्' इति पिप्पलादश्रुतिः, 'अनेनात्मना जीवेन' (छा.६-३-२,३) इति श्रुतिश्च, 'अव्यक्तोऽक्षर उच्यते', 'जीवो विनयिता साक्षी' इति स्मृतिश्च, तस्य विष्णोः अव्यक्तमहज्जीवादि-शब्दं तद्वाच्यत्वं **दर्शयति,** अतः तत्तु विष्णुरेव अव्यक्तमहज्जीवादिशब्दः तद्वाच्यः अतश्च इति ॥

**(३) 'तत्तु समन्वयात्' इति सर्वशब्दानां परमेश्वरे समन्वयः उक्तः। तन्न युज्यते। यतः—**

(३) श्रुत्यधिकरणसङ्गतिकथनपूर्वं सौत्रपूर्वपक्षांशं व्याचक्षते- **तत्तु समन्वयादिति ॥ तन्न युज्यत इति ॥ तत्**= समन्वयः। सामान्ये नपुंसकम्(मिदं) 'दृढभक्तिः' इत्यत्रेव। तदित्यव्ययं वा, 'अविद्या तच्चितोर्योग' इतिवत्। समन्वय उक्त इति यत्, तत् न युज्यते इति वाऽर्थः।

**(४) 'अव्यक्तात् पुरुषः परः' (क.उ.१-३-११) इति साङ्ख्यानुमानपरिकल्पितं प्रधानमप्येकेषां शाखिनामुच्यत इति चेन्न। तस्यैव पारतन्त्र्याच्छरीर-रूपकेऽव्यक्ते विन्यस्तस्य परमात्मन एवाव्यक्तशब्देन गृहीतेः। कप्रत्ययः कुत्सने। परमात्मन एवाव्यक्तशब्दः। तत्तन्त्रत्वेन तच्छरीर-रूपत्वादितरस्याप्यव्यक्तशब्दः।**

(४) विषयवाक्यमाहुः- **अव्यक्तादिति ॥ इतीति ॥** इत्यत्रेत्यर्थः। आनुमानिकमित्यत्र अनुमानं कस्य ? इत्याकाङ्क्षाशान्त्यर्थं- **साङ्ख्येति ॥ परिकल्पितमिति ॥** कारणत्वेन अनुमितमित्यर्थः। अनुमानप्रयोगस्तु- 'महदादिकार्यं स्वसदृशकारणजन्यम्, कार्यत्वात् घटवत्' इति। अपिः समुच्चये, तेन महदादीनां सङ्ग्रहः। **प्रधानमपि**= प्रधानमेव। **एकेषां**= कठादीनाम्। **शाखिनामिति ॥** कर्तुः शेषत्वविवक्षया कर्तरि शेषे षष्ठीयम्। **उच्यत इति ॥** यतः, अतः इति शेषः। यतः शाखिभिः 'अव्यक्तात्पुरुषः परः' इत्यत्र प्रधानमप्युच्यते- अत इति चेन्न इति सम्बन्धः। **तस्यैवेति ॥** यस्मिन् समन्वय उक्तः, तस्यैवेत्यर्थः। एतस्यैव विवरणम्- **परमात्मन एवेति ॥** अव्यक्तस्य शरीरसादृश्यं केन रूपेण ? इति चेत् तत्राऽऽह- **पारतन्त्र्यादिति ॥ कुत्सन इति ॥** एवञ्च कप्रत्ययाभावे रूपशब्दस्य सदृशार्थकत्वं न स्यात्- किन्तु- 'प्रशंसायां रूपप्' इति रूपप्प्रत्यय इति शङ्क्या प्रशस्तशरीर-मित्येवार्थस्स्यात्। कप्रत्ययसत्वे तु (तत्सामर्थ्यात्) रूपशब्दस्य सदृशार्थकत्वं सिद्ध्यतीति बोध्यम्।

शरीररूपकेत्यस्य तात्पर्यार्थमाहुः- **परमात्मन एवेति ॥** यद्यपीति शेषः। अव्यक्तशब्दः- मुख्य इति शेषः। तथाऽपि तत्तन्त्रत्वेनेति योज्यम्। **इतरस्यापि**= प्रधानस्यापि। वाचकत्वं षष्ठ्यर्थः। वाचकोऽव्यक्तशब्द इत्यर्थः।

(४) **अव्यक्तादिति ॥** (काठ.१.३.११) 'महतः परमव्यक्तम्' इति पूर्ववाक्यम्। **महतः**= महत्तत्वाभि-

मानिचतुर्मुखात्, **अव्यक्तं**= श्रीतत्त्वं तत्रस्थपरमात्मा च **परं**= उत्तमम् । **अव्यक्तात्**= श्रीतत्वात्, **पुरुषः**= पूर्णषड्गुणः विष्णुः **परः**, पुरुषात् **परं**= उत्तमं न किञ्चिदस्तीत्यर्थः । अयं च **सिद्धान्तार्थः** ।

पूर्वपक्षे तु- अव्यक्तशब्दः केवलं प्रधानपरः, श्रीतत्वपरो वा बोध्यः । इदमुपलक्षणम्- 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्' (का.२.२.७) इत्यस्यापि । एतदर्थस्तु- **अन्ये** देहिनः= केचिज्जीवाः **शरीरत्वाय**= शरीरवत्वाय मृत्यनन्तरं **योनिं**= मनुष्यादियोनिं **प्रपद्यन्ते** । **अन्ये स्थाणुं**= वृक्षशरीरं **अनुसंयन्ति**= प्राप्नुवन्ति । **यथाकर्म**= कर्मानुसारेण, **यथाश्रुतं**= ज्ञानानुसारेण, इति ॥

**(५) 'तुच्छ्येनाभ्यपिहितं यदासीत्' (ऋ.सं. १०-१२९-३) इति दर्शयति च ।**

(५) **प्रधानस्य पारतन्त्र्ये, (कुत्सितत्वे) भगवतस्तत्र विन्यस्तत्वे च, मानमाहुः-तुच्छ्येनेति ॥ आसीदितीति ॥** इत्येतज्ज्ञाप्यमित्यर्थः । **ज्ञाप्यत्वस्य 'विन्यस्तस्य' इत्यत्र विशिष्टविन्यस्तत्वेऽन्वयः**।

(५) **तुच्छ्येनेति** ॥ (ऋ.१०.१२९.३, तै.ब्रा.२.८.९.७४) आसमन्तात् भवतीति **आभु**= पूर्णं **यत्**= ब्रह्म **तुच्छ्येन**= स्वापेक्षया गुणादिना अल्पेन अस्वतन्त्रेण प्रधानेन **अपिहितं**= आच्छादितमासीदित्यर्थः ।

**(६) 'अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम् ।**
**यो वेद हरिमात्मानं स भयादनुमुच्यते ॥' इति पिप्पलादशाखायाम् ।**

**(७) 'अक्षरं ब्रह्म परमम्' इत्युक्त्वा 'अव्यक्तोऽक्षर उच्यते'(भ.गी. ८-३,२१) इति वचनाच्च ॥**

(६) विष्णोरव्यक्तशब्दवाच्यत्वे- 'दर्शयति च' इति पदद्वयसूचितश्रुतिस्मृती आहुः- **अव्यक्तमित्यादि ॥ इत्युक्त्वेति ॥** यदक्षरं तत् परं ब्रह्म इत्यक्षरस्य परब्रह्मत्वमुक्त्वेत्यर्थः। **वचनादिति ॥** तस्यैवाक्षरस्य 'अव्यक्तोऽक्षर उच्यते' इत्युत्तरवाक्येनाव्यक्तत्वोक्तेरित्यर्थः । तथा च- **च**= यतः, वेदपुरुषः पिप्पलादशाखायाम् इति = परमात्मनोऽव्यक्तशब्दवाच्यत्वं दर्शयति अतः, वचनाच्च, परमात्मन एव अव्यक्तशब्द इति ।

ननु पिप्पलादशाखायां, वचने च, अव्यक्तगुणयोग एवोच्यते । न तु अव्यक्तशब्दवाच्यत्वमिति चेत्- न, अव्यक्तशब्दप्रवृत्तिनिमित्तगुणयोगे तच्छब्दवाच्यत्वस्य स्वत एव सिद्धेः । इत्थं च

**अव्यक्तादिपदसमन्वय एवात्र विवक्षित इति न भगवत्परत्वे परस्परान्वयापेक्षा श्रुतिस्थपदानामिति ज्ञेयम् ॥ १ ॥**

(६) **अव्यक्तमिति** ॥ **यः**= अधिकारी **अव्यक्तं**= साकल्येन ज्ञातुमशक्यं, **अचलम्**= अनन्यसाधारणसार्वकालिकेश्वरतावन्तं, ईश्वरभावात् अचाल्यं वा, **शान्तं**= निर्विकारं पूर्णसुखरूपं वा, **निष्कलं**= षोडशकलारहितं **निष्क्रियं**= अक्लिष्टकारिणं, प्राकृतक्रियारहितं वा, प्रलये प्रचुरव्यापारहीनं वा, निर्णीयमानं वा, **परं**= उत्तमं, **आत्मानं**= आदानादिकर्तारं **हरिं वेद**= जानाति । सः **अनु**= ज्ञानानन्तरं **भयात्**= संसारभयात्, **मुच्यते**= मुक्तो भवतीत्यर्थः ।

(७) **अक्षरमिति ॥ किं तद् ब्रह्म (गी.८-१)** इति श्लोकेन अर्जुनकृतप्रथमप्रश्नस्येदमुत्तरम् । **अव्यक्तोऽक्षर इति ॥ (गी.८.२१) अव्यक्तो**= भगवान् सर्वथा नाशरहितत्वात् अक्षर इत्युच्यते इत्यर्थः। अनेन अक्षरस्य पूर्वं प्रसक्तस्याव्यक्तत्वं सिद्धमिति बोध्यम् ॥ १ ॥

**(सूक्ष्मत्वाद् विष्णुरव्यक्तः)**

## (८) ॥ ॐ सूक्ष्मं तु तदर्हत्वात् ॐ ॥ २ ॥

**(८) श्रुत्यादिबलात् अव्यक्तशब्दस्यास्तु विष्णुपरत्वम्, तथाऽपि तत्र न तन्मुख्यं स्यात्, सूक्ष्मत्व-रूपतत्प्रवृत्तिनिमित्ताभावादिति शङ्कावारणाय सूत्रम्- ॐ सूक्ष्ममिति ॥** तत्तु, अव्यक्तम्, इति **वर्तते । तुः एवार्थे, हेतौ, मुख्ये च । यथायथमावृत्तिविपरिणामौ । अयमर्थः- तु= यतः, सूक्ष्मं तु= सूक्ष्मवस्त्वेव अव्यक्तम्= अव्यक्तशब्दवाच्यं सूक्ष्मस्यैव (अणुस्वरूपस्यैव) तदर्हत्वात्= अव्यक्त-शब्दप्रवृत्तिनिमित्तयोग्यत्वात् सूक्ष्मं तु= मुख्यसूक्ष्मं तु, तत्तु= विष्णुरेव, अत अव्यक्तं= अव्यक्तशब्दवाच्यं तत्तु= विष्णुरेव, इति ॥**

### (९) सूक्ष्ममेवाव्यक्तशब्देनोच्यते । तद्ध्यव्यक्ततामर्हति । सूक्ष्मत्वं च मुख्यं तस्यैव ।

(९) सूत्रार्थमाहुः- **सूक्ष्ममेवेति ॥ तद्धीति ॥** हि= यतः तत् सूक्ष्ममेव **अव्यक्ततां**= अव्यक्त-शब्दप्रवृत्तिनिमित्तमर्हति अतस्सूक्ष्ममेव 'अव्यक्तशब्देनोच्यते' इति सम्बन्धः । ननु सूक्ष्मत्वस्यैव अव्यक्तशब्दप्रवृत्तिनिमित्तत्वेऽपि विष्णोरव्यक्तशब्दवाच्यत्वे किमुक्तं भवतीत्यत आहुः- **सूक्ष्मत्वं चेति ॥ मुख्यं**= निरवधिकं, अस्तीति शेषः ।

**(१०) 'यत्तत्सूक्ष्मं परमं वेदितव्यं नित्यं पदं वैष्णवं ह्यामनन्ति ।**
**यत्तल्लोका न विदुर्लोकसारं विन्दन्त्येतत्कवयो योगनिष्ठाः ॥'**
**इति पिप्पलादशाखायाम् । मुख्ये विद्यमाने नामुख्यं युक्तम् ॥**

(१०) अत्र मानमाहुः- **यदिति ॥ शाखायामिति ॥** शाखायामित्युक्तेरित्यर्थः । अस्य 'मुख्यं तस्यैव' इत्यत्रान्वयः । नन्वेवमपि अमुख्यस्यैव प्रधानादेः 'अव्यक्तात्' इत्यादौ वाच्यत्वं किं न स्यादित्यत आहुः- **मुख्ये चेति ॥** च = यतः, मुख्ये विद्यमाने नामुख्यं युक्तं, अतश्च 'परमात्मन एव अव्यक्तशब्द' इति पूर्वभाष्येणान्वयः । एवं जीवादिशब्दप्रवृत्तिनिमित्तप्राणधारकत्वादीनामपि परमात्मनि मुख्यत्वं बोध्यम् । अव्यक्तादिशब्दैः प्रधानादिविशिष्टपरमात्मन एव बोधात् अव्यक्तादिपदानां प्रधानपरमात्मोभयार्थकत्वेन वाक्यभेदापत्तिरिति चोद्यानवकाशः ॥ २ ॥

(१०) **यत्तत्सूक्ष्ममिति ॥** अयमर्थः- **यत् लोकसारं** नित्यं **वैष्णवं पदं**= विष्णुस्वरूपं 'उत्तमानां स्वरूपं तु पादशब्देन भण्यते' इति वचनात् अत्र पदपदं स्वरूपपरम् । **तत्**= विष्णुस्वरूपं **परमं सूक्ष्मं**= मुख्यसूक्ष्मं **वेदितव्यमिति आमनन्ति**= 'एषोऽणुरात्मा चेतसा वेदितव्यः' (आ.३.९) इत्याथर्वणिकाः पठन्ति । **यच्च लोकाः**= पामराः **न विदुः**, **तत्**= विष्णुस्वरूपं, **योगनिष्ठाः**= ब्रह्मणि मनोयोगवन्तः **कवयः**= ज्ञानिनः **विदन्ति**= साक्षात्कुर्वन्ति **हि**= प्रसिद्धम् इति ॥ २ ॥

**(अन्यगतप्रवृत्तिनिमित्तस्वामित्वेन परावरदुःखिबद्धादिशब्दवाच्यो विष्णुः)**

**(११) ॥ ॐ तदधीनत्वादर्थवत् ॐ ॥ ३ ॥**

(११) अस्त्वन्यत्र विद्यमानोऽव्यक्तशब्दो विष्णौ मुख्यः, तथाऽपि, 'अव्यक्तात्पुरुषः' इत्यादौ विष्णुपरो न स्यात्, पुरुषावरत्वस्य गम्यमानस्य विष्णौ बाधात्, एवं जीवादिशब्दा अपीति शङ्कावारणाय सूत्रम्- **ॐ तदधीनत्वादिति ॥** अव्यक्तपरावरादिशब्दजातमिति प्रकृतत्वाल्लभ्यते । तत्त्विति वर्तते । यथायथमावृत्तिपरिणामौ । **अयमर्थः**- तस्य अव्यक्तादिशब्दप्रवृत्तिनिमित्तस्य, परावरत्वादिलिङ्गस्य च, **तदधीनत्वात्**= अव्यक्तादौ विन्यस्तभगवदधीनत्वात् अव्यक्तपरावरादिशब्दजातं, तस्यैव= विष्णोरेव **अर्थवत्**= नियामकत्वसम्बन्धेन तद्गत्यव्यक्तपरावरत्वादिधर्मप्रकारकतद्विशेष्यकबोधजनकमिति ॥ यद्वा- तत्= ब्रह्म, तस्य= उक्तधर्मजातस्य **तदधीनत्वात्**= ब्रह्माधीनत्वात् अर्थवत्= उक्तधर्मजातविशिष्टमित्यर्थः ।

**(१२) तदधीनत्वाचाव्यक्तादीनां तस्यैवाव्यक्तत्वपरावरत्वादिकमर्थवत् ।**

(१२) सूत्रार्थमाहुः- **तदधीनत्वादित्यादिना ॥** परावरत्वादिकं तद्वाचकशब्दजातं तस्यैव = विष्णोरेव, अवरत्वादीत्यादिना जीवत्वादेः परिग्रहः ।

यद्यपि 'अव्यक्तात्पुरुषः परः' इति परत्वमेव श्रूयते, न त्ववरत्वम्, न च तत् अर्थात्सिद्ध्यतीति वाच्यम्- प्रकृते आर्थिकस्य अनुपयुक्तत्वात्, अत एवोक्तं टीकायां 'परत्वावरत्वादिवाचि-शब्दजातम्' इति शङ्का प्राप्नोति- तथाऽपि 'सोऽवरः, सोऽनित्यः, सोऽवरयति' इति माण्डूक-भाष्योक्तश्रुत्यन्तरोक्तं तद्ग्राह्यम् । यद्वा- परावरत्वादिविशिष्टवाचीत्यर्थः, टीकायाः गम्यमानावरत्वस्य अव्यक्तादिति पञ्चम्यन्तपदार्थे सत्वान्न दोषः ।

**(१३) 'यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते ।**
**यथा जीवः परात्मेति यथा राजा जयीत्यपि ॥' इति च स्कान्दे ॥**

(१३) नियन्तृत्वेन शब्दप्रवृत्तिनिमित्तत्वे स्मृतिमाहुः- **यदधीनेति ॥ स्कान्द इति ॥** स्कान्द इत्युक्तेः अर्थवदित्यन्वयः ॥ ३ ॥

(१३) **यदधीन इति ॥ यस्य**= शब्दस्य **गुणः**= प्रवृत्तिनिमित्तं **यदधीनः**= यदायत्तः **सः तद्गुणी**= तद्गुणवानित्यभिधीयते, तद्गुणप्रवृत्तिनिमित्तकशब्देनोच्यते । तत्र दृष्टान्तमाह- **यथेति ॥ यथा परात्मा**= विष्णुः **जीव इति** 'अनेन जीवेनाऽत्मना' (छा.६.३.२) इत्यादौ जीवशब्देनोच्यते जीवशब्दप्रवृत्ति-निमित्तभूतप्राणधारणस्य विष्ण्वधीनत्वात्, **यथा वा राजा जयी** इत्युच्यते भृत्यगतजयिशब्दप्रवृत्तिनिमित्तस्य जयस्य राजाऽधीनत्वात् तथेत्यर्थः । **अभिधीयते** इत्यनेन तत्तच्छब्दस्य मुख्यप्रवृत्तिः विष्णावेवेति बोधिता । अत्रैकं वैदिकं दृष्टान्तम्, अन्यच्च लौकिकदृष्टान्तमिति विवेकः ॥ ३-४ ॥

**(प्रधानादयः नाव्यक्तादिशब्दमुख्यार्थाः)**

**(१४) ॥ ॐ ज्ञेयत्वावचनाच्च ॐ ॥ ४ ॥**

**अन्यस्य न वाच्यत्वं युज्यते ॥ ४ ॥**

(१४) इतोऽपि ब्रह्मैवाव्यक्तादिशब्दमुख्यार्थ इत्यर्थप्रतिपादनाय सूत्रम्- **ॐ ज्ञेयत्वावचनाच्चेति ॥ ज्ञेयत्वस्य अवचनात्-अज्ञेयत्वस्य वचनादिति** विग्रहः । आनुमानिकं, अव्यक्तं, तत्तु इति वर्तते ।

यथायथमावृत्तिविपरिणामौ । **अयमर्थः**- अव्यक्तं= अव्यक्तादिशब्दमुख्यवाच्यं, तत्तु= ब्रह्मैव, न तु प्रधानादिकं, तस्यैव **ज्ञेयत्वाऽवचनात्**= ब्रह्मण एव आ= सम्यक् मोक्षार्थं 'तमेवैकं जानथ' (आ. ४.५) इति ज्ञेयत्वप्रतिपादनात् (न तु प्रधानादेः) आनुमानिकस्य प्रधानादेः ज्ञेयत्वावचनाच्च 'अन्या वाचो विमुञ्चथ' (आ.४-५) इति अज्ञेयत्वोक्तेश्च, इति ॥

ब्रह्मण एवेत्यवधारणलब्धार्थमाहुः- **न त्वन्यस्येति** ॥ प्रधानादेरित्यर्थः । **वाच्यत्वं**= मुख्यवाच्यत्वम् । न युज्यते इत्यस्य सूत्रेणैकवाक्यतयाऽन्वयः ॥ ४ ॥

**(काठके न प्रधानस्य ज्ञेयत्वमुक्तमपि तु प्राज्ञस्य)**

**(१५) ॥ ॐ वदतीति चेन्न प्राज्ञो हि ॐ ॥ ५ ॥**

(१५) उक्तमाक्षिप्य समादधत्सूत्रम्- **ॐ वदतीति चेन्नेति** ॥ ज्ञेयत्वेत्येकदेशः, आनुमानिकमिति च, वर्तते उत्तरवाक्यमिति शेषः । यथायथमावृत्तिविपरिणामौ । **अयमर्थः**- उत्तरवाक्यं= 'महतः परं ध्रुवम्' इत्युत्तरवाक्यम् । आनुमानिकस्य ज्ञेयत्वं= उक्तज्ञेयत्वं, **वदतीति चेन्न** - **हि**= यतः, उत्तरवाक्ये प्राज्ञः= परमात्मा उच्यते= मोक्षार्थं ज्ञेयत्वेनोच्यते अत इति ॥

**(१६) 'महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते' (क.उ. १-३-१५) इति ज्ञेयत्वं वदतीति चेन्न । प्राज्ञः परमात्मा हि तत्रोच्यते । 'अणोरणीयान्महतो महीयान्' (क.उ. १-२-२०) इति तस्यैव महतो महत्वम् । सर्वस्मात्परस्य महतोऽपि परत्वं युज्यते ॥ ५ ॥**

(१६) श्रुत्युपन्यासपूर्वं सूत्रं व्याचक्षते- **महत इति** ॥ **इतीति** ॥ इत्युत्तरवाक्यमित्यर्थः । **ज्ञेयत्वं वदतीति** ॥ एवं च महतः परत्वं प्रकृतेरेवेति भावः । **तत्रोच्यत इति** ॥ हि= यतः परमात्मा तत्र= (कठश्रुतौ) उच्यते । अतो नेति सम्बन्धः । ननु महतः परत्वलिङ्गात् प्रधानमेवात्रोच्यत इति शङ्कायामाहुः- **अणोरणीयानिति** ॥ **तस्यैव हीति** ॥ हि= यतः, तस्यैव (भगवत एव) महतोऽपि= महत्तत्वादपि परत्वं युज्यते, अतस्तत्र परमात्मा उच्यते इति सम्बन्धः । ननु 'अणोरणीयान्' इति श्रुतौ सर्वस्मात् स्थूलात् स्थूलत्वमुच्यते, न तु महत्तत्त्वात्परत्वं, इत्यत आहुः- **सर्वस्मादिति** ॥ सर्वस्मात्परस्य महतः परत्वं सुतरां सिद्ध्यतीति कैमुत्येन महतः परत्वं भगवत इति भावः ॥ ५ ॥

(१६) महतः परमिति ॥ (काठ.१.३.१५) अस्य पूर्ववाक्यम्- 'अनाद्यनन्तम्' इति । महतः =

चतुर्मुखात्, **परं, अनाद्यन्तं, ध्रुवं**= अचलं, नित्यं निर्विकारं वा, **तं**= विष्णुं, **निचाय्य**= अपरोक्षीकृत्य, **मृत्युमुखात्**= संसारात्, **प्रमुच्यते**= मुक्तो भवतीत्यर्थः **सिद्धान्ते** । पूर्वपक्षी तु - महतः परं वस्तु श्रौतत्वं मन्यते ॥

**अणोरणीयानिति** ॥ (का.१.२.२०) **अणोः**= सूक्ष्मात्, **अणीयन्**= सूक्ष्मतरः, **महतः**= सर्वस्मात् स्थूलात्, महत्तत्वाद्वा, **महीयान्**= स्थूलतरः परमात्मा इत्यर्थः । अस्य - 'अस्य जन्तोर्निहितो गुहायां' इत्युत्तरत्र सम्बन्धः ॥ ५ ॥

**('तद्विष्णोः परमं पदम्' इति विष्णुप्रकरणमिदम्)**

## (१७) ॥ ॐ प्रकरणात् ॐ ॥ ६ ॥

**(१७) विष्णोर्महत्तत्वादपि परत्वमुच्यत इति सम्भावनामात्रेण लिङ्गस्य विष्णुनिष्ठत्वमादाय 'अनाद्यनन्तम्' इति वाक्यस्य विष्णुपरत्वं न न्याय्यमिति शङ्कावारणाय सूत्रम् - ॐ प्रकरणात् ओमिति ॥ प्राज्ञो हि, तत्तु, उत्तरवाक्यं, उच्यते इति वर्तते । यथायथं विपरिणामः । अयमर्थः- उत्तरवाक्ये- 'महतः परं ध्रुवं' इत्युत्तरवाक्ये प्राज्ञो हि= परमात्मैव उच्यते, तस्य तु= विष्णोरेव प्रकरणात् इति ॥**

## (१८) 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' (क.उ. १-३-९) इति तस्य ह्येतत्प्रकरणम् ॥ ६ ॥

(१८) श्रुत्युपन्यासपूर्वं सूत्रतात्पर्यमाहुः- **सोऽध्वन इति** ॥ **इतीति** ॥ इत्यनेनेत्यर्थः । **एतत्**= 'महतः परं ध्रुवम्' इत्यादिवाक्यमित्यर्थः । **तस्यैव**= विष्णोरेव । **प्रकरणमिति** ॥ ज्ञायत इति शेषः। हि= यतः ज्ञायते, अतः 'परमात्मा तत्रोच्यते' इति पूर्वभाष्येऽन्वयः ॥ ६ ॥

(१८) **सोऽध्वन इति** ॥ (का.१.३.९) 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः' इति पूर्ववाक्यम् । **यो नरः**= अधिकारी **विज्ञानसारथिः मनःप्रग्रहवान्, सः**= अधिकारी **अध्वनः**= संसाराख्यवर्त्मनः **पारं**= विश्रान्त्यवधिभूतं पारम् **आप्नोति, तत्**= पारं विष्णोः **परमं पदं**= स्थानं= मुक्तप्राप्यं (क्षीरसागरादौ) विष्णुरूपं वेत्यर्थः ॥ ६ ॥

**(अव्यक्तस्याजिज्ञासितत्वाद् पितृसौमनस्य-स्वर्ग्याग्नि-परात्मनां विषये पृष्टत्वाच्च विष्णुरेवोक्तः)**

## (१९) ॥ ॐ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॐ ॥ ७ ॥

(१९) हेत्वन्तरेण अनाद्यनन्तवाक्यं विष्णुपरमिति बोधनाय सूत्रम्- **ॐ त्रयाणामेवेति** ॥ चः समुच्चये, हेतौ च । एवंशब्दः प्रकारे । प्रकारश्च पितृसौमनस्यादिः । प्राज्ञो हि, उत्तरवाक्ये, उच्यते, इति वर्तते । यथायथमावृत्तिविपरिणामौ । **अयमर्थः**- उत्तरवाक्ये= 'महतः परं ध्रुवम्' इत्यत्र, प्राज्ञो हि उच्यते, **च**= यतः, **एवं**= पितृसौमनस्यादिप्रकारवतां, **त्रयाणामेव** ॥ पितृसौमनस्य-स्वर्ग्याग्नि-परमात्मनामेव **प्रश्नः**= एवं क्रमेण नचिकेतसा कृतः, उपन्यासश्च, यमेन उत्तरं च दत्तं, अतश्चेति ॥

'शान्तसङ्कल्पस्सुमना यथा स्यात्' इति पितृसौमनस्यप्रश्नः, अस्योत्तरम्- 'यथा पुरस्तात्' इत्यादि । 'स त्वमग्निम्' इति- स्वर्ग्याग्निप्रश्नः, एतस्योत्तरम्- 'प्र ते ब्रवीमि' इति । 'ये यं प्रेते विचिकित्सा मनुष्ये' इत्यादि- परमात्मप्रश्नः, तस्य- 'तं दुर्दर्शम्'इत्याद्युत्तरमिति प्रश्नोत्तरवाक्यम् ।

**(२०) त्रयाणामेव पितृसौमनस्यस्वर्ग्याग्निपरमात्मनां प्रश्न उपन्यासश्च । 'अविज्ञातप्रार्थनं च प्रश्न इत्यभिधीयते' इति वचनान्न विरोधः ॥ ७ ॥**

(२०) **सूत्रार्थमाहुः- त्रयाणामेवेति । उपन्यासश्चेति** ॥ चो हेतौ । च= यतः उपन्यासश्च, अतः प्राज्ञो हि तत्रोच्यते इत्यन्वयः । ननु पितृसौमनस्यस्य कथं प्रश्नविषयत्वम् ? तस्य प्रार्थना-विषयत्वादित्यत आहुः- **अविज्ञातेति** ॥ **न विरोध इति** ॥ प्रश्नद्वयस्यैव कृतत्वेन कथं प्रश्नत्रयमिति शङ्का नेत्यर्थः ॥ ७ ॥

(२०) **अविज्ञातेति** ॥ यत् प्राप्यते न वेति **अविज्ञातं**= सन्दिग्धं तस्य **प्रार्थनमपि** प्रश्न इति प्रामाणिकैरभिधीयत इत्यर्थः ॥ ७-८ ॥

**('महान्तम्' इत्यादिश्रुतौ महच्छब्दस्य विष्णुवाचकत्वमिवात्रापि अव्यक्तशब्दस्य विष्णुवाचकत्वम्)**

**(२१) ॥ ॐ महद्वच्च ॐ ॥ ८ ॥**

**यथा महच्छब्दो महत्तत्वे प्रसिद्धोऽपि परममहत्त्वात् परमात्मन एव मुख्यः, एवमितरेऽपि ॥ ८ ॥**

(२१) ननु अव्यक्तादिशब्दानां प्रधाने प्रसिद्धत्वात् तद्विहाय प्रवृत्तिनिमित्तमुख्यत्वमादाय विष्णु-परत्वं न न्याय्यम्, तथा लोकेऽदर्शनात् इति शङ्कावारणाय सूत्रम्- **ॐ महद्वच्चेति** ॥ तत्तु, अव्यक्तमिति वर्तते । चशब्दः अन्यत्र मुख्यमित्यनुक्तसमुच्चये, अप्यर्थे च, यथायथमावृत्तिविपरि-

णामौ । **अयमर्थः**- अन्यत्र प्रसिद्धमपि अव्यक्तं= अव्यक्तादिशब्दः, महति= महत्तत्त्वे, **महद्वत्**= प्रसिद्धमहच्छब्दवत् 'महान्तं विभुमात्मानं' इत्यत्र महच्छब्दस्य विष्णुवाचकत्ववदिति यावत्, तस्य तु= ब्रह्मण एव मुख्यतया वाचकम् इति ॥

सूत्रार्थमाहुः- **यथेति ॥ मुख्य इति ॥** 'महान्तं विभुमात्मानम्' इत्यत्र इति भावः । **इतरेऽपीति ॥** अव्यक्तादयश्शब्दा इत्यर्थः । तथा च- प्रवृत्तिनिमित्ताऽधिक्येन न विष्णुवाचकत्वमुच्यते, किन्तु सिद्धे प्रयोगे मुख्यत्वमात्रमुच्यते इति भावः ॥ ८ ॥

**(यज्ञपात्रे प्रसिद्धोऽपि चमसशब्दः यथा श्रुतिबलेन शिरोवाचकः, एवमव्यक्तशब्दः प्रधाने प्रसिद्धोऽपि विष्णुपरः)**

## (२२) ॥ ॐ चमसवदविशेषात् ॐ ॥ ९ ॥

(२२) ननु अव्यक्तादिशब्दानां विष्णुपरत्वमुक्तम् । तच्च लक्षणयैवोपपन्नं भवतु । शक्यं तु प्रधानादिकमेव, तत्रैव मुख्यत्वप्रयोजकबहुलप्रयोगात्, इति शङ्कावारणाय सूत्रम्-**ॐ चमसवदिति ॥** अन्यत्र प्रसिद्धमपि अव्यक्तमिति वर्तते । चमसशब्दः अन्यत्र प्रसिद्धचमसशब्दपरः अन्यवाचकं, श्रुतेरिति शेषः । यथायथमावृत्तिविपरिणामौ । **अयमर्थः**- श्रुतेः= 'इदं तच्छिरः' इति श्रुतिबलात् **चमसवत्**= अन्यत्रप्रसिद्धचमसशब्दवत्, अन्यत्र प्रसिद्धमपि अव्यक्तं= अव्यक्तादिशब्दः, श्रुतेः= 'नामानि सर्वाणि' इति श्रुतिबलात् अन्यवाचकं, श्रुत्योः= उक्तश्रुत्योः, **अविशेषात्**= शक्तिग्राहकत्वाविशेषात् इति । दृष्टान्ते अन्यत्रेत्यनेन यज्ञपात्रं गृह्यते, अन्यवाचकेत्यत्र अन्यपदेन शिरः, दार्ष्टान्तिके अन्यत्रेत्यनेन प्रधानादिकम् । 'अन्यवाचका' इत्यत्र अन्यपदेन भगवान् उच्यते इति बोध्यम् ।

**(२३) यथा चमसशब्दोऽन्यत्र प्रसिद्धोऽपि 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न' (बृ.उ. ४-२-३) इति श्रुतेः शिरोवाचकः एवमव्यक्तादिशब्दाः सर्वेऽन्यत्र प्रसिद्धा अपि, 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' (भाल्लवेयश्रुतिः) इत्यादिश्रुतेः परमात्माभिधायका एव । अविशेषात् श्रुतेः ॥ ९ ॥**

॥ इति आनुमानिकाधिकरणम् ॥

(२३) सूत्रार्थमाहुः- **यथेति ॥ अन्यत्र=** यज्ञपात्रविशेषे । चमसशब्दस्य यज्ञपात्रातिरिक्तार्थ-वाचकत्वे श्रुतिमाहुः- **इदं तच्छिर इति ॥** अव्यक्तादिशब्दानां भगवद्वाचकत्वे श्रुतिमाहुः- **नामानीति ॥ श्रुतेरिति ॥** 'इदं तच्छिर' इति श्रुतेः, 'नामानि सर्वाणि' इति श्रुतेश्च इत्यर्थः ॥ ९ ॥

॥ इति आनुमानिकाधिकरणम् ॥ १ ॥

(२३) इदं तच्छिर इति ॥ (बृह.४.२.३) तत्र हि '**अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः** तस्मिन् यशो निहितं विश्वरूपम्' इति मन्त्रमुदाहृत्य - '**अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः**' इति वाक्येन मन्त्रस्यैकपादं प्रतीकं गृहीत्वा- 'इदं तच्छिरः' इति वाक्येन स मन्त्रो व्याख्यातः, तथाहि- **तत्**= अर्वाग्बिल ऊर्ध्वबुध्नश्चमस इत्युच्यमानं वस्तु, इदं= प्रतीयमानं **शिरः**, **हि**= यस्मात्, **शिरः**= चमसः **अर्वाग्बिलः**= अधोभागस्थितमुखादिमान्, **ऊर्ध्वबुध्नः**= उपरिभागस्थितवर्तुलकठिनाकारवान्, **तस्मात्**= चमस-सदृशत्वादित्यर्थः । **नामानीति** ॥ व्या. (पृ. ४३) ॥ ९ ॥

॥ इति आनुमानिकाधिकरणम् ॥ १ ॥

## २. ज्योतिरुपक्रमाधिकरणम्

**(१) 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादि कर्माभिधायकस्य कर्मक्रमादि-विरोधान्न युज्यत इति, अत आह–**

अत्र नये - कर्मादिलोपप्रसङ्गेन अन्यत्रैव प्रसिद्धज्योतिरादिशब्दानां समन्वयः, कर्मादिबोधक-ज्योतिरादिशब्दवाच्यो विषयः, स विष्णुः ? अन्यो वा ? इति सन्देहः । पूर्वनयवत् सन्देहबीजम् ।। २ सूत्रे.अधि. ।।

(१) विषयवाक्योदाहरणपूर्वं पूर्वपक्षमाहुः- **वसन्त इति ।। कर्माभिधायकस्य**= कर्माद्यभि-धायकज्योतिरादिशब्दस्य । **कर्मक्रमादीति ।।** कर्मपदेन- ज्योतिष्टोमादिप्रधानयागः, क्रमपदेन- 'वेदं कृत्वा वेदिं करोति' इत्यादिपौर्वापर्यरूपक्रम उच्यते । आदिना- द्रव्य-देवता-काल-यजमान-ऋत्विग-ङ्गयागादीनां परिग्रहः । यद्यपि 'वसन्ते' इति विषयवाक्ये काल एव प्रथमं श्रूयते, अथाऽपि ज्योतिष्टोमस्य प्रधानत्वात् तस्यैव सूत्रे निर्देशः । **विरोधादिति ।।** कर्मादिबोधकज्योतिरादिपदस्य विष्णुपरत्वे कर्मादिविषये प्रमाणाभावेन कर्मणामननुष्ठानप्रसङ्गरूपविरोधादित्यर्थः । इदमुपलक्षणं-ज्योतिष्टोमादिशब्दानां व्युत्पत्त्ययोगस्यापि । उक्तशब्दानां हरौ रूढेरभावेन ज्योतिषां स्तोम इति योगो वाच्यः, स न सम्भवति । ज्योतिरादिपदानामपि विष्णुपरत्वादिति ।। **न युज्यत इति ।।** सर्वशब्दानां परमेश्वरे समन्वय इति वर्तते ।

(१) वसन्ते वसन्त इति ।। ज्योतिषा= ज्योतिष्टोमेन, अन्यः सुगमः । अयं पूर्वपक्षे । सिद्धान्ते तु-महायोगवृत्या भगवत्परेति सूत्रभाष्यादौ स्पष्टम् ।।

**('ज्योतिषा यजेत' इत्यत्र ज्योतिश्शब्दः विष्णुपरः)**

**(२) ।। ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ ।। १० ।।**

(२) **ॐ ज्योतिरुपक्रमादिति ।।** तत्तु इति वर्तते उपक्रमादिति ल्यब्लोपे पञ्चमी । तुः अप्यर्थे, एवार्थे च ।। **अयमर्थः- ज्योतिः**= ज्योतिष्टोमादिकर्मवाचकत्वेन प्रसिद्ध-'वसन्त' इति श्रुतिस्थ-ज्योतिरादिशब्दवाच्यं, **तत्तु**= विष्णुरेव । हि= यतः, **उपक्रमात्तु**= 'एष इमं लोकमभ्यार्चत्' इत्युपक्रमं विधायैव शतर्चि(र्च)नादिशब्दजातस्य योगेन प्राणशब्दवाच्यविष्णुपरत्वं विधायैवेति यावत्, तथा सर्वेषां वैदिकशब्दानां योगेन 'सर्वा ऋचः सर्वे घोषाः' इति वाक्येन विष्णुपरत्वं, **एके**= ऐतरेयिनः **अधीयते**= वदन्ति, अत इति ।।

**(३) ज्योतिरादिकर्मवाचकत्वेन प्रसिद्धाभिधेयोऽपि स एव । 'एष इमं लोक-मभ्यार्चत्' इत्युपक्रम्य 'ता वा एताः सर्वा ऋचः सर्वे वेदास्सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्' इति (ऐ.आ. २-२-२) ह्यधीयत एके ॥ १० ॥**

(३) सूत्रार्थमाहुः - **ज्योतिरिति** ॥ **प्रसिद्धाभिधेय इति** ॥ कर्मवाचकत्वेन निश्चितशब्द-वाच्य इत्यर्थः । स एव= विष्णुरेव । उपक्रमादित्यादिसूत्रभागं श्रुत्युदाहरणपूर्वकं व्याचक्षते- **एष इममिति** ॥ अत इति शेषः । हि= यतः अधीयते, अतो विष्णुरेवेति सम्बन्धः ॥ १० ॥

(३) **एष इममिति** ॥ (ऐ.आ.२.२.२) **एषः**= नारायणो देवः, **इमं लोकं**= ब्रह्मादिशरीरं पुरुषरूपेण अन्तर्यामितया **अभ्यार्चत्**= प्राविशदित्यर्थः । अन्योंऽशः (व्याख्यातम् पृ. १३१) अन्तिमप्राणाधिकरणे ॥ १०-११ ॥

**(महायोगवृत्त्या विष्णुप्रतिपादकाः शब्दाः योगवृत्त्या कर्म-क्रमाभिधायका इति न श्रौतकर्मलोपः)**

## (४) ॥ ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॐ ॥ ११ ॥

(४) कर्मक्रमादिविरोधव्युत्पत्यसम्भवयोः परिहाराय सूत्रम्- **ॐ कल्पनेति** ॥ तत्तु इति वर्तते । कल्पनेति लुप्तल्यब्लोपपञ्चम्यन्तं, पृथक् पदं च । चः एवार्थसमुच्चययोः । सर्वशब्दानामिति शेषः । यथायथमावृत्तिविपरिणामौ । **अयमर्थः**- सर्वशब्दानां **मध्वादिवत्**= मधुविद्यादिगत-मधु-रश्मि-यशस्-तेज-इन्द्रियादिशब्दानामिव कल्पनायाश्च लोकप्रसिद्धरूढ्यादिसामर्थ्यमपरित्यज्यैव तस्य तु= परमात्मनोऽपि, **कल्पनोपदेशात्**= **कल्पनायाः**= महायोगसिद्धस्ववाच्यगुणवत्वेन उपासनायाः, **उपदेशात्**= 'ता वा एताः' इत्यादिना प्रतिपादनात् **अविरोधः**= कर्मक्रमादिलोपरूपविरोधो न, चेन कल्पनाया हरौ महायोगवृत्तेः अविरोधः = असम्भवरूपविरोधो न इति ॥ तथा च- 'असौ वा व आदित्यो देवमधु' (छा.३.१.१) इत्यादिना परमात्मोपासनोपदेशेऽपि मध्वादिशब्दानां लौकिक-क्षौद्रादिवाचकत्वमप्यस्ति, तथा ज्योतिरादिशब्दानां उपासनार्थं भगवत्परत्वेऽपि कर्मक्रमादि-परत्वमप्यस्तीति भावः ।

**(५) मधुविद्यादिवत्सर्वशब्दार्थत्वेन परस्य कल्पनोपदेशाच्च न कर्मक्रमादि-विरोधः ।**

॥ इति ज्योतिरुपक्रमाधिकरणम् ॥

(५) सूत्रार्थमाहुः- **मधुविद्येति** ।। विद्यादाविवेत्यर्थः । अत्र अपीति शेषः । वसन्त इत्यादिस्थलेऽपीत्यर्थः । **सर्वशब्दार्थत्वेन**= ज्योतिरादिसर्वशब्दवाच्यगुणवत्वेन । **परस्य**= भगवतः । **कल्पनोपदेशात्**= उपासनोपदेशात् । चः भिन्नक्रमः । विरोधश्च नेति सम्बन्धः । चेन व्युत्पत्त्यसम्भवो नेति बोध्यम् ।।११।।

।। इति ज्योतिरुपक्रमाधिकरणम् ।। ११ ।।

## ३. न सङ्ख्योपसङ्ग्रहाधिकरणम्

### (विष्णुरूपाणां बहुत्वाद् बहुवचनमुपपन्नम्)

## (१) ॥ ॐ न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॐ ॥ १२ ॥

अत्र नये- आधाराधेयभावलिङ्गेन अन्यत्रैव प्रसिद्धपञ्चजनादिशब्दसमन्वयः । 'यस्मिन् पञ्च पञ्चजनाः' इति श्रुतिस्थपञ्चजनशब्दवाच्यो विषयः । स विष्णुः ? अन्यो वा ? इति सन्देहः । समन्वयनयः, अन्यत्र प्रसिद्धिश्च तद्बीजम् । न विष्णुरिति पूर्वपक्षः ॥ (सू. ३, अ.)

(१) **ॐ न सङ्ख्योपसङ्ग्रहादिति** ॥ विरोधः, तत्तु इति वर्तते । विषयवाक्यबलात् पञ्चजना इति लभ्यते । अपिना आधाराधेयभावसङ्ग्रहः । यथायथमावृत्तिविपरिणामौ । **अयमर्थः**- पञ्चजनाः= 'यस्मिन् पञ्च पञ्चजनाः' इति श्रुतिस्थपञ्चजनशब्दवाच्याः, तत्तु= विष्णुरेव । तस्य विष्णोः पञ्चजनेऽपि= पञ्चजनशब्दवाच्यत्वेऽपि **सङ्ख्योपसङ्ग्रहादपि**= बहुत्वव्याप्यपञ्चत्वसङ्ख्याविशिष्ट-वस्तुप्रतिपादननिमित्तकः, 'यस्मिन्' इति आधाराधेयभावनिमित्तकश्च **विरोधः**= एकस्मिन्नेव वस्तुनि बहुत्वाभावरूपः, स्वनिरूपिताधेयत्वाभावरूपश्च दोषः- न, तस्य विष्णोः **नानाभावात्**= एकैक-शरीरगताकाशप्राणादिनियामकबहुरूपत्वात्, **अतिरेकाच्च**= शरीरनियामकरूपाद् आकाशादि-नियामकरूपाणां भिन्नत्वाच्च इति । विष्णोरेकत्वेऽपि विशेषबलात् सर्वमुपपद्यते इति भावः ।

## (१२) 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' (बृ.उ. ६-४-१७) इत्यादिषु बहुसङ्ख्योपसङ्ग्रहेऽपि न विरोधः । तस्यैवाकाशादिषु नानाभावादतिरिक्त-स्वरूपत्वाच्च ॥

(२) विषयवाक्योदाहरणपूर्वं सूत्रार्थमाहुः- **यस्मिन्निति** ॥ **बहुसङ्ख्योपसङ्ग्रहेऽपीति** ॥ पञ्चजन-शब्दस्येति शेषः । बहुत्वव्याप्यपञ्चत्वसङ्ख्यावद्वाचकत्वेऽपीत्यर्थः । निमित्तसप्तमी चेयम् । अनेन सङ्ख्योपसङ्ग्रहादिति पञ्चम्यर्थ उक्तः । निमित्तत्वस्य विरोधेऽन्वयः। अपिना आधाराधेयभावसङ्ग्रहः । **तस्यैवेति** ॥ विष्णोरेवेत्यर्थः । **तदतिरिक्तस्वरूपत्वाच्चेति** ॥ तदपेक्षया= शरीरनियामकरूपापेक्षया आकाशादिगतरूपाणां भिन्नरूपत्वादित्यर्थः । अस्य न विरोध इत्यत्रान्वयः ॥ १२ ॥

(२) **यस्मिन् पञ्चेति** ॥ (बृ. ६.४.१७) अस्योत्तरार्धम्- 'तमेवं मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्' इति **यस्मिन्**= सर्वशरीरगते परमात्मनि, **पञ्च पञ्चजनाः**= पञ्चसङ्ख्याकाः प्राणादयः, **जनाः**=

जनयितृत्वाद्धेतोः जनशब्दवाच्याः भगवद्रूपविशेषाः **प्रतिष्ठिताः**= आश्रिताः, तथा **आकाशः**= तदाख्यो भगवान् प्रकृतिश्च **प्रतिष्ठितः**= आश्रितः, **तं**= परमात्मानं अहं **मन्ये**= जानीयाम् । **एवं**= उक्तप्रकारेण **तं अमृतं परं ब्रह्म विद्वान्** तत्वेन उपासीनः । **अमृतः**= मुक्तो भवतीत्यर्थः । अयं च **सिद्धान्ते** । पूर्वपक्षे तु - पञ्चजनादिशब्दाः भगवदितरमुख्यप्राणादिवाचका इति बोध्यम् । अत्र पञ्च पञ्चेति वीप्सायां पञ्चनूशब्दस्य द्विर्वचनं- प्रतिशरीरं जनशब्दवाच्यानामनुवृत्तिसूचनार्थम् ॥ १२ ॥

**('पञ्चजनाः' इत्यत्र भगवद्रूपाण्येवोक्तानि)**

**(३) पञ्चजनानाह—**

**॥ ॐ प्राणादयो वाक्यशेषात् ॐ ॥ १३ ॥**

(३) **पञ्चजनशब्दस्य विष्णुपरत्वे विशेषहेतुसमर्पणार्थं रूपविशेषनिरूपणार्थं च प्रवृत्तं सूत्रमवतारयन्ति- पञ्चजनानिति ॥** तद्वाच्यरूपविशेषानाहेत्यर्थः । इदमुपलक्षणम्- विशेषहेतुं चाहेत्यस्यापि ॥ **ॐ प्राणादय इति ॥**

पञ्चजनाः, तत्तु, इति वर्तते । यथायथमावृत्तिविपरिणामौ । **अयमर्थः**- पञ्चजनाः= 'यस्मिन् पञ्च पञ्चजनाः' इति श्रुतिस्थपञ्चजनशब्दवाच्याः **प्राणादयः**, त एव प्राणादिपञ्चानां प्राणत्वादिप्रदभगवद्रूपविशेषा एव । **वाक्यशेषात्**= 'प्राणस्य प्राणम्' इत्यादिवाक्यशेषात् इति ॥ प्राणादीन् प्रति प्राणत्वादिप्रदत्वस्य 'यच्छ्रोत्रस्य श्रोत्रम्' इत्यादिना हरावेव सम्भवादिति भावः ।

**(४) 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनः' इति वाक्यशेषात् ॥ १३ ॥**

(४) **श्रुत्युपन्यासपूर्वं सौत्रहेतुं विवृण्वते- प्राणस्येति ॥ वाक्यशेषादिति ॥ हेतुमात्रविवरणरूपत्वेन अस्यान्यत्रान्वयापेक्षा न ॥ १३ ॥**

(४) प्राणस्येति ॥ (बृ. ६.४.१८) व्याख्यातम् (पृ. २६४) ॥ १३ ॥

**(अन्नाख्यभगवद्रूपेण पञ्चत्वसङ्ख्योपपादनीया)**

**(५) ॥ ॐ ज्योतिषैकेषामसत्यन्ने ॐ ॥ १४ ॥**

(५) **ननु वाक्यशेषात् प्राणादीनां विष्णुत्वेऽपि न पञ्चजनानां विष्णुत्वम् । वाक्यशेषे चतुर्णामेव श्रवणेन अस्य (वाक्यस्य) पञ्चजनभिन्नविषयकत्वादिति शङ्कावारणाय सूत्रम्- ॐ ज्योतिषेति ॥**

अपीति वर्तते । पञ्चकं, पूरणीयं, पाठ इति शेषः । **अयमर्थः- अन्ने**= 'अन्नस्यान्नं' इति वाक्ये, **एकेषां**= काण्वानां, पाठे **असत्यपि**= अविद्यमानेऽपि, **ज्योतिषा**= 'तद्देवा ज्योतिषां ज्योतिः' इति पूर्ववाक्ये पठितेन ज्योतिषा पञ्चकं पूरणीयम् इति ॥

**(६) 'तद्देवा ज्योतिषां ज्योतिः' (काण्वपाठः) इत्यनेन काण्वानां पञ्चकम् ।**

**॥ इति नसङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥**

(६) श्रुतिमुदाहरन्तः सूत्रतात्पर्यमाहुः- **तद्देवा इति ॥ अनेनेति ॥** इति वाक्यप्रतिपाद्य-ज्योतिषेत्यर्थः । **काण्वानामिति ॥** पाठे पूरणीयमिति शेषः । पञ्चकमिति ॥ पञ्चावयवकसमुदाय इत्यर्थः । पञ्चकं पूरणीयमित्यन्वयः ॥ १४ ॥

॥ इति न **सङ्ख्योपसङ्ग्रहाधिकरणम्** ॥ ३ ॥

(६) **तद्देवा इति** ॥ (बृ.६.४.१६) 'यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तते, तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' इति काण्ववाक्यम् । अयमर्थः- **अहोभिः** सह **संवत्सरः यस्मादर्वाक् परिवर्तते** (विष्णुभिन्नविषय एव स्वसामर्थ्यं दर्शयति) यस्मिन् स्वव्यापारं= आयुर्ह्रासादिकविकारं कर्तुं न समर्थ इति यावत्, **तत् ज्योतिषां**= आदित्यादीनां, **ज्योतिः**= ज्योतिष्ट्वप्रदं, **आयुः**= आयुःप्रदं अचलं वा, **अमृतं**= नित्यमुक्तं ब्रह्मस्वरूपं **देवा उपासते, ह**= प्रसिद्धमिति ॥ १४ ॥

॥ इति न **सङ्ख्योपसङ्ग्रहाधिकरणम्** ॥ ३ ॥

# ४. कारणत्वेन च आकाशाधिकरणम्

**(कार्यत्वे सति कारणत्वरूपावान्तरकारणवाचकाकाशादिशब्दैराकाशादिषु स्थितो विष्णुरेवाकाशादिवाच्यः)**

**(१) अवान्तरकारणत्वेनापि स एवोच्यत इति वक्ति–**

## ॥ ॐ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॐ ॥ १५ ॥

अत्र नये- उत्पत्तिमत्वेनान्यत्रैव प्रसिद्धाऽकाशवाय्वादिशब्दानां हरौ समन्वयः । 'आत्मन आकाशस्सम्भूतः' इत्यादिश्रुतिस्थाऽकाशादिशब्दवाच्यो विषयः । सः विष्णुः ? अन्यो वा ? इति सन्देहः । पूर्वनयवत्तद्बीजम् । न विष्णुरिति पूर्वपक्षः ॥ सू. १ अ. ॥

सिद्धान्तप्रतिज्ञामाहुः- **अवान्तरकारणत्वेनेति** ॥ कार्यत्वे सति कारणत्वेनेत्यर्थः । **स एव**= विष्णुरेव । **उच्यत इति** ॥ तच्छब्दैरिति शेषः । अवान्तरकारणत्वेन तच्छब्दैः 'आत्मन आकाशः सम्भूतः' इत्यादिश्रुतिस्थावान्तरकारणत्ववद्वाचकाऽकाशादिशब्दैरुच्यत इत्यर्थः । **वक्तीति** ॥ सूत्रकार इति शेषः ।

(१) **ॐ कारणत्वेनेत्यादि** ॥ चः अनुक्तसमुच्चये । यथेति सादृश्यार्थकं भिन्नं पदम् । तृतीया-सप्तमीबलात् सहितं, स्थितं, इति लभ्यते । यथायथमावृत्तिविपरिणामौ । **अयमर्थः- कारणत्वेन** चात् कार्यत्वेन सहितं आकाशादि 'आत्मन आकाशस्सम्भूतः' इत्यादिश्रुतिस्थकार्यत्वकारणत्वोभय-वद्वाचकाकाशदिशब्दवाच्यमपि **आकाशादिषु** स्थितं तत्तु- अवान्तरकारणत्वेन स्थितं ब्रह्मैव, **यथा व्यपदिष्टोक्तेः**= यथा 'स योऽतोऽश्रुत' इति श्रुत्यन्तरोक्ताविदितत्वादिप्रकारसदृशप्रकारवत्तया 'यमाकाशो न वेद' इति श्रुत्या व्यपदिष्टस्य ब्रह्मण उक्तेः 'यः आकाशे तिष्ठन्' इत्यादिश्रुत्या आकाशादौ स्थित्युक्तेः, चेन 'नामानि सर्वाणि' इति श्रुतेश्चेति ॥ ब्रह्म न केवलं मूलकारण-वाचकाऽत्मशब्दवाच्यमिति भावः । आकाशादिस्थितत्वे, स्थितस्य विष्णुत्वे च, स्थित्युक्तेरिति हेतुः, तस्य वाच्यत्वे श्रुतेरिति हेतुरिति विवेकः ॥

**(२) आकाशादिष्ववान्तरकारणत्वेन स एव स्थितः । यथाव्यपदिष्टस्यैव परस्य 'य आकाशे तिष्ठन्' इत्यादिना आकाशादिषूक्तेः ॥**

**॥ इति आकाशाधिकरणम् ॥**

(२) प्रतिज्ञांशस्य सम्बन्धभाष्ये उक्तत्वात् हेत्वंशं सूत्रार्थतया व्याचक्षते - **आकाशादिष्विति ॥ स एवेति ॥** विष्णुरेवेत्यर्थः । विष्णोराकाशादौ स्थितिबोधकश्रुतिमाहुः- **य आकाश इति ॥ उक्तेरिति ॥** उक्तेः स्थित इति सम्बन्धः । उक्तेरित्यावर्तते उक्तेः= 'नामानि सर्वाणि' इति श्रुतेः 'स एवोच्यते' इति सम्बन्धभाष्येणान्वयः । 'स्थितः, तच्छब्दैः उच्यते इति शेषः' इति टीकायाः- स्थित इति सूत्रे शेषः, तच्छब्दैरिति सम्बन्धभाष्ये शेषः, उच्यत इति सम्बन्धभाष्यानुवाद इति तात्पर्यं ज्ञेयम् ॥ १५ ॥

**॥ इति कारणत्वेन च आकाशाधिकरणम् ॥ ४ ॥**

(२) **य आकाश इति ॥** (बृ.५.७.१२) **आकाशे**= तदभिमानिनि विघ्नेशे इत्यर्थः । शिष्टम्- अन्तर्यामिनयोक्तरीत्या (पृ. १७२) व्याख्येयम् ॥ १५ ॥

**॥ इति कारणत्वेनाधिकरणम् ॥ ४ ॥**

## ५. समाकर्षाधिकरणम्

**(१) सर्वशब्दानां परमात्मवाचकत्वे कथमन्यत्र व्यवहार इत्यतो ब्रवीति–**

अत्र नये- व्यवहारलोपप्रसङ्गेन अन्यत्रैव प्रसिद्धानां उक्तातिरिक्तसर्ववैदिकलौकिकशब्दानां हरौ समन्वयः। दर्शिताः शब्दाः- विषयः। विष्णुपराः ? अन्यपरा वा ? इति सन्देहः, सन्देहबीजं तु पूर्वनयवत् ॥ (८ सू. अ.)

(१) पूर्वपक्षमाहुः- **सर्वेति ॥ कथं व्यवहार इति ॥** न च 'साक्षादप्यविरोधम्' (१.२.२८) इति सूत्रोक्तरीत्या व्यवहारोपपत्तिरिति वाच्यम् । तत्र अन्यवाचकत्वानुक्तेः अवाचकैर्व्यवहारे अतिप्रसङ्गात् । न चैवमपि 'शरीररूपकविन्यस्त' इति (१.४.१) ईश्वरसम्बन्धादन्यत्र व्यवहार इति वाच्यम्- तथा सति लोके लक्षणयैव सर्वशब्दानां बोधकत्वप्राप्तेः ।

न चैवमपि- 'कल्पनोपदेशात्' (१.४.११) इति सूत्रे लोके रूढ्यादिकमङ्गीकृत्य समाधानमुक्तमिति (लक्षणाप्रयुक्तदोषो नेति) वाच्यम् । एवं सति अन्यस्यापि मुख्यवाच्यत्वसम्भवेन विष्णोरेव मुख्यवाच्यत्वमिति प्रतिज्ञाव्याघातात् । ततश्च सर्वशब्दानां भगवन्मात्रवाचित्वे अन्यत्र व्यवहारो न स्यात्, जायते च व्यवहारः, तदन्यथाऽनुपपत्या सर्वशब्दवाच्यत्वं हरेर्न सम्भवतीति भावः ।

**(स्वतो मुख्यवृत्त्या परमात्मवाचिनः शब्दान् ततः समाकृष्यान्यत्र वाचकत्वशक्त्यङ्गीकारः)**

**(२) ॥ ॐ समाकर्षात् ॐ ॥ १६ ॥**

(२) **ॐ समाकर्षादिति ॥** तत्तु इति वर्तते । सर्वशब्दः, वृत्तिः, इति शेषः । उत्तरसूत्रात् 'जगत्' इत्यपकृष्यते यथायथमावृत्तिविपरिणामौ । **अयमर्थः**- सर्वशब्दः= सर्वलौकिकवैदिकशब्दवाच्यः, तत्तु= विष्णुरेव, सर्वशब्दानां जगति वृत्तिस्तु, तस्मात् ब्रह्मणस्सकाशात् **समाकर्षात्**= समाकृष्य जगति व्यवहारादिति ।

**(३) परमात्मवाचिनः शब्दा अन्यत्र समाकृष्य व्यवह्रियन्ते ।**
**'परस्य वाचकाः शब्दा समाकृष्येतरेष्वपि ।**
**व्यवह्रियन्ते सततं लोकवेदानुसारतः ॥' इति पाद्मे ॥ १६ ॥**

(३) सूत्रतात्पर्यार्थमाहुः- **परमात्मेत्यादिना ॥** उक्तार्थे स्मृतिमाहुः-**परस्येति ॥ पाद्म इति ॥** तत्र इत्युक्तेरित्यर्थः ।

अत्रेदमवधेयम् -वृत्तिर्द्विविधा, मुख्या अमुख्या चेति । वृत्तिर्नाम पदपदार्थयोस्सम्बन्धविशेषः । मुख्या स्वाभाविकी, अमुख्या अस्वाभाविकी ॥ मुख्या द्विविधा- परममुख्या, केवलमुख्या चेति ॥ तत्र परममुख्या- निरवधिकत्वान्यानधीनत्वान्यतरवत्प्रवृत्तिनिमित्तमपेक्ष्यार्थोपस्थापिका । केवलमुख्या च- अल्पत्वान्याधीनत्वान्यतरवत्प्रवृत्तिनिमित्तमपेक्ष्यार्थोपस्थापिका ।

परममुख्या द्विविधा- महायोगः, महायोगरूढिश्चेति ॥ महायोगत्वं च भगवति अङ्गरूढिशून्यत्वम् । यथा- इन्द्रादिशब्दानां भगवति वृत्तिः । तथा च इन्द्रादिशब्दानां भगवदादिविषयभेदेन मुख्यवृत्तिद्वयमस्तीति ज्ञेयम् । महायोगरूढित्वं च भगवति अङ्गरूढिमत्वम् । यथा नारायणादिशब्दानां वृत्तिः । महायोगे, महायोगरूढौ च, विद्वद्रूढिः समा । 'विद्वद्रूढिर्वैदिका स्यात्सा योगादेव लभ्यते' इत्यानन्दमयनयाऽनुभाष्योक्तेः । योगादेव= योगार्थमविहायैवेत्यर्थः ।

केवलमुख्या वृत्तिः त्रिधा । योगः, रूढिः, योगरूढिश्चेति । योगत्वं च अवयवार्थरूपप्रवृत्तिनिमित्तमपेक्ष्यार्थबोधकत्वम् । यथा पाचकः, औपगवः, राजपुरुष इत्यादिशब्दानां वृत्तिः । इदं केवलयौगिकेषु समुदायशक्त्यङ्गीकारे एव सङ्गतं भवति । तदनङ्गीकारमते तु- योगशक्तिः कस्य शब्दस्येति विचार्यम् । न च पाचकादिशब्दा अपि केवलरूढा एवेति वाच्यम्- शब्दार्थविभागस्य आवापोद्धाराभ्यां प्रतीयमानस्य अपलापायोगात् ।

बहुलप्रयोगमात्रसिद्धा वृत्ती रूढिः । यथा घटपटादिशब्दानां वृत्तिः । न च तेऽपि शब्दा उणादिप्रत्ययान्तत्वात् यौगिका एवेति वाच्यम् । तेष्ववयवार्थानुगमादर्शनात् । उणादिप्रत्ययान्तेष्वपि यत्राऽवयवार्थप्रतीतिः, ते शब्दा यौगिका एव । अत एव जिज्ञासानयसुधायाम्- 'ॐ ब्रह्मशब्दावपि यौगिकौ' इत्युक्तम् । आनन्दमयनयसुधायामपि- इन्द्रस्य विष्णौ, पुरन्दरे च यौगिकत्वमुक्तम् ।

अवयवार्थसापेक्षा बहुलप्रयोगसिद्धा वृत्तिः- योगरूढिः । यथा पङ्कजादिशब्दानां तामरसादौ वृत्तिः । अत्रावयवार्थवत् पद्मत्वादिजातिरपि प्रवृत्तिनिमित्तमिति बोध्यम् । अतः पूर्वोक्तवृत्तिभ्यां भेदस्सिद्धः ।

अमुख्यवृत्तिर्द्विधा- लक्षणा गौणी चेति । शक्यसम्बन्धनिमित्ता वृत्तिः- लक्षणा । सा द्विविधा- रूढा, अरूढा चेति । रूढा यथा- 'राजाऽयं गच्छति' इति । यदा राज्ञा अनारूढा राजकीया शिबिका गच्छति, तदाऽयं प्रयोगः । अरूढा यथा- 'गङ्गायां घोषः' इति ॥

शक्यसादृश्यनिमित्ता वृत्तिः- गौणी । सा द्विविधा- रूढा, अरूढा चेति । आद्या यथा - मृद्गवयादौ

गवयपदस्य वृत्तिः । द्वितीया यथा- गौर्वाहीक इति । वाहीके गोनिष्ठजाड्यसदृशजाड्यनिमित्ता गोशब्दस्य वृत्तिः ।

एवं लक्षितलक्षणाऽपि ग्राह्या । सा च- स्ववाच्यवाच्ये, स्वलक्ष्यद्वारके च, लक्षणेति लक्षणान्तर्भूतैव । आद्या यथा- द्विरेफादिशब्दानां वृत्तिः । अत्र द्विरेफपदवाच्य-भ्रमरपदवाच्ये भृङ्गे द्विरेफपदस्य लक्षणा । द्वितीया यथा- 'आनन्दमय' नये आनन्दमयशब्दलक्ष्यभूताऽन्नमयादिशब्दलक्ष्ये अन्नमयादिशब्दवाच्य इत्यर्थे आनन्दमयशब्दस्य लक्षणा, इति ॥

भगवत्यपि लक्षणया शब्दप्रयोग इति **कर्मनिर्णयटीकायाम्** उक्तम् । 'तद्गुणसारत्वात्' (२.३.२९) इति सूत्रटीकायां तु - सा च लक्षणा भगवति परन्यायेनैवेत्युक्तम् ।

तत्र मुख्यवृत्तिः शक्तिरित्युच्यते । सा च पदानां प्रकृतिप्रत्यययोश्चेतरान्वितस्वार्थेऽस्ति । शक्तिग्रहः, पदार्थोपस्थितिश्च इतरान्वितस्वार्थे एव वृद्धव्यवहारेण शक्तिग्रहजननात्, तस्य चेतरान्वितस्वार्थे एव सम्भवात् । यद्यपि वृद्धव्यवहारो विशेषान्वितस्वार्थे शक्तिग्रहस्यैवोपायः, तथाऽपि विशेषान्वयस्य व्यभिचारेण 'घटमानय' इत्यादौ घटत्वादिरूपविशेषस्य परित्यागेन सामान्यरूपेतरत्वेन इतरान्वितस्वार्थे शक्तिरुपेयते ।

न चैवं विशेषान्वयप्रतिपत्तिः निर्निबन्धेनैवापद्यते, सकलपदानां सामान्यतोऽन्वितस्वार्थाभिधान एव सामर्थ्यात् इति वाच्यम् - एकैकशः पदैः सामान्यतोऽन्विततया प्रतीतोऽर्थः परस्परं सन्निधान-रूपसहकारिसहितैस्तैरेव पदैः विशेषान्विततया प्रतीयते, इत्यङ्गीकारेण विशेषान्वयग्रहोपपत्तेः । तथा च सामान्यतोऽन्वितविषयकशक्तेरेव पदान्तरसमभिव्याहारे विशेषान्वितस्वार्थविषयकत्वमपि, न त्वेकस्यैव पदस्य एकार्थविषये शक्तिद्वयकल्पनमिति बोध्यम् ।

सामान्यतोऽन्वितशक्तिग्रहप्रयोजनं तु ससम्बन्धिकशब्दस्थले गुरुरित्येव प्रयोगे कस्य गुरुरित्या-काङ्क्षोदयः । तत्र गुरुपदेन इतरनिरूपितगुरुत्ववानिति सामान्यज्ञानाभावे विशेषजिज्ञासा न स्यात् । विशेषजिज्ञासायां सामान्यज्ञानस्य कारणत्वात् ॥

न चैवं 'पदार्थः पदार्थेनान्वेति, न तु तदेकदेशेन' इति 'प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थ-बोधकत्वम्' इत्यादिन्यायानां कथं प्रवृत्तिः ? शब्दानामन्वितस्वार्थे एव शक्त्यङ्गीकारादिति वाच्यम्- कोशादेः स्वार्थव्यवस्थापकत्ववत्, न्यायानां अन्वयव्यवस्थापकत्वोपपत्तेरिति ॥ एवं पदादीनां इतरान्वितस्वार्थे शक्तिसिद्धौ वाक्ये शक्तिर्नेति सिद्धं भवति । वाक्यशक्तेः प्रयोजनाभावात् ।

नन्वेवं तुल्यन्यायेन- 'पाचकः', 'औपगवः', 'राजपुरुषः' इत्यादिकृदादिवृत्तावपि समुदायशक्तिर्नेति प्राप्नोति, मैवं - फलानुरोधेन, प्रमाणानुरोधेन च, तत्र शक्तेरावश्यकत्वात्। तथा हि - पाचक इत्यादिकृदादिवृत्तौ शक्त्यनङ्गीकारे पाचकादिशब्दानां शक्त्या अर्थोपस्थापकत्वाभावेन 'कृत्तद्धितसमासाश्च' इति सूत्रेण प्रातिपदिकत्वं न स्यात्। न च उक्तार्थवत्त्वाऽभावेऽपि कृदन्तत्वादिमात्रेण प्रतिपादकत्वं भवतीति वाच्यम्। तत्सूत्रस्थ'समास'ग्रहणस्य नियमपरत्वसिद्ध्यर्थं कृदन्तादावर्थवत्त्वस्याऽवश्यकत्वात्। कृत्तद्धितेतिसूत्रस्थसमासपदस्य नियमपरत्वानङ्गीकारे मूलकेनोपदंशमित्यादौ 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति न्यायेन कृदन्तत्वात् प्राप्तप्रातिपदिकस्य वारणासम्भवात्।

न च 'ज्ञापकसिद्धं न सर्वत्र' इति न्याये 'कृद्ग्रहण' इति न्यायस्यानित्यत्वावगमात् फलाभावाच्च 'कृत्तद्धित' इति सूत्रे तस्याप्रवृत्त्या मूलकेनोपदंशमित्यादौ न प्रातिपदिकत्वमिति वाच्यम्। एवमपि बहुच्प्रत्ययविशिष्टे बहुपटुरित्यादौ तद्धितवृत्तावर्थवत्त्वाभावेन 'अर्थवत्'सूत्रे प्रातिपदिकत्वानापत्तेः।

न च बहुपटुरित्यादाववयवार्थमादायार्थवत्त्वेन प्रातिपदिकत्वम्, एवं पाचकादावपीति वाच्यम् - तुल्यन्यायेन वाक्यस्यापि प्रातिपदिकत्वापत्तेः।

न च समासग्रहणस्य अत्र पक्षे नियमपरत्वेन वाक्यस्य मूलकेनोपदंशमित्यस्यापि प्रातिपदिकत्वं वार्यते इति वाच्यम्। एवमपि समुदायशक्त्यङ्गीकारे परमेण मूलकेनोपदंशं, परमस्यौपगवः, 'परमं धनवान्','ऋद्धस्य राजमातङ्गः',इत्यादौ मूलकादेः पदार्थैकदेशत्वात् तत्र परमादेरन्वयो न भवति। शक्त्यनङ्गीकारे तु अन्वयस्स्यादेव। तथा च तेषां प्रयोगाणां साधुत्वापत्तेः। किञ्च पीताम्बरः, केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तमित्यर्थककेशाकेशीत्यादिबहुव्रीहौ अन्यपदार्थस्य, रामलक्ष्मणावित्यादिद्वन्द्वे, इतरेतरयोगस्य, 'घटपटम्' इति द्वन्द्वे समाहारस्य, खादत मोदतेति यस्यां क्रियायां सततमभिधीयते सा इत्यर्थक खादतमोदतेत्यादितत्पुरुषे अर्थान्तरस्य च - भानानुपपत्तिः, उपस्थापकशक्त्यभावात्।

किञ्च इभपोटामित्यादौ 'अम्'प्रत्ययार्थकर्मत्वस्य इभपदार्थेऽन्वयो न स्यात्- अप्रकृत्यर्थत्वात्। प्रकृतित्वं च - प्रत्ययाव्यवहितपूर्ववृत्तित्वमिति। कृदादिवृत्तौ शक्तिग्राहकं तु 'समर्थः पदविधिः' इति सूत्रम्। यदि च कृदादिवृत्तौ कचित्पूर्वपदस्य कचिदुत्तरपदस्य कचित्प्रकृत्यादेर्विवक्षितार्थे लक्षणया उक्तसर्वनिर्वाहः क्रियते इत्युच्यते, तदा प्रमाणसिद्धशक्तिं परित्यज्य अप्रामाणिकलक्षणाकल्पनं महान् दोषः प्रसज्यते।

न च 'समर्थ' सूत्रमेव लक्षणायां मानमिति वाच्यम्- अनुशासनस्य लक्षणाग्राहकत्वायोगात् । व्याकरणस्य शक्तिग्राहकत्वेन प्रसिद्धेः । तुल्यन्यायेन कोशादिरपि नानार्थस्थले एकस्मिन्नर्थे शक्तिग्राहकः, अन्यस्मिन्नर्थे लक्षणाग्राहकश्च स्यात् । तस्मात् फलानुरोधेन, प्रमाणानुरोधेन च, कृदादिवृत्तौ शक्तिः सिद्धा ।

**तर्कताण्डवे तु**- बहुव्रीहौ, द्वन्द्वे, एकशेषे च, शक्तिरुक्ता । तत्पुरुषे, अव्ययीभावे, केवलयौगिके च शक्तिर्नोक्ता । केवलयौगिके शक्तिर्नेत्यत्र- 'यौगिका हि शब्दाः नावश्यमर्थप्रत्ययनार्थं सङ्गतिग्रहणमपेक्षन्ते, वाक्यरूपत्वात्तेषां, इति सुधासम्मतिरुक्ता । तस्य तर्कताण्डवग्रन्थस्यायं भावो भाति- यत्र प्रातिपदिके अवयवार्थातिरिक्तार्थो न भासते- 'पाचकः' इत्यादौ, तत्र समुदायशक्तिर्नास्ति- यत्र तु भासतेऽधिकार्थः, तत्र समुदायशक्तिरस्ति - यथा पीताम्बरादिबहुव्रीहौ, 'घटपटम्' इति द्वन्द्वे, 'खादतमोदत' इत्यादितत्पुरुषे च । समर्थसूत्रं तु व्यपेक्षालक्षणसामर्थ्यग्राहकं, न तु शक्तिग्राहकम् । उक्तबहुव्रीह्यादौ शक्तिग्राहकाणि तु - 'अनेकमन्यपदार्थे, तत्र तेनेदमिति सरूपे, चार्थे द्वन्द्वे, आख्यातमाख्यातेन क्रियासातत्ये' इत्याद्यनुशासनानि । 'ऋद्धस्य राजमातङ्गः' इत्यादौ ऋद्धादेः राजादावन्वयाभावस्तु 'वृत्तस्य विशेषणं न प्रयुज्यते' इति महाभाष्योक्तवचनेन वक्तव्यः इति ॥

इदं पुनरत्र तत्त्वम्- अन्विताभिधानवादे पदनिचयश्रवणोत्तरं जायमाना अन्वितपदार्थोपस्थितिरेव वाक्यार्थबोधरूपः शाब्दबोधः, न तु पदश्रवणवाक्यार्थयोर्मध्ये अवान्तरव्यापाररूपा पृथगस्ति । तदुक्तं जिज्ञासानयसुधायाम्- 'पदनिचयश्रवणवाक्यार्थबोधावन्तरा पदार्थस्मृतीनामेवानभ्युपगमात्' इति ॥ अनुभाष्येऽप्युक्तं- 'प्रवृत्तिश्च द्विधाऽन्यथा' इति । द्विधा प्रवृत्तिः पदानां क्रमेण पदार्थोपस्थापकत्वं वाक्यार्थबोधकत्वं चेति, विरम्य व्यापारः प्रसज्यते इति तदर्थः ।

न चैवं सति 'हे चैत्र त्वं जलाहरणार्थमच्छिद्रं घटमानय' इत्यादावेकवाक्यत्वं न स्यात् । एकवाक्यत्वं च- साक्षात् परम्परया वा स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकयावत्पदविशिष्टपदत्वम् । तच्च विशिष्टविषयकैकबोधाङ्गीकारे एव सम्भवति, न त्वनेकखण्डबोधाङ्गीकारे इति वाच्यम्- तद्वाक्यघटकयावत्पदार्थानां योग्यत्वेन तदर्थान्वितस्वार्थे शक्त्यङ्गीकारेण एकवाक्यत्वसिद्धेः । तथा च उक्तवाक्ये अच्छिद्राभिन्नघटकर्मकजलाहरणोद्देश्यकयुष्मत्पदार्थकर्तृकाऽनयने आनयपदस्य शक्तिः, बोधोऽपि तथैव, एवं पदान्तरस्यापीति बोध्यम् । उदीच्यमानसबोधानुरोधेन वा एकवाक्यत्वम् ।

न च सर्वपदानां विशिष्टपदार्थोपस्थापकत्वे पौनरुक्त्यं पदानामिति वाच्यम् - यथा 'चैत्रः पचति' इत्यादौ सुप्तिङेकवचनाभ्यां एकस्यैव एकत्वस्य, द्वौ ब्राह्मणावित्यादौ द्विशब्द-औप्रत्ययादिना एकस्यैव

द्वित्वादेः प्रतिपादनेऽपि पौनरुक्त्यं न दोषाय भवति, तथा प्रकृतेऽपि इति वक्तुं शक्यत्वात्। सर्वेषां पदानामितरान्वितस्वार्थ एव शक्तिः, विशेषार्थोपस्थितिस्तु- एकेनैव पदेनेति स्वीक्रियते, अतो न पौनरुक्त्यमिति कश्चित् । एवं च परममुख्यवृत्त्या ब्रह्मवाचकानामेव शब्दानां मुख्यवृत्त्या जगद्वाचकत्वाङ्गीकारात् अन्यवाचकत्वेऽपि शब्दानां ब्रह्मणि समन्वयविरोधो नेति ॥१६॥

**तर्हि कथं तेषां शब्दानां जगति प्रसिद्धिः?**

उक्तम्- मुख्यवृत्त्या जगद्वाचकत्वरूपार्थमाक्षिपन्ति- **तर्हीति** ॥ सर्वशब्दानां परमात्मन्येव मुख्यत्वे, जगति समाकर्षे चेत्यर्थः। **प्रसिद्धिरिति** ॥ परमात्मन्येव प्रसिद्धिस्स्यात्, न तु जगतीत्यर्थः। जगति च प्रसिद्धिर्दृश्यते, तदन्यथानुपपत्त्या जगत्येव मुख्यत्वं स्यात्सर्वशब्दानामिति भावः ।

(३) **परस्येति** ॥ सततं= अनादिकालतः स्वभावतः **परस्य**= विष्णोः **वाचकाश्शब्दाः**= परममुख्यवृत्त्या वाचकत्वेन स्थितास्सर्वे शब्दाः **समाकृष्य**= परमात्मसम्बन्धात्सङ्गृह्य **लोकवेदानुसारतः**= लोक-वेद-व्यवहारमनुसृत्य **इतरेष्वपि** पदार्थेषु, वैदिकैः **व्यवह्रियन्ते**= मुख्यवृत्त्या केवलरूढत्वेनाऽङ्गी-क्रियन्ते, इत्यर्थः । तथा च सर्वेषामपि शब्दानां परममुख्यवृत्त्या परमात्मवाचकत्वमिति सिद्धम् ॥ १६-१७ ॥

**(सर्वशब्दानां विष्णुप्रतिपादकत्वेऽपि जगति प्रसिद्धिरभ्युपगता)**

**(४) ॥ ॐ जगद्वाचित्वात् ॐ ॥ १७ ॥**

**जगति व्यवहारो लोकस्य। न तु परमात्मनि तथा। अतो जगति प्रसिद्धिः शब्दानाम् ॥ १७ ॥**

(४) **ॐ जगद्वाचित्वादिति** ॥ पूर्वसूत्रे अध्याहृतं सर्वशब्दानां इत्येतदनुवर्तते। जगदिति भिन्नं पदं, प्रसिद्धिरिति शेषः । यथायथमावृत्तिविपरिणामौ । **अयमर्थः**- **जगतः**= अज्ञलोकस्य सर्वशब्दानां **जगद्वाचित्वात्**= जगति व्यवहाराद्धेतोः, **जगद्वाचित्वात्**= जगत्येव व्युत्पत्तेः जगति प्रसिद्धिः, इति ॥

सूत्रतात्पर्यमाहुः-**जगतीति** ॥ **व्यवहार इति** ॥ बहुलव्यवहार इत्यर्थः । अस्य यथा इत्यादिः । **लोकस्य**= अज्ञजनस्य । **तथेति** ॥ तादृशो बहुलो व्यवहार इत्यर्थः । **अत इति** ॥ जगत्येव बहुलव्यवहारादित्यर्थः । कथं प्रसिद्धिरिति शङ्कायाः अतः प्रसिद्धिरित्युत्तरम् ॥ १७ ॥

(जीव-देवादिप्रतिपादकवचनानि अन्तर्यामिपरतया नेयानि)

## (५) ॥ ॐ जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॐ ॥ १८ ॥

(५) सर्वशब्दसमन्वये तदधीनप्रवृत्तिनिमित्तकत्वं, निमित्तमुक्तं, तदाक्षिप्य समाधानाय सूत्रम्- ॐ **जीवमुख्येति** ॥ तदधीनत्वादर्थवत्, शब्दजातं, नेति मण्डूकप्लुत्या वर्तते । युक्तमिति शेषः । यथायथमावृत्तिविपरिणामौ । भावप्राधान्यं च । **अयमर्थः**- शब्दजातं तदधीनत्वादर्थवत् इति न युक्तम् । तदधीनत्वस्य= अधीनतानिरूपकत्वस्य, **जीवमुख्यप्राणलिङ्गात्**= 'अस्य यदेकां शाखां जीवो जहाति' इति, 'वायुना हि सर्वे लोकाः' इति श्रुतिभ्यां जीवमुख्यप्राणलिङ्गत्वाऽवगमात् जीवमुख्यप्राणयोरपि मुख्यवाच्यत्वं स्यादिति यावत्, इति चेत्- **तत्**= लिङ्गं **व्याख्यातम्**= 'उपासात्रैविध्यात्' (१.१.३१) इति सूत्रभागेन अन्तर्यामिपरतया व्याख्यातमिति ॥

एवञ्च- तत्रापि अन्तर्यामिण एव बोधात् जीवमुख्यप्राणयोर्मुख्यत्वं नेति भावः । सौत्रेतिना यद्यद्विभूतिमत्सत्वम् (गी.१०.४१) इति वचनमपि लिङ्गस्य भगवत्परत्वे हेतुतया नेयमिति सूचितमिति बोध्यम् ॥

**(६) तदधीनत्वात्तच्छब्दवाच्यत्वमित्युक्तम् । तज्जीवमुख्यप्राणयोर्लिङ्गम् । 'अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति' (छा.उ. ६-११-२) 'वायुना हि सर्वे लोका नेनीयन्ते' इत्यादिश्रुतिभ्य इति चेन्न । उपासात्रैविध्यादिति व्याख्याततत्वात् ॥ १८ ॥**

(६) सूत्रतात्पर्यमाहुः- **तदधीनत्वादिति** ॥ **तदिति** ॥ तदधीनत्वमित्यर्थः । **जीवमुख्यप्राणयोरिति** ॥ तयोरपीत्यर्थः । लिङ्गमित्यन्तेन उक्तेऽर्थे श्रुती आहुः- **अस्येत्यादि** ॥ १८ ॥

(६) **अस्येति** ॥ (छा.६.११.२) **जीवः**= अनिरुद्धाख्यः परमात्मा, **अस्य**= जीवाख्यवृक्षस्य एकां **शाखां यदा जहाति**= त्यजति, **अथ** तदा **सा**= शाखा शुष्यति इत्यर्थः । एवं 'द्वितीयाम्' इत्याद्युत्तरवाक्यस्याप्यर्थो बोध्यः । अयमर्थः **सिद्धान्ते** । पूर्वपक्षे तु जीवशब्दः- जीवपरः ॥

**वायुना हीति** ॥ **वायुना**= मुख्यप्राणेन, **सर्वे लोकाः**= जनाः, **नेनीयन्ते** स्वस्वकर्मसु भृशं प्रेर्यन्ते, ऊर्ध्वलोकं वा भृशं नेनीयन्ते इत्यर्थः । अयं पूर्वपक्षे । **सिद्धान्ते** तु - तदन्तर्यामिपरमात्मपरेयं श्रुतिः । आदिना 'वायुना हि गौतम' (बृ.५.७.२) इत्यादेर्ग्रहणम् ॥ १८ ॥

**(परमात्मज्ञानार्थमेव कर्मादिनिरूपणमिति जैमिनिर्मन्यते)**

## (७) ॥ ॐ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॐ ॥ १९ ॥

(७) लौकिकशब्दानां समाकर्षे जगति व्यवहारः प्रयोजनम्, वैदिकशब्दानां समाकर्षे प्रयोजनं तु नास्ति । न च कर्मसिद्धिः फलम्, वेदबोधितनित्यफलस्य मोक्षस्य ज्ञानेनैव सिद्धौ कर्मणः फलाभावादिति शङ्कावारणाय सूत्रम्- **ॐ अन्यार्थन्त्विति** ॥ अत्रान्यशब्दो जगद्विलक्षणब्रह्मज्ञानपरः । तुः मुमुक्षूणामिति विशेषद्योतकः । जगद्वाचित्वात्, समाकर्षात्, शब्दानां इति वर्तते । यथायथमावृत्तिविपरिणामौ । मन्यते पठन्तीति शेषः ॥ **अयमर्थः**- शब्दानां (कर्मादिबोधक) वैदिकशब्दानां समाकर्षात् जगद्वाचित्वं= कर्मदेवतादिजगद्वाचकत्वम् **अन्यार्थं तु**= मुमुक्षूणां ब्रह्मज्ञानार्थमेव । **प्रश्नव्याख्यानाभ्यां**= 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति प्रश्न- 'द्वे विद्ये वेदितव्ये' इत्यादिप्रत्युत्तराभ्यां, 'कथं नु भगवः स आदेशो भवति' इति प्रश्ने- 'यथा सोम्येकेन' इत्यादि प्रत्युत्तराभ्यां, **च**= यतः, **एके** शाखिनः= बह्वृचाः **एवमपि**= कर्मादिकस्य ब्रह्मज्ञानार्थत्वं स्पष्टं च 'यस्तं न वेद किमृचा करिष्यति' इति पठन्ति अतश्च, इति जैमिनिराचार्यो मन्यते इति ॥

**(८) परमात्मज्ञानार्थं कर्मादिकमपि वदतीति जैमिनिः । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति । तस्मै स होवाच द्वे विद्ये वेदितव्ये' (मु.उ. १-१३-४) ॥**

**(९) 'कथं नु भगवः स आदेशो भवतीति । यथा सोम्य एकेन मृत्पिण्डेन' इति (छा.उ. ६-१-३-४) इत्यादिप्रश्नव्याख्यानाभ्याम् । एवमपि चैके पठन्ति ।**

(८) सूत्रसाध्यांशमाहुः- **परमात्मज्ञानार्थमिति** ॥ श्रुतिर्मन्यत इति शेषः । प्रश्नादिकमाहुः- **कस्मिन्नित्यादि** ॥ अन्यज्ञानस्य ब्रह्मज्ञानार्थत्वं न केवलं प्रश्नादिलिङ्गादेव, किं तर्हि स्पष्टश्रुत्याऽपि, इति श्रुतिमाहुः- **यस्तं न वेदेति** ॥ **इतीति** ॥ यथा च- यतः एके शाखिनः एवमन्यज्ञानस्य ब्रह्मज्ञानार्थत्वमेव 'यस्तं न वेद किमृचा करिष्यति' इत्यनेन पठन्त्यपि= स्पष्टं प्रतिपादयन्ति च, अतश्च श्रुतिः कर्मादिकं वदतीति जैमिनिर्मन्यत इति सम्बन्धः ॥ १९ ॥

(८) **कस्मिन्नु भगव इति** ॥ (आ.(मु.) १.३.४) एकविज्ञाने सर्वविज्ञानस्य प्रसक्त्यभावेन न तद्विषयकप्रश्नोऽयम् । किन्तु- कर्मकाण्डस्य उपनिषदः पूर्वं प्रसक्तत्वेन तद्विषयकोऽयं प्रश्नः । तथाहि -

कर्मकाण्डे कर्मणः अस्थिराल्पफलश्रवणात्, तेनातृप्तस्सन् नित्यफलं केन सिद्ध्येदिति पृच्छति- **कस्मिन्निति ॥ कस्मिन् विज्ञाते** सति **सर्वमिदं** कर्मादिकं **विज्ञातं भवति**= विज्ञातफलकं भवेदित्यर्थः। उत्तरमाह- **तस्मै स होवाच- द्वे विद्ये इति ॥** अत्र विद्याशब्दः करणसाधनः, ज्ञानजनकशास्त्रपरः। **द्वे**= द्विविधे **विद्ये**= ज्ञानजनकशास्त्रे इति यत् यथाऽवस्थितं, **ब्रह्मविदो वदन्ति, ह स्म**= प्रसिद्धम् । पराऽपरेति वक्ष्यमाणविभागानुसारेण द्विवचनम् । **परत्वं**- भगवत्प्रतिपादकत्वम् । **अपरत्वं**- भगवज्ज्ञानाङ्गत्वेन कर्मादिप्रतिपादकत्वमिति उपाधिभेदेन एकस्या एव विद्याया भेदः, न तु वस्तुतो व्यक्तिभेदः। स्पष्टमिदं **जिज्ञासाऽधिकरणसुधादौ ॥ इति तस्मै** शौनकाय **सः** अङ्गिराः **उवाच ह,** इत्यर्थः ।

तथा च अपरविद्याऽवगतं कर्मादिकं परविद्याविषयकज्ञानेन स्थिरानल्पफलकं भवेदिति विशिष्टप्रत्युत्तरवाक्यार्थः फलतीति ज्ञेयम् । अयं चार्थः अग्रे अस्यामेवोपनिषदि स्पष्टः ।

तथाहि - (आ.२.९) नवमे मन्त्रे- 'यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते' इत्यनेन कर्मिणां अस्थिरफलमुक्त्वा- 'सूर्यद्वारेण विरजाः प्रयान्ति, यत्राऽमृतः पुरुषो ह्यव्ययात्मा' (११) इत्यनेन ब्रह्मज्ञानस्य नित्यफलकत्वमुक्तम् । 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्' (आथ.२.१२) इति मन्त्रे कर्मणः अनित्यफलकत्वमुक्त्वा ब्रह्मज्ञानाय यत्नः कर्तव्यतया उक्तः । एवञ्जातीयकमन्यदप्युक्तम्। एवं च उपनिषत्समाप्तिपर्यन्तं (प्रश्नस्य) परिहारवाक्यत्वेन (अस्य वाक्यस्य) उक्त एवार्थ इति ॥

**बृहदारण्यके**- 'यो वा एतदक्षरमविदित्वा अमुष्मिंल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि अन्तवदेवास्य तद्भवति' (५.८.१०) इत्यनेन ब्रह्मज्ञानेन विना कर्मणो नित्यफलं नेत्युक्तम् । **छान्दोग्येऽपि**- 'यदेव विद्यया करोति तदेव वीर्यवत्तरम्' (१.१.८) इत्यनेन ज्ञानपूर्वककर्मणो नित्यफलमुक्तम् ।

(९) **कथं नु इति ॥** (छा.६.१.१) 'उत तमादेशमप्राक्ष्यः, येनाऽश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति, कथं नु भगवः स आदेशो भवतीति (३), यथा सोम्य एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रूयते । श्रुतेन, मतेन, विज्ञातेनेति अर्थाल्लभ्यते । **शेषो वा** । श्रुतादिपदषट्कं तत्फललक्षकं वा, यथाश्रुतं वाऽस्तु । अयमर्थः- हे **सोम्य** ज्ञानभक्त्यादिलक्षण सोमार्ह ! त्वम्- **अश्रुतं**= श्रुतफलशून्यम्, **अमतं**= मतफलशून्यम्, **अविज्ञातं**= विज्ञातफलशून्यं द्वादशवर्षं गुरुसकाशात् त्वया श्रवणादिविषयीकृतं कर्मदेवतादिकं **श्रुतेन**= श्रवणविषयी-

कृतेन, **मतेन**= मननविषयीकृतेन, **विज्ञातेन**= विज्ञानविषयीकृतेन (विशेषज्ञानविषयीकृतेन- उपासना-विषयीकृतेनेति यावत्) येन परमात्मना श्रुतं मतं विज्ञातं श्रुतादिफलकं भवति ।

यद्वा- **अश्रुतं**= श्रवणफलाऽनवाप्तेरश्रुतप्रायम् येन श्रुतेनाश्रुतं भवति तत्फलावाप्तेः, एवमुत्तरत्राप्यर्थो बोध्यः । **तमादेशं**= उपदेशविषयं विष्णुम् **अप्राक्ष्यः उत**= श्रुतवानसि किं ? प्रायो न श्रुतवानेवासि, इत्युवाचोद्दालकः । अथ श्वेतकेतुः- **भगवः**= भगवन् पूज्य, **सः**= एकविज्ञानेन सर्वविज्ञानस्य फलवत्त्वप्रकाशक आदेशः, **कथं नु**= कीदृशो भवति = स्यात्, तमुपदेशं अहं कथं विजानीयाम् ? इति तात्पर्यम् । इति पप्रच्छ । अथ उत्तरमाहोद्दालकः- हे **सोम्य एकेन मृत्पिण्डेन विज्ञातेन**= अविज्ञातं घटत्वादिना ज्ञातमपि तत्फलशून्यं सर्वं **मृन्मयं**= मृद्विकारजातं घटादिकं **विज्ञातं स्यात्**= विज्ञातफलकं स्यात्, घटत्वेन ज्ञानमात्रेण दधिनिक्षेपादिफलाऽलाभेन मृत्त्वेन ज्ञाने सत्येव दधिनिक्षेपादिरूपफल-विशिष्टत्वात् मृत्पिण्डे ज्ञाते सति सादृश्यात् घटादीनां मृत्वेन ज्ञातं भवतीति तात्पर्यार्थः ।

उदाहरणान्तरमाह- **वाचेति** ॥ विज्ञातमिति वर्तते । वाचया आरम्भणं यस्येति बहुव्रीहिः । 'कृत्यल्युटो बहुलम्' इति कर्मल्युडन्तं, पृथक्पदं वा । अयमर्थः- **वाचारम्भणं**= वागिन्द्रियेणोत्पाद्यमानं, **विकारः**= विविधप्रकारः, प्रकारप्रकारिणोरभेदात् । उच्चारयितृपुरुषभेदेन नानाप्रकारवत् इति यावत् । **नामधेयं**= संस्कृतेतरभाषा (रूप) शब्दस्वरूपं **विज्ञातं**= विज्ञातफलकं भवति, **सत्यं**= सदातनं, नित्यमिति यावत्, मृत्तिकेत्यादिरूपं **नामधेयं**= संस्कृतशब्दस्वरूपं **विज्ञातमेव**= विज्ञातं चेत् इति । तथा च उक्तरीत्या प्रधाने संस्कृतशब्दे ज्ञाते सति अप्रधानं असंस्कृतशब्दस्वरूपं विद्वद्व्यवहारगोचरत्वादिज्ञातफलकं भवतीति भावः।

केचित्तु- **वाचारम्भणं**= वाचा कल्प्यमानं **विकारः**= विविधप्रकारवत् व्याकरणप्रणेतृपुरुषमतिभेदेन विभिन्नविभिन्नरूपम्, **नामधेयं**= व्याकरणशास्त्रसिद्धाऽलौकिकप्रक्रियावाक्यरूपं शब्दजातं **विज्ञातं**= विज्ञातफलकं भवति, **सत्यं**= सदातनं साधुभूतं वा, **मृत्तिकेति**= मृत्तिकेत्यादि संस्कृतरूपं नामधेयं शब्दस्वरूपं **विज्ञातमेव**= विज्ञातं चेदित्यर्थः । प्रधाने साधुशब्दे ज्ञाते, अप्रधानं अलौकिकप्रक्रियावाक्य-फलवद्भवतीति भावः इति वदन्ति ।

## (१०) 'यस्तन्न वेद किमृचा करिष्यति' इति (ऋ.उ.१–१६४–३९) ॥

(१०) **यस्तं न वेदेति** ॥ (ऋ.१.१६४.३९) 'ऋचोऽक्षरे परमे व्योमन् । यस्मिन् देवा अधिविश्वे निषेदुः यस्तं न वेद किमृचा करिष्यति य इत्तद्विदुः, त इमे समासते' इति पठ्यते । अयमर्थः- **तत्**= अक्षरं= विष्ण्वाख्यं ब्रह्म **यः** सर्ववेदमुख्यार्थत्वेन **न वेद**, किन्तु इतरदेवतासाधारणमेव वेद, सः **ऋचा**= कर्मादिपरैः

वेदैः, तदुक्तार्थानुष्ठानादिभिः इति यावत्, **किं करिष्यति**= न किमपि, यतः **सर्वा ऋचः** सेतिहासाः **सर्वे वेदाः परमे**= सर्वोत्तमे, **व्योमन्**= व्यापके अच्छेद्यत्वादिना व्योमनिभे वा, **अक्षरे**= विष्णौ, तज्ज्ञानार्थमिति यावत्, सर्वं कर्मदेवतादिकं वदन्ति । यतः **यस्मिन्**= ब्रह्मणि **विश्वे**= सर्वे देवाः, **अधिनिषेदुः**= वर्तन्ते, तदाधारतया वर्तन्ते । **ये इत्**= इत्थमुक्तप्रकारेण, **तत्**= अक्षरं **विदुः**= जानन्ति, **ते इमे**= प्रकृता देवाः, **समासते**= सम्यक् आसते = सङ्कल्पमात्रसिद्धयथेष्टभोगास्सन्तः परमात्मानि प्रविशन्ति, अत इति ॥ १९-२० ॥

**(ब्रह्मणि वाक्यसमन्वयमपेक्ष्य वेदेन कर्मादिकमपि प्रतिपाद्यते)**

## (११) ॥ ॐ वाक्यान्वयात् ॐ ॥ २० ॥

**(११) ननु ब्रह्मज्ञानार्थं कर्मादिकं श्रुत्या न कथनीयम् ब्रह्ममात्रकथनेऽपि ब्रह्मज्ञानसम्भवात् । न च व्युत्पत्यर्थमन्यकथनमिति वाच्यम् । खण्डपदानामेव अन्यवाचकत्वाभ्युपगमेन व्युत्पत्त्युपपत्तेः । तथा च कर्मादिषु समाकर्षो व्यर्थ इति शङ्कावारणाय सूत्रम्- ॐ वाक्यान्वयादिति ॥ अन्वयादिति ल्यब्लोपे पञ्चमी । शब्दानां, अन्यार्थं तु, समाकर्षात् जगद्वाचित्वमिति वर्तते । युक्तमिति शेषः । अन्येति लुप्तषष्ठ्यन्तं, पृथक्पदं च । अयमर्थः- अन्येषां= उत्तमभिन्नाधिकारिणां, अन्यार्थं= ब्रह्मज्ञानार्थं, वाक्यान्वयात्= वाक्यस्य= कर्मादिबोधकवाक्यस्य, अन्वयं= परमात्मसम्बन्धमपेक्ष्यापि शब्दानां= वैदिकशब्दानां, समाकर्षेण जगद्वाचित्वं युक्तम् इति । तथा च वाक्यान्वयानङ्गीकारे मध्यमाद्यधिकारिणां पदसमन्वये योग्यताऽभावेन ब्रह्मज्ञानं न स्यादिति भावः ।**

## (१२) वाक्यस्याप्येवमन्वयो युज्यते पृथक्पृथक्स्थितस्यापि परमात्मना ॥ २० ॥

**(१२) सूत्रार्थमाहुः- वाक्यस्येति ॥ अयं भाष्यार्थः- एवं= वैदिकशब्दानां कर्मादिबोधकत्वस्वीकारे एव पृथक् पृथक् अत्यन्तभिन्नार्थेषु स्थितस्य वाक्यस्यापि परमात्मना सम्बन्धो युज्यत इति ॥ पृथगित्यत्र द्विरुक्त्या अत्यन्तेत्यर्थो लब्धः । परमात्मना सम्बन्धश्च- अन्ततो भगवत्परत्वं, तच्च उत्तरसूत्रेषु स्फुटीभविष्यति ॥ २० ॥**

**(ब्रह्मज्ञानस्यैव मोक्षसाधनत्वज्ञापनाय वेदेन कर्मादिनिरूपणम्)**

## (१३) ॥ ॐ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॐ ॥ २१ ॥

(१३) अन्यवचनस्यापि ब्रह्मज्ञानार्थत्वप्रकारप्रदर्शनाय सूत्रम्- **ॐ प्रतिज्ञेति ॥** प्रतिज्ञेति कर्मणि अङन्तम् । शब्दानां, जगद्वाचित्वं, अन्यार्थं, मन्यते, इति वर्तते । **अयमर्थः**- शब्दानां= वैदिकशब्दानां

जगद्वाचित्वं **प्रतिज्ञासिद्धेः**= 'नान्यः पन्थाः' इत्यन्यमार्गनिषेधपूर्वकं ब्रह्मज्ञानस्य मोक्षसाधकत्वरूप-प्रतिज्ञातार्थनिश्चयस्य **लिङ्गं**= हेतुः, इत्येवं अन्यार्थं= ब्रह्मज्ञानार्थं इति **आश्मरथ्याचार्यः** मन्यते इति ॥

**(१४) 'नान्यः पन्था अयनाय विद्यते' (तै.आ. ३-१२-७) इति प्रतिज्ञासिद्धेः लिङ्गत्वेन कर्मादिकमुच्यत इत्याश्मरथ्यः । यस्मादेवमनित्यफलमन्यत् तस्मान्नान्यः पन्था इति ॥ २१ ॥**

(१४) श्रुत्युदाहरणपूर्वकं सूत्रार्थमाहुः- **नान्य इति** ॥ **इतीति** ॥ इति श्रुत्या **प्रतिज्ञासिद्धेः**= प्रतिज्ञातार्थनिश्चयस्य, **लिङ्गत्वेन**= हेतुतया उच्यत इत्यर्थः । कर्मादिवचनस्य उक्तप्रतिज्ञाहेतुत्वमुप-पादयन्ति- **यस्मादिति** ॥ यस्मात्कारणात् **एवं**= सपरिकरं **अन्यत्**= कर्मादिकम् । **अनित्यफलम्**= 'अमृतो वा व सोमपो भवति यावदिन्द्र' इत्यादिनाऽवगतदुःखसमानाधिकरणविनाशिफलवत्, तस्मात् **अन्यः**= कर्मादिः, **अयनाय**= मोक्षाय, **पन्थाः** मार्गः न इत्यर्थः । एवञ्च 'परीक्ष्य लोकान्' (आ. २.१२) इति- कर्मफलानित्यत्वज्ञानपूर्वकं ब्रह्मज्ञानं सम्पादनीयं मोक्षायेति प्रतिपादनात् उक्त-प्रतिज्ञाहेतुः कर्मादिकमिति भावः ॥ २१ ॥

(१४) नान्य इति ॥ (तै.आ.३.१३.४०) व्याख्यातम् (पृ. ६९) ॥ २१ ॥

**(मोक्षसाधनज्ञानस्य चित्तशुद्धिद्वाराऽङ्गभूतं कर्मादिकम्)**

**(१५) ॥ ॐ उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॐ ॥ २२ ॥**

**उत्क्रमिष्यतो मुमुक्षोः कर्मादिना भाव्यं साधनसाधनत्वेन अतस्तद्वक्तीत्यौडुलोमिर्मन्यते ॥ २२ ॥**

(१५) प्रकारान्तरेण अन्यवचनस्य ब्रह्मज्ञानार्थत्वप्रतिपादनाय सूत्रम्- **ॐ उत्क्रमिष्यत इति** ॥ शब्दानां, जगद्वाचित्वात्,अन्यार्थन्तु, मन्यते, इति वर्तते । यथायथं विपरिणामः,भावप्राधान्यं च । **अयमर्थः**- शब्दानां= वैदिकशब्दानां जगद्वाचित्वस्य अन्यार्थत्वं तु= (ब्रह्मज्ञानार्थत्वं तु) **उत्क्रमिष्यतः**= मुमुक्षोः= ज्ञानेन मोक्षमिच्छोः **एवं**= ज्ञानसाधनत्वेन **भावात्**= कर्मणोऽवश्यंभावात् इति **औडुलोम्याचार्यो** मन्यत इति ॥ एवञ्च- मोक्षसाधनज्ञानस्य चित्तशुद्धिद्वारा अङ्गभूतं कर्मादिकं वक्तुं श्रुतिः प्रवृत्तेति भावः ।

सूत्रार्थमाहुः- **उत्क्रमिष्यत इति** ॥ **साधनसाधनत्वेनेति** ॥ मोक्षसाधनज्ञानसाधनत्वेनेत्यर्थः । **अत इति** ॥ साधनसाधनत्वादित्यर्थः । तत्= कर्मादिकं, **बक्तीति** ॥ वेद इति शेषः ॥ २२ ॥

**(भगवतः कर्माद्याधारत्वज्ञानाद्याधेयभूतकर्मादिस्वरूपं वेदेन प्रतिपाद्यते)**

## (१६) ॥ ॐ अवस्थितेरिति काशकृत्स्नः ॐ ॥ २३ ॥

(१६) रीत्यन्तरेण अन्यज्ञानस्य ब्रह्मज्ञानार्थत्वोपपादनाय सूत्रम्= **ॐ अवस्थितेरिति** ॥ शब्दानां जगद्वाचित्वात्, युक्तं, मन्यते, तत्, अन्यार्थम् इति वर्तते । अवस्थितेरिति ल्यब्लोपे पञ्चमी । यथायथमावृत्तिविपरिणामौ भावप्राधान्यं च । **अयमर्थः**- शब्दानां = वैदिकशब्दानां जगद्वाचित्वं युक्तम् । जगतस्तस्मिन् ब्रह्मणि **अवस्थितेः**= अवस्थितिमनुसृत्य अन्यार्थत्वात्= सर्वाधारत्व-प्रकारकब्रह्मज्ञानार्थत्वात् **इति काशकृत्स्नाचार्यो** मन्यत इति ॥ तथा च सर्वाधारत्वप्रकारकज्ञानस्य आधेयज्ञानपुरस्सरत्वादिति भावः ॥

**(१७) सर्वं परमात्मन्यवस्थितमिति वक्तुं तद्वचनमिति काशकृत्स्नः ।**

**'कृष्णद्वैपायनमतादेकदेशविदः परे ।**
**वदन्ति ते यथाप्रज्ञं न विरोधः कथञ्चन ॥' इति पाद्मे ॥ २३ ॥**

**॥ इति समाकर्षाधिकरणम् ॥**

(१७) सूत्रतात्पर्यमाहुः- **सर्वमिति** ॥ **वक्तुमिति** ॥ **'एष सेतुर्विधरण'** (बृ.६.४.२२) इत्यादौ प्रतिपादयितुम् । **तद्वचनम्**- कर्मादिप्रतिपादनमित्यर्थः । एवं कर्मादिवचनस्य जैमिन्यादिमतभेदेन ब्रह्मज्ञानार्थत्वमुक्तम्, स्वमतं तु कुतो नोक्तम् ? उक्तमतानामेव स्वमतत्वे जैमिन्यादिग्रहणं व्यर्थं, विरुद्धमतानामेकत्वं च न सम्भवत्येव, एकस्यैव वेदस्य अनेकाभिप्रायश्चायुक्त इत्यत आहुः- **कृष्णद्वैपायनेति** ॥ **पाद्मे इति** ॥ पाद्मे इत्युक्तेरित्यर्थः । मतानां न विरोध इति शेषः । उक्तसर्वमतानुरोधेन श्रुतितात्पर्यं वक्तुं शक्यमिति भावः । 'कारणत्वेन' इति(१५) सूत्रादारभ्य **नवसूत्री- एकाधिकरणतया व्याख्याता तत्वप्रदीपे** ॥ २३ ॥

॥ इति समाकर्षाधिकरणम् ॥ ५ ॥

(१७) **कृष्णद्वैपायनेति** ॥ **परे**= जैमिन्याद्याः, **कृष्णद्वैपायनमतात्** मतमपेक्ष्य, **एकदेशविदः** एव=

तन्मतैकदेशज्ञा एव । **ते यथाप्रज्ञं**= स्वबुद्धिमपेक्ष्य (स्वबुद्ध्यनुसारेणेति यावत्) यतो **वदन्ति**, अर्थमिति शेषः । अतः **कथञ्चन**= (कथमपि) मतानां **विरोधो नेत्यर्थः** ।

यद्वा- **परे ते**= जैमिन्यादयः, **कृष्णद्वैपायनमतात्** (मतेषु मध्ये) यत **एकदेशविद** एव, अतः तान् व्यासशिष्यान् **वदन्ति** (जनाः) अतः **कथञ्चन मतानां विरोधो नेत्यर्थः** ॥

अत्र आश्मरथ्यमतं- वैराग्यसम्पत्तिप्राक्कालिकावस्थावदधिकारिपरम्, औडुलोमिमतं- ज्ञानसम्पत्ति-प्राक्कालिकावस्थावत्परम्, काशकृत्स्नमतं - ज्ञानसम्पत्तिमत्परम्, इति न मतानां साङ्कर्यमिति भावदीपे उक्तम् ॥

ननु जैमिन्युक्तस्य विवरणं कथमाश्मरथ्यादयः 'प्रतिज्ञासिद्धेः' इत्यादिसूत्रत्रयेण कुर्युः, तेषां जैमिनिशिष्यत्वाभावात्, न च 'अन्यार्थम्' इति सूत्रे- 'अपि चैवमेके' इत्यस्यावृत्त्या- **एकेऽपि**= मुख्याचार्या अपि बादरायणाचार्या अपीति यावत् । एवं च **एवमेव** = जैमिन्युक्तप्रकारमेव वदन्तीत्यर्थेन, जैमिन्युक्तस्य व्यासमतानतिरिक्तत्वात्, आश्मरथ्यादिकृतं तद्विवरणं युक्तमेवेति वाच्यम् । एवं तर्हि जैमिन्यादिमतान्युपन्यस्य स्वमतं किं नोच्यते सूत्रकारेण' इति एतत्सूत्रीयटीकाविरोधापत्तेः । एतेन जैमिनेः व्यासशिष्यत्वेन जैमिन्युक्तमेव सूत्रकारमतमित्यपि परास्तम्, इति चेदुच्यते । यथा पाणिनितन्त्रे पाणिन्युक्तं स्वसम्मतमिति स्वीकृत्य वार्तिककृता विवरणं क्रियते - तथा आश्मरथ्यादिभिः जैमिन्युक्तमेव स्वमतत्वेनाभ्युपेत्य जैमिन्युक्तस्य त्रिधा विवरणे बाधकाभावात्, इति ॥ २३ ॥

॥ इति **समाकर्षाधिकरणम्** ॥ ५ ॥

## ६. प्रकृत्यधिकरणम्

### (१) स्त्रीशब्दा अपि तस्मिन्नेवेत्याह–

अत्र नये- स्त्रीत्वलिङ्गेन अन्यत्रैव प्रसिद्धस्त्रीवाचकसर्वशब्दसमन्वयः। स्त्रीलिङ्गप्रकृत्यादिशब्दवाच्यो विषयः। विष्णुः ? अन्यो वा ? इति सन्देहः। पूर्वनयवत्तद्बीजम्। न विष्णुरिति पूर्वपक्षः॥ (५ सू.अ.)

(१) सूत्रमवतारयन्ति- **स्त्रीशब्दा इति**॥ स्त्रीवाचकाश्शब्दा इत्यर्थः। **तस्मिन्नेव**= परमात्मन्येव, वाच्यत्वेन स्थिता इति शेषः। **इत्याहेति**॥

ननु पूर्वाधिकरणन्यायेन प्रकृत्यादिस्त्रीलिङ्गशब्दसमन्वयसिद्ध्या इदमधिकरणं व्यर्थमिति चेत्- उच्यते- स्त्रीलिङ्गशब्देषु स्त्रीत्वस्य भानेन तस्य विष्णावसत्वेन[१] विष्णौ समन्वयो न स्यादित्याधिकाऽशङ्कया अधिकरणारम्भ इति॥

ननु स्त्रीत्वादिलिङ्गं प्रक्रियानिर्वाहार्थं शब्दे कल्पितं, न तु स्ववाच्यार्थनिष्ठं, किञ्च वैयाकरणरीत्या लिङ्गस्य अर्थनिष्ठत्वेऽपि तस्याचेतनखट्वादिसाधारणत्वार्थं सत्वादिगुणत्रयोपचयापचयस्थितिरूप-त्वेन तैरङ्गीकृतत्वात्, गुणत्रयशून्ये हरौ तस्यासम्भव एव।

किञ्च- अयं पदार्थः, इयं व्यक्तिः, इदं वस्तु, इति व्यवहारत्रयस्य पदार्थमात्रे सत्वेन वास्तवस्य निरुक्तलिङ्गत्रयस्य एकस्मिन्नसम्भवेन आरोपो वाच्यः। तथा च- पक्षत्रयेऽपि शब्दवाच्यं लिङ्गं समन्वयप्रतिबन्धकं न भवति। अन्यथा पुंनपुंसकशब्दस्यापि समन्वयो न स्यात्, अतः कथं अभ्यधिकाशङ्कोदयः? इति चेत्- न, यस्य शब्दस्य स्ववाच्यपारिभाषिकलिङ्गसजातीयलोकप्रसिद्धलिङ्गस्य स्ववाच्ये यत्रार्थे सम्भवः, तस्य शब्दस्य तल्लिङ्गमपि वाच्यमेव। अत एव 'पशुना यजेत' इत्यादौ पशुशब्दवाच्यपारिभाषिकपुंस्त्वस्य स्त्रीपशुव्यक्तौ अबाधेऽपि लोकप्रसिद्धपुंस्त्वस्यापि पशुशब्दवाच्य-त्वेन तल्लिङ्गस्य स्त्रीपशुव्यक्तौ बाधात् स्त्रीपशुव्यक्तेः न यागे करणत्वमिति सर्वसंमतः पन्थाः सङ्गच्छते॥

अत एव च- 'अजवत्यपि देशे, अजा नास्ति' इति प्रयोग उपपद्यते। अन्यथा 'अत्राज' इति

---

१. **असत्वेनेति**॥ 'नैनं वाचा स्त्रियं ब्रुवन् नैनमस्त्री पुमान् ब्रुवन्। पुमांसं न ब्रुवन्नेनं वदन् वदति कश्चन' (ऐ.आ.२.३.८) इति मन्त्रेण हरौ स्त्रीत्वाऽसत्वकथनेनेत्यर्थः॥

ज्ञानस्य अजत्वमात्रप्रकारकत्वेन अजा नास्तीति ज्ञानस्य च अजत्वावच्छिन्नप्रतियोगिताकाभाव-प्रकारकत्वेन अजवानिति प्रतिबन्धकज्ञानदशायां 'अजा नास्ति' इति प्रयोगो न स्यात् ।

लिङ्गस्य भानाङ्गीकारे तु अजवानिति ज्ञानस्य अजत्वपुंस्त्वोभयप्रकारकत्वेन 'अजा नास्ति' इत्यस्य च अजत्वस्त्रीत्वोभयावच्छिन्नप्रतियोगिताकाभावप्रकारकत्वेन प्रतिबध्यप्रतिबन्धकभावाभावात् प्रयोग उपपद्यते । एतत्सर्वं लिङ्गस्य शब्दगतत्वेऽपि निर्वोढुं शक्यम् । परन्तु यस्य शब्दस्य स्ववाच्येति परिष्कारे स्वसम्बन्धीति निवेशनीयमिति बोध्यम् । यत्र स्ववाच्येऽर्थे स्ववाच्यपारिभाषिकलिङ्गसजातीय-लौकिकलिङ्गासम्भवः, तत्र पारिभाषिकलिङ्गमात्रवाचकत्वं शब्दस्य प्रक्रियानिर्वाहार्थं स्वीक्रियते । अत एव गायत्री, ज्योतिः, अव्यक्तादिशब्दसमन्वये अयं पूर्वपक्षो न प्रसक्तः ।

अत्तृनये (१.२.२) अदितिशब्दद्वारा पूर्वपक्षोत्थानादियं शङ्का यद्यपि प्राप्नोति, अथापि लिङ्ग-विषयकशङ्कासमाधानार्थं अस्याधिकरणस्य तादर्थ्येन प्रवृत्तत्वात् तत्रेयं शङ्का न कृतेति बोध्यम् ॥

तथा च (प्रकृते) चेतनप्रकृतिवाचकप्रकृतिशब्दस्य स्ववाच्यपारिभाषिकस्त्रीत्वसदृशलौकिकस्त्रीत्व-स्यापि वाच्यतया तस्य विष्णौ बाधात् (पूर्वनयेन) समन्वयो न स्यादिति अभ्यधिकाशङ्कोदयात् ।

(न केवलं विष्णुः पुंलिङ्गपदाभिधेयः, अपि तु स्त्रीलिङ्गशब्दवाच्यश्च)

## (२) ॥ ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्ताऽनुपरोधात् ॐ ॥ २५ ॥

(२) ॐ **प्रकृतिश्चेति** ॥ उपरोधः= विरोधः, न उपरोधः अनुपरोधः= आनुकूल्यम् । हेतौ पञ्चमी । हेतुरत्र फलम् । तत्तु इति वर्तते । **अयमर्थः- प्रकृतिश्च=** 'एषा ह्येव प्रकृतिरविकृतिः' इति 'कामात्'(३.३.४०) इति सूत्रे उदाहरिष्यमाणश्रुतौ, 'या प्राणेन संविशत्यदितिर्देवतामयी' (का. २.१.७) इत्यत्र च, प्रकृत्यादिशब्दवाच्योऽपि तत्तु= विष्णुरेव । **प्रतिज्ञादृष्टान्ताऽनुपरोधात्=** 'हन्तैतमेव पुरुषम्' इत्यादिप्रतिज्ञा- 'यथा नद्यः स्यन्दमानाः' इति दृष्टान्तयोः आनुकूल्यसिद्ध्यर्थत्वात् इति ॥

श्रुत्युपन्यासपूर्वं सूत्रं व्याचक्षते- **हन्तेति** ॥ **स एव=** विष्णुरेव ॥ २४ ॥

**(३) 'हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति यथा नद्यस्स्यन्दमानाः समुद्रायणाः समुद्रमभिविशन्त्येवमेवैतानि नामानि सर्वाणि पुरुषमभि-विशन्ति' इति 'प्रतिज्ञादृष्टान्तानुपरोधात्' प्रकृतिशब्दवाच्योऽपि स एव ॥**

(३) **हन्तैतमेवेति** ॥ (वत्सश्रुतिरेषा) हन्तेत्यास्वादने । **पुरुषं**= पूर्णप्रवृत्तिनिमित्तकं, **एतं**= प्रकृतं परमात्मानं, **सर्वाणि नामानि**= सर्वे शब्दाः, **अभि**= परममुख्यतः **वदन्ति**, इति प्रतिज्ञार्थः । यथा **स्यन्दमानाः**= प्रस्रवन्त्यः, **समुद्रायणाः**= समुद्राश्रयिकाः नद्यः, **समुद्रमभिविशन्ति**= तदाभिमुख्येन गताः तं प्रविशन्ति, **एवमेव एतानि** = प्रमितानि सर्वाणि **नामानि** स्यन्दमानानि मध्ये स्थिरचरव्यवहाररूपान् घटयन्ति (चेतनाचेतनवाचकानि सन्त्यपीति यावत्) पुरुषैकायतनानि तदधीनप्रवृत्तिनिमित्तवन्ति, तमेव **पुरुषं**= परमात्मानं **अभि**= सर्वतः अभिमुख्यतः **विशन्ति**= वाचकत्वेनेत्यर्थः ॥ २४ ॥

**(भगवदिच्छैव प्रकृतिशब्देनोच्यते)**

## (४) ॥ ॐ अभिध्योपदेशाच्च ॐ ॥ २५ ॥

(४) **युक्त्यन्तरेणोक्तार्थप्रतिपादनाय सूत्रम्- ॐ अभिध्येति** ॥ प्रकृतिः, तत्तु, इति वर्तते । **यथायथमावृत्तिविपरिणामौ । भावप्राधान्यं च ॥ अयमर्थः**- प्रकृतिः = प्रकृतिशब्दवाच्यः तत्तु= **विष्णुरेव, प्रकृतित्वेन**= प्रकृतिशब्दवाच्यत्वेन **अभिध्योपदेशात्**= अभिध्यायाः= इच्छायाः 'मायां तु प्रकृतिम्' इति श्रुतावुक्तत्वात्, तस्य= ब्रह्मण अभिध्योपदेशात् अभिध्यात्वेन 'सोऽभिध्य' इति स्मृतावुक्तत्वात्, इति ॥

**(५) 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'( श्वे.उ.४–१०) ।**
**'महामायेत्यविद्येति नियतिर्मोहिनीति च ।**
**प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते ॥'**
**इति वचनात्तदभिध्यैव प्रकृतिशब्देनोच्यते ।**

(५) श्रुत्युपन्यासपूर्वं सूत्रं विवृण्वते- **मायां त्वित्यादिना** ॥ **वचनादिति** ॥ वचनाभ्यामित्यर्थः। **समुदायैकवचनम् । तदभिध्यैव**= भगवदिच्छैव । चेति । हेतावयम् ।

(५) **मायान्त्विति** ॥ (श्वे. ४.१०) **मायां**= भगवदिच्छां, **प्रकृतिं**= प्रकृतिशब्दवाच्यां, **मायिनं**= तादृशेच्छावन्तं **महेश्वरं**= महासामर्थ्योपेतं विष्णुं विद्यादित्यर्थः ॥ **महामायेति** ॥ हे **अनन्त तवेच्छा**-महामायेत्यादिभिश्शब्दैः कथ्यते इत्यर्थः ॥ प्रकृतिरित्यत्रापि इतिशब्दो योज्यः ॥

**(६) 'सोऽभिध्या स जूतिः स प्रज्ञा स आनन्दः' इति श्रुतेरभिध्या च स्वरूपमेव ।**

**'ध्यायति ध्यानरूपोऽसौ सुखी सुखमतीव च ।**
**परमैश्वर्ययोगेन विरुद्धार्थतयेष्यते ॥' इति ब्रह्माण्डे ॥ २५ ॥**

(६) ननु भगवदिच्छायाः प्रकृतिशब्दवाच्यत्वं भगवतः प्रकृतिशब्दवाच्यत्वे कथं हेतुर्भवतीत्यत आहुः- **सोऽभिध्येति ॥ स्वरूपमेव=** विष्णुस्वरूपमेवेत्यर्थः । 'ज्ञायते' इति शेषः । ननु इच्छायाः स्वरूपत्वे कथं 'मायिनं, तवेच्छा' इति गुणगुणिभाव उपपद्यते इत्यत आहुः-**ध्यायतीति ॥ ब्रह्माण्डे इति ॥** ब्रह्माण्डे इत्युक्तेरित्यर्थः । तथा च- च= यतः इति वचनात् तदभिध्यैव प्रकृतिशब्देनोच्यते, च = यतश्च श्रुतेः, ब्रह्माण्डे इत्युक्तेश्च, अभिध्या च स्वरूपमेवेति ज्ञायते अतश्च 'प्रकृतिशब्दवाच्योऽपि स एव' इति पूर्वभाष्येणान्वयः । आत्माऽभिन्नाभिध्यावाचकत्वात् प्रकृतिशब्दस्य आत्मवाचकत्वमिति भावः ॥ २५ ॥

(६) **सोऽभिध्येति ॥ सः =** विष्णुः, **अभिध्या=** इच्छारूपः, **स जूतिः=** प्रेरणारूप इत्यर्थः । शिष्टं स्पष्टम् । **ध्यायतीति ॥ ध्यानरूपोऽप्यसौ=** हरिः **ध्यायति=** ध्यानकर्तेत्युच्यते, **अतीव सुखं=** सुखरूपमपि **सुखी=** सुखविशिष्ट इत्युच्यते । **परमैश्वर्ययोगेन=** तद्रूपोपायेन **विरुद्धार्थतया=** विरुद्धधर्मोपिततया **इष्यते, असौ=** भगवान्, प्रामाणिकैरिति शेषः, इत्यर्थः ॥ २५ ॥

**(द्वारमन्तरेणैव प्रकृति-पुरुषोभयशब्दवाच्यः विष्णुः)**

**(७) ॥ ॐ साक्षाच्चोभयाम्नानात् ॐ ॥ २६ ॥**

(७) इच्छाद्वारं विनाऽपि प्रकृतिशब्दवाच्यत्वसमर्थनाय सूत्रम्- **ॐ साक्षादिति ॥** प्रकृतिः, तत्तु इति वर्तते । तदित्यावर्त्य षष्ठ्या विपरिणम्यते ॥ **अयमर्थः-** प्रकृतिः= प्रकृतिशब्दवाच्यः, तत्तु= विष्णुरेव, **तस्य विष्णोः साक्षाच्च=** ('नामानि सर्वाणि' इति सामान्यं न्यायं विना) इच्छां अद्वारीकृत्यैव च, **उभयाम्नानात्=** प्रकृतिपुरुषत्वप्रतिपादनात् इति ॥

**(८) 'एष स्त्री एष पुरुष एष प्रकृतिरेष आत्मैष ब्रह्मैष लोक एष आलोको योऽसौ हरिरादिरनादिरनन्तोऽन्तः परमः पराख्यिश्वरूपः' इति पैङ्गिश्रुतौ साक्षादेव प्रकृतिपुरुषत्वाम्नानात् ॥**

(८) श्रुत्युदाहरणपूर्वकं सूत्रार्थमाहुः- **एष इत्यादिना ॥ प्रकृतिपुरुषत्वाम्नानादिति ॥** तत्तत्पद-वाच्यत्वाभिधानादित्यर्थः । अस्य 'प्रकृतिशब्दवाच्योऽपि स एव' इति पूर्वभाष्येऽन्वयः । नन्वत्र

**साक्षात्प्रकृतित्वाऽम्नानादित्येव वक्तव्यम्- स्त्रीशब्दवाच्यत्वे एव विवादात्, तथा च उभयग्रहणं व्यर्थमिति चेत्- न, एतदधिकरणीयप्रथमसूत्रे- प्रकृतिश्चेति चशब्देन प्रकृत्यादिस्त्रीवाचकशब्द-वाच्योऽपीत्यर्थकेन पुरुषशब्दवाच्यत्वस्यापि समुच्चयात्, तदनुरोधेन उभयग्रहणात् ॥ २६ ॥**

(८) **एष स्त्रीति ॥ एषः**= परमात्मा, **स्त्री**= सततं रमणात् स्त्रीशाब्दवाच्यः, एवं **पुरुषः, आत्मा, प्रकृतिः,** इत्यत्रापि तत्तच्छब्दवाच्य इत्येवार्थः । **ब्रह्म**= ब्रह्मशब्दोपलक्षितसर्वनपुंसकशब्दवाच्य इत्यर्थः । **लोकः**= आधारः, **आलोकः**= प्रकाशरूपः, **योऽसौ हरिः (सः) आदिः**= कारणम्, **अनादिः**= उत्पत्तिशून्यः, **अनन्तः**= नाशरहितः, **अन्तः**= अन्तकः, **परात्**= श्रीतत्वात्, **परमः**= उत्तमः, **विश्वरूपः**= विश्वस्मिन् रूपाणि अस्येति, विश्वानि रूपाण्यस्येति वा **विश्वरूपः** (सर्वनियामकरूपवान् मत्स्याद्यनेकावतारवान् वा) इत्यर्थः ॥ २६ ॥

**(प्रकृतावनुप्रविश्य तां परिणाम्य तद्विकृतिषु नियामकत्वात् स प्रकृतिः)**

## (९) ॥ ॐ आत्मकृतेः परिणामात् ॐ ॥ २७ ॥

(९) **प्रकृतिशब्दवाच्यत्वे शब्दबोध्यनिमित्तान्तरमप्यस्तीति प्रतिपादनाय सूत्रम्- ॐ आत्मकृतेरिति ॥ प्रकृतिः तत्तु इति वर्तते । यथायोग्यमावृत्तिविपरिणामौ । परिणामादिति ल्यब्लोपे पञ्चमी । अयमर्थः- प्रकृतेः**= मूलप्रकृतेः, **परिणामात्**= परिणामं विधाय परिणामाय परिणतवस्तुनि स्थितये **आत्मकृतेः**= स्वस्य बहुधाकरणाद्धेतोः, प्रकृतिः= प्रकृतिशब्दवाच्यः तत्तु= विष्णुरेव इति ॥

**प्रकृष्टा कृतिः यस्येति योगबलाच्च प्रकृतिशब्दवाच्यो विष्णुरेवेति भावः । भाष्ये प्रकर्षेण करोतीति प्रदर्शनं तु फलितार्थाभिप्रायेणेति बोध्यम् । अथवा- प्रकर्षेण करोतीति विग्रहे प्रपूर्वककृधातोः कर्तरि क्तिन्प्रत्ययः, बाहुलकात् ॥**

### (१०) प्रकर्षेण करोतीति प्रकृतिरिति योगाच्च । प्रकृतावनुप्रविश्य तां परिणाम्य तत्परिणामेषु तत्परिणामनियामकतया स्थित्वाऽऽत्मनो बहुधा करणात् ।

(१०) व्युत्पत्तिप्रदर्शनपूर्वकं सूत्रं व्याचक्षते- **प्रकर्षेणेति ॥ योगाच्चेति ॥** अवयवार्थरूपशक्यतावच्छेदकसत्वाच्चेत्यर्थः । योगार्थस्यैव विवरणम्- **प्रकृतावनुप्रविश्येत्यादि ॥ करणादिति ॥** योगाभिन्नबहुधारणादित्यर्थकस्यास्य 'प्रकृतिशब्दवाच्योऽपि स एव' इति पूर्वभाष्येणान्वयः ।

**(११) 'अथ हैष आत्मा प्रकृतिमनुप्रविश्याऽत्मानं बहुधा चकार। तस्मात् प्रकृतिः तस्मात् प्रकृतिरित्याचक्षते' इति भाल्लवेयश्रुतिः।**

(११) सूत्रार्थे श्रुतिस्मृती आहुः- **अथ हैष इत्यादि ॥ श्रुतिरिति ॥** यतः श्रुतिरस्ति, अतः, नारदीये इत्युक्तेश्च, सिद्धात् बहुधाकरणदिति सम्बन्धः। अपव्याख्यां निराकुर्वन्ति- **न चेति ॥ अन्यदिति ॥** प्रकृतिश्चेत्यादिसूत्रैः ब्रह्मणः उपादानकारणत्वं कथ्यते इत्येवंरूप(सूत्रतात्पर्यवर्णन)-मित्यर्थः। **अप्रामाणिकत्वादिति ॥** प्रमाणसिद्धत्वाभावादित्यर्थः ॥ २७ ॥

(११) **अथ हैष इति ॥ एष परमात्मा** यतः (कारणात्) **प्रकृतिमनुप्रविश्य**= स्वतः परिणाम-सामर्थ्यहीनप्रकृतिं (अचेतनप्रकृतिं) तत्परिणामानुकूलतया प्रविश्य तां परिणमय्य, तत्र स्थित्यर्थम् **आत्मानं बहुधा चकार। तस्मात्**= बहुधाकरणात् **प्रकृतिः**= प्रकृतिशब्दवाच्यः, **तस्मात्**= प्रकृतिशब्दवाच्यत्वात् **प्रकृतिरित्याचक्षते** ज्ञानिन इत्यर्थः ॥

**(१२) 'अविकारोऽपि परमः प्रकृतिं तु विकारिणीम्। अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते' ॥ इति नारदीये ॥**

**न चान्यत्कल्प्यम्, अप्रामाणिकत्वात् ॥ २७**

(१२) **अविकारोऽपीति ॥ गोविन्दः परमः अविकारोऽपि**= अत्यन्तं निर्विकारोऽपि **विकारिर्णी**= प्रकृतिं (प्रधानं) **प्रविश्य**= तत्परिणामानुकूलतया प्रविश्य **प्रकृतिश्चाऽभिधीयते**= प्रकृतिशब्दवाच्योऽपि भवतीत्यर्थः ॥ २७ ॥

**(अन्यप्रधानेन सूतित्वात् प्रकृति(स्त्री)शब्दवाच्यः)**

**(१३) ॥ ॐ योनिश्च हि गीयते ॐ ॥ २८ ॥**

(१३) प्रकृतिशब्दस्य स्त्रीलिङ्गत्वात् कथं तद्वाच्यत्वं विष्णोः ? तस्य स्त्रीत्वाभावात् इति शङ्कावारणाय सूत्रम्- **ॐ योनिश्च हीति ॥** प्रकृतिः, तत्तु इति वर्तते। **अयमर्थः- हि**= यतः तत् ब्रह्म **योनिश्च**= स्वदेहादेवापत्योत्पादकत्वं च **गीयते**= 'यद्भूतयोनिम्' इति श्रुतावुच्यते, अतः प्रकृतिस्तु प्रकृत्यादिशब्दवाच्यमपि इति ॥ स्वदेहादपत्योत्पादकत्वं च तद्योग्यतावत्वम्। एवञ्च- वन्ध्यायाः स्वदेहादपत्योत्पादकत्वाभावात् एतादृशं स्त्रीत्वनिर्वचनं न सम्भवतीति शङ्काऽनवकाशः, तत्रापि योग्यतायास्सत्वादिति बोध्यम् ॥

**(१४) अव्यवधानेनोत्पत्तिद्वारत्वं (च) प्रकृतित्वम् । तच्चास्यैव हि गीयते 'यद्भूतयोनिं परिपश्यन्ति धीराः' (मु.उ. १-१-६) इति ।**

(१४) सूत्रं व्याचक्षते- **अव्यवधानेनेति** ॥ **उत्पत्तिद्वारत्वं**= उत्पत्तिकारणत्वम् । (**प्रकृतित्वं**= प्रकृतिशब्दप्रवृत्तिनिमित्तम्) उक्तेऽर्थे श्रुतिस्मृती आहुः- **यदिति** ॥ **व्यवधानेनेति च** ॥ तथा च परिपश्यन्ति धीरा इत्यत्र, ब्रह्माण्डे च, **हि**= यतः तच्च (प्रकृत्यादिस्त्रीलिङ्गशब्दप्रवृत्तिनिमित्तम्) **अस्यैव**= विष्णोरेव **गीयते**, अतश्च 'प्रकृतिशब्दवाच्योऽपि स एव' इति पूर्वभाष्येणान्वयः ॥२८॥

॥ इति प्रकृत्यधिकरणम् ॥

(१४) **यद्भूतयोनिमिति** ॥ (आ.१.६) **भूतयोनिं**= प्रलये स्वोदरनिवेशितस्य (ब्रह्मादिप्राणिजातस्य) योनिः = स्वदेहादेवोत्पादकं (स्थूलदेहविशिष्टतया जनकं) सूक्ष्मदेहकर्तारं वा **यत् धीराः**= ज्ञानिनः, परिपश्यन्ति, **तत्**= अदृश्यत्वादिगुणकमिति पूर्ववाक्येनान्वय इत्यर्थः ।

**(१५) 'व्यवधानेन सूतिस्तु पुंस्त्वं विद्वद्भिरुच्यते ।**
**सूतिरव्यवधानेन प्रकृतित्वमिति स्थितिः ॥**
**उभयात्मकसूतित्वाद्वासुदेवः परः पुमान् ।**
**प्रकृतिः पुरुषश्चेति शब्दैरेकोऽभिधीयते ॥' इति ब्रह्माण्डे ॥**

**॥ इति प्रकृत्यधिकरणम् ॥**

(१५) **व्यवधानेनेति** ॥ स्त्र्यादिव्यवधानेन **सूतिः**= अपत्योत्पादकत्वं **पुंस्त्वं**= पुल्लिङ्गशब्दप्रवृत्ति-निमित्तम् । **अव्यवधानेन**= साक्षादेव **सूतिः**= अपत्योत्पादकत्वं **प्रकृतित्वं**= स्त्रीशब्दप्रवृत्तिनिमित्तमिति **स्थितिः**= व्यवस्था, उभयात्मकसूतित्वात् उभयविधप्रसवकर्तृत्वात् वासुदेवः 'वानात्सूतेः देवनात् वासुदेवः' इति निरुक्तिसूचितप्रसवकर्तृत्वप्रवृत्तिनिमित्तकवासुदेवपदवाच्यः **परः**= लोकविलक्षणः **पुमान्**= पुरुषः एक एव-प्रकृतिः, पुरुषश्चेत्यादिस्त्रीपुंसवाचकशब्दैः **अभिधीयते**= इति विद्वद्भिरुच्यते इत्यर्थः ॥२८॥

॥ इति प्रकृत्यधिकरणम् ॥ ६ ॥

## ७. एतेनसर्वेव्याख्याताधिकरणम्

(स्वातन्त्र्यादिप्रवृत्तिनिमित्तमवलम्ब्य शून्य-अभावादिशब्दाः विष्णौ)

(१) ॥ ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ ॥ २९ ॥

**एतेन सर्वे शून्यादिशब्दा अपि व्याख्याताः ।**

अत्र नये- निषेधमुखवेद्यत्वनिःस्वरूपत्वादिना अन्यत्राऽसदादौ प्रसिद्धाऽसच्छून्यादिशब्दानां हरौ समन्वयः । असदादिशब्दवाच्यं विषयः, विष्णुः, अन्यद्वा ? इति सन्देहः, सन्देहबीजं पूर्वनयवत् । असदादिशब्दवाच्यो न विष्णुरिति पूर्वपक्षः ॥ (१ सू.अ.)

(१) **ॐ एतेन सर्वे इति ॥ अपिरिति वर्तते ॥ अयमर्थः- एतेन=** तदधीनत्वाद्युक्तयुक्तिसमुदायेन, **सर्वे=** शून्यादिशब्दा अपि, **व्याख्याताः=** ब्रह्मपरत्वेन निर्णीताः इति ॥ एतदध्यायोक्तं सर्वं युक्तमेवेत्यवधारणार्था द्विरुक्तिः ॥

सूत्रं व्याचक्षते- **एतेनेति** ॥ एतेनेत्यस्यार्थं वक्ष्यन्ति । सर्वे इति पदस्यैव व्याख्यानं कृतमत्र ।

(२) **एष ह्येव शून्य एष ह्येव तुच्छ एष ह्येवाभाव एष ह्येवाव्यक्तोऽदृश्योऽचिन्त्यो निर्गुणश्च' इति महोपनिषदि ।**

(३) **'शमूनं कुरुते विष्णुरदृश्यः सन्परः स्वयम् ।**
**तस्माच्छून्य इति प्रोक्तस्तोदनात्तुच्छ उच्यते ॥**
**नैष भावयितुं योग्यः केनचित्पुरुषोत्तमः ।**
**अतोऽभावं वदन्त्येनं नाश्यत्वान्नाश इत्यपि ॥**
**सर्वस्य तदधीनत्वात्तत्तच्छब्दाभिधेयता ।**
**अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभिः ॥' इति महाकौर्मे ।**

**एतेन= तदधीनत्वाद्युक्तयुक्तिसमुदायेन ।**

(२) नन्वसदादिशब्दानां निषेधमुखवेद्यवाचिनां कथं विष्णुपरत्वम् ? अत आहुः- **एषह्येवेति ॥ कौर्म इति ॥** महोपनिषदि इत्युक्तेः, कौर्मे इत्युक्तेश्च, शून्यादिशब्दा व्याख्याता इत्यन्वयः । एतेनेत्यस्यार्थं वक्तुमनुवदन्ति- **एतेनेति ॥** तस्यार्थः तदधीनत्वाद्युक्तयुक्तिसमुदायेन इति ॥

(२) **एष ह्येवेति ॥ एषः**= भगवान्, **शून्यः**= शून्यशब्दवाच्यः । एवमुत्तरत्रापि बोध्यम् । यद्वा- **एष** भगवानेव हि = यतः, दुर्जनानामव्यक्तः, **अदृश्यः, अचिन्त्यः निर्गुणः हि** प्रसिद्धम्, अतः स एव असत्, **शून्यः, तुच्छः, अभावश्च** इत्युच्यत इत्यर्थः ।

(३) **शमूनमिति** ॥ यस्मात् **विष्णुः परस्सन्नेव**= सर्वोत्तमत्वेन, पूर्णसुखत्वेन च, सन्नेव शं = अन्यसुखं, **ऊनं**= अल्पं कुरुते **तस्मात् शून्यमिति प्रोक्तः**, स्वयं अदृश्यस्सन् **तोदनात्**= दुःखयितृत्वात् **तुच्छ** इत्युच्यते, **एषः**= पुरुषोत्तमः **केनचित् भावयितुं**= उत्पादयितुं न योग्यः अत **एनं विष्णुं अभावं** वदन्ति, **नाश्यत्वात्**= कस्याप्यभक्ष्यत्वात् **नाश** इत्यभिधीयते इति वा वदन्ति कवयः । **सर्वस्य**= असच्छून्यादिशब्दप्रवृत्तिनिमित्तस्य स्वगतस्य परगतस्य च **तदधीनत्वात्**= भगवत्स्वामिकत्वात्, तस्य विष्णोः **तत्तच्छब्दाऽभिधेयता**= तत्तच्छब्दमुख्यवाच्यता **अन्येषां** हानादिव्यवहारार्थं **व्यवहर्तृभिः तत्तच्छब्दाभिधेयता** अमुख्यवृत्त्या इष्यते इत्यर्थः । तथा च शंशब्दोपपदकात् 'ऊन = परिहाण' इति धातोः कर्तरि यत्प्रत्यये शंशब्दटिलोपे च **शून्यपदं**, 'तुद = व्यथने' इत्यतः कर्तरि क्विप्प्रत्यये - तुत्, 'छद'धातोः डप्रत्यये- छः, तुच्चासौ छश्चेति विग्रहे- **तुच्छपदं**, उत्पत्यर्थकभूधातोः णिजन्तात् कर्मणि घञ्- भावः = उत्पाद्यः, ततो नञ्समासे **अभावपदं**, 'आश= भोजने' इति धातोः कर्मणि घञ् - आशः भक्ष्यः ततो नशब्देन समासे- **नाशपदं** च निष्पन्नमिति बोध्यम् ।

**(४) 'अवधारणार्थं सर्वस्याऽप्युक्तस्याध्यायमूलतः ।**
**द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णये ॥' इति वाराहसंहितायाम् ।**

**॥ इति एतेन सर्वे व्याख्याताधिकरणम् ॥ ७ ॥**

**॥ समन्वयाध्यायः समाप्तः ॥**

**॥ श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये**
**प्रथमाध्यायस्य चतुर्थः पादः ॥**

**॥ प्रथमाध्यायः समाप्तः ॥**

(४) अध्यायान्ते द्विरुक्तेरावश्यकत्वं स्मृत्या फलबोधनेन दर्शयन्ति- **अवधारणेति ॥ संहितायामिति ॥** द्विरुक्तेः अवधारणार्थत्वमुक्तमिति शेषः । तथा च असदादिशब्दैरपि वाच्यस्य

हरेः स्वरवर्णपदवाक्यात्मकशास्त्रयोनित्वं सिद्धमिति निखिलजगज्जन्मादिमुख्यकर्तृत्वं, मुख्यानन्त-गुणवत्त्वं च सिद्धम् ॥ २९ ॥

॥ इति एतेन सर्वे व्याख्याताधिकरणम् ॥ ७ ॥

**॥ इति श्रीमदार्याचार्यकुलावतंसेन, वैयाकरणकेसरी, महामहोपाध्याय इत्यादिबिरुदभाजा श्रीमुष्णं सुब्बरायाचार्याभिधेन विद्वद्वरेण विरचितायां श्रीमद्भाष्यार्थसहित-सूत्रार्थमणिमञ्जर्यां प्रथमाध्यायस्य चतुर्थः पादः ॥**

(४) **अवधारणार्थमिति ॥ आ अध्यायमूलतः** अध्यायादेरारभ्य **उक्तस्य** प्रमेयजातस्य **सर्वस्य अवधारणार्थं**= दाढर्यार्थं **विनिर्णये**= विशेषेण निर्णायके ग्रन्थे अध्यायान्ते **द्विरुक्तिं कुर्वते प्राज्ञाः**= ज्ञानिनः इत्यर्थः ॥ २९ ।

॥ इति एतेन सर्वे व्याख्याताधिकरणम् ॥ ७ ॥

**॥ इति श्रीमुष्णं सुब्बरायाचार्यविरचितायां ब्रह्मसूत्रभाष्यव्याख्यायां प्रथमाध्यायस्य चतुर्थः पादः ॥**

| | सूत्राणि | अधिकरणानि |
|---|---|---|
| प्रथमपादे | ३२ | १२ |
| द्वितीयपादे | ३२ | ७ |
| तृतीयपादे | ४३ | १४ |
| चतुर्थपादे | २९ | ७ |
| **आहत्य** | **१३६** | **४०** |

**॥ इति प्रथमाध्यायः ॥**

# श्रीमद्ब्रह्मसूत्रभाष्ये द्वितीयोऽध्यायः

## ॥ प्रथमः पादः ॥

## १. स्मृत्यधिकरणम्

(अविरोधाध्याये (द्वितीयाध्याये) युक्तिपादः)

**उक्तेऽर्थेऽविरोधं दर्शयत्यनेनाध्यायेन । प्रथमपादे युक्त्यविरोधम् । प्रथमतः स्मृत्यविरोधं दर्शयति–**

॥ श्री गुरुभ्यो नमः ॥

## भाष्यार्थसहितसूत्रार्थमणिमञ्जरी

पूर्वाध्यायाऽर्थसङ्गतत्वेनैतदध्यायार्थं दर्शयन्ति - **उक्तेऽर्थे इति** ॥ प्रथमाध्यायप्रतिपादिते सकलशास्त्रप्रामाण्येन हरिरेव निखिलजगज्जन्मादिकर्तेत्यर्थे इत्यर्थः । अनेन अध्यायद्वयस्य हेतुहेतुमद्भावरूपसङ्गतिरुक्ता । **अविरोधमिति** ॥ युक्ति-समय-श्रुति-न्यायोपेतश्रुतिविरोधाभावमित्यर्थः । **दर्शयति**-क्रमात्पादचतुष्टयेन सूत्रकार इति भावः । एतत्पादार्थमाहुः- **प्रथमपादे युक्तीति** ॥ अत्र पादे आपादपरिसमाप्तिनयेषु 'जन्म' (१.१.२) नयेन सङ्गतिः, श्रुतिसिद्धस्वतन्त्रसर्वजगज्जन्मादिकर्तृत्वं विषयः, हरेर्युक्तं न वेति सन्देहः, विरुद्धस्मृत्यादिविधानं सन्देहबीजं, न युक्तमिति पूर्वपक्षः, युक्तमिति सिद्धान्तः । केषुचिन्नयेषु तदर्थचिन्तायां विषयादिकं वक्ष्यते । **प्रथमतः** - प्रथमनये । **स्मृत्यविरोधमिति** ॥ स्मृतिभिः अविरोध इति विग्रहः । अविरोधो विरोधाभावः विरोधपरिहार इति यावत् । स्मृतीनां युक्ति-समय-श्रुति-न्यायोपेतश्रुतिरूपत्वेन तत्परिहारस्य समस्तैतदध्यायार्थत्वात् प्रथमोपस्थिततत्परिहारं दर्शयतीति भावः । अत्र नये एतत्सूत्रस्थसुधारीत्या वेदप्रामाण्यमङ्गीकृत्य, अनङ्गीकृत्य च, प्रवृत्तानां पाशुपतसाङ्ख्यबौद्धाऽर्हताद्यपस्मृतीनामविरोधसमर्थनम् ॥

तदर्थचिन्तायां पूर्वपक्षस्य सूत्र एव सत्वात्सूत्रमादौ पठन्ति-

**(विष्णोर्जगत्कारणत्वे पाञ्चरात्रादिप्रबलप्रमाणानि सन्ति)**

**॥ ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ ॥ १ ॥**

'इति चेत्' इत्यावर्तते । श्रुतेरिति प्रकृतम् । अनवकाशा अनन्यपराः ताश्च ताः स्मृतयश्चेति विग्रहः । विशेषणस्य परनिपातः । सौत्रः पुंवद्भावः, 'ङ्यापोः' (६.३.६३) इति ह्रस्वो वा । **स्मृत्यनवकाशदोष-प्रसङ्गः** स्मृत्यनवकाशप्रयोज्यो दोषोऽप्रामाण्याख्यः तत्प्रयोज्यत्वं च (दोषस्य) तद्विरोधनिमित्तकत्वम् । तस्य प्रसङ्गः । अयमर्थः- **इति चेत्** वेदादिशास्त्रस्य विष्णुनिष्ठजगत्कारणत्वपरत्वस्वीकारे **स्मृत्यनवकाशदोषप्रसङ्गः** अनन्यपरसर्वज्ञरुद्रादिकर्तृकपाशुपताद्यागमादिस्मृतिविरोधप्रयुक्ताऽ-

# श्रीमद्ब्रह्मसूत्रभाष्ये द्वितीयोऽध्यायः

## ।। प्रथमः पादः ।।

## १. स्मृत्यधिकरणम्

(अविरोधाध्याये (द्वितीयाध्याये) युक्तिपादः)

**उक्तेऽर्थेऽविरोधं दर्शयत्यनेनाध्यायेन । प्रथमपादे युक्त्यविरोधम् । प्रथमतः स्मृत्यविरोधं दर्शयति—**

।। श्री गुरुभ्यो नमः ।।

## भाष्यार्थसहितसूत्रार्थमणिमञ्जरी

पूर्वाध्यायाऽर्थसङ्गतत्वेनैतदध्यायार्थं दर्शयन्ति - **उक्तेऽर्थे इति** ।।प्रथमाध्यायप्रतिपादिते सकलशास्त्रप्रामाण्येन हरिरेव निखिलजगज्जन्मादिकर्तेत्यर्थे इत्यर्थः । अनेन अध्यायद्वयस्य हेतुहेतुमद्भावरूपसङ्गतिरुक्ता । **अविरोधमिति** ।।युक्ति-समय-श्रुति-न्यायोपेतश्रुतिविरोधाभावमित्यर्थः ।**दर्शयति**-क्रमात्पादचतुष्टयेन सूत्रकार इति भावः । एतत्पादार्थमाहुः- **प्रथमपादे युक्तीति** ।। अत्र पादे आपादपरिसमाप्तिनयेषु 'जन्म' (१.१.२) नयेन सङ्गतिः, श्रुतिसिद्धस्वतन्त्रसर्वजगज्जन्मादिकर्तृत्वं विषयः, हरेर्युक्तं न वेति सन्देहः, विरुद्धस्मृत्यादिविधानं सन्देहबीजं, न युक्तमिति पूर्वपक्षः, युक्तमिति सिद्धान्तः । केषुचिन्नयेषु तदर्थचिन्तायां विषयादिकं वक्ष्यते । **प्रथमतः** - प्रथमनये । **स्मृत्यविरोधमिति** ।। स्मृतिभिः अविरोध इति विग्रहः । अविरोधो विरोधाभावः विरोधपरिहार इति यावत् । स्मृतीनां युक्ति-समय-श्रुति-न्यायोपेतश्रुतिरूपत्वेन तत्परिहारस्य समस्तैतदध्यायार्थत्वात् प्रथमोपस्थिततत्परिहारं दर्शयतीति भावः । अत्र नये एतत्सूत्रस्थसुधारीत्या वेदप्रामाण्यमङ्गीकृत्य, अनङ्गीकृत्य च, प्रवृत्तानां पाशुपतसाङ्ख्यबौद्धाऽर्हताद्यपस्मृतीनामविरोधसमर्थनम् ।।

तदर्थचिन्तायां पूर्वपक्षस्य सूत्र एव सत्वात्सूत्रमादौ पठन्ति-

**(विष्णोर्जगत्कारणत्वे पाञ्चरात्रादिप्रबलप्रमाणानि सन्ति)**

**।। ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ ।। १ ।।**

'इति चेत्' इत्यावर्तते । श्रुतेरिति प्रकृतम् । अनवकाशा अनन्यपराः ताश्च ताः स्मृतयश्चेति विग्रहः । विशेषणस्य परनिपातः । सौत्रः पुंवद्भावः, 'ङ्यापोः'(६.३.६३) इति ह्रस्वो वा । **स्मृत्यनवकाशदोष-प्रसङ्गः** स्मृत्यनवकाशप्रयोज्यो दोषोऽप्रामाण्याख्यः तत्प्रयोज्यत्वं च (दोषस्य) तद्विरोधनिमित्तकत्वम् । तस्य प्रसङ्गः । अयमर्थः- **इति चेत्** वेदादिशास्त्रस्य विष्णुनिष्ठजगत्कारणत्वपरत्वस्वीकारे **स्मृत्यनवकाशदोषप्रसङ्गः** अनन्यपरसर्वज्ञरुद्रादिकर्तृकपाशुपताद्यागमादिस्मृतिविरोधप्रयुक्ताऽ-

प्रामाण्याख्यदोषप्रसङ्गः श्रुतेरिति चेन्न । **इति चेत्**, श्रुतेर्विष्ण्वन्यपरत्वस्वीकारे **अन्यस्मृत्यनवकाशदोषप्रसङ्गात्** पाशुपताद्यन्यात्यन्तसर्वज्ञविष्ण्वादिकर्तृकाऽनन्यपरपञ्चरात्रादिस्मृतिविरोधप्रयुक्ताऽप्रामाण्याख्यदोषप्रसङ्गादिति ।। एवञ्च पाशुपतादिस्मृत्यनुरोधेन श्रुतेः रुद्रादिपरत्वं वक्तव्यमिति पूर्वपक्ष्याशयः । सिद्धान्तिनस्तु- प्रबलपञ्चरात्राद्यनुरोधेन श्रुतेरुक्तार्थे सिद्धे पाशुपतादिस्मृतयोऽप्रमाणमेवेति भावः । अथवा- **इति चेत् स्मृत्यनवकाशदोषप्रसङ्गः** शैवादिस्मृतीनामप्रामाण्यप्रसङ्ग **इति चेन्न । तथा सति अन्यस्मृत्यनवकाशदोषप्रसङ्गात्** पञ्चरात्रादिस्मृतीनाम् अप्रामाण्यप्रसङ्गादित्यर्थः । तथा च पाशुपतादेरप्रामाण्यमिष्टमेवेति भावः ।

**सर्वज्ञा हि रुद्रादयः । अतस्तेषां वचनविरोधेऽप्रामाण्यमेव स्यादिति चेन्न । अन्यस्मृतीनां विष्ण्वादिभिर्नितरां सर्वज्ञैरेव कृतत्वात् श्रुतेराधिक्यं (च) सिद्ध्यति ।।**

भा. ।। सूत्रपूर्वपक्षमाहुः- **सर्वज्ञा हीति** ।। इदं शैवाद्यागमस्य प्रामाण्योपपादनार्थम् । **वचनेति** ।। पाशुपताद्यागमेत्यर्थः । **अप्रामाण्येति** ।। अत्र श्रुतेरित्यपकृष्यते । उक्तविष्णुपरत्वार्थकत्वे इति शेषः । ननु पाशुपताद्यपेक्षया श्रुतेर्बाधकताप्रयोजकाऽधिक्यं नेत्यत आहुः- **नितरामिति** ।। **कृतत्वादिति** ।। तत्संवादित्वादिति शेषः । यतस्सिध्यति अतः 'इति चेन्न' इत्यन्वयः । पाशुपतादिकं च मोहार्थं कृतमिति तत्वम् ।। १ ।।

**(पाशुपतादिस्मृत्युक्तफलानुपलब्धेर्युक्तं तासामप्रामाण्यम्)**

**हेत्वन्तरेण पाशुपतादेरप्रामाण्यकथनाय सूत्रम्-**

**।। ॐ इतरेषां चानुपलब्धेः ॐ ।। २ ।।**

**इतरेषां तासु स्मृतिषूक्तानां फलादीनां प्रत्यक्षतोऽनुपलब्धेरप्रामाण्यं तासां युक्तम् । चशब्देन भागोपलब्धिरङ्गीकृता ।।**

भा. ।। सूत्राऽर्थमाहुः - **इतरेषामिति** ।। **उक्तानामिति** ।। प्रत्यक्षयोग्यानामिति शेषः । **फलादीनामिति** ।। आदिनाऽनर्थादिग्रहः ।। २ ।।

**स्मृत्यनवकाशदोषः, तु,** इति वर्तते । **अनुपलब्धेरित्येतदावर्तते** । एकस्तत्पुरुषः, अन्यो बहुव्रीहिः। न विद्यते उपलब्धिः प्रत्यक्षं यस्य स इति विग्रहः, अदृष्टफलमिति तदर्थः । चशब्दोऽनुक्तस्य बहुश इत्यस्य समुच्चये । दोषेति लुप्तप्रथमान्तम् । युक्त इति शेषः । अयमर्थः- **स्मृत्यनवकाशदोषः** अनवकाशतयोक्तपाशुपतादिस्मृतीनामप्रामाण्यदोषो युक्तः **अनुपलब्धेः** अदृष्टफलात् प्रत्यक्षाऽविषयफलात् **इतरेषां** भिन्नानां

तत्स्मृत्युक्तप्रत्यक्षयोग्यफलानामनर्थानां च, **बहुशोऽनुपलब्धेः** प्रत्यक्षाऽभावादिति ॥ **बहुश** इत्यनेन क्वचिदुपलब्धिरस्तीति बोध्यम् । पूर्वसूत्रे तासामप्रामाण्यं सूचितमत्र तु साधितमिति भेदः ॥

**(योगस्मृतेरप्रामाण्यं दुर्वारम्)**

योगस्मृतिरपि न प्रमाणमिति बोधनाय सूत्रम्-

**॥ ॐ एतेन योगः प्रत्युक्तः ॐ ॥ ३ ॥**

अयमर्थः- **एतेन** इतरेषामनुपलब्धिहेतुना **योगो** योगशास्त्रं **प्रत्युक्तः** निरस्तमिति ॥ योगस्मृतेरपि प्रमाणत्वेन तदनुरोधेन श्रुतिर्नेयेति वक्तुमशक्यमिति भावः ।

**योगफलं प्रत्यक्षोपलभ्यमिति न मन्तव्यम् । उक्ताभ्यासे तत्काल एव फलादृष्टेः ॥**

**॥ इति स्मृत्यधिकरणम् ॥**

**भा.** ॥ सूत्रतात्पर्याऽर्थमाहुः- **योगफलमिति** ॥ योगशास्त्रोक्तयोगाऽभ्यासफलमित्यर्थः । उक्ताभ्यासे शास्त्रोक्तप्रकारस्यासकृदनुष्ठाने । तत्काले एव फलाऽदृष्टेः- तदुक्तानां स्वेदनादिफलानामुक्तक्रमेण अदर्शनादित्यर्थः । ननु 'शास्त्रयोनित्व'(१.१.३)नये पाशुपतादिस्मृतीनामप्रामाण्योक्तेः कथमत्र तादृशस्मृतिभिः पूर्वपक्ष इति चेन्न - 'शास्त्रयोनि'नये अपस्मृतेर्दृष्टफले प्रामाण्यात् तद्दृष्टान्तेनादृष्ट-जन्मादिकारणत्वेऽपि प्रामाण्यमभ्युपेत्य पूर्वपक्षे प्राप्ते श्रुत्यादिना सिद्धान्तितम् । अत्र तु तादृशसिद्धान्तोपरि श्रुतेरपि पाशुपतादिस्मृत्येकवाक्यतयाऽर्थमुपेत्य प्रवृत्तपूर्वपक्षनिरासार्थं प्रत्यक्षफल एवाप्रामाण्यमुच्यत इति भेदात् ।

वेदाऽप्रामाण्यवादिबौद्धाऽऽर्हतादिस्मृत्या 'स्मृत्यनवकाश'सूत्रे पूर्वपक्ष इति 'शास्त्रयोनि' नयेऽस्माभिरुक्तत्वाच्च । न चैवं सति 'वेदवादिनां प्रथमं निराकृतत्वात्' इति समयपादीयटीकाविरोध इति वाच्यम्- प्रायोऽभिप्रायेण तदुक्तेः । अन्यथा एतत्सूत्रस्थसुधाविरोधापत्तेः । वेदाप्रामाण्यवादि-स्मृतिप्राप्तपूर्वपक्षनिरासार्थं कृतस्य सूत्रस्य तुल्यन्यायेन वेदप्रामाण्यवादिस्मृतिप्राप्तशङ्काऽपि परिह्रियते इत्यभिप्रायाच्च ॥

'शास्त्रयोनि' इति सूत्रस्थशास्त्रपदेनानुमानमात्रं व्यावर्त्यते, न तु स्मृतिः । तथा चानुमानप्राप्तस्यैव पूर्वपक्षस्य निरासः कृतः 'शास्त्रयोनि' नये । 'स्मृतिप्राप्तपूर्वपक्षनिरासोऽपि क्रियते 'शास्त्रयोनि' नये इति कथनं तु एतन्नयसिद्धस्यैवाऽनुवाद इत्यभिप्रायाद्वा ॥ ३ ॥ अ.१ ॥

**॥ इति स्मृत्यधिकरणम् ॥**

## २. न विलक्षणत्वाधिकरणम्

अत्र नये वेदप्रामाण्ये युक्तिविरोधपरिहारः । वेदादिकं विषयः, प्रमाणं न वेति सन्देहः । द्विविधवाक्य-दर्शनं तद्बीजम् । अप्रमाणमिति पूर्वपक्षः ॥ २ ॥

**(नानादिनित्ये वेदे दोषाः शङ्कनीयाः)**

### ॥ ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॐ ॥ ४ ॥

**अनुपलब्धेः** इति वर्तते । हेतुत्वं पञ्चम्यर्थः । यथायथमावृत्तिः । अयमर्थः - अस्य श्रुति-तदनुसारिस्मृतिरूपशास्त्रस्य **अनुपलब्धेः** तदुक्तप्रत्यक्षयोग्यफलाऽनर्थयोः प्रत्यक्षाऽभावहेतुकं **तथात्वं** श्रुतिविरुद्धस्मृतिवदप्रामाण्यं न, **विलक्षणत्वात्** शैवादिस्मृतिभ्यो नित्यत्ववैलक्षण्यसत्वात्, स्वतः प्रामाण्यरूपवैलक्षण्यसत्वात्, पाञ्चरात्रादिस्मृतेस्तु तदनुसारित्वरूपवैलक्षण्यसत्वाच्च, **अस्य** श्रुतिरूपशास्त्रस्य **तथात्वं च** नित्यत्वं तु **शब्दात्** 'वाचा विरूप नित्यया' इत्यादिश्रुतेरिति ॥

**नैवं श्रुतेस्तदनुसारिस्मृतेश्च तदुक्तानुपलब्धेरप्रामाण्यम् । विलक्षणत्वात् नित्यत्वात् तदनुसारित्वाच्च । न हि नित्ये दोषाः कल्प्याः । स्वतश्च प्रामाण्यम् । अन्यथाऽनवस्थितेः । 'न चक्षुर्न श्रोत्रं न तर्को न स्मृतिर्वेदा ह्येवैनं वेदयन्ति' इति भाल्लवेयश्रुतेश्च । नित्यत्वं च शब्दादेव प्रतीयते 'वाचा विरूप नित्यया' (ऋ.स.८–६४–६) इत्यादेः । 'अनादिनिधना नित्या' इति च स्मृतिः ॥ ४ ॥**

भा. ॥ सूत्राऽर्थमाहुः- **नैवमित्यादिना** ॥ एवं शैवादिस्मृतिवत् । **स्मृतेश्च-** पञ्चरात्रादिस्मृतेश्चेत्यर्थः । **तदुक्तेति** ॥ श्रुतितदनुसारिस्मृत्युक्तफलेत्यर्थः । **नित्यत्वादिति** ॥ श्रुतेरिति शेषः ॥ **तदनुसारित्वा-च्चेति** ॥ स्मृतेरिति शेषः । **नित्ये-** अपौरुषेयवेदे । **दोषाः-** अप्रामाण्यादयः पुरुषदोषनिबन्धनाः । ननु नित्यत्वेऽपि श्रुतेः फलसंवादाऽधीनप्रामाण्यकत्वं कुतो न स्यादित्यत आहुः- **स्वतश्चेति** ॥ संवादका-पेक्षामन्तरेणेत्यर्थः । **अन्यथा-** संवादकाधीनप्रामाण्याङ्गीकारे । **अनवस्थितेरिति** ॥ संवादकस्यापि संवादकान्तरापेक्षया तत्संवादकान्तरेण भाव्यमित्येवंरीत्या अनवस्थादोषप्रसङ्गादित्यर्थः । न च द्वितीयादिज्ञाने प्रामाण्यं स्वत इति वाच्यं, प्रथमज्ञाने एव स्वतस्त्वस्वीकारे लाघवात् । स्वतः प्रामाण्ये

श्रुतिमाहुः- [1]**न चक्षुरिति ॥ श्रुतेश्चेति ॥** अनवस्थितेः, इति श्रुतेश्च, स्वतः प्रामाण्यं, च तस्मात्, हि यतो नित्ये दोषा न कल्प्या अतश्च, अप्रामाण्यं न वाच्यमित्यन्वयः । शब्दादित्यस्याऽर्थं श्रुत्युपन्यासेनैवाऽऽहुः- [2]**वाचेति ॥** बहुकालवृत्तित्वमात्रेण नित्यत्वोपचारः किं न स्यादित्यत आहुः- [3]**अनादीति ॥ इति च स्मृतिरिति ॥** इत्यादेः शब्दादेव, च यत 'अनादिनिधना' इति स्मृतिरस्ति अतश्च, नित्यत्वं प्रतीयत इति सम्बन्धः ॥ ४ ॥

**(वेदोक्तफलमधिकारिणां दृश्यते)**

फलाऽदर्शनप्रयुक्ताऽप्रामाण्यं श्रुत्यादावपि तुल्यमिति शङ्कावारणाय सूत्रम्-

**॥ ॐ दृश्यते तु ॐ ॥ ५ ॥**

अधिकारिणां फलमिति योग्यतया लभ्यते । **अस्य, तथात्वम्** इति वर्तते । तुशब्दो विशेषे, अर्थाऽन्तरे च । अयमर्थः- **तु** यतः **अधिकारिणां** तु सम्यगनुष्ठात्रधिकारिणां तत्तत्फलयोग्यानां वा; **फलं** श्रुत्याद्युक्तं फलं **दृश्यते** प्रत्यक्षत उपलभ्यते । अतः अस्य श्रुतितदनुसारिशास्त्रस्य **तथात्वम्** अप्रमाण्यं नेति ॥

**अधिकारिणां फलम् । भविष्यत्पुराणे च–**

**'ऋग्यजुःसामाथर्वाश्च मूलरामायणं तथा ।**
**भारतं पञ्चरात्रं च वेदा इत्येव शब्दिताः ॥**

**पुराणानि च यानीह वैष्णवानि विदो विदुः ।**
**स्वतः प्रामाण्यमेतेषां नात्र किञ्चिद्विचार्यते ॥**

**यद्येषूक्तं न दृश्येत पूर्वकर्मात्र कारणम् ।**
**नाप्रामाण्यं भवेत्तेषां दृश्यते ह्यधिकारतः ॥**

---

१. **न चक्षुरिति** ॥ एनं विष्णुं **चक्षुः** अज्ञचक्षुः **न वेदयति**, (न पश्यति) **श्रोत्रम्** अज्ञश्रोत्रं **न वेदयति** न शृणोति, **तर्कः** वेदाऽननुसार्यनुमानं **न वेदयति**, **स्मृतिः** वेदाननुगृहीता स्मृतिः **न वेदयति** किन्तु **वेदा एव वेदयन्ति हि** प्रसिद्धमित्यर्थः।

२. **वाचा विरूपेति** ॥ (ऋ.८.६४.६) व्या.(२४८.पु.)

३. **अनादिनिधनेति** ॥ व्या. (२५१- पु.) ॥ ४ ॥

**इतः प्रामाण्यमन्येषां न स्वतस्तु कथञ्चन ।**
**अदृश्योक्तौ ततस्तेषामप्रामाण्यं न संशयः' इति ॥**

**॥ इति न विलक्षणत्वाधिकरणम् ॥**

**भा. ॥** आकाङ्क्षितभागं दर्शयन्ति- **अधिकारिणामिति ॥** यतोऽत इति शेषः । यतोऽधिकारिणां फलं दृश्यतेऽतो न वाच्यमिति पूर्वभाष्येणाऽन्वयः । अधिकरणार्थे स्मृतीराहुः- **'ऋग्यजुरिति ॥ इतीति ॥** इति वचनेनेत्यर्थः । अयमर्थ उक्त इति शेषः ॥ ५ ॥ अ.२ ॥

**॥ इति न विलक्षणत्वाधिकरणम् ॥**

---

१. **ऋग्यजुरिति ॥ वेदा इत्येव शब्दिताः** प्रतिपादिताः वेदशब्दवाच्या इति यावत् । **इह** पुराणेषु मध्ये **यानि पुराणानि वैष्णवानि विदो** ज्ञानिनः **विदुः** (जानन्ति) । **एतेषां** वैष्णवपुराणानां, वेदानां च, (तदनुकूलमन्वादि-स्मृतीनां च) **स्वतः** फलविसंवादादिरहितनिर्दोषतयैव **प्रामाण्यं** यथार्थज्ञानजनकत्वरूपमस्ति, **अत्र** स्वतः-प्रामाण्यविषये **किञ्चित्** निमित्तं **न विचार्यते** । न केनापि निमित्तेन संशयोऽस्ति इति यावत् । यद्वा - **अत्र एतेषां** प्रामाण्यग्रहे **किञ्चित्** संवादादिकं **न विचार्यते** न मृग्यत इत्यर्थः । **यदि एषु** वेदवेदानुसारिषु **उक्तं** फलं **न दृश्येत** उक्तसाधनाऽनुष्ठानेऽपि न लभ्येत (तदा) **अत्र** फलाऽनुपलम्भे **पूर्वकर्म** जन्मान्तरीयं फलप्रति-बन्धकादृष्टं, कर्मवैगुण्यं वा, **कारणं** निमित्तमित्यवगन्तव्यम् । **हि** यतः **अधिकारतः** कर्मवैगुण्यप्रतिबन्धादि-शून्यत्वरूपफलयोग्यतानिमित्तात् फलं **दृश्यते,** अतः फलाऽदर्शनात् **एषां** वेदादीनाम् **अप्रामाण्यं न भवेत्** । **अन्येषां** पाशुपतादीनां **तु इतः** फलदर्शनत एव **प्रामाण्यं** बुद्धिदोषनिरासद्वारा सिद्ध्यति । **न तु स्वतः** फलसंवादं विना **कथञ्चन** केनाप्युपायेन उत्पत्तिमुखेन, ज्ञप्तिमुखेन वा, **तेषां** पाशुपतादीनां, **ततः** फलसंवादाधीन-प्रामाण्यकत्वात्, **अदृश्योक्तौ** अनुपलभ्यमानफलोक्तौ **अप्रामाण्यमेव** निश्चितं भवति **न** तत्र **संशयः** इत्यर्थः ॥ ५ ॥ अ.२ ॥

## ३. अभिमान्यधिकरणम्

**'मृदब्रवीत्' (श.ब्रा. ६-२-३) 'आपोऽब्रुवन्' (श.ब्रा.६-१-३) इत्यादिवचनाद्युक्तिविरुद्धो वेद इत्यतोऽब्रवीत् -**

अत्र नये वेदप्रामाण्ये दृढयुक्तिविरोधपरिहारः । दृढत्वं च प्रतीयमानाऽर्थप्रच्यावनं विनाऽनुपपद्यमानत्वम् । अत्र विषयादिकं पूर्वनयवत् स्मृतिर्विषयो नेति भाति ॥ श्रुत्युपन्यासपूर्वं पूर्वपक्षमाहुः- **'मृदब्रवीदित्यादिना** ॥ आदिना 'ता आप ऐक्षन्त' (छा.६.२.४) 'ओषधयः संवदन्ते' (ऋ.१०.९७.२२) इत्यादेर्ग्रहणम् । **इत्यादिवचनादिति** ॥ इत्यादिवाक्ये वक्तृत्वादिप्रतिपादनादित्यर्थः । **युक्तिविरुद्ध इति** ॥ 'मृन्न वक्त्री जडत्वात्' इत्यादियुक्तिसिद्धार्थविरुद्धार्थबोधको वेद इत्यर्थः। अतो वेदो न प्रमाणमिति भावः । ननु वेदैकदेशस्याऽप्रामाण्ये कथं सर्वस्याप्रामाण्यमिति चेन्न- 'एकदेशस्याऽमानत्वात्तत्सामान्यादितरेषु तथात्वम्' इति जैमिनिन्यायात् । ननु मृदादिवक्तृत्वाभावस्य प्रत्यक्षसिद्धत्वेन प्रबलप्रत्यक्षविरोधमनुक्त्वा कथं दुर्बलयुक्तिविरोधोक्तिरिति चेन्न । 'मृदब्रवीत्' इत्यादिवाक्यस्याऽऽदिसृष्टिप्रकरणस्थत्वेन तात्कालिकमृदादिविषयकत्वात् तदा तद्विषयकास्मदीयप्रत्यक्षाभावात् ॥

**(मृदब्रवीदित्यादिवचनानि अभिमानिव्यपेक्षया)**

### ॥ ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ ॥ ६ ॥

तुरेवार्थे । स च एकदेशेऽभिमानिनि सम्बध्यते । अयमर्थः- **अभिमानिव्यपदेशस्तु** पृथिव्याद्यभिमानि देवतानामेव 'मृदब्रवीत्' इत्यादिश्रुतिस्थमृदादिशब्दैः प्रतिपादनं तेषामेव, **विशेषाऽनुगतिभ्यां** वक्तृत्वादिशक्तिविशेषात् अभिमन्यमाने सर्वत्र व्याप्तेश्चेति ॥ शक्तिविशेषस्याऽन्यथानुपपत्या हेतुत्वं सर्वत्र व्याप्तेस्तु उभयोः सम्बन्धविधया हेतुत्वम् । अन्यथाऽतिप्रसक्तिरिति भावः । **यद्वा-** तुशब्दः प्राधान्ये अभिमानीत्युक्त्या अभिमन्यमानगततत्तत्प्रवृत्तिनिमित्तस्य अभिमान्यधीनत्वं सूचितं ततश्च 'तदधीनत्वात्' इति न्यायादिति लब्धम् । व्यपदेश इति कर्मघञन्तम् । अभिमानीति भिन्नं पदं समुदायैकवचनान्तम् । अयमर्थः- **विशेषानुगतिभ्यां** सहितं तद्विशिष्टम् अभिमानि तु- पृथिव्याद्यभिमानिदैवतमेव **व्यपदेशः** 'मृदब्रवीत्' इत्यादिश्रुतिस्थमृदादिशब्दैर्व्यपदिश्यते प्रतिपाद्यते, तु- प्रधानत्वादचेतनाऽपेक्षया चेतनस्य मुख्यत्वात् 'तदधीनत्वात्' इति न्यायादिति ॥ अभिमानिनो वक्तृत्वाद्यर्थं देहवत्त्वेऽपि

---

१. मृदब्रवीदिति ॥ आपोऽब्रुवन्निति ॥ (श.ब्रा.६.१.३) अनयोः श्रुत्योः पूर्वपक्षे मृदादिरेव वचनकर्त्रीति प्रतीयमान एवाऽर्थः । सिद्धान्ते तु- सूत्रेणैव निर्णीयते ॥ ६ ॥

अदृश्यत्वादिशक्तिबलादस्मदादिप्रत्यक्षाविषयत्वमुपपन्नम् । तथा च अभिमानिनः प्रादेशिकत्वेन प्रदेशान्तरे तत्सम्बन्धाभावेऽपि अभिमन्यमानस्य स्थितिवत् सर्वत्र प्रदेशे तत्सम्बन्धाभावेऽपि स्थितिसिद्धौ अभिमानिस्वीकारो व्यर्थ इति शङ्का परास्ता । सर्वत्र व्याप्त्यङ्गीकारादिति भावः ॥

**मृदाद्यभिमानिदेवता तत्र व्यपदिश्यते । तासां चेतरेभ्यो विशिष्टं सामर्थ्यमनुगतिश्च सर्वत्र । अतस्तासां सर्वमुक्तं युज्यते ॥**

**भा.** ॥ सूत्रतात्पर्यार्थमाहुः- **मृदेत्यादिना** ॥ देवतेति ॥ समुदायैकवचनं देवता इत्यर्थः । **तत्र** - मृदब्रवीदित्यादौ वाक्ये । तासामभिमानिदेवतानां च । **इतरेभ्यः**- इतरचेतनेभ्यः । तत्सामर्थ्यापेक्षयेति यावत् । **विशिष्टं सामर्थ्यं** विलक्षणसामर्थ्यमित्यर्थः । **अनुगतिश्च सर्वत्रेति** ॥ अभिमन्यमाने सर्वदेशावच्छेदेन व्याप्तिश्चेत्यर्थः । इदमुपलक्षणं शरीरवत्वस्याऽपि । एतत्तात्पर्यं पूर्वमेवोक्तम् । भावमाहुः- **अत इति** ॥ चेतनस्य वाच्यत्वाङ्गीकारादित्यर्थः । **तासाम्** अभिमानिदेवतानां **सर्वं** श्रुत्युक्तं वक्तृत्वादिकमित्यर्थः ॥ ६ ॥

**(अभिमानिदेवाः प्राज्ञप्रत्यक्षगोचराः)**

ननु अप्रामाणिकाभिमानिदेवताकल्पनापेक्षया, तासां विशिष्टसामर्थ्यकल्पनापेक्षया च, वरं वेदाप्रामाण्यकल्पनमेव लाघवात्, एवं तासां देहवत्वे प्रत्यक्षविषयत्वं च स्यादिति शङ्कावारणाय सूत्रम्-

**॥ ॐ दृश्यते च ॐ ॥ ७ ॥**

सौत्रमेकवचनम् । **अभिमानीति, विशेषेति च वर्तते** । यथायथमावृत्तिविपरिणामौ । **महद्भिः** इति शेषः । अयमर्थः- **महद्भिः** अभिमानिनामभिमानिदेवतानां **विशेषो** विशेषसामर्थ्यम् । **अभिमानीनि** च अभिमानिदैवतानि च दृश्यन्ते साक्षात्क्रियन्ते इति ॥ अयं भावः । विशेषसामर्थ्यबलाद्विग्रहवतामप्यभिमानिनामङ्ग-प्रत्यक्षविषयत्वाभावेऽपि प्राज्ञप्रत्यक्षविषयत्वमस्त्येवातः प्रत्यक्षापादने इष्टापत्तिरेवेति बोधितमनेन सूत्रेणेति ॥

**तासां सामर्थ्यं महद्भिः । भविष्यत्पुराणे च –**

> **'पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः ।**
> **अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः ।**
> **ताश्च सर्वगता नित्यं वासुदेवैकसंश्रयाः' इति ॥**

**॥ इति अभिमान्यधिकरणम् ॥**

**भा.** ॥ आकाङ्क्षितभागं दर्शयन्ति- **तासामिति** ॥ अभिमानिदेवतानामित्यर्थः । **सामर्थ्यमिति** ॥ विलक्षणसामर्थ्यमित्यर्थः । इदमुपलक्षणमभिमानिदेवतातद्देहयोरपि । **महद्भिरिति** ॥ ननु परबुद्धेरप्रत्यक्षत्वात्कुत एतदित्यत आहुः- **भविष्यत्पुराणे च - '[1]पृथिवीत्यादि** ॥ **इतीति** ॥ तत्रेत्युक्तेश्च महद्भिः सामर्थ्यं दृश्यत इति सूत्रेण सम्बन्धः । इदमभिमानिदेवतातद्विशेषसामर्थ्यसर्वव्यापित्वेषु मानम् ॥ ७ ॥ अ.३ ॥

॥ **इत्यभिमान्यधिकरणम्** ॥ ३ ॥

१. **पृथिव्यादीति** ॥ **प्रथितौजसः** प्रसिद्धसामर्थ्याः याः **पृथिव्याद्यभिमानिन्यो देवताः** ता देवताः **तासां** देवतानाम् **अचिन्त्याः शक्तयश्च मुनिभिर्दृश्यन्ते ताश्च** देवता **वासुदेवैकसंश्रयाः नित्यं सर्वगताश्च** अभिमन्यमानवस्तुषु सर्वांशावच्छेदेन व्याप्ता एवेत्यर्थः ॥ ७ ॥ अ.३ ॥

## ४. असदधिकरणम्

### 'असदेवेदमग्र आसीत्' (छा.उ. ६–२–१) 'असतः सदजायत' (ऋ.सं. १०–७२–३) इत्यादिनाऽसतः कारणत्वोक्तेर्विरोध इत्यतो वक्ति–

अत्र नये विष्णुजगत्कारणत्वे युक्तिविरोधपरिहारः सङ्गत्यादिकं पादोपक्रमोक्तमेव । श्रुतिविगानं सन्देहबीजम् ॥ श्रुत्युपन्यासपूर्वकं पूर्वपक्षमाहुः- **असदेवेदमित्यादिना** ॥ आदिना 'असद्वा इदमग्र आसीत्' (तै.उ.२.१५) इत्यादिपरिग्रहः । इत्यादिनाऽसतः कारणत्वोक्तेरित्यस्याऽऽवृत्तिः । अत्र सतः, असत इति छेदः । युक्त्या चेति शेषः । अयमर्थः- इत्यादिना वेदेन असतः कारणत्वोक्तेः प्रलयवृत्तिप्रागभावस्य कर्तृत्वबोधनात्, सतः ब्रह्मणः कारणत्वोक्तेः कारणत्वपर 'यतो वा' (तै.उ. ३.१) इत्यादिश्रुतेः इत्यादिना वाक्येन, युक्त्या च, विरोध इति । असत्पदस्य तुच्छार्थकत्वे कारणत्वोक्तेरिति उत्तरभाष्यासङ्गतिः अवृत्तिनस्तुच्छस्य कारणत्वायोगात् । कारणत्वपदं कर्तृत्वार्थकम् । अन्यथा प्रागभावस्य निमित्तकारणत्वमिष्टमेवेति कथं विरोध इति शङ्का स्यात् । युक्त्या चेत्युक्तत्वेन युक्तिपादेऽन्तर्भावः सिद्धः । युक्तिश्च 'विश्वप्रागभावो जगत्कारणं नियतपूर्ववृत्तित्वात् यत् यन्नियतपूर्ववृत्ति तत् तत्कारणं यथा घटं प्रति कुलालः । 'ईश्वराऽदृष्टादिभावजातं प्रलये अवृत्ति भावत्वात् घटादिवत्' इति । एवं च ब्रह्मणो जगत्कारणत्वं न सम्भवतीति भावः ॥

**(प्रतिषेधरूपत्वान्न विश्वप्रागभावः न विश्वकारणम्)**

### ॥ ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ ॥ ८ ॥

असधातोः कर्तरि लटि शतरि च सत् भावः असत् अभावः सौत्रप्रतिज्ञाहेतुबलात् घटप्रागभाववदिति, शशशृङ्गादिवदिति वा, लभ्यते जगत्कारणमिति प्रकृतम् । अयमर्थः- असत् विश्वप्रागभावो जगत्कारणमिति चेन्न प्रतिषेधमात्रत्वात् । (अभाव)धर्मात्मकतामन्तरेण स्वरूपतः (धर्मिण एव) प्रतिषेधरूपत्वात् घटप्रागभाव-वदिति ॥ प्रतिषेधरूपत्वं च प्रथमप्रतीतौ नास्तीति बुद्धिविषयत्वम् । अन्योन्याभावरूपधर्मात्मके कर्तृत्ववति कुलाले व्यभिचारवारणाय, प्रमेयत्वादिधर्मात्मके पक्षभूते प्रागभावे स्वरूपासिद्धिवारणाय

---

१. **असदेवेति** ॥ (छा.६.२.१) सिद्धान्ते इदमग्रे अस्य जगतोऽग्रे पूर्वकाले प्रलये इति यावत् । न विद्यते सत् उत्तमं यस्मात्तत् **असत्** सर्वोत्तमं ब्रह्मैव **आसीत्** इत्यर्थः । **'असतः सदजायत'** इति ॥ (ऋ.१०-७२.३) **असतः** सर्वोत्तमाद्विष्णोः **सत्** सन्नामको मुख्यवायुः **अजायत** इत्यर्थः । पूर्वपक्षी तु असत्पदं विश्वप्रागभावाऽर्थकं मन्यते ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

**च, मात्रपदम् । न चैवमपि कुलालाभावाभावात्मके कुलाले व्यभिचारः । तस्य धर्मात्मकतामन्तरेण प्रतिषेधरूपत्वादिति वाच्यम् । प्रतिषेधमात्रत्वपदेन प्रथमप्रतीतौ नास्तीति बुद्धिविषयत्वस्य विवक्षितत्वात् । एतेन 'प्रतिषेधबुद्धिविषयत्वात्' इति टीकाऽपि अनुकूलिता भवति । एवं च 'असत् न जगत्कारणं प्रतिषेधमात्रत्वात् शशशृङ्गवत्' इति सूत्रार्थोऽपि समञ्जसो भवति । शशशृङ्गादेः नास्तीति प्रथमबुद्धिविषयत्वं प्रतियोगितया, अभावस्य तु स्वरूपत इति विशेषः ॥**

**प्रतिषेधमात्रत्वान्नासतः कारणत्वं युक्तम् । असतः कारणत्वाद्युक्तिविरुद्धं वेदवाक्यमित्येतदत्र निषिध्यते । सर्वशब्दानां ब्रह्मणि समन्वयेऽपि 'तदधीनत्वादर्थवत्' (ब्र.सू.२.४.३) इत्यादिनाऽमुख्यत्वेनान्यस्यापि वाच्यत्वेनाङ्गीकारादसतः प्राप्तिः । तथा श्रुतिप्राप्तमेवासन्मतमत्र निषिध्यते । समयस्योपरि निषेधात् । अर्थाद्युक्तिविरोधोऽपि निराक्रियते ॥**

**भा.** ॥ सौत्रपूर्वपक्षस्य असदेवेत्यादिना दर्शितत्वात् सिद्धान्तांशं व्याचक्षते- **प्रतिषेधमात्रत्वादित्यादिना** ॥ **असत इति** ॥ विश्वप्रागभावस्येत्यर्थः । एवमत्र सर्वत्र असत्पदेन विश्वप्रागभावः कारणपदेन कर्ता विवक्षित इति ज्ञेयम् । ननु शून्यवादिनां मतमत्र निराक्रियते इत्येव व्याख्यातव्यं न तु श्रुतिप्राप्तमसन्मतं श्रुतिस्थासदादिशब्दानां 'एतेन सर्वे व्याख्याताः'(१.४.७)इति नये ब्रह्मणि समन्वितत्वादिति शङ्कावारणायाऽहुः- **असत इति** ॥ **कारणत्वाद्युक्तीति** ॥ आदिना प्रलयवृत्तित्वादेर्ग्रहः । कारणत्वादेरुक्तिः तत्प्रतिपादकं 'असद्वा इदमग्र आसीत्' इति वाक्यं, तया विरुद्धं वेदवाक्यम्- 'यतो वा' इत्यादिवाक्यम् । 'अत्र' अस्मिन्नये निराक्रियते इत्यर्थः । ननु श्रुतिस्थासदादिशब्दस्य ब्रह्मपरत्वेन असत्परत्वाऽसम्भवात्कथं श्रुतिप्राप्तस्य निषेध इत्यत आहुः- **सर्वशब्दानामिति** ॥ **तथा**- अमुख्यतया ॥ **श्रुतिप्राप्तम्**- श्रुतिस्थासदादिशब्दामुख्यवृत्तिप्रयोज्यम् । **असन्मतम्**- अभावकर्तृत्वशङ्केत्यर्थः । ननु शून्यासच्छब्दितात्यन्ताभावस्य कर्तृत्ववादिबौद्धमतमेव निराक्रियते इति किं न स्यात् सौत्रासच्छब्दस्य प्रागभावपरत्वमभ्युपेत्य श्रुतिप्राप्तं निराक्रियते इति कुतः कल्प्यते इत्यत आहुः- **समयस्येति** ॥ समयप्राप्तासन्मतस्येत्यर्थः । **उपरि**- अग्रिमपादे 'नासत' (२.२.१६) इति सूत्रेणेत्यर्थः । अन्यथा पौनरुक्त्यं स्यादिति भावः । सर्वशब्दानामित्यादिना असत इति पूर्वोक्तं स्ववाक्यमेव विवृतमिति ध्येयम् ॥

केचित्तु- टीकायां विश्वप्रागभावशब्दो विश्वस्मात्प्रपञ्चात्प्राग्विद्यमानोऽभावोऽत्यन्ताभाव इत्यर्थको यौगिकः । 'नासतः' इति सूत्रेऽपि असत्पदेनात्यन्ताभाव एव गृह्यत इत्यविवादमतोऽधिकरणद्वयस्यापि एकविषयकत्वमेव तथाप्यधिकरणभेदः प्रापकभेदादेवेति यथाश्रुत एव भाष्याभिप्राय इति वदन्ति ॥ तथा च एषां मते भाष्यस्थासच्छब्दादिकं शून्यपरमिति बोध्यम् । नन्वेवमस्य नयस्य श्रुतिविरोध-परिहारार्थत्वेन श्रुतिपादे (२.३) कर्तव्योऽयं नयो न त्वत्रेत्यत आहुः- **अर्थादिति** ॥ अभावकर्तृत्वे युक्त्युपन्यासे सति निर्मूलयुक्तेरप्रयोजकत्वेन तस्यास्सन्मूलतासिद्धये श्रुतिरुपन्यसनीया । ततश्च श्रुतिविरोधोऽपि आशङ्कितो भवतीति प्रमाणतयोपन्यस्तश्रुतिविरोधे परिहृते तुल्यन्यायेन तन्मूलक-युक्तिविरोधोऽपि परिहृतो भवतीति भावः । **युक्तीति** ॥ श्रुत्युपसर्जनकयुक्तिविरोध इत्यर्थः । ननु युक्तिविरोध एव परिह्रियत इति किन्न स्यादिति चेन्न । युक्तिविरोधे युक्त्या परिहृते श्रुतिविरोधो दुष्परिहर इति शङ्का स्यात् । श्रुतिविरोधे परिहृते तु तन्मूलकयुक्तिविरोधोऽपि परिहृतो भवतीत्याशयात् ॥ ८ ॥

**(असत उत्पत्तौ प्रलये सर्वासत्त्वं स्यात्)**

**ननु प्रागभावविशेषस्य प्रतिषेधमात्रत्वेऽपि श्रुतिबलेन कारणत्वमस्त्विति शङ्कावारणाय सूत्रम्-**

## ॐ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॐ ॥ ९ ॥

**असदिति वर्तते । जगत्कारणत्वमिति प्रकृतम् । तच्छब्दः असत्परः, सावधारणो, भावप्रधानश्च, ततो मतुप् अभावत्वमात्रवत् केवलाभावरूपं तस्य प्रसङ्गः । यथायथमावृत्तिविपरिणामौ । अयमर्थः- असतः प्रागभावस्य जगत्कारणत्वे अपीतौ प्रलये तद्वत्प्रसङ्गात् जगत् केवलाभावरूपं स्यादित्यापत्या असत् असत्कर्तृत्वमसमञ्जसमिति ॥**

## असत उत्पत्तौ प्रलयेऽपि सर्वासत्त्वमेव स्यात् ॥

**भा.** ॥ सौत्रहेतुं विवृण्वते- **असत इति** ॥ पञ्चमीयम् । **उत्पत्तौ**- जगदुत्पत्तिस्वीकारे । **सर्वेति** ॥ ईश्वरप्रभृतिभावपदार्थमात्रस्य असत्वं भवेदित्यर्थः । कार्यनाशे कारणमात्राऽवशेषनियमादिति भावः । अस्य भाष्यस्य हेत्वर्थविवरणपरत्वेन नान्वयापेक्षा । ननु घटादिकार्यनाशे उपादानमात्रावशेषो दृष्टः न तु कर्तृमात्रावशेषः । प्रकृते च प्रागभावः कर्ता न तूपादानम् । तथा च जगन्नाशे अभावमात्राऽवशेषः कथमिति चेन्न । पूर्वपक्षिणा प्रलये प्रकृत्यादेरप्यसत्वाङ्गीकारेणाभावस्यैवोपादानत्वनिमित्तत्वे अङ्गीकर्तव्य

इति असत्वापादनस्य युक्तत्वात् । नन्वेवमपि घटप्रागभावस्य घटसामग्रीनाश्यत्ववत् विश्वप्रागभावस्याऽपि विश्वोत्पत्तिसामग्रीनाश्यत्वेन कथं तन्मात्रावशेष इति चेन्न । विश्वप्रागभावस्य कारणत्वमते कार्योत्पत्तिसामग्र्या तन्नाशाङ्गीकारासम्भवात् ॥ ९ ॥

**(सत एव उत्पत्तिदर्शनात् विश्वोत्पत्तिरपि तथा)**

**प्रलये प्रागभावरूपकारणमात्राऽवशेष इष्ट एव । अतः कथमिदमापादनं सङ्गच्छत इति शङ्कावारणाय सूत्रम्-**

**॥ ॐ न तु दृष्टान्तभावात् ॐ ॥ १० ॥**

**दृष्टान्तपदेन तन्मूलकमनुमानमुच्यते । अपीतौ, तदिति, वर्तते । इष्टमिति शेषः । यथायथमावृत्तिविपरिणामौ, भावप्राधान्यश्च । अयमर्थः- अपीतौ प्रलये भावस्य भावजातस्य तत्वम् अभावमात्रत्वमिष्टमेवेति न तस्मिन् प्रलयकालिकभावपदार्थसत्वे दृष्टान्तभावात्तु अनुमानरूपमानसत्वादेवेति ॥**

**अनुमानप्रयोगस्तु- 'विमतोत्पत्तिः सतो भवितुमर्हति उत्पत्तित्वात्, घटोत्पत्तिवत् विमतो नाशः सशेषः नाशत्वात् घटनाशवत्' इति ॥**

**प्रलये सर्वासत्वं भावे दृष्टान्तभावादेव न युज्यते ।**
**सत उत्पत्तिः सशेषविनाशश्च हि लोके दृष्टः ॥**

सूत्रतात्पर्यमाहुः- **प्रलये इति** ॥ **सर्वाऽसत्वमिति** ॥ सर्वेषां भावपदार्थानामभावरूपत्वमित्यर्थः। **भावे**- भावपदार्थसत्वे । **दृष्टान्तभावादेव**- तन्मूलकानुमानसत्वादेवेत्यर्थः । दृष्टान्तमेव विशदयन्ति- **सत इत्यादिना** ॥ हि यतः सतः सकाशादुत्पत्तिः सशेषविनाशश्च लोके दृष्टः । अतो दृष्टान्तभावात् न युज्यत इत्यन्वयः ॥ १० ॥

**(अभावकारणत्वं न प्रमितम्)**

**अप्रामाणिकत्वाच्च प्रलये सर्वासत्वं नाऽङ्गीकर्तव्यमित्यर्थप्रतिपादनाय सूत्रम्-**

**॥ ॐ स्वपक्षदोषाच्च ॐ ॥ ११ ॥**

**न, तत्, अपीतौ, दृष्टम्**, इति वर्तते । **अयमर्थः-अपीतौ प्रलये तत् सर्वस्याऽभावमात्रत्वमिष्टमिति न सम्भवति स्वपक्षदोषाच्च स्वपक्षे अभावमात्रावशेषपक्षे दृष्टान्ताभावदोषाच्चेति** ॥ **अभावकारणत्ववादिना**

स्वपक्षसाधने अनुमानमेव वक्तव्यम् । तन्मते प्रत्यक्षागमयोरभावात् तदप्यनुमानं दृष्टान्ताभावेन दुष्टमिति स्वपक्षोऽप्रामाणिक इति भावः ॥

**दृष्टान्ताभावादेव ।**

भा.॥ **दृष्टान्ताभावादेवेति** ॥ एवेनायं हेतुर्बलवानिति सूचितम् । अनुमानस्येति शेषः । अनुमानस्य दृष्टान्ताभावादेव 'सर्वासत्वं न युज्यत' इति पूर्वभाष्येणान्वयः ॥ ११ ॥

**(प्रमितमेवाङ्गीकार्यम्)**

उक्तं सदसतोःकारणत्वाकारणत्वमाक्षिप्य समाधानाय सूत्रम्-

**॥ ॐ तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ ॥ १२ ॥**

अनिर्मोक्षप्रसङ्गबलात् मोक्षे इति लभ्यते । असमञ्जसमिति वर्तते । तर्कोऽनुमानम् । यथा यथमावृत्तिविपरिणामौ, भावप्राधान्यं च । **अयमर्थः- तर्काप्रतिष्ठानात्** तर्कस्य प्रतितर्कस्य एतावानेव प्रतितर्कोऽस्यैव तर्कस्य विरोधी नान्यतर्कस्येति निर्णायकाभावेन **अन्यथापि** प्रथमं तर्केण साधित-प्रमेयविरुद्धमपि अनुमेयमनुमातुं शक्यम् । अतः तर्काऽप्रतिष्ठानात् अनुमानमात्रस्याऽप्रमाणत्वादेव **एवम्** अनुमानेन सतः कारणत्वसाधनम् असतः कारणत्वबाधनश्चासमञ्जसमिति चेत्, यद्वा- **तर्काप्रतिष्ठानात्** प्रतितर्कस्य **एतावानेव** इत्यादिनियामकाभावेन **अन्यथापि** सकारणत्वविरुद्धमपि अनुमेयमिति चेत्, एवं **सति अपि** प्रमाणसिद्धेऽपि **मोक्षे** विषये **अन्यथापि अनुमेयत्वात् अनिर्मोक्षप्रसङ्गः** मोक्षाभावः प्रसज्यते इति ॥

**एतावानेव तर्क इति प्रतिष्ठापकप्रमाणाभावादुक्तादन्यथाऽप्यनुमेयमिति चेन्न, एवं सति प्रमाणसिद्धेऽपि मोक्षेऽन्यथाऽनुमेयत्वादनिर्मोक्षप्रसङ्गः । अतो यावत्प्रमाण-सिद्धं तावदेवाङ्गीकर्तव्यम् । नातोऽन्यच्छङ्क्यम् ।**

**'यावदेव प्रमाणेन सिद्धं तावदहापयन् ।**
**स्वीकुर्यान्नैव चान्यत्र शङ्क्यं मानमृते क्वचित् ॥' इति वामने ॥**

भा. ॥सूत्रतात्पर्यार्थमाहुः- एतावानेवेति ॥तर्क इति प्रतितर्क इत्यर्थः ।प्रतिष्ठापकेति ॥ निर्णायकेत्यर्थः।

**उक्तादिति** ॥ सतःकारणत्वादित्यर्थः । **नेति** ॥ इदमध्याहारलब्धम् । **अनिर्मोक्षप्रसङ्ग इति** ॥ उत्तरत्र श्रूयमाणस्य अत इत्यस्यावृत्त्याऽत्रापि सम्बन्धः । यत इति शेषः । यत एवं सति अनिर्मोक्षप्रसङ्गोऽतो नेति योजना । एवं सर्वतर्केऽपि प्रतितर्कः प्रसरतीत्यङ्गीकारेऽतिप्रसङ्गमुक्त्वा विपर्यये पर्यवसानं दर्शयन्ति- **अत इति** ॥ प्रामाणिकवस्तुसाधकतर्कस्यापि प्रतितर्केण बाधाङ्गीकारेऽतिप्रसङ्गादित्यर्थः । अङ्गीकर्तव्यं साधनीयम् । तर्केणेति शेषः । तावदेवेति एवकारलब्धमाहुः- **नाऽत इति** ॥ अत इति आवर्तते । अतः प्रमाणसिद्धस्यैवाऽङ्गीकर्तव्यत्वात् । **अतः**- प्रमाणसिद्धात् । **अन्यत्**- अप्रामाणिकम् । **न शङ्क्यम्** । तर्केण साधनीयतया न शङ्क्यमित्यर्थः । अत्रैवार्थे स्मृतिश्चाऽहुः- **'यावदिति** ॥ **वामन इति** ॥ तत्रेत्युक्तेर्न शङ्क्यमित्यन्वयः । तथा च - 'न तु दृष्टान्तभावात्'(२.१.१०) इति सूत्रे सिद्धान्त्युक्तं तर्कद्वयं प्रामाणिकं ग्राह्यं च । 'असदिति चेत्' (२.१.८) इति सूत्रे प्रतिवाद्युक्तं तर्कद्वयमप्रामाणिकत्वान्न ग्राह्यमिति बोध्यम् ॥ १२ ॥

**(अचेतन-जीवकारणकत्ववादाः अप्रामाणिकाः)**

**ननु जगतोऽसत्कारणत्वाभावेऽपि 'विप्रतिपन्नं जगत् निष्कारणमचेतनकारणकं, जीवकारणकं वा, कार्यत्वात् कूलपतनदध्यादिवत्' इत्यनुमानात् विष्णुकारणकत्वं न सिध्यतीति शङ्कावारणाय सूत्रम्-**

## ॥ ॐ एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ॐ ॥ १३ ॥

**परिग्रहाः वेदपरिगृहीताः, शिष्टपरिगृहीता वा, तद्विरुद्धा अपरिग्रहाः । परिग्रहशब्दः कर्मणि अबन्तः । अयमर्थः- एतेन सतः कारणत्वे दृष्टान्तभावेन अन्यत्र (असतः कारणत्वे) दृष्टान्ताभावेन च शिष्टा अवशिष्टा अपि अपरिग्रहाः श्रुत्यर्थापर्यालोचनया प्राप्ता विरुद्धसिद्धान्ता अपि व्याख्याताः प्रत्याख्याता इति ॥**

**एतेन दृष्टान्तभावेनाभावेन चावशिष्टा अप्यपरिग्रहा विरुद्धसिद्धान्ता अकर्तृकत्वाचेतनकर्तृकत्वजीवकर्तृकत्वादयोऽपि ।**

**'अकस्माद्धीदमाविरासीदकस्मात्तिष्ठत्यकस्माल्लयमभ्युपैति ।'**

---

१. **यावदेवेति** ॥ **यावत्** यत् **प्रमाणेन सिद्धं** वस्तु **तावदेव** तदेव **अहापयन्** अत्यजन् **स्वीकुर्यात्** तर्केण साधयेत् न तु **अन्यत्र** अन्यत् प्रमाणासिद्धं साधयेत् । यतः **मानमृते** अनुग्राहकप्रमाणं विना **क्वचित्** किञ्चिद्वस्तु तर्कमात्रेण साधयितुं, निषेद्धुं वा, न **शक्यमत** इत्यर्थः ॥ १२ ॥

**'प्रधानादिदमुत्पन्नं प्रधानमधि तिष्ठति ।**
**प्रधाने लयमभ्येति न ह्यन्यत्कारणं मतम् ।।'**
**'जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः ।**
**जीवे तु लयमृच्छन्ति न जीवात्कारणं परम् ।।'**

**इत्यादिश्रुतिप्राप्ता निराकृताः ।। यथा दुःखादिषु जीवस्यास्वातन्त्र्यमेवमन्येष्वपीति दृष्टान्तः । श्रुतिगतिस्तु ब्रह्मवाचकत्वेन प्रदर्शिता । यत्रान्यवाचकत्वेऽप्यविरोधस्तत्रा-न्यदप्यमुख्यतयोच्यते, यत्र विरोधस्तत्र ब्रह्मैवोच्यत इति नियमः ।।**

**।। इति असदधिकरणम् ।। ४ ।।**

**भा.** ।। सूत्रं व्याचक्षते- **एतेनेत्यादिना ।। अविशिष्टा अपीति ।।** अपिशब्दो विरुद्धसिद्धान्ता इत्यत्र सम्बध्यते । विरुद्धसिद्धान्तविवरणं - **अकर्तृकत्वेत्यादि ।। आदयोऽपीति ।।** आदिना 'कालाद्भवन्ति भूतानि' इति श्रुतिप्राप्तकालकर्तृत्वशबलकर्तृत्वादिकं ग्राह्यम् । उक्तविषये श्रुतीराहुः- **'[1]अकस्मादि-त्यादि ।।** ननु 'महदादिकमकर्तृकमचेतनकर्तृकं वा, कार्यत्वात्' इत्यत्र दृष्टान्ताभावः स्पष्टः । कूलपतनादीनामकर्तृकत्वं तु नाऽस्त्येव 'पयोऽम्बुवच्चेत्' (२.२.३) इति सूत्रेणेश्वरप्रवृत्तिकारणकत्वस्य वक्ष्यमाणत्वात् । एवं 'महदादिकं सकर्तृकं, चेतनकर्तृकं वा,कार्यत्वात्' इत्यत्र घटादिदृष्टान्तः स्पष्टः । तथाऽपि महदादिकमजीवकर्तृकं कार्यत्वात् इत्यत्र दृष्टान्ताभावेन कथमजीवकर्तृकत्वपक्षे दृष्टान्तभावः कथं वा जीवकर्तृत्वपक्षे घटादि दृष्टान्तसम्भवेन दृष्टान्ताभाव इत्यत आहुः- **यथेति ।। अस्वातन्त्र्य-मिति ।।** अकर्तृत्वमित्यर्थः । **अन्येष्वपीति ।।** इदमावर्तते । एकस्य घटादिष्वपि इत्यर्थः । अस्वातन्त्र्यमिति वर्तते । **दृष्टान्तः-** घटादिदृष्टान्तः । अन्येष्वपि महदादिकार्येष्वपि विषये अजीवकर्तृकत्वपक्षे सम्भवती-त्यर्थः । अयं भावः- 'घटादिकमजीवकर्तृकं कार्यत्वात् दुःखादिवत्' इति प्रसाध्य 'महदादिकमजीवकर्तृकं

१. **अकस्मादिति ।। इदं** जगत् **अकस्मात्** अकारणकमेव **आविरासीद्** उत्पन्नमित्यर्थः । शिष्टं स्पष्टम् ।। **प्रधाना-दिति ।। प्रधानात्** जडप्रकृतेः **इदं** जगत् **उत्पन्नं हि** यतः **अन्यत्** प्रधानादन्यत् **कारणं न मतं** न प्रमितम् । अतः प्रधानादिदमुत्पन्नमिति सम्बन्ध इत्यर्थः । शिष्टं स्पष्टम् ।। **जीवादिति ।। भूतानि** पृथिव्यादिकार्य-जातानि । शिष्टं स्पष्टम् । अयं च पूर्वपक्षे । **सिद्धान्ते** तु - असदादिशब्दा विष्णुपरा इति भाष्ये एव वक्ष्यते ।। १३ ।। अ.४ ।।

कार्यत्वात्' इति साधने घटादिर्दृष्टान्तो भवति जीवकर्तृकत्वे साध्ये दृष्टान्ताभावश्चेति । नन्वेवमचेतन-कर्तृकत्वे दृष्टान्ताभावेन निराकृते चेतनकर्तृकत्वं भवता साधनीयम् । तत्र च दृष्टान्तो नास्ति उक्तरीत्या घटादेः कुलालादिकर्तृकत्वाऽनङ्गीकारादिति चेत्सत्यम् । अत एव हि भाष्ये दुःखादिष्वकर्तृत्वमित्यनुक्त्वा अस्वातन्त्र्यमित्युक्तम् । यथा दुःखादिनिरूपितस्वतन्त्रकर्तृत्वाभावो जीवस्य एवं घटादिष्वपि स्वतन्त्रकर्तृत्वाभावः साध्यः । एवं च 'महदादिकं जीवनिष्ठस्वतन्त्रकर्तृत्वाद्यनिरूपकं कार्यत्वात् घटवत्' इति अजीवकर्तृकत्वपक्षे प्रयोगात् दृष्टान्तसम्भवः । ततः 'महदादिकं चेतनकर्तृकं कार्यत्वात् घटवत्' इति चेतनकर्तृकत्वमात्रं साध्यं न तु चेतनस्वतन्त्रकर्तृकत्वम् । ततश्च चेतनकर्तृकत्वसाधने घटादिदृष्टन्तसम्भवान्न पूर्वोक्तदोषावकाश इति ॥ नन्वेवम् 'असदेवेदमग्र आसीत्' इत्यादिश्रुतीनां का गतिरित्यत आहुः- **श्रुतिगतिस्त्विति** ॥ गम्यत इति गतिर्विषयः । **प्रदर्शितेति** ॥ श्रुतिस्थासदादिशब्दानाम् 'एतेन सर्वे' (१.४.२९) इति सूत्रे सूत्रकृतेति शेषः । नन्वसदादिशब्दानां ब्रह्मवाचकत्वेऽप्यमुख्यतयाऽन्यवाचकत्वादसदादीनां कर्तृत्वप्राप्तिर्दुर्वारेत्यत आहुः- **यत्रेति** ॥ 'आत्मन आकाशः सम्भूतः' इत्यादौ । **यत्र विरोध इति** ॥ कारणवाक्यादावित्यर्थः ॥ १३ ॥ अ. ४ ॥

**॥ इत्यसदधिकरणम् ॥**

## ५. भोक्त्रधिकरणम्

(एकीभावः परप्राप्तिरूप एव)

अत्र नये विष्णोः कारणत्वे युक्तिविरोधपरिहारः ॥ भेदाभेदवादिविवादः सन्देहबीजम् ॥ तदर्थचिन्तायां पूर्वपक्षस्य सूत्र एव सत्वात् सूत्रमादौ पठन्ति-

**॥ ॐ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ ॥ १४ ॥**

भोक्तृ इति भिन्नं पदं च । न, यतो, अत, इति शेषः । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **भोक्तुः** जीवस्य भोक्त्राऽपत्तेः 'कर्माणि विज्ञानमयः' इति मुक्तिकाले ब्रह्मत्वप्राप्तिव्यवहारात् । भोक्त्रोः जीवब्रह्मणोः **अविभागः** संसारेऽप्यभेद इति चेन्न । यतो भोक्त्राऽऽपत्तिः **लोकवत्** लोके भिन्नेऽप्युदकादौ अत्यन्त-संयोगादिनाऽभेदव्यवहारवत् स्यात् । स्थानमत्यैक्यादिनोपपन्ना भवेदत इति ॥ यद्वा इति चेत् अविभाग उक्ताऽभेदो लोकवदुदकादौ अभेदवत्स्यात् गौणः स्यादिति ॥ अत्र पक्षेऽध्याहारो नेति ज्ञेयम् ॥ तथा च अल्पशक्तिमज्जीवाभिन्नत्वाद् ब्रह्मणः कारणत्वं न सम्भवतीति पूर्वपक्षितात्पर्यम् ॥

**'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' इति (मु.उ.३–२–७) मुक्तजीवस्य परापत्तिरुच्यते । अतस्तयोरविभागः । अतः पूर्वमपि स एव । न ह्यन्यस्यानन्यत्वं युज्यते इति चेन्न । स्याल्लोकवत् । यथा लोक उदक उदकान्तरस्यैकीभावव्यवहारेऽप्यन्तर्भेदोऽस्त्येव, एवं स्यादत्रापि । तथा च श्रुतिः 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' (क.उ.४–१५) इति । स्कान्दे च–**

**'उदकं तूदके सिक्तं मिश्रमेव यथा भवेत् ।**
**न चैतदेव भवति यतो वृद्धिः प्रदृश्यते ॥**
**एवमेव हि जीवोऽपि तादात्म्यं परमात्मना ।**
**प्राप्तोऽपि नासौ भवति स्वातन्त्र्यादिविशेषणात् ॥' इति ॥**
**'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ।**
**तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे ॥' ॥ इति च ।**

**'न ते महित्वमन्वश्नुवन्ति' (ऋ.सं.७–९९–१) 'न ते विष्णो जायमानो न जातः'**

**(ऋ.सं.७.९९.२) इत्यादि च । फलत्वेऽपि युक्तिविरोधेऽन्तर्भावादत्रोक्तम् ॥ १४ ॥**

**॥ इति भोक्त्रधिकरणम् ॥ १४ ॥**

**भा.** ॥ पूर्वपक्षं श्रुत्युपन्यासपूर्वमाहुः- **[1]कर्माणीति** ॥ **इतीति** ॥ इत्यनेन । **परापत्तिः** ब्रह्मत्वप्राप्तिः । **अत इति** ॥ मुक्ताविति शेषः । मुक्तौ ब्रह्मत्वप्राप्तेरुक्तत्वादित्यर्थः । **अतः**- मुक्तावभिन्नत्वात् । **पूर्वमपि**- संसारेऽपि । **स एव**- अभेद एवेत्यर्थः । ननु मुक्तावभेदेऽपि संसारेऽभेदः कुत इत्यत आहुः- **न हीति** ॥ **हि** यतः पूर्वमन्यस्य भिन्नस्य अनन्यत्वं पश्चादभेदो न युज्यतेऽतः पूर्वमपि स एवेत्यन्वयः । सिद्धान्तमाहुः- **नेति** ॥ अयमध्याहारलब्धः । **एवमिति** ॥ गौणाभेदव्यवहारः इत्यर्थः । **अत्राऽपि** - 'कर्माणि विज्ञान' इति श्रुतावपि । इतीति शेषः । हेतोरिति तदर्थः । श्रौतैकीभावस्य **गौणत्वे** मानमाहुः- **तथा च श्रुतिः [2]यथोदकमिति** ॥ ननु जलयोरेकत्वमेवास्ति अतो नोक्तश्रुतिरुक्तार्थे मानमित्यत आहुः- **[3]स्कान्दे च उदकमिति** ॥ ननु उक्तवचनमल्पमुक्तविषयकमस्तु, एवं चोक्ताऽर्थे न

---

१. **कर्माणीति** ॥ (आ.६.७) अस्य पूर्ववाक्यम्- 'गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु' इति । अस्याऽर्थः- **गताः** मुक्ताः, **कलाः** प्राणादिपञ्चदशकलारूपा देवता, अन्ये **च प्रतिदेवतासु** देवताप्रतिबिम्बभूतासु प्रजासु **प्रतिष्ठाः** प्रतिष्ठिताः स्थितिहेतवः **सर्वे देवाः** मुक्ताः, **कर्माणि** पुष्कराख्यकर्माभिमानिदेवता मुक्ताः, तथा मुक्तो **विज्ञानमयश्चाऽत्मा** जीवश्चेत्येते **सर्वेऽव्यये** देहतोऽपि नाशशून्ये **परे** परमात्मनि **एकीभवन्ति** । एकस्थानगता एकमनस्का वा भवन्तीति ॥ अयमर्थः **सिद्धान्ते** । पूवपक्षे तु- जीवब्रह्मणोः स्वरूपैक्यमेकीभाव इति बोध्यम् ॥

२. **यथोदकमिति** ॥ (का.४.१५) अस्याऽग्रिमवाक्यम्- 'एवं मुनेर्विजानत आत्मा भवति गौतम' इति । अयमर्थः- **हे गौतम** तद्गोत्रोद्भव नचिकेतः **यथा शुद्धे** उदके **आसिक्तं** प्रक्षिप्तं **शुद्धमुदकं तादृगेव भवति** तद्वदेव भवति । एवं ब्रह्म **विजानतो मुनेः** मुनीनाम् **आत्मा** स्वामी मुख्यवायुरपि, चतुर्मुखोऽपि वा, मुक्तस्सन् **तादृगेव भवति** परमात्मसदृश एव भवति न तु स एव किमु अन्ये जीवा इति । यद्वा **मुनेः** मननशीलस्य अपरोक्षज्ञानिनः **आत्मा** परमात्मनि प्रविष्टस्वरूपं भवतीत्यर्थः । तथा च सायुज्यमाप्नोति इति भावः ।

३. **उदकं त्विति** ॥ **यतः** कारणात् उदके उदकान्तरसंयोगे **वृद्धिः प्रदृश्यते** अतः **उदके सिक्तं** प्रक्षिप्तम् **उदकम्** उदकान्तरं **मिश्रमेव** तेन संयुक्तमेव **भवेत् न तु तदेव** प्रक्षेपाऽधिकरणोदकमेव **भवति यथा** एवमेव जीवोऽपि परमात्मना तादात्म्यं प्राप्तोऽपि वेदादौ तथोक्तोऽपि असौ परमात्माऽभिन्नो न भवति स्वातन्त्र्यादिविशेष- णात् । परमात्मनो (जीवावृत्ति) स्वातन्त्र्यादिधर्मवत्वादित्यर्थः ।

मानमित्यत आहुः- '**ब्रह्मेति** ॥ इदं मुक्तमात्रविषयकम् । एतदनुरोधात् पूर्ववचनमपि मुक्तमात्रपरमिति बोध्यम् । वर्तमानभेदे कालान्तरेऽपि भेद एवेत्यत्र मानमाहुः- **न ते इति** ॥ उक्तार्थस्य स्मृतौ स्पष्टत्वात् प्रथमं स्मृतिरुदाहृता । च यतः 'यथोदकम्' इति श्रुतिरस्ति, अतः, स्कान्द इत्युक्तेश्च, हरे इत्युक्तेश्च, न जात इत्युक्तेश्च, एवं स्यादित्यतो हेतोर्नेत्यन्वयः । ननु जीवब्रह्मभेदविचारस्य फलाऽध्यायसङ्गतत्वेन तत्रैव अध्यायेऽयं विचारः कर्तव्यः नत्वत्रेत्यत आहुः- **फलत्वेऽपीति** ॥ अस्याधिकरणस्य फलाध्यायसङ्गतत्वेऽपीत्यर्थः । **अत्र**- अस्मिन् पादे । **उक्तमिति** ॥ इदमधिकरणमिति शेषः ॥ १४ ॥ अ.५ ॥

**॥ इति भोक्त्रधिकरणम् ॥**

१. **ब्रह्मेशानादिभिरिति** ॥ **हे हरे ब्रह्मेशानादिभिः** मुक्ताऽमुक्तचतुर्मुखादिभिः **देवैः यत् कैवल्यं** सर्वोत्तमत्वं **प्राप्तुं नैव शक्यते तत्** (कैवल्यम्) **यस्य स्वभावः** नैसर्गिकः **स केवलः** सर्वोत्तमः **भवानेव** इत्यर्थः । '**न ते महित्वम्**', '**न ते विष्णो इति** ॥' एतद् द्वयं व्या. (५१ पु.) ॥ १४ ॥ अ.५ ॥

## ६. आरम्भणाधिकरणम्

अत्राऽधिकरणे हरेः स्वातन्त्र्येण जगत्कारणत्वे बहुयुक्तिविरोधपरिहारः । तदर्थचिन्तायां तत्कर्तृत्वं स्वतन्त्रबहुसाधनसापेक्षं न वेति संशयः । लोकदृष्टिरलौकिकत्वं च सन्देहबीजम् ॥

**(ब्रह्मैव जगतः स्वतन्त्रकारणम्)**

**॥ ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ ॥ १५ ॥**

अत्र तदिति लुप्तषष्ठीकं भिन्नं च पदम् । तेन स्वतन्त्रकारणं गृह्यते । 'सत्वाच्चाऽवरस्य' (२.१.१७) इत्युत्तरसूत्रेऽवरकारणस्योक्तेः । अयमर्थः- **तस्य स्वतन्त्रकारणस्य तदनन्यत्वं ब्रह्मणाऽत्यन्ताभेदः आरम्भणशब्दादिभ्यः** आरम्भणशब्दघटित 'किंस्वित्' इत्यादिश्रुतेरिति, आदिना युक्तिभ्यश्चेति । युक्तयश्च 'परतन्त्रो ह्यपेक्षेत' इति स्मृतावुक्ताः स्वतन्त्रत्वादयो ग्राह्याः। विष्णोः स्वतन्त्रकारणाऽनन्यत्वे सिद्धे विष्णोरन्यत्स्वतन्त्रकारणं नेति फलति । कारणे स्वतन्त्रत्वं च- स्वातिरिक्तस्वकार्यकर्त्रनाविष्टत्वं, तदनधीनसत्ताकत्वं वा, प्रकृत्यादेः कारणत्वेऽपि महदादिकार्यकर्त्रा परमात्मना आविष्टत्वात् तदधीनसत्तावत्वाच्च न स्वतन्त्रकारणत्वम् । अतो विष्णोः स्वतन्त्रसाधनान्तरशून्यत्वं सिद्धम् ।

**स्वतन्त्रबहुसाधना सृष्टिर्लोके दृष्टा । नैवं ब्रह्मणः । स्वरूपसामर्थ्यादेव तस्य सृष्टिः ।**

**'किं स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्कथाऽऽसीत्'**

**(ऋ.सं.१०–८१–२)**

**इति ह्याक्षेपः । अधिष्ठानाद्यनुक्तेः । आदिशब्दाद्युक्तिभिश्च ।**

**'परतन्त्रो ह्यपेक्षेत स्वतन्त्रः किमपेक्षते ।**
**साधनानां साधनत्वं यतः किं तस्य साधनैः ॥' इत्यादिभिः ॥ १५ ॥**

भा. ॥ अधिकरणपूर्वपक्षमाहुः- **स्वतन्त्रेति** ॥ यद्यपीति शेषः । यद्यपि लोके **सृष्टिः** घटादिसृष्टिः **स्वतन्त्रबहुसाधना** कर्तृव्यतिरिक्तस्वतन्त्रदण्डचक्रादिबहुसाधनविशिष्टा दृष्टा । **नैवमिति** । तथापीत्यादिः। तथापि- **ब्रह्मणो** महदादिसृष्टिः एवं कर्तृव्यतिरिक्तस्वतन्त्रबहुसाधनसापेक्षा **न** इत्यर्थः । तर्हि तस्य कथं सृष्टिरित्यत आहुः- **स्वरूपसामर्थ्यादेवेति** ॥ स्वरूपभूतप्रयत्न-शक्ति-ज्ञानादेवेत्यर्थः । **तस्येति** ॥

कर्तृत्वं षष्ठ्यर्थः । सामर्थ्यादिव सृष्टिरित्यत्र प्रमाणमाहुः- [1]**किं स्विदिति** ॥ नन्वत्र प्रश्न एव क्रियते अतस्तेन कथं स्वरूपसामर्थ्यादिति कल्पनमित्यत आहुः- **आक्षेप इति** ॥ अत्र पश्न एव क्रियते इति किं न स्यादित्यत आहुः- **अधिष्ठानाऽद्यनुक्तेरिति** ॥ 'किं स्विद्धिमस्य भेषजम्' इति प्रश्ने 'अग्निर्हिमस्य भेषजम्' (तै.सं.७.४.१८) इति परिहारवत् किमधिष्ठानादीति प्रश्ने इदमधिष्ठानादीति परिहाराभावादाक्षेप एवेति भावः । ननु आक्षेपेऽपि सामर्थ्यादिवेति कथं लभ्यत इति चेदुच्यते । यद्यधिष्ठानादिकं स्यात्तर्हि प्रमाणैरुपलभ्येत नोपलभ्यते च । सृष्ट्यादिकं च प्रवर्तते । तच्च तस्य सामर्थ्यविशेषादेव जायत इत्याक्षेपस्य विपर्यये पर्यवसानावश्यकत्वेन सामर्थ्यलाभ इति ॥ अनेन 'महदादिसृष्टिः कर्तृव्यतिरिक्तस्वतन्त्रबहुसाधनापेक्षा सृष्टित्वात् घटसृष्टिवत्' इति पूर्वपक्ष्यनुमानस्य श्रुतिबाध उक्तो भवति । युक्तिविरुद्धं च पूर्वपक्ष्यनुमानमित्याहुः- **आदिशब्दादिति** ॥ गृहीताभिरिति शेषः । युक्तीनामाभासतापरिहाराय युक्तिबोधकवचनमाहुः- [2]**परतन्त्र इति** ॥ अत्र 'परतन्त्रो हि' इत्यनेन अस्वतन्त्रत्वादिति, 'स्वतन्त्रः किमपेक्षत' इत्यनेन स्वतन्त्रत्वादिति, 'साधनानाम्' इत्यनेन साधनसत्ताप्रदत्वादिति, केवलव्यतिरेकिहेतुत्रयं सूचितम् । **इत्यादिभिरिति** ॥ इत्यादिवचनसूचिताभिरित्यर्थः । **हि** यतः अधिष्ठानाद्यनुक्तेः कथाऽऽसीदित्यन्त आक्षेपः, अतः इत्यादिभिर्युक्तिभिश्च स्वरूपसामर्थ्यादिव सृष्टिरित्यन्वयः ॥ १५ ॥

**(विष्ण्वन्वयत् स्वतन्त्रं साधनान्तरं नास्ति)**

**युक्त्यन्तरेण स्वतन्त्रसाधनाऽन्तरप्रतिक्षेपाय सूत्रम्-**

## ॥ ॐ भावे चोपलब्धेः ॐ ॥ १६ ॥

**तदनन्यत्वं, स्वतन्त्रसाधनस्य इति वर्तते । यथायथमावृत्तिः । प्रसङ्गबलात्तदन्यस्येति लभ्यते । अयमर्थः-**

---

१. **किंस्विदासीदिति** ॥ (ऋ.१०.७१.२) 'यतो भूमिं जनयन् विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षा' इति वाक्यशेषः । अयमर्थः- **विश्वकर्मा** जगत्कर्ता हरिः सृष्टिकाले **यतो** येन अधिष्ठानादिना **भूमिं द्यां च जनयन्** उत्पादयन् **वि** विशेषेण बभूव, इति शेषः । येन वाऽधिष्ठानादिना **महिना** स्वमहिम्ना **विश्वचक्षाः** सर्वावयवैः सर्वेन्द्रियैर्वा, दर्शनशक्तिमान् **भूमिं द्यां च और्णोत्** प्रलये आवृणोत् **तत् अधिष्ठानम्** अधिकरणं **किं स्विदासीत्** किमासीत् न किमपि **आरम्भणं** करणं वा **कतमत्स्वित्** कतमदासीत् ? **कथा** कथंरूपम् **आसीत्**? न किञ्चित्, न कथमपि इत्यर्थः ।

२. **परतन्त्र इति** ॥ **यतो** हरेः सकाशात् **साधनानां साधनत्वं** भवतीति शेषः । शिष्टं स्पष्टम् ॥ १५ ॥

**तदन्यस्य विष्ण्वन्यस्य स्वतन्त्रसाधनस्य भावे सत्वे, उपलब्धेश्च प्रमाणजन्यज्ञानविषयत्वप्रसङ्गाच्च, स्वतन्त्रसाधनस्य तदनन्यत्वं(परमात्माऽनन्यत्वं) इति ॥**

**स्वतन्त्रसाधनभावे प्रमाणैरुपलभ्येत ।**

**'अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कुतश्चन ।**
**अतो वेदत्वमेतेषां यतस्ते सर्ववेदकाः ॥' इति स्कान्दे ॥**

भा. ॥ सूत्राऽर्थमाहुः- **स्वतन्त्रेति** ॥ उपलब्धेः प्रमाणसापेक्षत्वादाहुः- **प्रमाणैरिति** ॥ प्रमाणाऽनुपलब्धमपि वस्तु अस्तीति किं न स्यादित्यत आहुः- [1]**अनुक्तमिति ॥ स्कान्द इति** ॥ स्कान्द इत्युक्तेः प्रमाणैरनुपलब्धं वस्तु नास्त्येवेति शेषः ॥ १६ ॥

**(विष्ण्वधीन(अवर)कारणत्वमप्रतिषिद्धम्)**

**'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च' (तै.आ.३–१३) इत्यादिना साधनान्तरप्रतीतेः कथमनुपलब्धिरित्यत आह–**

**॥ ॐ सत्वाच्चावरस्य ॐ ॥ १७ ॥**

अबादिस्वतन्त्रसाधनाऽन्तरसत्वादुक्तमनुपपन्नमिति शङ्कावारणाय प्रवृत्तं सूत्रं श्रुत्युपन्यास-पूर्वमवतारयन्ति -[1]**अद्भ्य इति ॥ इत्यादिनेति** ॥ आदिना 'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ' इति श्रुतिः 'प्रकृतिं स्वामवष्टभ्य' (९.८) इति गीता च गृह्यते ॥

**उपलब्धेरिति वर्तते । प्रथमया विपरिणम्यते । चोऽवधारणे । नेत्यपकृष्यते । अयमर्थः - उपलब्धिः**

---

१. **अनुक्तमिति ॥ यतः ते** सेतिहासपुराणा वेदाः **सर्ववेदकाः** सर्ववस्तुप्रतिपादकाः । **अतो वेदत्वम् एतेषां** वेदशब्दवाच्यत्वम् । अतः **पञ्चभिः** इतिहासपुराणसहितत्वेन पञ्च(त्व)सङ्ख्याकैः **वेदैः अनुक्तम्** अप्रतिपादितं **वस्तु** भगवद्गुणविशेषातिरिक्तं **कुतश्चन** किञ्चिदपि **नास्ति** इत्यर्थः ॥ १६ ॥

१. **अद्भ्यस्सम्भूत इति** ॥ (तै.आ.३.१३) 'विश्वकर्मणः समवर्तताऽधि । तस्य त्वष्टा विदधद्रूपमेति तत्पुरुषस्य विश्वमा जानमग्रे' इति वाक्यशेषः । अयमर्थः- **यः** तत्पुरुषाख्यो हिरण्यगर्भः **विश्वकर्मणो** विश्वकर्तुः हरेः सकाशात् **अद्भ्यः पृथिव्यै** पृथिव्या एतदुपलक्षितपञ्चमहाभूतैः **रसाच्च** तदुपलक्षितपञ्चतन्मात्राभिश्च युक्तः **सम्भूतः** उत्पन्नः सन् **अधि** सर्वस्मादधिकत्वेन **समवर्तत, तस्य** तत्पुरुषस्य **अग्रे** तदुत्पत्तेः पूर्वमेव **जानं** जातं **विश्वं** ब्रह्माण्डाख्यं **रूपं** चतुर्मुखविग्रहं **त्वष्टा** महादीप्तिः भगवान् **विदधत्** धारयन् **एति** वर्तते इति ॥

**'अद्भ्यः सम्भूतः'** इति श्रुत्या साधनाऽन्तरप्रतीतिरस्तीति चेन्न । **अवरस्य च** तदधीनस्यैव साधनाऽन्तरस्य प्रकृत्यादेः **सत्वात्** 'अद्भ्यः' इत्यादिना सत्वबोधनादिति ॥

**अवरस्य तदधीनस्य साधनस्य सत्त्वात् । 'काल आसीत्पुरुष आसीत्परम आसीत् तद्यदासीत् तदावृतमासीदथ ह्येक एव परम आसीद्यस्यैतदासीन्न ह्येतदासीत्' इति हि काषायणश्रुतिः ॥**

भा. ॥ सौत्रपदं व्याचक्षते- **अवरस्येति** ॥ **सत्वादिति** ॥ अस्य सौत्रपदार्थमात्रविवृतिपरत्वेन नान्यत्रान्वयः 'अद्भ्यः सम्भूतः' इत्यत्रास्वतन्त्रपदं न श्रूयते । अतः सा श्रुतिः अस्वतन्त्रचेतनपरेति वक्तुं न शक्यत इत्यत आहुः - **'काल आसीदिति ॥ श्रुतिरिति ॥** यतः श्रुतिरस्ति अतोऽवरस्य सत्वादित्यन्वयः ॥ १७ ॥

**('नासदासीत्' इति श्रुतिः न सर्वासत्त्वसाधिका)**

उक्तार्थस्यैवाक्षेपसमाधानाभ्यां दृढीकरणाय सूत्रम्-

**॥ ॐ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॐ ॥ १८ ॥**

सत्वाच्चाऽवरस्येति वर्तते । असदिति भावप्रधानम् । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **असद्व्यपदेशात्** 'नाऽसदासीत्' इति श्रुत्या सर्वस्याऽसत्वव्यपदेशात् **अवरस्य** अबाध्यस्वतन्त्रसाधनस्य सत्वं **नेति चेन्न- 'वाक्यशेषात्'** 'तम आसीत्' इति वाक्यशेषबलात् धर्माऽन्तरेण अव्यक्तत्वस्वतन्त्रत्वादि धर्मविशेषैर्निमित्तैः असत्वव्यपदेशादिति ॥

**'नासदासीन्नो सदासीत्' (ऋ.सं.१०–१२९–१) इति सर्वस्यासत्त्वव्यपदेशान्नेति चेन्न । अव्यक्तत्वपारतन्त्र्यादिधर्मान्तरेण हि तदुच्यते । 'तम आसीत्' (ऋ.सं.१०–१२९–३) इति वाक्यशेषात् । न चान्यत्र प्रमाणमस्ति । 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' (म.ना.उ.१–५)**

---

१. **काल आसीदिति** ॥ यथायथमावृत्तिविपरिणामौ । अयमर्थः- **तस्मिन्** प्रलये **काल आसीत् पुरुषः** जीव **आसीत् परमः** परमात्माऽपि **आसीत् यत्** यस्मात् **यत्** परमात्मातिरिक्तवस्तु **आसीत् तत्** (वस्तु) **तदावृतमासीत्** परमात्मनाऽवृतमासीत् **तदधीनमासीत्** । **अथ** तस्मात् **एक एव परमः** (परमात्मा) **आसीत्** इत्युच्यते **हि** प्रसिद्धम् । **यस्य** परमात्मनः सकाशात् **एतत्** जगद् **आसीत्** उत्पन्नं **यतः** सृष्टेः पूर्वे **एतत्** जगत् **नासीत्** उत **एक एव आसीत्** इति सम्बन्ध इति ॥ १७ ॥

'अनाद्यनन्तं जगदेतदीदृक् प्रवर्तते नात्र विचार्यमस्ति ।
न चान्यथा क्वापि च कस्य चेदमभूत्पुरा नापि तथा भविष्यत्'

'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' (भ.गी.१६–८) ।

'असत्यमाहुर्जगदेतदज्ञाः शक्तिं हरेर्ये न विदुः परं हि
यस्सत्यरूपं जगदेतदीदृक् सृष्ट्वा त्वभूत्सत्यकर्मा महात्मा' ।

'अथैनमाहुस्सत्यकर्मेति, सत्यं ह्येवेदं विश्वमसौ सृजते ।
अथैनमाहुर्नित्यकर्मेति नित्यं ह्येवासौ कुरुते ॥'

'यच्चिकेत सत्यमित्तन्न मोघम्' (ऋ.सं.१०–५५–६) इत्यादिश्रुतिस्मृतिभ्यः ।

'परस्परविरोधे तु वाक्यानां यत्र युक्तता ।
तथैवार्थः परिज्ञेयो नावाक्या युक्तिरिष्यते ॥' इति बृहत्संहितायाम् ।

'विरुद्धवत्प्रतीयन्ते आगमा यत्र वै मिथः ।
तत्र दृष्टानुसारेण तेषामर्थोऽन्ववेक्ष्यते ॥' इति च ॥

'ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि ।
इत्यादिवद्विरुद्धानि वचनान्यथ युक्तयः ॥

प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः ।
वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना ।
अन्येषां तु विरुद्धानां विप्रलम्भोऽथवा भ्रमः ॥' इति च भागवततन्त्रे ।

'शास्त्रार्थयुक्तोऽनुभवः प्रमाणं तूत्तमं मतम् ।
मध्यमं त्वागमो ज्ञेयः प्रत्यक्षमधमं स्मृतम् ॥
प्रत्यक्षयोरागमयोर्विरोधे निश्चयाय तु ।
अनुमाद्या न स्वतन्त्राः प्रमाणपदवीं ययुः ॥' इति पुरुषोत्तमतन्त्रे ॥

**भा.॥** श्रुत्युपन्यासपूर्वं सूत्राऽर्थमाहुः- **'नाऽसदासीदित्यादिना ॥ नेतीति ॥** अस्वतन्त्रकारणमिति शेषः । **धर्मान्तरेणेति ॥** तेन निमित्तेनेत्यर्थः । **तदिति ॥** अस्वतन्त्रकारणस्यासत्वमित्यर्थः । **उच्यते इति ॥** नासदित्यत्र । **हि** यत उच्यतेऽतो नेति चेन्नेत्यन्वयः । वाक्येति सौत्रखण्डस्य व्याख्यानम्- **[२]तम आसीदित्यादि ॥ वाक्यशेषादिति ॥** अस्य उच्यत इत्यनेनान्वयः । अयमाशयः- तत्र हि तमःपदवाच्यचेतनाचेतनात्मकप्रकृतेः सत्वं श्रूयते, तदन्यथानुपपत्या 'नासदासीत्' इति श्रुतौ धर्मान्तरापेक्षयैवासत्वं वक्तव्यमिति ॥

**'वाचारम्भणं विकारः'** इत्यादिश्रुतेः चेतनाचेतनात्मकप्रपञ्चस्य ब्रह्मानन्यत्वमुच्यतेऽत्राधिकरणे इत्यपव्याख्यां परकृतां पराकुर्वन्ति- **न चाऽन्यत्रेति ॥ अन्यत्र**- चेतनाऽचेतनस्य ब्रह्मानन्यत्वे, जगतः बाध्यत्वे च । **प्रमाणमस्तीति ॥ नाऽस्तीत्यन्वयः** । प्रमाणविरुद्धं च परव्याख्यानमिति भावेनाहुः-

---

१. **नासदासीदिति** ॥ (ऋ. १०-१२१-१) )नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमापरो यत् । किमावरीवः कुहकस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् । न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः। आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्च नास' इति श्रूयते । अयमर्थः- **तदानीं** प्रलये **असत्** वाय्वन्तरिक्षरूपं भूतं **नाऽसीत् सत्** पृथिव्यप्तेजोरूपभूतं **नो आसीत्** कार्यं वाय्वादिकं सर्वथा नासीत् । कारणभूतं वाय्वादिकं चेष्टमानं नासीदिति हृदयम् । **रजः** तदुपलक्षितगुणत्रयं **नो आसीत्** । **यच्च परः सर्वगतं व्योम** जडप्रकृतिः, अव्याकृताकाशं च, तदपि **नो आसीत्** मूर्तसम्बन्धाभावात् । **मृत्युः** मरणं, तत्साधनं वा, **नासीत्** । **अमृतं** स्वर्गादिकं **नासीत्** । **तर्हि तदा** प्रलये **रात्र्या अह्नश्च प्रकेतः** सामर्थ्यं **नासीत्** । तस्मात् **कुह** कुत्र **कस्य शर्मन्** शर्मणे सुखार्थं **किमावरीवः** किम् अवर्तत ? किमावृणोद्वा, न किमपि, **गहनं गभीरम्** अतिगम्भीरम् **अम्भः** चेतनप्रकृत्यात्मकं जलम् **आसीत् किम्,** नासीदेव, तर्हि किमासीदित्यत आह-**आनीदिति ॥ तर्हि** प्रलये **तत्** ब्रह्म **एकमेव अवातं** वायुप्रेरणारहितं सत् **स्वधया** सुखेन, स्वसामर्थ्येन वा, **आनीत्** अचेष्टत कालादिकं प्रेरयति स्म । **तस्मात्** परब्रह्मणोऽ**न्यत् परः** उत्तमं **किञ्चित्** स्वातन्त्र्यादिधर्मोपेतं वस्तु **नास** न बभूव । आपस्तु तदेव उद्रिक्तमास **ह** प्रसिद्धमिति । अयं च **सिद्धान्ते** । पूर्वपक्षी तु कस्यापि भावपदार्थस्य सत्वं नेति वक्ति श्रुतिरियमिति मन्यते ।

२. **तम आसीदिति** ॥(ऋ.१०.१२९.३) 'तम आसीत्तमसा गूढमग्रेऽप्रकेतं सलिलं सर्वमा इदम्' इति मन्त्रः। **अग्रे** प्रलये **यत् तमः** दुर्गाख्यं चित्प्रकृतिरूपम् **अप्रकेतम्** अपरिमितम् **इदं सर्वम् आ** समन्तात् सर्वस्मिन् देशे अविज्ञातं, सलिलं भूत्वे इति शेषः । **आसीत्** तेन **तमसा** सलिलेन **इदं सर्वं** जगत् **गूढं** गूहितम्, **आः** आसीदित्यर्थः। आ इति अस्तोर्लङि रूपम् । यद्वा **अप्रकेतं** प्रभावरहितं, 'नासदासीत्' इति श्रुतिस्थटीकाऽनुरोधात् । तत्र हि रात्र्या अह्नश्च आसीत्प्रकेत इत्यस्य प्रभाव इत्यर्थ उक्तः। अत्र टीकायामपरिमितमित्येतत् आङोऽर्थकथनम् ।

[1]**अजो हीत्यादिना** ॥ अथ चेतनस्य ब्रह्मानन्यत्वमचेतनस्य बाध्यत्वं च प्रमाणविरुद्धमित्याहुः- [2]**अनादीति** ॥ ननु 'जीवो ब्रह्मणो न भिद्यते चेतनत्वात् ब्रह्मवत्' , 'जगत् बाध्यं दृश्यत्वात्

१. **अज इति** ॥ (महा.ना.१२.५)'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्' इति पूर्व-वाक्यम् । **लोहितशुक्लकृष्णां** रजस्सत्वतमोगुणात्मिकां **बह्वीं प्रजां सरूपां** स्वसदृशमहदादिबहुकार्याणि **जनयन्तीम् एकामजाम्** उत्पत्तिरहितां प्रकृतिम् **एकोऽजः** संसारिजीवः **जुषमाणः** सेवमानः **अनुशेते** अनुवर्तते । **अन्यः** कश्चित् मुच्यमानः **भुक्तभोगां** भुक्तो भोगो यस्यां ताम् **एनां** प्रकृतिं **जहाति** अस्यां प्रकृतौ भोगान् भुक्त्वा प्रलये परित्यजतीत्यर्थः । अत्र मुक्ताऽमुक्तयोर्भेदोक्त्या परमात्मनोऽपि (नित्यमुक्तत्वात्) भेद उक्त इति ज्ञेयम् ।
२.**अनादीति** ॥ **अनाद्यनन्तं** प्रवाहत उत्पत्तिनाशरहितम् **ईदृक्** नानाविधं प्रवाहरूपेण वर्तमानं **एतत्** परिदृश्यमानं **जगत् प्रवर्तते** प्रतिकल्पमिति शेषः । **अत्र** उक्तार्थे **विचार्यं** निर्णेतव्यं **न किमप्यस्ति** । सर्वमपि निर्णीतमेवेति तात्पर्यम् । **विचार्यं** संशयो **नास्ति** इति वार्थः । **इदं** विश्वं **क्वापि** काले, देशे च, **कस्यापि** पुरुषस्य **अन्यथा** बाधितं **पुरा** पूर्वं **नाभूत्** उत्तरत्रापि **तथा** बाध्यं **नाभविष्यत्** इत्यर्थः । एतेन जगत् प्रवाहतो नित्यमबाध्यं चेत्युक्तं भवति । **असत्यमिति** ॥ (गी.१६-८) 'अपरस्परसम्भूतं किमन्यत्कामहैतुकम् । एतां दृष्टिमवष्टभ्य नष्टात्मनोऽल्पबुद्धयः ॥ प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः' इति वाक्यशेषः । अयमर्थः- 'प्रवृत्तिश्च निवृत्तिश्च जना न विदुरासुराः' इति पूर्ववाक्ये प्रकृता आसुरा **जगत् असत्यम्** अत एव **अप्रतिष्ठं** ज्ञानबाध्यम् **अनीश्वरम्** ईश्वररहितम् **अपरस्परसम्भूतम्** ईश्वराधिष्ठितप्रकृतितो महान्, महतोऽहङ्कार उत्पन्न इत्यादि-क्रमेणानुत्पन्नं, सत्यं न चेत् किमसत्; अपरस्परसम्भूतं चेत्किं नित्यं, किं वा स्वतो जातमिति पृच्छति-**किमिति** ॥ उत्तरमाह-**अन्यदिति** ॥ सदसद्भ्याम् **अन्यत् कामहैतुकम्** अविद्योपादानकमित्याहुः । **एतां दृष्टिं** ज्ञानम् **अवष्टभ्य नष्टात्मानो** दुष्टचित्ताः **अल्पबुद्धयः** अल्पज्ञानाः **जगतः अहिताः** विरोधिनो **जगतः क्षयाय** अनिष्टप्राप्तये, विनाशाय वा, **उग्रकर्माणः** सन्तः **प्रभवन्ति** कलियुगादावुत्पद्यन्त इत्यर्थः । असुरा एवं (जगदसत्यतावादिनो) भवन्तीति कथनेन जगत्सत्यत्वादिकं वास्तवमित्युक्तं भवति ॥ **असत्यमाहुरिति** ॥ (स्मृतिरियं) ये **परां** सर्वोत्तमां **हि** प्रसिद्धां **शक्तिं न विदुः** ते **अज्ञाः**, त एव **एतत् जगत् असत्यमाहुः** । **यो महात्मा सत्यरूपमेव ईदृक्** नानाविधं **एतत् जगत् सृष्ट्वा सत्यकर्मा** तन्नामा **अभूत्** । तादृशस्य हरेः इत्यर्थः । अनेनाऽपि जगत्सत्यत्वमेवोक्तम् ॥ **अथैनमाहुरिति** ॥ (श्रुतिरियं) **हि** यतः **असौ** विष्णुः **सत्यमिदमेव** प्रतीतमेव **विश्वं** (जगत्) **सृजते अथ** तस्मात् **एनं** विष्णुं **सत्यकर्मा** इत्याहुः ॥ **अथैनमिति** ॥ **हि** यतः **असौ** हरिः **नित्यमेव** (अबाध्यमेव) **विश्वं कुरुते** । **अथ** तस्मात् **एनं** विष्णुं नित्यकर्मेत्याहुरित्यर्थः ॥
**यच्चिकेतेति** ॥ (ऋ.१०.५५.६) 'वसु स्पार्हमुत जेतो त दाता' इति वाक्यशेषः । अयमर्थः- **स्पार्हं** स्पृहणीयं हविरादिकं **वसु जेता** भक्तेभ्यः प्राप्ता **उत** तथाऽपि तेभ्यः **स्पार्हं वसु** यज्ञादिफलं **दाता उत** तथाऽपि (दातापि) परमेश्वरः इन्द्रादिनामा **यत् विश्वं चिकेत** चकार **तत् सत्यमित्** सत्यमेव न मिथ्या, यतः **तत्** विश्वं **न मोघम्** अर्थक्रियाद्यनुपयुक्तं न भवतीति । आदिना 'कविर्मनीषी, (ई. ८) विश्वं सत्यं मघवाना', (ऋ.२.२४.१२) इत्यादेः सङ्ग्रहः ॥

शुक्तिरूप्यवत्' इत्याद्यनुमानसत्वात् कथमन्यत्र प्रमाणाभाव इत्यत आहुः- **[1]परस्परेति ॥** ननु 'वाचारम्भणम्' इत्यादि श्रुतिस्मृतयः प्रमाणं भवन्तीति कथं प्रमाणाभाव इत्यत आहुः- **[2]विरुद्धवदिति ॥** प्रपञ्चमिथ्यात्ववर्णनपरश्रुत्यादेरपि अन्यार्थवर्णनं स्मर्यते इत्याहुः- **ईशोऽनीश[3] इति ॥** प्रमाणत्वाविशेषाद्युक्तेः कुतो नाऽर्थसाधकत्वमित्यत आहुः- **[4]शास्त्रार्थेत्यादि । पुरुषोत्तमतन्त्र इति ॥** अत्र भाष्ये **श्रुतियुक्तय इति शेषः** । यथायथमावृत्तिविपरिणामौ । **अयमन्वयः**- च यतो अन्यत्र प्रमाणं नास्ति अत, इत्यादिश्रुतिस्मृतिभ्यः, प्रपञ्चस्य ब्रह्मानन्यत्वं विरुद्धमतश्च, बृहत्संहितायामित्युक्तेः, 'अन्ववेक्षते' इति ब्रह्मतर्के उक्तेश्च, भागवततन्त्रे इत्युक्तेः पुरुषोत्तमतन्त्रे इत्युक्तेश्च, श्रुतियुक्तयः, 'वाचारम्भणम्' इत्यादिश्रुतयः, 'जीवो ब्रह्मणो न भिद्यते' इत्यादियुक्तयश्च, अन्यत्र न प्रमाणं भवन्ति अतश्च, अन्यत्र अन्यत् परव्याख्यानं प्रमाणं यथार्थं न भवतीति ॥ १८ ॥

**(विष्णोः स्वाधीनमहदादिभिः सृष्टिरैश्वर्यद्योतिका)**

**ननु प्रकृत्यादि साधनमङ्गीकृत्य तस्य ईश्वराधीनत्वकल्पनापेक्षया तद्विना सृष्ट्यादिकं करोतीत्यर्थाऽभ्युपगमस्यातिशयेन माहात्म्यसम्पादकत्वात् तथैव युक्तमिति शङ्कापरिहाराय सूत्रम्-**

---

१. **परस्परेति ॥ वाक्यानां परस्परविरोधे सति यत्र** अर्थे **युक्तता** युक्तिसिद्धताऽस्ति **तथैवाऽर्थः** स एवार्थः **परिज्ञेयः** स्यात् । अदृष्टविषये, **अवाक्या** श्रुतिस्मृत्यानुकूल्यरहिता **युक्तिः** अनुमानं **नेष्यते** प्रमाणतया नेष्यते इत्यर्थः॥

२. **विरुद्धवदिति ॥** (इदं ब्रह्मतर्कवचनम्) **दृष्टं** प्रत्यक्षम्, अतिबहुलप्रमाणदर्शनं वा, **अन्ववेक्ष्यते** अवगम्यत इत्यर्थः। शिष्टं स्पष्टम् ।

३. **ईश इति ॥ ईशः** ईशत्वेनाभिमतः **अनीशः** ईशो न भवति, असमर्थो वा । पूर्वाऽर्धेन अनीशत्वादिमतत्रयमुक्तम् । अथ विरुद्धदृश्यत्वानुमानवत् आगमो न त्याज्यो किन्तु तस्य गतिः कल्पनीया इत्याह- **वेदेति ॥ वेदानुसाराः** पञ्चरात्रादयः तेषु **विरोधे** परस्परविरोधे (प्रबलप्रमाणविरोधे) **अन्यार्थकल्पना** प्रतीतार्थादन्यार्थकल्पना **विरुद्धानां** वेदादिविरुद्धानाम् **अन्येषां** पाशुपतादीनां **विप्रलम्भः** वञ्चनं प्रयोजनमिति शेषः, **अथवा भ्रमः** कारणमिति शेष इत्यर्थः । शिष्टं स्पष्टम् । एतयोर्द्वयोः ज्ञान्यज्ञानिकर्तृभेदेन व्यवस्था बोध्या ।

४. **शास्त्रार्थेति ॥** शास्त्रतात्पर्यविषयीभूतार्थविषयकः **अनुभवः** यथार्थज्ञानं **उत्तमम्** उत्तमप्रमाणं **मतं** साक्षाज्ज्ञेयविषयीकारित्वात् उत्तमप्रमाणतयाभिमतम् । **आगमः** तु मध्यमप्रमाणमिति ज्ञेयः । यथार्थज्ञानसाधनतया ततः (यथार्थानुभवात्) अस्यावरत्वात्, दृष्टादृष्टसर्वविषयकत्वेन, दृष्टमात्रविषयकप्रत्यक्षात् पूर्वभावित्वाच्च, मध्यमत्वमिति हृदयम् । **प्रत्यक्षं** तु अनुप्रमाणभूतप्रत्यक्षन्तु असर्वविषयकत्वात् **अधमं प्रमाणं स्मृतम्** इत्यर्थः । **प्रत्यक्षयोरिति ॥** अपेक्ष्यन्त इति शेषः । **निश्चयाय** एकतरार्थनिर्णयाय अनुमाद्या नापेक्षन्ते । अतः **स्वतन्त्राः** केवलानुमाद्याः **प्रमाणपदवीं** प्रामाण्यमार्गं प्रमाणमिति यावत् । **न ययुः** इत्यर्थः । शिष्टं स्पष्टम् ॥१८॥

**॥ ॐ युक्तेः शब्दान्तराच्च ॐ ॥ १९ ॥**

सत्वादवरस्येति वर्तते । यथायथम् आवृत्तिविपरिणामौ । अङ्गीकर्तव्यमिति शेषः । अयमर्थः - **अवरस्य** भगवदधीनप्रकृत्यादिसाधनस्य सत्वमङ्गीकर्तव्यमेव **युक्तेः** युक्तत्वात्, **शब्दान्तराच्च**, 'अद्भ्यः सम्भूतो हिरण्यगर्भ' इति श्रुतेश्च 'शक्तोऽपि भगवान्विष्णुरकर्तुं कर्तुमन्यथा । स्वभिन्नं कारणाभिन्नं भिन्नं विश्वं करोत्यजः' इति श्रुतेश्च । अन्तरग्रहणात् व्यवहित(१६)पूर्वसूत्रोदाहृत-'अद्भ्यः सम्भूत' इत्यादि-श्रुतेश्चेति ॥ यथा अपङ्गुना गच्छता लीलाऽर्थमवष्टब्धदण्डस्य ऐश्वर्यद्योतकत्वं तथा शक्तस्याऽपि विष्णोः स्वाधीनसाधनेन सृष्टिः महैश्वर्यद्योतिका भवतीति भावः ।

**'साधनानां साधनत्वं यदात्माधीनमिष्यते ।**
**तदा साधनसम्पत्तिरैश्वर्यद्योतिका भवेत् ॥'**

**इत्यादेः साधनान्तरेण सृष्टिर्युक्ता । 'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ' (म.ना.उ. १–१२) इत्यादि शब्दान्तराच्च ॥**

भा. ॥ प्रमाणोपन्यासपूर्वं सूत्रतात्पर्यमाहुः- **'साधनानामित्यादिना** ॥ १९ ॥

**(महदादिसृष्टिः कर्तृव्यतिरिक्तसाधनसाध्या)**

साधनान्तरसद्भावो युक्तिसिद्धश्चेत्यर्थप्रतिपादनाय सूत्रम्-

**॥ ॐ पटवच्च ॐ ॥ २० ॥**

अवरस्य सत्वमङ्गीकर्तव्यम् । युक्तेः इति वर्तते । अयमर्थः- **अवरस्य** तदधीनस्य प्रकृत्यादिसाधनस्य सत्वमङ्गीकर्तव्यमेव **पटवत्** युक्तेः पटसृष्टिदृष्टान्तकानुमानात् इति (चेति) । अनुमानप्रयोगस्तु- 'ईश्वरकर्तृका महदादिसृष्टिः कर्तृव्यतिरिक्तसाधनसाध्या सृष्टित्वात्पटसृष्टिवत्' इति ॥

---

१. **साधनानामिति** ॥ **साधनानाम्** उपादानादिकारणानां **साधनत्वं** कार्यजननसामर्थ्यं **यदा** यतः **आत्माधीन-मिष्यते, तदा** ततः कारणात् **साधनसम्पत्तिः** आत्मनः **ऐश्वर्यद्योतिका भवेत्** न तत्र विरोधिर्नीत्यर्थः। **अद्भ्यः सम्भूत इति** ॥(महाना.१.११)**हिरण्यगर्भः अद्भ्यः** अबुपलक्षितपञ्चमहाभूतैः **सम्भूतः** जातः **इति** । एवम् **अष्टौ** इन्द्रादिलोकपालाश्च सम्भूताः । यद्वा- तैत्तिरीये 'अष्टौ पुत्रासोऽदितेः' (तै.अ.१.१३) इत्युक्त्वा 'मित्रश्च वरुणश्च धाता च अर्यमा च अंशुश्च भगश्च इन्द्रश्च विवस्वांश्च' इति ये अष्टौ गृहीता तेऽत्र ग्राह्याः ॥ १९ ॥ २० ॥

**साधनान्तरेण हि पटादिसृष्टिर्दृष्टा ।**

**भा.** ॥ पटवदिति पदस्य तात्पर्यार्थमाहुः- **साधनान्तरेणेति** ॥ हि यतः साधनान्तरेण पटादिसृष्टिर्दृष्टा । अतः 'साधनान्तरेण सृष्टिर्युक्ता' इति पूर्वभाष्येऽन्वयः ॥ २० ॥

**(प्रकृत्यादीनि न स्वतन्त्रसाधनानि)**

**ननु 'प्रकृत्यादिसाधनं स्वतन्त्रं साधनत्वात् तुर्यादिवत्' इत्यनुमानात्प्रकृत्यादिसाधनस्य स्वातन्त्र्यं सिद्ध्यतीत्याशङ्कापरिहाराय सूत्रम्-**

**॥ ॐ यथा प्राणादिः ॐ ॥ २१ ॥**

**दृष्टान्तबलेन अस्वतन्त्रमिति साध्यस्य, प्रेरणार्थं कर्त्रानुप्रविष्टत्वादिति हेतोश्च लाभः । अवरस्य, युक्तेरिति वर्तते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- अवरं प्रकृत्यादिसाधनमस्वतन्त्रप्रेरणार्थं कर्त्रा (भगवता) अनुप्रविष्टत्वात् यथा प्राणादिः वायुशरीरेन्द्रियादिकं 'यः प्राणे तिष्ठन्' इति कर्त्रा अनुप्रविष्टत्वादस्वतन्त्रमिति युक्तेरनुमानादिति ॥ एवं च पूर्वपक्ष्यनुमानमस्वतन्त्रे शरीरेन्द्रियादौ व्यभिचारीति ज्ञेयम् ॥**

**तच्च साधनजातं तेनानुप्रविष्टमेव यथा शरीरेन्द्रियादिः ।**

**'प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः ।**
**क्षोभयामास भगवान् सृष्ट्यर्थं जगतो विभुः ॥' इति कौर्मे ।**

**भा.** ॥ सूत्रस्थदृष्टान्तबलेन लब्धहेतोः पक्षवृत्तित्वमुपपादयन्ति- **तच्चेत्यादि** ॥ **तच्च**- प्रलये स्थितमपि । **साधनजातं** प्रकृत्यादिसाधनजातम् । **तेन** कर्त्रा अनुप्रविष्टमेव । शरीरेन्द्रियादिरित्यादिना वायोर्ग्रहणम् । यथा तेन कर्त्रा अनुप्रविष्टः शरीरेन्द्रियादि तथेत्यर्थः ।

उक्तार्थे मानमाहुः-**'प्रकृतिमिति** ॥ **कौर्म इति** ॥ कौर्म इत्युक्तेः तेनानुप्रविष्टमेवेत्यन्वयः ॥ २१ ॥ अ.६ ॥

**॥ इत्यारम्भणाधिकरणम् ॥**

१. **प्रकृतिमिति** ॥ **विभुः** समर्थो **भगवान् पुरुषोत्तमः** (हरिः) । **प्रकृतिं** तदवान्तराभिमानिनीं सरस्वतीं **पुरुषं** चतुर्मुखं, **प्रकृतिं** जडात्मिकां **पुरुषं** जीवं वा, **प्रकृतिं** स्त्रियं **पुरुषं** वा, स्त्री पुरुषाख्यमिथुनमिति यावत् **प्रविश्य जगतः सृष्ट्यर्थं क्षोभयामास** सृष्टावुन्मुखीचकारेत्यर्थः ॥ २१ ॥ अ. ६ ॥ २१ ॥

## ७. इतरव्यपदेशाधिकरणम्

### जीवकर्तृत्वपक्षः श्रुतिप्राप्तो विस्तरान्निराक्रियते–

अत्र नये विष्णोर्जगत्कर्तृत्वे युक्तिविरोधपरिहारः । श्रुतिरनुभवश्च सन्देहबीजम् ॥ अवान्तरविषयमाहुः- **जीवेति** ॥ **कर्तृत्वेति** ॥ स्वतन्त्रकर्तृत्वेत्यर्थः ॥ **श्रुतिप्राप्त इति** ॥ **आपाततः** श्रुतिप्राप्त इत्यर्थः । समयप्राप्तस्य 'अन्यथानुमितौ' (२.२.९) इति सूत्रे निराकरिष्यमाणत्वादिति भावः । ननु श्रुतिप्राप्तस्यापि 'एतेन शिष्टा' (२.१.१३) इति सूत्रे निराकृतत्वाद् इदं व्यर्थमित्यत आहुः- **विस्तरादिति** ॥ हेतौ पञ्चमी । 'निशामय तदुत्पत्तिं विस्तराद्वदतो मम' इत्यत्रैव । विस्तरः शब्दबाहुल्यम् । स च स्वबोध्याऽर्थद्वारा हेतुर्भवति । यद्वा - ल्यब्लोपे पञ्चमी विस्तरमाश्रित्येत्यर्थः । पूर्वं निराकृत एव विशेषहेतुभिर्निराक्रियते इति भावः ।

**(जीवस्य विश्वकर्तृत्वे हिताकरणमहितकरणं च न स्यात्)**

**॥ ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ॥ २२ ॥**

**स्वतन्त्रकर्ता इति चेत्, इतिशेषः । यथायथमावृत्तिविपरिणामौ । अयमर्थः - 'इतरव्यपदेशात्' इतरस्य जीवकर्तृत्वस्य व्यपदेशात् जीवस्य कर्तृत्वेन वा 'जीवाद्भवन्ति' इति श्रुतौ प्रतिपादनात् इतरो जीवः स्वतन्त्रकर्ता इति चेत् तर्हि हिताकरणादिदोषप्रसक्तिः स्वहिताकरणस्य स्वाहितकरणस्य च (अभावरूप) दोषप्रसङ्गः स्यादिति ॥**

### जीवकर्तृत्वपक्षे हिताकरणमहितकरणं च न स्यात् ।

भा. ॥ सूत्रतात्पर्यार्थमाहुः- जीवकर्तृत्वपक्ष इति ॥ जीवकर्तृत्वाभ्युपगमपक्षे इत्यर्थः ॥ २२ ॥

**(अधिकशक्तिमद् ब्रह्म अखिलश्रोतृत्वान्तर्यामित्वादिभेदकधर्मश्रुतेः)**

**जीवपक्षे दोषवदीश्वरपक्षेऽपि श्रमचिन्तादिदोषोऽस्त्येव उभयोः सदोषत्वसाम्ये, अनुभवसिद्धजीवकर्तृत्वमेवाऽस्तु इति शङ्कावारणाय सूत्रम्-**

**॥ ॐ अधिकं तु भेदनिर्देशात् ॐ ॥ २३ ॥**

(तदनन्यत्वमित्यतः) तदिति वर्तते । तुरेवार्थे । अयमर्थः- तत् ब्रह्म 'अधिकं तु' अधिकशक्त्यादिमदेव

न तु समं 'भेदनिर्देशात्' 'श्रोता मन्ता' इत्यादिश्रुतिषु सर्वेभ्यः अखिलश्रोतृत्वान्तर्यामित्वाशनायाद्यतीतत्वादि-भेदकधर्मप्रतिपादनादिति ॥

**न च ब्रह्मणः श्रमचिन्तादिदोषप्राप्तिः । अधिकशक्तित्वात् । 'श्रोता मन्ता द्रष्टाऽऽदेष्टाऽऽघोष्टा विज्ञाता सर्वेषां भूतानामन्तरपुरुषः' (ऐ.आ.३–२–४) 'एष त आत्मा सर्वान्तरः' (बृ.उ.५–५–१) 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' (बृ.उ.५–५–१) इत्यादिविशेषनिर्देशात् ।**

भा. ॥ सूत्रतात्पर्यार्थमाहुः- **न च ब्रह्मण इति** ॥ भेदनिर्देशादिति हेतुं श्रुत्युपन्यासपूर्वं व्याचक्षते- [1]**श्रोता मन्तेति ॥ इत्यादिविशेषनिर्देशादिति** ॥ इत्यादिषु विशेषनिर्देश इति सप्तमीतत्पुरुषः । आदिना 'य आत्मा अपहतपाप्मा' (छा.८.१.५) इत्यादेर्ग्रहणम् । उक्तश्रुतिषु श्रुतमुख्यश्रोतृत्वादीनामधिक-शक्त्यादिमत्वमन्तरेणासम्भवादधिकशक्तिमत्वं सिद्धम् । तेन श्रमचिन्तादिदोषाभावः सिद्ध इति भावः ॥ २३ ॥

**(अश्मादिवदस्वतन्त्रत्वाज्जीवस्य न स्वतन्त्रकर्तृत्वानुपपत्तिः)**

ननु 'जीवः स्वतन्त्रकर्ता चेतनत्वादीश्वरवत्' इति किं न स्यादिति शङ्कावारणाय सूत्रम्-

**॥ ॐ अश्मादिवच्च तदनुपपत्तिः ॐ ॥ २४ ॥**

इतरस्येति वर्तते । चः चेतनत्वेऽपीत्यस्य समुच्चये । अश्मादिवदित्यश्मादिसादृश्यमस्वतन्त्रत्वेन, तेनास्वतन्त्रत्वादिति लभ्यते । **अयमर्थः-** इतरस्य जीवस्य चेतनत्वेऽपि **अश्मादिवत्** अश्मादीनामिव अस्वतन्त्रत्वात् **अनुपपत्तिः** स्वतन्त्रकर्तृत्वानुपपत्तिरिति ॥ अनेन 'जीवः स्वतन्त्रकर्ता न अस्वतन्त्रत्वात्' इति प्रत्यनुमानमुक्तं भवति ॥

**चेतनत्वेऽप्यश्मादिवदस्वतन्त्रत्वात्स्वतः कर्तृत्वानुपपत्तिर्जीवस्य ।**

**'यथा दारुमयीं योषां नरः स्थिरसमाहितः ।**
**इङ्गयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः ॥' इति भारते ॥**

भा. ॥ सूत्रार्थमाहुः- **चेतनत्वेऽपीति** ॥ **स्वतः** स्वातन्त्र्येण । अस्वातन्त्र्यं जीवस्य केन सिद्धमित्यत

१. **श्रोता मन्तेति** ॥ (ऐ.आ.३.२.४) व्या.(१४५-पु.) **एष त आत्मेति** ॥ (बृ.५.५.१) यः ते तव **आत्मा** अन्तर्यामी सः **सर्वान्तरः** सर्वेषामन्तर्यामीत्यर्थः । **योऽशनायेति** ॥ (बृ.५.५.१) व्या.(२२७ पु.) ॥२३॥

आहुः- **'यथेति** ॥ यद्वा- सूत्रार्थे सम्मतिमाहुः- **यथेति** ॥ **भारत इति** ॥ तत्रेत्युक्तेरस्वतन्त्रत्वादिति सम्बन्धः ॥ २४ ॥

**(कार्यसमाप्त्यनुभवः जीवस्येशकृत एव)**

**उक्तमाक्षिप्य समादधत्सूत्रम्-**

**॥ ॐ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॐ ॥ २५ ॥**

**उपसंहारो नाम कार्योत्पादकचरमव्यापारः। तु, तदनुपपत्तिः, इतरेति, वर्तते। यथायथमावृत्तिविपरिणामौ। अयमर्थः- इतरस्मिन् जीवे उपसंहारदर्शनात् कार्यसमाप्त्यनुभवात् इतरस्य जीवस्य तदनुपपत्तिः स्वतन्त्रकर्तृत्वानुपपत्तिर्नेति चेन्न- हि यतः इतरस्मिन् जीवे उपसंहारदर्शनं क्षीरवत् गवि क्षीरदर्शनवद्युज्यते परकृतत्वेनैव युज्यते हि प्रसिद्धम् अत इति ॥ अयं भावः - यथा क्षीरं मुख्यप्राणकर्तृकमपि गोनिष्ठम्, एवं कार्योपसंहार ईश्वरकर्तृकोऽपि जीवनिष्ठ इति ॥ ननु उत्पाददर्शनादित्येव वक्तव्ये उपसंहारदर्शनादित्युक्तिः कुत इति चेदुच्यते- कार्योपक्रमादिव्यापारस्य स्वातन्त्र्यप्रयोजकत्वेनाननुभवादुपसंहारेत्याद्युक्तमिति ॥**

**जीवेन कार्योपसंहारदर्शनात्तस्य कर्तृत्वमिति चेन्न । यथा गोषु क्षीरं दृश्यमानमपि प्राणादेव जायते, 'अन्नं रसादिरूपेण प्राणः परिणयत्यसौ' इति वचनात् । एवं जीवे दृश्यमानोऽपि कार्योपसंहारोऽस्वातन्त्र्यात् परकृत एव । 'य आत्मानमन्तरो यमयति' 'नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः' इत्यादेः ॥ २५ ॥**

**भा.** ॥ सूत्रार्थमाहुः- **जीवेनेति** ॥ कर्तरि तृतीया । 'कर्तृकर्मणोः कृति'(पा.सू.२.३.६५) इति षष्ठी तु न 'अन्तर्धौ येनाऽदर्शनम्'(पा.सू.१.४.२८) इत्यत्र येनेति प्रयोगेण 'कर्तृकर्मणोः कृति' इति सूत्रस्य क्वचिदप्रवृत्तिबोधनात् । यत्तु 'उभयप्राप्तौ कर्मणि'(पा.सू.२.३.६६) इति नियमेन कर्तरि षष्ठी नेति ।तन्न- तथा सति कार्योपसंहारेति समासो न स्यात् कर्मणि चेति निषेधात् । **कार्येति** ॥ योग्यतया लब्धमिदम् । **तस्य-** जीवस्य । **कर्तृत्वं-** स्वतन्त्रकर्तृत्वम् ॥ तथा चायं प्रयोगः- 'जीवः कार्ये स्वतन्त्रकर्ता तत्कार्योपसंहारस्य कर्त्रन्तरशून्यत्वे सति (न निश्चितत्वे सति) जीवकर्तृकत्वेनानु-

---

१. **यथेति** ॥ **हे राजन् !** जनमेजय **स्थिरसमाहितः** स्थिरं मनश्चाञ्चल्याभावपूर्वकं समाहितः स्वकार्यसमाधानवान् स्वकार्यपर एवेति यावत् । **नरः दारुमयीं योषां** दार्वात्मकस्त्रीप्रतिमाम् **यथा इङ्गयति** चेष्टयति **अङ्गं** हस्तादि, **अङ्गानि** अङ्गुल्यादीनि चेष्टयति तथा **इमाः प्रजाः** भगवान् इङ्गयतीत्यर्थः ॥ २४ ॥

भवात् । य एवं स एवं यथा पाके देवदत्त इति । सिद्धान्तमाहुः- **नेति** ॥ क्षीरस्य प्राणकर्तृकत्वे मानमाहुः- [1]**अन्नमिति** ॥ **वचनादिति** ॥ ज्ञायत इति शेषः । **अस्वातन्त्र्यात्**- जीवस्येति शेषः । **परकृत इति** ॥ परमात्मकृत इत्यर्थः । ईश्वरस्योपसंहारकर्तृत्वे हिशब्दबोधितप्रसिद्धिबोधकश्रुत्यादिकमाहुः- [2]**य इति** ॥ **इत्यादेरिति** ॥ इत्यादिबलात् । परकृत एव यतः परकृतः अत इति चेन्नेति सम्बन्धः ॥२५॥

**(ईश्वरस्य सतोऽप्यदर्शनमुपपद्यते)**

**ननूक्तमीश्वराधीनत्वमयुक्तम् । तस्याऽनुपलभ्यमानत्वेनाभावादिति शङ्कावारणाय सूत्रम्-**

## ॥ ॐ देवादिवदपि लोके ॐ ॥ २६ ॥

**ईश्वरस्येति प्रकृतम् । न, दर्शनादिति वर्तते । दर्शनमिति विपरिणामः । दृष्टान्तबलेन अदृश्यत्वशक्त्येति । लोकपदेन पिशाचादीनामिवेति, लभ्यते । अयमर्थः- अपि सतोऽपि ईश्वरस्य न दर्शनं दर्शनाभावः देवादिवत् सतामेव देवादीनामिव लोके पिशाचादीनामिव च अदृश्यत्वप्रयोजकशक्त्या युज्यत इति । देवादिदृष्टान्तः शास्त्रोक्तः, पिशाचदृष्टान्तो लौकिक इति भेदः ।**

**न च कर्तुरीश्वरस्यादृष्टिविरोधः । देवादिवददृश्यत्वशक्तियोगात् । लोकेऽपि पिशाचादीनां तादृशी शक्तिर्दृष्टा, किम्वीश्वरस्य ।**

**[3]'न युक्तियोगाद्वाक्यानि निराकार्यण्यपि क्वचित् ।**
**विरोध एव वाक्यानां युक्तयो न तु युक्तयः ॥' इति बृहत्संहितायाम् ॥**

**भा.** ॥ सूत्रं व्याचक्षते- **न चेति** ॥ **अदृष्टिविरोध इति** ॥ ईश्वरस्यादर्शनेन विरोधः अभावनिश्चय इत्यर्थः। अत्रार्थे स्मृतिमाहुः- [3]**न युक्तीति** ॥ **संहितायामिति** ॥ तत्रेत्युक्तेर्न विरोध इत्यन्वयः । एवं च 'ईश्वरो नास्ति योग्यत्वे सति अनुपलभ्यमानत्वाद्व्यतिरेकेण घटवत्' इत्यनुमानं नादर्तव्यम् ॥२६॥

---

१. **अन्नमिति** ॥ **अन्नं** भुक्तं वस्तु **असौ** सर्वशरीरव्यापित्वेन प्रसिद्धः प्राणो मुख्यप्राण इत्यर्थः । शिष्टं स्पष्टम्।
२. **य आत्मानमिति** ॥ (बृ.५.७.२१) आत्मानं जीवं शिष्टं 'यः पृथिव्यां तिष्ठन्' इतिवद्व्याख्येयम् । तत् व्या.(१५४-पु.) **नाहमिति** ॥ **यः सदा प्रभुः** नित्यस्वतन्त्रः ईश्वरः **स एव जगत्कर्ता, नाहं कर्ता न त्वं कर्ता** इत्यर्थः ॥ २५ ॥
३. **न युक्तीति** ॥ **वाक्यानि** श्रुतिस्मृतिरूपाणि साधकतया, असाधकतया वा, प्राप्तानि **युक्तियोगात्** युक्तिरूपोपायात् **क्वचिदपि** विषये **न निराकार्याणि वाक्यानां** विरोधयुक्तिभिः साकं **विरोधे** सति **युक्तय एव न युक्तयः** न सद्युक्तयः किन्तु युक्त्याभासा एवेत्यर्थः ॥ २६ ॥

**(जीवस्य स्वतन्त्रकर्तृत्वपक्षे अल्पकार्येष्वपि पूर्णशक्त्या प्रवृत्तिः स्यात्)**

युक्त्यन्तरेण जीवकर्तृत्वनिराकरणाय सूत्रम्-

**॥ ॐ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॐ ॥ २७ ॥**

इतरस्मिन्निति वर्तते । वाशब्दः पक्षभेदसूचकः । यथायथमावृत्तिविपरिणामौ । अयमर्थः - इतरस्मिन् जीवस्वतन्त्रकर्तृत्वपक्षे **कृत्स्नप्रसक्तिः** अल्पकार्येष्वपि पूर्णशक्त्या प्रवृत्तिः स्यात् । एकदेशेन प्रवृत्तिरिति पक्षे तु इतरस्य निरवयवत्वशब्दकोपः जीवस्य 'अथ यः स जीवः' इति निरवयवत्वप्रतिपादकश्रुतिविरोधः स्यादिति ॥ सूत्राघटकांश आक्षेपलब्धः । सामर्थ्यतद्वतोरभेदात् जीवस्य निरंशत्वे सामर्थ्यमपि निरंशम् इति ज्ञेयम् ॥

**अयं च दोषो जीवकर्तृत्वपक्षे । एकेनाङ्गुलिमात्रेण प्रवर्तमानोऽपि पूर्णप्रवृत्तिस्स्यात् । न च तद्युज्यते, सामर्थ्यैकदेशदर्शनात् । न चैकदेशेन, निरवयवत्वात् । 'अथ यः स जीवः स नित्यो निरवयवो ज्ञाताऽज्ञाता सुखी दुःखी शरीरेन्द्रियस्थः' इति भाल्लवेयश्रुतिः । न चोपाधिकृतांशः, स एवांश उपहित इति, द्वित्वापेक्षत्वात् । न चान्यत्कल्प्यम् । 'यद्धि युक्त्या विरुद्ध्येत तदीशकृतमेव हि' इति गत्यन्तरोक्तेः ॥**

**॥ इति इतरव्यपदेशाधिकरणम् ॥**

भा. ॥ सूत्रार्थमाहुः- **अयं चेति** ॥ अयं कृत्स्नप्रसक्त्यादिः । चेन हिताकरणादेः सङ्ग्रहः । **कर्तृत्वेति** ॥ जीवस्य स्वतन्त्रकर्तृत्वपक्षे इत्यर्थः । **मात्रेणेति** ॥ अल्पकार्येष्विति भावः । **एकदेशेनेति** ॥ कार्येषु प्रवर्तते जीव इति शेषः । **निरवयवत्वादिति** ॥ जीवस्येति बोध्यम् । निरवयवत्वे श्रुतिमाहुः- **'अथ य इति** ॥ **श्रुतिरिति** ॥ यतः श्रुतिरस्ति अतो निरवयवत्वादित्यन्वयः । ननु स्वाभाविकांशाभावेऽपि औपाधिकोंऽशोऽस्त्येवेति चेत् किं जीवः सर्वोऽप्युपाधिना ग्रस्तः तदंशो वा । नाद्य इत्याहुः- **न चोपाधिकृतांशः स एवेति** ॥ उपहित इत्यपकृष्यते । उपाधिकृतांश इति बहुव्रीहिः । चेदिति शेषः । **अयमर्थः**- स एव समस्तजीव एव उपहितश्चेदुपाधिना ग्रस्तश्चेत् तर्हि स जीव उपाधिकृतांशः

---

१. **अथ य इति** ॥ **य** एवम्भूतः **स जीवः** इत्युच्यते । **स नित्यः** शरीरेन्द्रियस्थः तदधिष्ठातेत्यर्थः । शेषः सुगमः ॥

उपाधिकल्पितांशवान्न भवतीति ॥ **समस्तस्य ग्रस्तत्वादिति** भावः । द्वितीयं निराहुः- **अंश उपहित इति** ॥ न चेदिति वर्तते । अंशः जीवस्यांशः उपहित उपाधिना ग्रस्त इति च इत्यपि न सम्भवति द्वित्वापेक्षत्वात् । स्वाभाविकांशद्वयापेक्षितत्वादित्यर्थः । अंशद्वये सति हि एकोंऽश उपहितोऽन्योंऽशोऽनुपहित इति वक्तुं शक्यते इति भावः । अन्यथाऽनवस्थानादिति बोध्यम् ॥

ननु जीवकर्तृत्वं युक्तिविरुद्धमपि अविचारितरमणीयाविद्याकल्पितमस्त्वित्यत आहुः- **न चान्य-दिति ॥ अन्यत्-** अविद्याकल्पितं जीवकर्तृत्वमित्यर्थः । **न कल्प्यमिति** ॥ न कल्पनीयमित्यर्थः । अप्रामाणिकत्वादिति भावः । ननु सिद्धान्तेऽपि जीवस्येशदत्तकर्तृत्वमप्युक्तरीत्या प्रतिक्षेप्तुं शक्यमित्यत आहुः- **[1]यद्धीति ॥ कृतमेव हीतीति** ॥ अनेन न्यायेन सिद्धान्ते उक्तविरोधपरिहारस्य उपायान्तरोक्ते-रित्यर्थः । अप्रामाणिकाविद्यानिमित्तकत्वकल्पनापेक्षया प्रामाणिकेश्वराधीनत्वकल्पनं युक्तमिति भावः। ननु 'इतरव्यपदेशाद्धिताकरणात्' (२.१.२२) इति सूत्रे आदिपदेन तद्दोषग्रहणेन तदापादन-सम्भवादिदं सूत्रं व्यर्थमिति चेन्न । ईशपक्षे एतद्दोषपरिहारार्थं प्रवृत्तोत्तरसूत्रे अनुवृत्त्यर्थत्वात्, स्पष्टं जीवकर्तृत्वनिराकरणार्थत्वाच्च । अत्र नये शङ्कितं जीवकर्तृत्वं महदादिविषये इत्येकः पक्षः । घटादिविषय एव स्वतन्त्रकर्तृत्वमित्यन्यपक्षः । सिद्धान्तस्तु महदादिकर्तृत्वं जीवस्य नैवास्ति घटादिविषयस्वतन्त्रकर्तृत्वं च नेति ॥ २७ ॥ अ.७ ॥

**॥ इति इतरव्यपदेशाधिकरणम् ॥**

---

१. **यद्धीति** ॥ प्रतीतमपि **युक्त्या विरुध्येत तत् ईशकृतमेव** ईशाधीनमेव कल्प्यं न तु अप्रामाणिकं कल्प्यमित्यर्थः ॥ २६ ॥ अ. ७ ॥

## ८. शब्दमूलत्वाधिकरणम्

(ब्रह्मणः स्वतन्त्रकर्तृत्वे श्रुत्युक्तेरेव न युक्तिविरोधः)

अत्र नये विष्णोर्जगत्कर्तृत्वे युक्तिविरोधपरिहारः । उक्तन्यायो दोषदर्शनं च सन्देहबीजम् ॥

### ॥ ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ ॥ २८ ॥

शब्दः श्रुतिः मूलं ज्ञप्तिकारणं यस्येति बहुव्रीहिः । पूर्वसूत्रं नेति च वर्तते । ईशस्य पक्षे इति शेषः । अयमर्थः- ईशस्य पक्षे स्वतन्त्रकर्तृत्वपक्षे कृत्स्नप्रसक्तिः, निरवयवत्वशब्दकोपो वा, ब्रह्मणो निरवयवत्वबोधक- 'नेह नानास्ति' इति श्रुतिविरोधो वा नास्ति । श्रुतेस्तु 'योऽसौ विरुद्ध' इति श्रुतेरेव शब्दमूलत्वात् ईशस्य शब्दैकसमधिगम्यत्वादिति ॥ शब्दैकप्रतिपाद्ये लौकिकयुक्तिविरोधो न युक्तः । लोकविलक्षणत्वेनैव तस्य सिद्धेरिति भावः ।

**न चेश्वरपक्षेऽयं विरोधः ।**

**'योऽसौ विरुद्धोऽविरुद्धो मनुरमनुरवाग्वागिन्द्रोऽनिन्द्रः प्रवृत्तिरप्रवृत्तिः स परः परमात्मा' इति पैङ्ग्यादिश्रुतेरेव ।**

**शब्दमूलत्वाच्च न युक्तिविरोधः ।**

**'यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं शक्नुयात् क्वचित् ।**
**विरोधे वाक्ययोः क्वापि किञ्चित्साहाय्यकारणम् ॥'**

**इति पुरुषोत्तमतन्त्रे ॥ २८ ॥**

**भा.**॥ आकाङ्क्षितपूरणेन सूत्रं व्याचक्षते- **न चेति** ॥ **अयमिति** ॥ कृत्स्नप्रसक्त्यादिरूपदोष इत्यर्थः । सूत्रबोधितश्रुतिमाहुः- **'योऽसाविति** ॥ ननु श्रुत्युक्तमपि युक्तिविरुद्धं कथं ग्राह्यं जीवेऽपि श्रुतिबलेन युक्तिविरुद्धस्यापि ग्राह्यत्वापातादित्यत आहुः- **शब्दमूलत्वाच्चेति** ॥ **न युक्तिविरोध इति** ॥

---

१. **योऽसाविति** ॥ **यो** लोकदृष्ट्या **विरुद्धः** लौकिककर्तृत्वविरुद्धकर्तृत्ववान् **असौ अविरुद्धः** प्रमाणबलात् वस्तुतोऽविरुद्धः, **मनुः** सर्वमन्ता, **अमनुः** स्वतन्त्रमन्त्रन्तररहितः, **अवाक्** स्वतन्त्रवक्रन्तररहितः, **वाक्** स्वातन्त्र्येण वक्ता, **इन्द्रः** परमेश्वरः, **अनिन्द्रः** ईश्वररहितः, **प्रवृत्तिः** प्रवर्तकः, **अप्रवृत्तिः** प्रवर्तकशून्यः, **सपरः** परा लक्ष्मीः तया सहितः इत्येवंविधः **असौ परमात्मा** इत्यर्थः ।

युक्तिसामान्यविरोधो नेत्यर्थः । अतो न पुनरुक्तिरिति ज्ञेयम् । न विरोध इत्यत्र मानमाहुः- [1]**यदिति** ॥ **पुरुषोत्तमतन्त्रे इति** ॥ तत्रेत्युक्तेर्न युक्तिविरोध इत्यन्वयः ॥ २८ ॥

**(ईश्वरस्याचिन्त्यशक्तिसद्भावान्न जीवपक्षोक्तदोषः)**

युक्त्यन्तरेण युक्तिविरोधपरिहाराय सूत्रम्-

**॥ ॐ आत्मनि चैवं विचित्राश्च हि ॐ ॥ २९ ॥**

**आद्यश्चशब्दो हेत्वर्थे, एवार्थे च । द्वितीयश्चः समुच्चये । हि प्रसिद्धौ । नेति, कृत्स्नेत्यादि वर्तते । आत्मनीत्यावर्तते । अयमर्थः- च यत आत्मनि च परमात्मन्येव एवं एवंविधाः लौकिकयुक्ति-विरोधपरिहारकाः हि 'विचित्रशक्तिः' इत्यादिश्रुतिप्रसिद्धाः । विचित्रा अचिन्त्यशक्तयः सन्ति अतः** आत्मनि परमात्मपक्षे कृत्स्नप्रसक्तिः, निरवयवत्वशब्दकोपो वा, नेति ॥

**परमात्मनो विचित्राश्च शक्तयस्सन्ति, नान्येषाम् ।**

**'विचित्रशक्तिः पुरुषः पुराणो**
**न चान्येषां शक्तयस्तादृशाः स्युः ।**
**एको वशी सर्वभूतान्तरात्मा**
**सर्वान् देवानेक एवानुविष्टः' ॥ इति श्वेताश्वतरश्रुतिः ॥**

**भा.** ॥ सूत्रार्थमाहुः- **परमात्मनीति** ॥ **नाऽन्येषामिति** ॥ सूत्रे आत्मनीत्यत्र अवधारणार्थचशब्द-सम्बन्धादयमर्थो लब्धः । विचित्रशक्तिमत्वं परमात्मन इत्यत्र हि शब्दसूचितां श्रुतिमाहुः- [2]**विचित्रेति** ॥ **श्रुतिरिति** ॥ चशब्द आवर्तते । च यत इति श्रुतिरस्ति अतः परमात्मनो विचित्राः शक्तयः

---

१. **यद्वाक्येति** ॥ **युक्तिः** शुष्कानुमा, **वाक्योक्तम्** आगमोक्तं **यत्** प्रमेयं **तत् विरोद्धुं** निषेद्धुं **कचिदपि** कदाऽपि **न शक्नुयात्, वाक्ययोः कापि** विषये **विरोधे** प्राप्ते सति **किञ्चित्साहाय्यकारणं** किञ्चिद्व्यवस्थापिका भवतीत्यर्थः ॥ २८ ॥

२. **विचित्रशक्तिरिति** ॥ अयमर्थः - **पुराणः** पुरातनः **पुरुषः** भगवानेव **विचित्रशक्तिः, अन्येषां** तु जीवानां **शक्तयः तादृशाः** भगवच्छक्तिसदृशा युक्तिविरोधनिरासिका **न स्युः** । **एकः** प्रधानः । सर्वं वशे यस्य स **वशी सर्वभूतान्तरात्मा** ब्रह्मादिसर्वजीवान्तर्यामी, सर्वजडनियामकश्च, **सर्वान् देवान् एक एव अनुविष्टः** प्रेरणायेति शेष इति ॥ २९॥

सन्ति नान्येषां, यतः परमात्मन एव विचित्रशक्तयः तस्माच्च, 'न चेश्वरपक्षेऽयं विरोधः' इति पूर्वसूत्रभाष्येणान्वयः ॥ २९ ॥

**(जीवपक्षे कृत्स्नप्रसक्त्यादिदोषाः अपरिहार्याः)**

**चेतनत्वहेतुना सामान्यधर्मेण जीवपक्षेऽपि युक्तिविरोधो नेति किं न स्यादिति शङ्कापरिहाराय सूत्रम्-**

**॥ ॐ स्वपक्षदोषाच्च ॐ ॥ ३० ॥**

**स्वपक्षेति लुप्तविभक्त्यन्तं कृत्स्नप्रसक्तिरित्याद्यनुवर्तते । सूत्रमावर्तते । चोऽवधारणे । अयमर्थः- स्वपक्षे जीवपक्षे, दोषात् 'ये दोषा' इति श्रुतिज्ञाप्यदोषसद्भावात्, कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा स्वपक्षे च जीवकर्तृत्वपक्ष एव दोषः न त्वीश्वरपक्षे इति ॥ यद्वा कृत्स्नप्रसक्त्यादिः स्वपक्षे जीवपक्षे दोषश्च दोष एव न तु गुण इत्यर्थः, शेषं प्राग्वत् ।**

**'ये दोषा इतरत्रापि ते गुणाः परमे मताः ।**
**न दोषः परमे कश्चिद्गुणा एव निरन्तराः ॥'**

**इति वचनाज्जीवपक्ष एव दोषो न परपक्षे ।**

**'अथ यस्सदोषः साञ्जनः सजनिः स जीवोऽथ यः स निर्दोषो निष्कलः सगुणः परः परमात्मा' इति काषायणश्रुतिः ॥**

**भा.** ॥ मानोपन्यासपूर्वं सूत्रं व्याचक्षते- [1]**ये दोषा इत्यादिना** ॥ **दोष इति** ॥ कृत्स्नप्रसक्त्यादिरिति शेषः। जीवेशयोः क्रमशः सदोषनिर्दोषत्वे श्रुतिमाहुः- [2]**अथ यस्स इति** ॥ **श्रुतिरिति** ॥ यतः श्रुतिरस्ति अतः, इति वचनाच्च । जीवपक्ष एव दोषः न परपक्षे इत्यन्वयः ॥ ३० ॥

---

१. **ये दोषा इति** ॥ अयमर्थः- **इतरत्र** जीवे **ये दोषाः** प्रतीताः ते दोषा एव न तु गुणाः । **त एव दोषाः परमे** विष्णौ प्रतीताश्चेत् **गुणा एव मताः** कल्पनीयाः । **हि** यतः **परमे कश्चित्** कोऽपि **दोषो** नास्ति, किन्तु **निरन्तरा** भेदशून्या **गुणा** एव सन्ति अत इति ॥

२. **अथेति** ॥ **अथ** प्रकरणान्तरमारभ्यते । यः **सदोषः** दुष्टत्वाऽल्पज्ञत्वादिदोषयुक्तः, **साञ्जनः** पुण्यपापलेपवान्, **सजनिः** उत्पत्तिमान्, **सजीवः**, **यो निर्दोषः** दोषसामान्यविधुरः, **निष्कलः** स्वसदृशभिन्नांशरहितः, षोडशकलाशून्यो वा । **सगुणो** ज्ञानानन्दादिगुणयुक्तः, **पर** उत्तमः, **स परमात्मा** इत्यर्थः ॥ ३० ॥

**(विष्णुरेव सर्वशक्तियुक्त इति श्रुतिस्मृतिसिद्धम्)**

**नन्वीश्वरस्य विचित्रशक्तिमत्वेऽपि तादृशशक्तीनामल्पविषयकत्वे, अनित्यत्वे, चेश्वरपक्षेऽपि उक्तदोषो दुष्परिहर इति शङ्कावारणाय सूत्रम्-**

**।। ॐ सर्वोपेता च तद्दर्शनात् ॐ ।। ३१ ।।**

**'सर्वैर्युक्ता' इति श्रुत्यनुरोधादुपेतेति स्त्रीलिङ्गनिर्देशः । परदेवतेति शेषः । अयमर्थः - परदेवता विष्णुः सर्वोपेता च सर्वाभिः सर्वविषयकसार्वकालिकसम्पूर्णशक्तिभिः युक्ता च । तद्दर्शनात् उक्तशक्तियुक्तत्वस्य 'सर्वैर्युक्ता' इति श्रुतौ दृष्टत्वादिति । जीवपक्ष एव कृत्स्नप्रसक्त्यादिदोषः न परपक्ष इति भावः ।**

**'सर्वैर्युक्ता शक्तिभिर्देवता सा**
**परेति यां प्राहुरजस्रशक्तिम् ।**
**नित्यानन्दा नित्यरूपाजरा च**
**या शाश्वतात्मेति च यां वदन्ति ।।'**

**इति च चतुर्वेदशिखायाम् । अतो न केवलं विचित्रशक्तिः, किन्तु सर्वशक्तिरेव ।।३१।।**

भा. ।। सूत्रोपात्तश्रुतिमुपन्यस्य सूत्रतात्पर्यार्थमाहुः- **'सर्वैर्युक्तेति ।। शिखायामिति ।।** वदन्तीति चतुर्वेदशिखायामित्युक्तमित्यर्थः । **अत इति ।।** इत्युक्तत्वादित्यर्थः । **सर्वशक्तिरिति ।।** सर्वशक्तिश्चेत्यर्थः। परदेवतेति शेषः ।। ३१ ।।

**(विष्णोः स्वाभाविकज्ञानबलादिसत्त्वेन प्राकृतहस्ताद्यभावेऽपि न दोषः)**

**विष्णोः कारणत्वमाक्षिप्य समाधानाय सूत्रम्-**

**।। ॐ विकरणत्वान्नेति चेत्तदुक्तम् ॐ ।। ३२ ।।**

**प्रकृतत्वादीश्वरः, कर्तेति लभ्यते । अयमर्थः- ईश्वरो न कर्ता विकरणत्वात् 'अचक्षुः श्रोत्रं तदपाणिपादम्'**

---

१. **सर्वैर्युक्तेति ।। याम् अजस्रशक्तिं** नित्यशक्तिं प्राहुः, कवयो ज्ञानिनः **यां शाश्वतात्मा** निर्विकारस्वरूपिणीति **वदन्ति, या च नित्यानन्दा, नित्यरूपा,** रूपं शरीरं, **अजरा च, सा परा देवता** परमात्माख्यदेवता, **सर्वैः शक्तिभिः** सर्वविषयाभिः सार्वकालिकाभिश्च शक्तिभिः **युक्ता** इत्यर्थः ।। ३१ ।।

(मुण्ड. १.१.६) इत्यादिश्रुत्या हस्तपादादिकरणशून्यत्वेनावमादिति चेत्, तत् विकरणत्वम् 'अपाणिपादो जवनो गृहीता' (श्वे.उ. ३.२९) इत्यादिना अपाणिपादत्वेऽपि जवनाद्युक्तेः, 'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुत्या च प्राकृतहस्तादिराहित्येनेति उक्तं व्याख्यातमिति ॥

**न च करणाभावादनुपपत्तिरिति युक्तम् ।**

**'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।**
**स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥'**
**(श्वे.उ.३-१९) ।**

**'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।**
**पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥'**
**(श्वे.उ.६-८)**

**इत्यादिश्रुतिभ्यः । 'सर्वोपेता च' इति सामान्यपरिहारेऽपि विशेषयुक्त्यर्थं पुनराशङ्का ॥ ३२ ॥**

**॥ इति शब्दमूलत्वाधिकरणम् ॥**

भा. ॥ सूत्रतात्पर्यार्थमाहुः- **न चेति** ॥ **अनुपपत्तिरिति** ॥ हरेः स्वतन्त्रकर्तृत्वानुपपत्तिरित्यर्थः । विकरणत्वं प्राकृतपाण्याद्यभावेनेति श्रुत्याऽऽहुः- **'अपाणिपाद इत्यादिना** ॥ **श्रुतिभ्य इति** ॥ न युक्तमित्यन्वयः । ननु 'सर्वोपेता च' इति सूत्रेण सर्वशक्तेरुक्तत्वात् विकरणत्वेऽपि स्वतन्त्रकर्तृत्वमुपपन्नमेवेश्वरस्येत्यत आहुः- **सर्वोपेता चेति** ॥ **परिहारेऽपीति** ॥ सामान्यतः प्राप्तसर्वयुक्तिविरोध-

१. **अपाणिपाद इति** ॥ (श्वे.३.१९) **स** आत्मा **अपाणिपादः** प्राकृतपाण्यादिरहितः तथाऽपि **जवनः** वेगेन गन्ता, **गृहीता** च, **अचक्षुः** प्राकृतचक्षूरहितः, एवमपि **पश्यति** सर्वं साक्षात्करोति, **अकर्णः** प्राकृतकर्णरहितः, अथापि **शृणोति**, **स वेद्यं वेत्ति** जानाति, **तस्य वेत्ता** कोऽपि **नास्ति**, **तम्** उक्तगुणकम्, **अग्र्यं** सर्वश्रेष्ठं, **महान्तं पुरुषं** कवय **आहुः** इत्यर्थः । **न तस्येति** ॥ (श्वे.६.८) **तस्य** हरेः **कार्यं** प्रकृतिकार्यं **करणं** पाण्यादीन्द्रियं कारणं वा, **न विद्यते** नास्ति, **तत्** तस्य भगवतः **समः अभ्यधिकश्च न दृश्यते** सम एव नास्ति कुतोऽधिक इति तात्पर्यम् । **अस्य** हरेः **शक्तिः परा** उत्कृष्टा **विविधा** विचित्रा **स्वाभाविकी** यावद्द्रव्यभाविनी **ज्ञानं बलक्रिया** च एतद्रूपेति चेति **श्रूयते** इत्यर्थः ॥ ३२ ॥ अ. ८ ॥

परिहारेऽपीत्यर्थः । **विशेषेति** ॥ विकरणत्वान्न युक्तमिति चोद्यस्य परिहाराय चिदानन्दात्मकविग्रहादिमत्त्वरूपयुक्तेः 'अपाणिपाद' इत्यादिविशेषप्रमाणस्य वा बोधनार्थमित्यर्थः । **आशङ्केति** ॥ दर्शितेति शेषः । 'युक्तिबुभुत्सया' इति टीकाया युक्तिबोधनेच्छयेत्यर्थः । बुधधातुरन्तर्भावितण्यर्थः । यद्वा- **युक्त्यर्थं**- तज्ज्ञानार्थम् । **शङ्केति** ॥ कृतेति शेषः । अत्र पक्षे टीकाया यथाश्रुत एवार्थः ॥ ३२ ॥ अ.८ ॥

**॥ इति शब्दमूलत्वाधिकरणम् ॥**

## ९. न प्रयोजनाधिकरणम्

**यत्प्रयोजनार्थं सृष्ट्यादिः तदूनत्वादपूर्णतेत्यत आह–**

अत्र नये ईशकर्तृत्वविषये निष्प्रयोजनत्वरूपप्रबलयुक्तिविरोधपरिहारः । श्रुतिविगानं सन्देहबीजम् ॥ अधिकरणपूर्वपक्षमाहुः- **यत्प्रयोजनार्थमिति** ॥ यादृशफलोद्देश्यकेत्यर्थः । **अपूर्णतेति** ॥ ईश्वरस्य पूर्णकामत्वाभावः स्यादित्यर्थः । लोके कार्ये प्रवृत्तिः फलोद्देशेनैव दृष्टा । प्रकृतेऽपि सृष्ट्यादिप्रवृत्तौ फलं वाच्यं सृष्टेः पूर्वं तत्फलाभावादपूर्णत्वं स्यात् ततश्च स्वतन्त्रकर्तृत्वं न स्यादिति भावः ।

**(परप्रयोजनवत्त्वान्नेश्वरसृष्टिर्व्यर्था)**

**॥ ॐ न प्रयोजनवत्त्वात् ॐ ॥ ३३ ॥**

**ईश्वरस्य, स्वतन्त्रकर्तृत्वमिति प्रकृतं वर्तते । प्रयोजनवत्वादिति आवर्तते । पञ्चमी हेतौ, ल्यब्लोपे च । अयमर्थः- ईश्वरस्य स्वतन्त्रकर्तृत्वं प्रयोजनवत्वात् स्वप्रयोजनमुद्दिश्य न, कुतः ? प्रयोजनवत्वात् 'अथैष परम आनन्द' इति श्रुत्या स्वतस्सिद्धपूर्णकामत्वादिति ॥**

**'अथैष एव परम आनन्दः' (बृ.उ.६–३–३३) इत्यादिना कृतकृत्यत्वान्न प्रयोजनाय सृष्टिः ॥ किन्तु -**

भा. ॥ श्रुत्युदाहरणपूर्वं सूत्रं व्याचक्षते- **[1]अथैष इति** ॥ **कृतकृत्यत्वात्**- सृष्टेः पूर्वमेव प्राप्तपूर्णकामत्वात् । **प्रयोजनाय**- स्वप्रयोजनाय ॥ ३३ ॥

भा. ॥ ननु प्रयोजनाभावे प्रवृत्त्यनुपपत्तिरित्यत आहुः- **किंत्विति** ॥

**(मत्तगानादिवदीश्वरकर्तृकसृष्टिरनायाससाध्या)**

**॥ ॐ लोकवत्तु लीलाकैवल्यम् ॐ ॥ ३४ ॥**

**कैवल्यमिति स्वार्थे ष्यञ् । कैवल्यं लीलेति विग्रहे मयूरव्यंसकादित्वात्समासः । लीलाशब्दस्य पूर्वनिपातश्च । तुरेवार्थे । ईश्वरस्य, सृष्ट्यादिकमिति प्रकृतम् । अयमर्थः- ईश्वरस्य सृष्ट्यादिकं लोकवत्तु लौकिकव्यापारवदेव (लोके मत्तादिगानादिवदिति यावत्) लीलाकैवल्यं** केवललीला **(स्वप्रयोजनशून्यक्रीडारूपेति**

---

१. अथैष इति ॥ (बृ. ६.३.३३) एष एव भगवानेव परम आनन्दः पूर्णानन्द इत्यर्थः ॥ ३३ ॥

यावदिति) ॥ अयं भावः- यथा प्रयोजनोद्देशं विनापि दहनस्य दाहकत्वं, मत्तस्य सुखोद्रेकादिनैव नृत्तगानादि, प्रेक्षावतोऽपि प्रवचनादिकाले हस्ताऽङ्गुल्यादिव्यापारः, एवमीश्वरस्य आनन्दोद्रेकेण, स्वभावेन च, परप्रयोजनोद्देशेन च, केवललीलारूपा सृष्टिरिति ॥

**यथा लोके मत्तस्य सुखोद्रेकादेव नृत्तगानादिलीलाः न तु प्रयोजनापेक्षया, एवमेवेश्वरस्य ॥**

**नारायणसंहितायां च–**

**'सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु ।**
**कुरुते केवलानन्दाद्यथा मत्तस्य नर्तनम् ॥**
**पूर्णानन्दस्य तस्येह प्रयोजनमतिः कुतः ।**
**मुक्ता अप्याप्तकामाः स्युः किमु तस्याखिलात्मनः ॥' इति ॥**

**'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' (मां.उ.२–९) इति च श्रुतिः ॥**

**॥ इति न प्रयोजनाधिकरणम् ॥**

भा. ॥ सूत्रार्थमाहुः- **यथेति** ॥ एवकारव्यावर्त्यमाहुः- **नत्विति** ॥ **ईश्वरस्येति** ॥ (सृष्टौ) प्रवृत्तिरिति शेषः । एवमेव सुखोद्रेकादेव लीलारूपैव भवति ईश्वरस्य प्रवृत्तिरपि न तु स्वप्रयोजनापेक्षयेत्यर्थः । उक्ताऽर्थे एव स्मृतिश्रुती आहुः- **नारायणसंहितायां च- 'सृष्ट्यादिकमिति** ॥ **इतीति** ॥ इत्युक्तेरित्यर्थः। **श्रुतिरिति** ॥ इत्युक्तेः, च यतः इति श्रुतिश्चास्ति अतश्च, एवमेवेश्वरस्येत्यन्वयः ॥ ३४ ॥ अ.९ ॥

**॥ इति न प्रयोजनवत्त्वाधिकरणम् ॥**

---

१. **सृष्ट्यादिकमिति ॥ इह** सृष्ट्यादिविषये, **अखिलात्मनः** सर्वस्वामिनः, **मुक्ता अपि**, अस्वतन्त्रा अपि मुक्ता इत्यर्थः । अन्यत्स्पष्टम् । **देवस्यैष इति** ॥ (मा.२.९) **देवस्य** हरेः **अयं** सृष्ट्यादिविषयः **एषः** इच्छा 'इषु - इच्छायाम्' इत्यस्मात् बाहुलकात् घञ् इच्छापूर्वकप्रवृत्तिरिति यावत् । **स्वभाव** एव न प्रयोजनाय भवति । **आप्तकामस्य** पूर्णकामस्य **का स्पृहा** न कापि फलेच्छेत्यर्थः ॥ ३४ ॥ अ.९ ॥

## १०.अथ वैषम्यनैर्घृण्याधिकरणम्

**सर्वकर्तृत्वे वैषम्यनैर्घृण्ये तस्येत्यतो वक्ति–**

अत्र नये वैषम्यादिदोषप्रापकयुक्तिविरोधपरिहारः । अत्र श्रुतिः विरोधदर्शनं च संशयबीजम् ॥ पूर्वपक्षमाहुः- **सर्वकर्तृत्वे इति** ॥ जीवकर्मानपेक्षया सर्वकर्तृत्व इत्यर्थः । कर्मापेक्षया सर्वकर्तृत्वे तु अस्वातन्त्र्यं प्राप्नोतीति भावः । **वैषम्यनैर्घृण्य इति** ॥ स्यातामिति शेषः ।

**(कर्मापेक्षया फलदातृत्वान्नेशस्य वैषम्यनैर्घृण्ये)**

### ॥ ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ ॥ ३५ ॥

**ईश्वरस्य,सर्वस्वतन्त्रकर्तृत्वे, इति प्रकृतम् । हिः हेतौ, अप्यर्थे च । दर्शयतीत्यनेन श्रुतिरिति लभ्यते । अयमर्थः- ईश्वरस्य सर्वस्वतन्त्रकर्तृत्वे हि कर्तृत्वेऽपि वैषम्यनैर्घृण्ये न भवतः सापेक्षत्वात् फलदानादिविषये जीवकर्मसापेक्षत्वात् तत्तत्कर्मानुसारेण फलदातृत्वादिति यावत् । हि यतः श्रुतिः 'पुण्येन पुण्यम्' इति श्रुतिः तथा उक्तप्रकारेण दर्शयति अत इति ।**

**कर्मापेक्षया फलदातृत्वान्न तस्य वैषम्यनैर्घृण्ये । 'पुण्येन पुण्यं लोकं नयति पापेन पापम्' (प्र.उ.३–७) इति हि श्रुतिः ॥**

भा. ॥ दर्शयतीत्यनेन सूचितश्रुतिमाहुः- **'पुण्येनेति** ॥ **हि श्रुतिरिति** ॥ श्रुतिर्हि यतो दर्शयति इति सूत्रेण सम्बन्धः ॥ ३५ ॥

**(कर्मण अनादित्वान्न दोषः)**

**कर्मापेक्षया फलदातृत्वमाक्षिप्य समाधानाय सूत्रम्-**

### ॥ ॐ न कर्माविभागादिति चेन्नानादित्वात् ॐ ॥ ३६ ॥ (इति)

**ईश्वरस्य सृष्टिरिति प्रकृतम् । अपेक्षेति एकदेशो वर्तते, कर्मघञन्तोऽयम् । प्रागिति शेषः । कर्मपदस्य**

१. **पुण्येन पुण्यमिति** ॥ (ष.प्र.३.७) 'उभाभ्यामेव मनुष्यलोकम्' इति वाक्यशेषः । ईश्वरः जीवमिति शेषः। **पुण्येन** जीवपुण्यं निमित्तीकृत्य **पुण्यं** पुण्यसाध्यं **लोकं** स्वर्गादिलोकं **नयति** प्रापयति । एवं ज्ञानेन मोक्षम् इत्यपि द्रष्टव्यम् । **पापेन पापं** नरकादिकं नयतीत्यर्थः । **उभाभ्यामेव** समाभ्यां पुण्यपापाभ्यां **मनुष्यलोकं** समसुखदुःखलोकं नयतीत्यर्थः ॥ ३५ ॥

आवृत्तिविपरिणामौ । लोके विभक्ते पुरुषे अयं स्वतन्त्र इति स्वतन्त्रपदप्रयोगात्, अविभागपदमस्वतन्त्र-परम् । अयमर्थः- ईश्वरस्य अपेक्षं फलदानविषये अपेक्ष्यमाणं **कर्म** सृष्टेः प्राक् **नास्त्येव अविभागाद्** अस्वतन्त्रत्वात् तस्याऽपि कर्मणः ईश्वरकृतत्वादिति यावदिति **चेन्न**- कर्मणः **अनादित्वात्** प्रवाहतोऽनादित्वादिति ॥

**यदपेक्षयाऽसौ फलं ददाति न तत्कर्म । 'एष ह्येवैनं साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' (कौ.उ.३–८) इति श्रुतेः कर्मणोऽपि तन्निमित्तत्वादिति चेन्न । तस्यापि पूर्वकर्म कारण-मित्यनादित्वात् कर्मणः । भविष्यत्पुराणे च–**

**'पुण्यपापादिकं विष्णुः कारयेत्पूर्वकर्मणा ।**
**अनादित्वात् कर्मणश्च न विरोधः कथञ्चन ॥' इति ।**

भा. ॥ सूत्रं व्याचक्षते - **यदपेक्षयेति** ॥ यादृशकर्माऽपेक्षयेत्यर्थः । **असौ**- भगवान् । **न तत्कर्मेति** ॥ तादृशं कर्म पूर्वं नास्त्येवेत्यर्थः । पूर्वं फलदानानुकूलकर्म नास्तीत्यत्र मानमाहुः- [1]**'एष ह्येवेति** ॥ **तन्निमित्तत्वादिति** ॥ उक्तश्रुतिबलात् तस्यापि कर्मणः ईश्वरसृष्टत्वावगतेरित्यर्थः । उक्तेऽर्थे मानमाहुः- **'भविष्यत्पुराणे'** [2]**'पुण्यपापेति** ॥ **इतीति** ॥ इतिवचनात् अनादित्वात् कर्मण इत्यन्वयः ॥ ३६ ॥

**(स्वाधीनकर्मसापेक्षत्वान्नेश्वरस्य स्वातन्त्र्यहानिः)**

**नियमेन कर्मापेक्षया फलदातृत्वे ईश्वरस्याऽस्वातन्त्र्यं स्यादिति शङ्कावारणाय सूत्रम्-**

**॥ ॐ उपपद्यते चाप्युपलभ्यते च ॐ ॥ ३७ ॥ (इति)**

---

१. **एष ह्येवेति** ॥ (कौ. ३.८) **एष** भगवान्, **यं** जीवम्, **एभ्यः** भूर्भुवस्वराख्येभ्यो **लोकेभ्यः उन्निनीषते** ऊर्ध्वं नेतुमिच्छति । **तं** योग्यजीवं **साधुकर्म कारयति** ज्ञानादिकं चोत्पादयति । एवं च मोक्षः प्रसादसाध्यमित्युक्तं भवति । **एष यम् एभ्यो लोकेभ्योऽधो निनीषते** तमो नेतुमिच्छति । **तम्** अयोग्यजीवम् **असाधुकर्म** मिथ्याज्ञानादिकर्म **कारयति** इत्यर्थः । अत्र श्रुतौ उ शब्दो विष्णुपर इति ज्ञेयम् ॥

२. **पुण्येति** ॥ आदिना ज्ञानादेर्ग्रहणम् ॥ **विष्णुः पुण्यपापादिकं** पुण्यादिप्रयोजकं कर्म **पूर्वकर्मणा** निमित्तभूतेन जीवं **कारयेत्** । **कर्मणश्च** कर्मप्रवाहस्य तु **अनादित्वात् कथञ्चन** केनापि प्रकारेण **विरोधः** वैषम्यादिदोषो **न** इत्यर्थः ॥ ३६ ॥

नञा रहितमविभागादिति वैषम्यनैर्घृण्ये, सापेक्षत्वादिति च वर्तते । अदोषत्वमिति शेषः ।। विभागपदं स्वातन्त्र्यपरम् । ईश्वरस्येति प्रकृतम् । यथायथं विपरिणामः । अयमर्थः - ईश्वरस्य सापेक्षत्वे अपि फलदाने स्वायत्तकर्मसापेक्षत्वेऽपि विभागः स्वातन्त्र्यम्, उपपद्यते च उपपद्यत एव । वैषम्यनैर्घृण्ययोरदोषत्वं च उपलभ्यते 'स कारयेत्' इति श्रुतौ उपलभ्यते च इति ।।

**न च कर्मापेक्षत्वेनेश्वरस्यास्वातन्त्र्यम् ।**

**'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।**
**यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ।।'**

**इत्यादिना कर्मादीनां सत्त्वस्यापि तदधीनत्वात् । न च पुनर्वैषम्याद्यापातेन दोषः । तादृशवैषम्यादेरुपलभ्यमानत्वात् ।**

**'स कारयेत्पुण्यमथापि पापं न तावता दोषवानीशिताऽपि ।**
**ईशो यतो गुणदोषादिसत्त्वे स्वयं परोऽनादिरादिः प्रजानाम् ।।'**

**इति चतुर्वेदशिखायाम् ।।**

**।। इति वैषम्यनैर्घृण्याधिकरणम् ।।**

भा. ।। सूत्रार्थमाहुः- **न चेति** ।। अस्वातन्त्र्ये मानमाहुः- **'द्रव्यमिति** ।। सत्वस्य सत्तादेः । **तादृशवैषम्यादेरिति** ।। स्वाधीनकर्मानुगुणफलदानप्रयुक्तवैषम्यादेरित्यर्थः । उक्तार्थे श्रुतिमाहुः- **'स कारयेदिति** ।। ३७ ।। अ. १० ।।

।। इति वैषम्यनैर्घृण्याधिकरणम् ।।

---

१. **द्रव्यमिति** ।। **द्रव्यं** प्रकृत्यादितत्वं **कर्म** धर्माधर्मौ **कालः** कालप्रवाहः **स्वभावः** प्रकृतिकर्मादीनां परिणामसत्वादि **जीवः** अभिमानिनी रमा, जीवराशिश्च, **यदनुग्रहतः** यस्य भगवतः अनुग्रहादेव **सन्ति** । **यदुपेक्षया** ईशोपेक्षया **न सन्ति** इत्यर्थः । आदिना 'न ऋते त्वत्क्रियते' इत्यादिपरिग्रहः ।

२. **स कारयेदिति** ।। **स** विष्णुः स्वाधीनपूर्वकर्माऽपेक्षया **पुण्यं** कर्म **पापम्** अपि कर्म जीवेन **कारयेत्** । **ईशितापि** एवं कर्मादिप्रेरकोऽपि **तावता न दोषवान्** वैषम्यादिदोषवान्न भवति, **यतः परः** स्वतन्त्रः **प्रजानाम्** **आदिः** कारणम् । **अनादिः** उत्पादकशून्यः **प्रजानां गुणदोषादिसत्वे** गुणदोषाद्यापादने **स्वयं** च स्वयमेव **ईशः** समर्थः, अत इत्यर्थः ।। ३७ ।। अ.१० ।।

## ११. अथ सर्वधर्मोपपत्त्यधिकरणम्

**अवशिष्टैरुपसंहरति–**

अत्र नये उक्तावशिष्टब्रह्मशब्दोक्तसर्वगुणपरिपूर्णत्वे युक्तिविरोधपरिहारः । 'जिज्ञासा' (१.१.१) नयेन सङ्गतिः । सर्वगुणकत्वं विषयः । विष्णोर्युक्तं न वेति सन्देहः । पूर्वाध्यायोऽन्यत्रादर्शनं च सन्देह-बीजम् । न युक्तं चेतनत्वादिति पूर्वपक्षः ॥ सर्वयुक्तिविरोधानां परिहृतत्वात् किमेतदधिकरणेनेत्यतः प्रयोजनमाहुः- **अवशिष्टैरिति** ॥ पूर्णत्वस्याविरोधेनेति शेषः । **अयमर्थः**- अवशिष्टैः विशिष्य समर्थितस्रष्टृत्वादिधर्मातिरिक्तज्ञानानन्दादिसर्वगुणैः पूर्णत्वस्य, अविरोधेन विरोधपरिहारेण उपसंहरति पादं समापयति सूत्रकार इत्यर्थः ॥

**('गुणाः श्रुताः' इत्यादिश्रुतेः निर्दोषगुणपूर्णः विष्णुः)**

**॥ ॐ सर्वधर्मोपपत्तेश्च ॐ ॥ ३८ ॥**

**सर्वधर्मेति पृथक्पदं च प्रथमान्तम् । पृथक्पदपक्षे सर्वे धर्मा यस्येति बहुव्रीहिः । 'धर्मादनिच्-केवला'(पा.सू.५.४.१२४) इति सूत्रेण समासान्तोऽनिच्प्रत्ययः । नान्तं पदम् । चो विभागादिति समुच्चये । ईश्वर इति प्रकृतम् । अयमर्थः- ईश्वरः सर्वधर्मा दोषाभावज्ञानानन्दादिसर्वगुणवान् विभागात् स्वातन्त्र्यात् सर्वधर्मोपपत्तेश्च सर्वगुणानां, सर्वदोषाभावानां चेश्वरे उपपादक 'गुणाः श्रुताः' इति श्रुते-श्चेति ॥**

**'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का ।**
**चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाज्ञैर्हि तथा प्रतीताः ॥'**

**इति सर्वगुणोपपत्तिश्रुतेश्च ॥**

भा. ॥ ईश्वरः सर्वगुणवानित्यत्र सूत्रोपात्तश्रुतिमाहुः- **'गुणाः श्रुता इति ॥ श्रुतेश्चेति ॥** चेन

१. **गुणा इति** ॥ (सौपर्णश्रुतिरियं) **श्रुता** वेदोक्ता **अश्रुता अपि** वेदानुक्ता अपि **सुविरुद्धाः** लोकदृष्ट्या विरुद्धत्वेन भासमानाश्च **चिन्त्याश्च** उपासनायोग्याश्च **अचिन्त्याः** साकल्येन चिन्ताऽविषयाश्च **गुणाः** अणुत्वमहत्वादयो **गुणा देवे** भगवति विष्णौ **सन्त्येव** सामानाधिकरण्येन वर्तन्ते एव **अत्र शङ्का न कार्या** । **दोषास्तु अज्ञैः** मिथ्याज्ञानिभिः **श्रुता एव तथा प्रतीता एव** न वस्तुतो देवे सन्ति **हि** प्रसिद्धम् ॥ ३८ ॥ अ.११ ॥

स्वातन्त्र्यादियुक्तेर्ग्रहः । इदं भाष्यं हेत्वर्थविवरणमात्रपरम् । तथा च भगवान् सर्वस्वतन्त्रकर्तेति सिद्धम् ॥ ३८ ॥ अ. ११ ॥

॥ इति सर्वधर्मोपपत्त्यधिकरणम् ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीब्रह्मसूत्रभाष्यस्य व्याख्यायां भाष्यार्थसहितसूत्रार्थमणिमञ्जर्यां द्वितीयाध्यायस्य प्रथमः पादः ॥

## ॥ इति द्वितीयाध्यायस्य प्र नः पादः ॥

# ॥ अथ द्वितीयः पादः ॥

## (नानाविधसमयविरोधपरिहारात्मकः द्वितीयः पादः)

## १. रचनानुपपत्त्यधिकरणम्

**'इतरेषां चानुपलब्धेः' (ब्र.सू. २.१.२) इति सामान्यनिराकरणं समयानां कृतम् । विशेषतो निराकरोत्यस्मिन् पादे । अचेतनप्रवृत्तिमतं प्रथमतो निराकरोति–**

एतत्पादार्थं दर्शयन्ति - **इतरेषामिति** ॥ इति (२.१.२) सूत्रेणेत्यर्थः । विरुद्ध-तत्तत्समय-प्रवर्तकैः तत्तत्समयानुसारिस्मृतीनां कृतत्वात् तत्स्मृतिषु उक्तानामदृष्टेतरफलानां प्रत्यक्षतोऽनुपलब्धिहेतुना समयान्निराकृतानपि विशेषतः तत्तत्समयसिद्धपक्षानुवादेन समयान् विस्तरेण निराकरोति अस्मिन् पादे सूत्रकारः इति भावः । विरुद्धसमयनिराकरणमेतत्पादार्थ इति ज्ञेयम् । अत्र पादे आपादपरिसमाप्तिनयेषु विष्णोः स्वतन्त्र सर्वजगत्कर्तृत्वं विषयः । हरेर्युक्तं न वेति संशयः, समयविगानं तद्बीजम् । न युक्तमिति पूर्वपक्षः । षष्ठनये तु अनन्तगुणवत्वं विषयः । शेषं पूर्ववत् । मुखतो विष्णुकर्तृत्वानुक्तावपि तत्तन्मतनिराकरणादर्थसिद्धं तदिति बोध्यम् । अत्र पादे निराकार्यास्समया द्विविधाः । हैतुकाः पाषण्डाश्चेति । तत्र अक्षपाद-कणाद- साङ्ख्य-योगाः- हैतुकाः । बौद्धपाशुपताद्याः पाषण्डाः । तत्र हैतुकाः प्रबलाः युक्तिमत्वात् । तेषु साङ्ख्योऽतिविरोधी अचेतनस्यैव कर्तृत्वाङ्गीकारात् । साङ्ख्योऽपि द्विविधः निरीश्वरसेश्वरभेदात् । तत्र निरीश्वरोऽतिविरोधीति प्रथमनये तन्मतनिराकरणम् ॥ **अचेतनप्रवृत्तीति** ॥ अचेतनप्रवृत्या महदादिकार्यमुत्पद्यत इति प्रतिपादकं मतम् । मयूरव्यंसकादित्वात्समासः । **प्रथमतः**- प्रथमनये ॥

**(अनुमानसिद्धं प्रधानं न जगत्कर्तृ स्वतः प्रवृत्त्यनुपपत्तेः)**

**॥ ॐ रचनानुपपत्तेश्च नानुमानम् ॐ ॥ १ ॥**

**अनुमानस्येदमानुमानम्, यद्वा अनुमानमिति पदच्छेदः अनुमीयते इत्यनुमानं, बाहुलकात्कर्मणि ल्युट् । जगत्कर्तृ इति प्रकृतम् । चः प्रमाणाऽभावसमुच्चये । अयमर्थः- आनुमानं न** (अनुमानं वा) **'महदादिकार्यं स्वसदृशकारणवत् कार्यत्वात् घटवत्'** इत्यनुमानसिद्धं प्रधानं न जगत्कर्तृ **रचनानुपपत्तेः** स्वतः प्रवृत्यनुपपत्तेः प्रमाणाभावाच्चेति ॥ स्वतः प्रवृत्यनुपपत्तिस्तु अचेतनत्वाद्घटवदिति ज्ञेयम् ॥

**अचेतनस्य स्वतः प्रवृत्त्यनुपपत्तेर्नानुमानपरिकल्पितं प्रधानं जगत्कर्तृ । चशब्देन प्रमाणाभावं दर्शयति ।**

भा. ॥ सूत्रार्थमाहुः- **अचेतनस्येति** ॥ प्रधानस्येत्यर्थः ॥ प्रधानस्येति वक्तव्ये अचेतनस्येत्युक्तिः प्रवृत्यनुपपत्तौ अचेतनत्वादिति युक्तिसूचनार्था । उपादानकारणत्वाऽर्थमवश्यमङ्गीकर्तव्यस्य प्रधानस्यैव जगत्कर्तृत्वोपपत्तौ अतिरिक्तेश्वरतत्कर्तृत्वयोरङ्गीकारो व्यर्थ इति पूर्वपक्षिभावः ॥ १ ॥

**(चेतन एव स्वतः प्रवत्तिर्दृष्टा)**

**युक्त्यन्तरेण प्रधानस्य कर्तृत्वनिराकरणाय सूत्रम्-**

**॥ ॐ प्रवृत्तेश्च ॐ ॥ ॥**

**अनुपपत्तेरित्येकदेशः नानुमानं कर्तृ इति वर्तते । प्रवृत्तेरित्येतद्बलाच्चेतनस्येति लभ्यते, दर्शनादिति च । यथायथमावृत्तिविपरिणामौ । अयमर्थः- आनुमानं= प्रधानं न जगत्कर्तृ= महदादिजगत्कर्तृ न, अनुमानस्य पूर्वपक्ष्यनुमानस्य अनुपपत्तेः 'महदादिसृष्टिः चेतनेच्छानुसारिणी सृष्टित्वात् पटसृष्टिवत्' इत्यनुमान-विरोधात् च । अनुमानस्य उक्तानुमानस्य अनुपपत्तिः च दृष्टान्ते साध्यवैकल्यदोषस्तु न, चेतनस्य प्रवृत्तेः स्वतः कर्तृत्वदर्शनात् । अहं करोमीति अनुभवादिति ॥ यद्यपि पूर्वसूत्र एव प्रधानं न कर्तृ, स्वतः प्रवृत्यनुपपत्तेः, अनुमानविरोधाच्चेति व्याख्यायेदं सूत्रं दृष्टान्ते साध्यवैकल्पपरिहारार्थमिति वक्तुं युक्तम् । तथापि विशेषाभावादेवमेवोक्तं न चेच्छादेरन्तःकरणपरिणामत्वेन स्वरूपसम्बन्धेन तद्धर्मत्वमेवेति वाच्यम् । स्वामितासम्बन्धेन इच्छादिमत्वस्यैव तद्व्यवहारनियामकत्वेन इच्छादेः चेतनधर्मत्वात् ॥**

**चेतनस्य स्वतःप्रवृत्तिर्दर्शनाच्च ॥**

भा. ॥ चेतनस्येति ॥ चेतनस्यैव 'अहं करोमि' इति स्वतन्त्रकर्तृत्वानुभवाच्चेत्यर्थः । अस्य भाष्यस्य प्रवृत्तेश्चेत्येतत्पदार्थविवरणपरत्वे ..न्यत्राऽन्वयो न ॥ २ ॥

**(सर्वत्र प्रवृत्तिरीशाधीना)**

**उक्तमाक्षिप्य समाधानाय सूत्रम्-**

**॥ ॐ पयोऽम्बुवच्चेत्तत्रापि ॐ ॥ ३ ॥ (इति)**

**अत्र दृष्टान्तबलेनाचेतनस्येति लभ्यते । नानुमानं, प्रवृत्तेः, चेतनस्येति वर्तते । पयश्चाम्बु चेति द्वन्द्वः । युज्यत इति शेषः । यथायथमावृत्तिविपरिणामौ । अयमर्थः - अचेतनस्याऽपि आनुमानस्य पयोऽम्बुवत् पयस इव, अम्बुन इव च, प्रवृत्तिः स्वतः प्रवृत्तिर्युज्यत इति चेत् न । तत्रापि पयोऽम्बुप्रवृत्तावपि**

**चेतनस्येश्वरस्य प्रवृत्तेः 'एतस्य वा' इति श्रुतौ 'एतेन ह' इति श्रुतौ च, प्रवृत्तिदर्शनादिति ॥ एवं च - 'महदादिसृष्टिः चेतनेच्छानुसारिणी सृष्टित्वात्' इत्यनुमानस्य पयःकर्तृकदधिसृष्ट्यादौ अम्बुकर्तृकप्रस्रवणादौ च व्यभिचार इति शङ्का, प्रधानस्याचेतनत्वेऽपि पयोऽम्बुवत् स्वतः प्रवृत्तिः किं न स्यादिति शङ्का च, परास्तेति बोध्यम् ।**

**पयोऽम्बुवदचेतनस्यापि प्रवृत्तिर्युज्यत इति न युक्तम् ।**

**'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते, याश्च श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमनु' (बृ.उ.५–८–९) 'एतेन ह वाव पयो मण्डं भवति' इत्यादिना तत्रापीश्वरनिमित्तप्रवृत्तिश्रुतेः ।**

भा. ॥ सूत्राऽर्थमाहुः- **पयोऽम्बुवदिति** ॥ **अचेतनस्याऽपि**- प्रधानस्याऽपि । पयआदि प्रवृत्तेरपीश्वराधीनत्वे श्रुतिमाहुः- **'एतस्येति** ॥ **तत्रापि** - पयोम्बुप्रवृत्तावपि । इत्यादिश्चासौ तत्रापीश्वरप्रवृत्तिश्रुतिश्चेति कर्मधारयः ॥ ३ ॥

**('न ऋते' इत्यादिश्रुतेः नेश्वरमन्तरेण केनापि प्रवृत्तिः)**

**नन्वेवमप्ययस्कान्तव्यापारे व्यभिचारः । किञ्च प्रधानस्य कर्तृत्वे अयस्कान्तादिव्यापारो दृष्टान्तो भवतीति शङ्कावारणाय सूत्रम्-**

**॥ ॐ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॐ ॥ ४ ॥**

**नानुमानं, जगत्कर्तृ, इति वर्तते । व्यतिरेकेणाऽनवस्थितिरिति विग्रहः । सुप्सुपेति समासः । अयमर्थः- व्यतिरेकानवस्थितेः** 'न ऋते त्वत्क्रियते' इति श्रुत्या व्यतिरेकेण ईश्वरमन्तरेण कस्यापि कर्मणः अवस्थानं नेत्यभ्युपगमात् **अनपेक्षत्वाच्च** अनीश्वरवादिमतस्य अनादरणीयत्वात् आनुमानं प्रधानं जगत्कर्तृ नेति ॥

---

१. एतस्येति ॥ (बृ. ५.८.९) हे **गार्गि अन्या** विलक्षणाः **काश्चित् प्राच्यः** प्राच्यां दिशि स्थिताः **याश्चान्याः काश्चित् प्रतीच्यः** प्रतीच्यां दिशि स्थिताः **नद्यः श्वेतेभ्यः** तन्नामकोपलक्षितेभ्यः **पर्वतेभ्यः यां यां दिशम् अनुस्यन्दन्ते** स्रवन्ति, ता नद्यः **एतस्याक्षरस्य** तदाख्यस्य भगवतः **प्रशासने वा** शासननिमित्तादेव **तां तां दिशमनुस्यन्दन्ते** इत्यर्थः । **एतेनेति** ॥ **एतेन** भगवता **पयः** क्षीरं **मण्डं** दधि **भवति**, दध्युपादानं वा, भवतीत्यर्थः ॥ ३ ॥

**'न ऋते त्वत्क्रियते किञ्चनारे' (ऋ.सं.१०—११३—९) इति तद्व्यतिरेकेण कस्यापि कर्मणोऽनवस्थितेरनपेक्षितमेवाचेतनवादिमतम् ॥**

**॥ इति रचनानुपपत्त्यधिकरणम् ॥**

भा. ॥ श्रुत्युपन्यासपूर्वकं सूत्रार्थमाहुः- **'न ऋते इति** ॥ **इतीति** ॥ इति श्रुत्येत्यर्थः ॥ ४ ॥

**॥ इति रचनाधिकरणम् ॥**

---

१. **न ऋते इति** ॥ (ऋ.१०.११२.९) 'निषुसीद गणपते गणेषु त्वामाहुः विप्रतमं कवीनाम् । न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवन् चित्रमर्च' इति मन्त्रः । अस्याऽर्थः - **हे गणपते** इन्द्रियगणस्वामिन् **मघवन्** धनवन्, यशस्विन्, मखपते वा, विष्णो **त्वं गणेषु** अर्चकानामिन्द्रियगणेषु **निषुसीद** सुसम्यक् स्थितो भव । तत्र स्थित्वा च **महां** महान्तं पूज्यम् **अर्कं** परमानन्दयुतं **चित्रम्** आश्चर्यतमं **त्वां** त्वामेव **अर्च** पूजय, यतः त्वामेव **कवीनां** ज्ञानिनां **विप्रतमं** विशेषेण प्रकृष्टतमं कवयो (ज्ञानिन) **आहुः** । यतश्च **त्वदृते** त्वां विना **आरे** दूरे समीपे च **किञ्चन** स्पन्दनमपि केनाऽपि **न क्रियते** अतश्चेति ॥ ४ ॥ अ.१ ॥

## २. अन्यत्राऽभावाधिकरणम्

**सेश्वरसाङ्ख्यमतं निराकरोति। यथा पृथिव्या एव पर्जन्यानुगृहीतं तृणादिकमुत्पद्यते, एवं प्रधानादीश्वरानुगृहीतं जगदित्यतो ब्रवीति–**

अत्र नये सेश्वरसाङ्ख्यमतनिरासः ॥ अधिकरणार्थमाहुः- **सेश्वरेति** ॥ ईश्वरेण सहितमनुग्राह्यानुग्राहकसम्बन्धेनेश्वरयुक्तं प्रधानं सेश्वरम् । तेन तादृशप्रधानं जगत्कर्तृ इति वादी लक्ष्यते । ततः साङ्ख्यशब्देन कर्मधारयः । ततः षष्ठीसमासः । सूत्रसूचितपूर्वपक्षमाहुः- **यथेति** ॥ **पृथिव्या इति** ॥ 'जनिकर्तुः प्रकृतिः' इति सूत्रेणाऽपादानत्वात्पञ्चमी । एतन्मते कर्तृत्वमप्युपादानस्यैव। एवेत्यनेनेश्वरस्य व्यावृत्तिः । **पर्जन्याऽनुगृहीतमिति** ॥ अत्रानुग्रहः पृथिव्या एव कार्योन्मुखीकरणं पर्जन्यस्य कार्ये उत्पत्तौ च सहकारित्वात् । तृणादेरनुग्रहजन्यत्वेनानुगृहीतमित्युक्तम् । 'तृणादिवत्' इति सूत्रानुरोधेनानुगृहीतायाः पृथिव्या इति नोक्तम् । पर्जन्यं वृष्टिः, मेघो वा । **ईश्वराऽनुगृहीतमिति** ॥ ईश्वरस्य अनुग्राहकत्वमात्रं न तु कर्तृत्वमिति भावः ।

**(पर्जन्यवन्नानुग्राहकत्वमात्रमीश्वरस्य)**

**॥ ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ॥ ५ ॥**

**ईश्वरात्, जगत, इति प्रकृतम् । चोऽनुक्तप्रकृत्यादिसत्ताप्रदत्वादिसमुच्चये, तृणादिपदं तृणादीन् प्रति पर्जन्यस्येत्यर्थलक्षकम् । षष्ठ्यन्ताद्वतिः । अनुग्राहकत्वमात्रमिति शेषः । अयमर्थः- ईश्वरादन्यत्र जगतोऽभावात् तदधीनसत्ताकत्वादिति यावत् प्रकृतिसत्ताप्रदत्वाच्च, तृणादिवत् तृणादीन् प्रति पर्जन्यस्येव ईश्वरस्य जगत्प्रति अनुग्राहकत्वमात्रं न किन्तु कर्तृत्वमपीति ॥ यद्वा- अनुग्राह्यमिति शेषः । तृणादीतिपदं यथाश्रुतमेव । अयमर्थः- तृणादिवत् तृणादिकार्याणामिव जगतोऽनुग्राह्यत्वमात्रं चेतनानुगृहीतकारणजन्यत्वमात्रं न, किन्तु ईश्वरकर्तृकमपि उक्तहेतोरिति ॥**

**'यच्च किञ्च जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।**
**अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।'**

**'ब्रह्मण्येवेदमाविरासीद्ब्रह्मणि स्थितं ब्रह्मणि(न्) लयमभ्युपैति । ब्रह्मैवाधस्ताद्**

**ब्रह्मैवोपरिष्टाद् ब्रह्म मध्यतो ब्रह्म सर्वतः ब्रह्मैवेदं सर्वम्'(बृ.उ.४–५–१) इत्यादि-श्रुतिभ्योऽन्यत्र जगतोऽभावात्तृणादीनां पर्जन्यवन्नानुग्राहकत्वमात्रमीश्वरस्य ।**

**'स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम् ।**
**अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्तिकृत् ॥'**
**इति भागवते (१.१०.२३) ।**

**'द्रव्यं कर्म च कालश्च' इत्यादि च । चशब्देन प्रकृतिसत्तादिप्रदत्वं चाङ्गीकृतम् ॥**

**॥ इति अन्यत्राभावाधिकरणम् ॥**

भा. ॥ श्रुतिमुखेन सूत्रभावमाहुः- **[1]यच्च किञ्चेति ॥ इत्यादि इति ॥** आदिना 'ब्रह्मा तं परात्' इति बृहदारण्यकस्य ग्रहणम् । **तृणादीनामिति ॥** तृणादिविषय इत्यर्थः । **पर्जन्यवत्**- पर्जन्यस्येव । प्रकृतिसत्तादिप्रदत्वे मानमाहुः- **[2]स एवेति ॥ चशब्देनेति ॥** सूचितमिति शेषः । **इत्यादि चेति ॥** भागवत इति वर्तते । **सत्तादीति ॥** आदिना कार्योद्बोधादेर्ग्रहणम् । अयमर्थः- शास्तिकृदिति भागवते, इत्यादि भागवते च, अङ्गीकृतं प्रकृतिसत्तादिप्रदत्वं चशब्देन अत्र सूचितं, यतः सूचितमतो नानु-ग्राहकत्वमात्रमीश्वरस्येति ॥ ५ ॥ अ.२ ॥

**॥ इति अन्यत्राभावाधिकरणम् ॥**

---

१. **यच्च किञ्चेति ॥** (महा ना.) **तत्सर्वं जगत्** सर्वं सर्वथा देशकालगुणशक्तिभिः **व्याप्य** तत्प्रेरकतया (व्याप्य) तत्र **स्थितो नारायण** इत्यर्थः । अन्यत्स्पष्टम् । **ब्रह्मण्येवेति ॥ इदं** जगत् **ब्रह्मण्येव** ब्रह्मनिमित्तकमेव आविरासीत् उत्पन्नमित्यर्थः ॥ **ब्रह्मैवेति** । (बृ.४.५.१) **इदं सर्वं ब्रह्मैव** ब्रह्माधीनमेवेत्यर्थः । इतरत्स्पष्टम् ॥

२. **स एवेति ॥** (भाग. १.१०.२३)**शास्तिकृत्** जगतः शिक्षकः **स** हरिरेव **अनामरूपात्मनि** प्राकृतनामरूप-रहिते **स्वस्मिन्** स्वाऽधारत्वेन **रूपनामनी** अर्थात्मकशब्दात्मकप्रपञ्चौ **भूयः** पुनः **विधित्समानः** सिसृक्षुः **निजवीर्यचोदितां** स्वसामर्थ्यप्रेरितां **स्वजीवमायां** स्वाधीनां जीवबन्धिकां **सिसृक्षतीं** सर्जनोन्मुखीं **प्रकृतिं** लक्ष्मीम् **अनुससार** अनुजग्राहेत्यर्थः । **द्रव्यं कर्म चेति ॥** व्या.(३६३.पु) ॥ ५ ॥ अ.२. ॥

# ३. अभ्युपगमाधिकरणम्

**लोकायतिकपक्षं निराकरोति—**

अत्र नये लोकायतिकमतनिराकरणम् ॥ १ - सू.अ. ॥ अधिकरणार्थं दर्शयन्ति- **लोकायतिकेति** ॥ चार्वाकेण स्वपक्षस्य सिद्धान्तत्वानभ्युपगमे तदुक्तधर्माद्यभावरूपविषयस्य, धर्माद्यभावप्रयुक्तस्वच्छन्दप्रवृत्तिरूपप्रयोजनस्य चासिद्ध्या सिद्धान्तिन इष्टं सिद्धमिति तत्पक्षे दूषणस्य स्पष्टत्वात्सिद्धान्ततया अभ्युपगतपक्षं दूषयति सूत्रकार इत्यर्थः ॥

**(अतीन्द्रियार्थानुभ्युपगमात् न चार्वाकमतं युक्तम्)**

**॥ ॐ अभ्युपगमेऽप्यर्थाभावात् ॐ ॥ ६ ॥**

**अपिना अनभ्युपगमपक्षे दूषणं स्पष्टमिति सूचितम् । अर्थो विषयः, प्रयोजनं च । 'न नानुमानम्' इति वर्तते । अनुमानपदं श्रुतेरप्युपलक्षकं न विद्यतेऽनुमानं प्रमाणतया यस्मिन्निति न शब्देन बहुव्रीहिः । अयमर्थः- अभ्युपगमेऽपि (चार्वाकेण) स्वपक्षस्य सिद्धान्तत्वाङ्गीकारेऽपि अर्थाभावात् धर्मादिविषय-स्वर्गादिप्रयोजनयोरसत्वात् नानुमानम् (अनुमानाऽगमविरोधिलोकायतिकमतं न युक्तमिति) ॥**

**यस्य धर्माधर्मौ न स्तः तत्सिद्धान्ते किं प्रयोजनम् । अतः स्वव्याहतेरेवोपेक्ष्यः ॥**

**भा.** ॥ सूत्राऽर्थमाहुः- **यस्येति** ॥ यस्य चार्वाकस्य पक्षे । **धर्माऽधर्मौ-** पुण्यपापे, स्वर्गनरके च । **न स्तः-** नाऽङ्गीकृतौ भवतः । **तत्सिद्धान्ते किं प्रयोजनम्-** शिष्यं प्रति गुरोर्धर्माद्यभावोपदेशे, शिष्यस्य च तच्छ्रवणे, किं प्रयोजनम् ? न किमपि प्रयोजनम् । **अतः-** प्रयोजनाऽभावात् । **स्वव्याहतेरेव-** सिद्धान्तस्य सप्रयोजनत्वनियमेन सिद्धान्तमित्यङ्गीकृत्य प्रयोजनं नास्तीत्यस्य स्ववचनविरोधादेव । एवेन दूषणान्तरं नान्वेषणीयमिति सूचितम् ॥ ६ ॥ अ.३ ॥

॥ इति अभ्युपगमाधिकरणम् ॥

## ४. पुरुषाश्माधिकरणम्

**पुरुषोपसर्जनप्रकृतिकर्तृत्ववादमपाकरोति–**

अत्र नये जीवोपसर्जनकप्रकृतिकर्तृत्ववादिनिरीश्वरसाङ्ख्यैकदेशिमतनिराकरणम् ॥ एतन्नयप्रतिपाद्यं दर्शयन्ति - **पुरुषेति** ॥ पुरुषो जीवः उपसर्जनमप्रधानं यस्याः प्रकृतेः तत्कर्तृत्ववादं जीवसन्निधिमात्रेण प्रकृतेः कतृत्वं युज्यत इति मतमपाकरोति इत्यर्थः ॥

**(पुरुषोपसर्जनप्रकृतिकर्तृत्ववादोऽप्रामाणिकः)**

**॥ ॐ पुरुषाश्मवदिति चेत्तथाऽपि ॐ ॥ ७ ॥**

**पुरुषेति लुप्तविभक्त्यन्तं पृथक्पदम् । नानुमानं, प्रवृत्तेरिति वर्तते । यथायथामावृत्तिविपरिणामौ । अयमर्थः- पुरुषेण जीवसम्बन्धेन पुरुषस्य देहस्य अश्मावत् अश्माऽनयनप्रवृत्तिवत् अनुमानस्य प्रधानस्य प्रवृत्तिः जगत्कर्तृत्वमिति चेन्न, तथापि तत्राऽपि शरीरसम्बन्ध्यश्मानयनादावपि पुरुषस्य ईश्वरस्य प्रवृत्तेः 'न ऋते त्वत्क्रियते' इति श्रुत्या कर्तृत्वावगमादिति ॥**

**यथा चेतनसम्बन्धादचेतनमेव शरीरमश्मादिकमादाय गच्छति, एवमचेतनाऽपि प्रकृतिः पुरुषसम्बन्धात् प्रवर्तत इति चेन्न । 'न ऋते त्वत्क्रियते'इति तत्रापि तथात्वे दृष्टान्ताभावात् ॥**

भा. ॥ सूत्रार्थमाहुः- **यथेत्यादिना** ॥ **अचेतनमेवेति** ॥ अचेतनमपीत्यर्थः । यद्वा- अचेतनं शरीरमेवेति सम्बन्धः । **पुरुषसम्बन्धात्** जीवसम्बन्धात् । **प्रवर्तत इति** ॥ सैव कर्त्रीति भावः । सौत्रसिद्धान्तमाहुः- **नेति** ॥ **'न ऋते त्वत्क्रियते इतीति** ॥ इति श्रुत्येत्यर्थः । **तत्रापि** पुरुषाश्मविषयेपि ईश्वरस्य कर्तृत्वाभ्युपगमेनेति शेषः । **तथात्वे** अचेतनस्य कर्तृत्वे । **दृष्टान्ताभावादिति** ॥ विमता प्रवृत्तिः पुरुषोपसर्जना चेतननिमित्ता प्रवृत्तित्वात् शरीरसम्बन्ध्यश्मानयनादिप्रत्तृत्तिवदित्यनुमानस्य दृष्टान्ताभावादित्यर्थः ॥ ७ ॥

---

१. **न ऋते इति** ॥ व्या. (३६८ पु.) ॥ ७ ॥

**(पुरुषस्य प्राधान्यं प्रमाणसिद्धम्)**

**ननु हैतुकं प्रति श्रुत्या दृष्टान्तदूषणं न युक्तमिति हेत्वन्तरेण दूषणाय सूत्रम्-**

**॥ ॐ अङ्गित्वानुपपत्तेः ॐ ॥ ८ ॥**

**क्वचित्पुस्तके अनुपपत्तेश्चेति पठ्यते । न, तथा, पुरुषेति वर्तते । कर्तेति प्रकृतम् । यथायथमावृत्ति-विपरिणामौ । अयमर्थः- तथासति अश्मानयनादौ शरीरस्य कर्तृत्वे सति पुरुषस्य जीवस्य अङ्गित्वानुपपत्तेः मुख्यत्वव्यवहाराऽनुपपत्तेः शरीरं न कर्तेति ॥ एवं च दृष्टान्ताऽभावः सिद्ध इति भावः ॥**

**शरीरप्रवृत्तौ पुरुषस्याङ्गित्वात् । 'अङ्गमङ्गी समादाय यथा कार्यं करोत्यसौ' इत्यङ्गित्वव्यवहारोऽनुपपन्नः ॥**

**॥ इति पुरुषाश्माधिकरणम् ॥**

भा. ॥ सूत्रार्थमाहुः- **शरीरेति** ॥ पुरुषस्य प्रधानत्वे स्मृतिमाहुः- **'अङ्गमिति** ॥ **अनुपपन्न इति** ॥ शरीरप्रवृत्तौ देहस्य स्वतः कर्तृत्वे पुरुषस्य जीवस्य अङ्गत्वात् अप्रधानत्वप्राप्तेः (जीवस्याङ्गित्व)व्यवहारोऽनुपपन्न इत्यर्थः ॥ ८ ॥ अ.४ ॥

**॥ इति पुरुषाश्माधिकरणम् ॥**

---

१. **अङ्गमिति ॥ अङ्गी** प्रधानपुरुषः **अङ्गं** गुणभूतं शरीरं **समादाय** सङ्गृह्य **यथा कार्यम्** अश्माद्यानयनकार्यं **करोति** तथा **असौ** भगवानपि प्रकृतिमादाय महदादिकार्यं करोतीत्यर्थः ॥ ८ ॥ अ.४. ॥ ८ ॥

## ५. अन्यथानुमित्यधिकरणम्

**प्रकृत्युपसर्जनपुरुषकर्तृत्ववादमपाकरोति–**

अत्र नये प्रकृत्युपसर्जनकपुरुषकर्तृत्ववादिनिरीश्वरसाङ्ख्यैकदेशिमतनिरासः । अधिकरणार्थं दर्शयन्ति- **प्रकृत्युपसर्जनेति** ॥ **पुरुषेति** ॥ जीवेत्यर्थः ॥

**(जीवस्य शरीरसम्बन्धप्रयोजकशक्तिविरहाद् अङ्गित्वानुपपत्तिः)**

**॥ ॐ अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॐ ॥ ९ ॥**

चेन अङ्गित्वाऽनुपपत्तेः, पुरुषेत्येकदेशश्चाऽनुवर्तते । अनुपपत्तिरिति विपरिणम्यते । **अयमर्थः- अन्यथा अनुमितौ** पूर्वनयोक्तपुरुषोपसर्जनप्रकृतिकर्तृत्ववादापेक्षया वैपरीत्येन प्रकृत्युपसर्जनकपुरुषकर्तृत्वेनानुमितौ **च** 'विमता प्रवृत्तिरचेतनोपसर्जनकपुरुषाधीना प्रवृत्तित्वात् अश्मानयनप्रवृत्तिवत्' इत्यनुमेये (वस्तुनि) अङ्गीक्रियमाणेऽपि **ज्ञशक्तिवियोगात्** ज्ञस्य जीवस्य शरीरसम्बन्धप्रयोजकशक्तिविरहात् अङ्गित्वानुपपत्तिः अङ्गभूतशरीरसम्बन्धित्वानुपपत्तिरिति ॥ जीवस्य शरीरसम्बन्धार्थमङ्गीकर्तव्येश्वर एव कर्तास्त्विति भावः ॥

**शरीरसम्बन्धात् पुरुषः प्रवर्तत इत्यङ्गीकारेऽपि स्वतस्तस्यासामर्थ्याच्छरीरसम्बन्ध एवायुक्तः ॥**

भा. ॥ सूत्राऽर्थमाहुः- **शरीरेति** ॥ पुरुषो जीवः । **अङ्गीकारेऽपीति** ॥ अङ्गीकारेणाङ्गित्वानुपपत्तिपरिहारोऽपीत्यर्थः । **न युक्त इति** ॥ शरीरसम्बन्ध एव न सिध्येदिति भावः । **सिद्धान्ते** त्वीशशक्त्या-जीवस्य देहसम्बन्धो युज्यत इति ज्ञेयम् ॥ ९ ॥

**(प्रमाणविरुद्धत्वान्नानीश्वरमतं समञ्जसम्)**

एवं प्रत्येकं दूषितानां निरीश्वरसाङ्ख्यमतानां सामान्यदूषणेनापि निराकरणाय सूत्रम्-

**॥ ॐ विप्रतिषेधाच्चासमञ्जसम् ॐ ॥ १० ॥**

प्रकृतत्वान्निरीश्वरसाङ्ख्यमतमिति लभ्यते । **अयमर्थः- विप्रतिषेधाच्च** श्रुति-स्मृति-युक्ति-विरुद्धत्वाच्च निरीश्वरसाङ्ख्यमतम् **असमञ्जसम्** अयुक्तमिति ॥

**सकलश्रुतिस्मृतियुक्तिविरुद्धत्वाच्चानीश्वरमतमसमञ्जसम् ।**

**'श्रुतयः स्मृतयश्चैव युक्तयश्चेश्वरं परम् ।**

**वदन्ति तद्विरुद्धं यो वदेत्तस्मान्न चाधमः' इति पाद्मे ॥**

**॥ इत्यन्यथाऽनुमित्यधिकरणम् ॥**

**भा.** ॥ सूत्राऽर्थमाहुः- **सकलेति** ॥ जगत्कर्तृत्वप्रतिपादक 'द्यावाभूमी जनयन् देव एकः' इत्यादिश्रुति- 'उत्पत्तिस्थितिसंहारा' इत्यादिस्मृति-'चिच्चेत्ये केनचिन्नियते अस्वतन्त्रत्वात्' इत्यादियुक्ति- विरुद्धत्वादित्यर्थः । सूत्रार्थे स्मृतिमाहुः- **[1]श्रुतय इति** ॥ **पाद्म इति** ॥ तत्रेत्युक्तेरित्यर्थः । अस्य विरुद्धत्वादित्यत्रान्वयः ॥ १० ॥ अ.५ ॥

**॥ इत्यन्यथानुमित्यधिकरणम् ॥**

---

१. **श्रुतय इति** ॥ **श्रुतयः** 'द्यावापृथिवी जनयन्,'(श्वे.३.३) 'यतो वा' (तै.उ.३.१) इत्याद्याः, **स्मृतयः** 'उत्पत्तिस्थितिसंहाराः,' 'स्रष्टा पाता तथैवाऽत्ता' इत्याद्याः, **युक्तयः** 'विमतं सकर्तृकं कार्यत्वात् घटवत्' इत्याद्या (युक्तयश्च) **ईश्वरं परं वदन्ति, यः** पुरुषः **तद्विरुद्धम्** उक्तविरुद्धं **वदेत् तस्मात्** पुरुषात् **अधमः** पुरुषो **नास्ति** इत्यर्थः ॥ १० ॥ अ.५ ॥

## ६. वैशेषिकाधिकरणम्

**परमाण्वारम्भवादमपाकरोति ।**

अत्र नये परमाण्वारम्भवादनिराकरणम् । 'जिज्ञासा' (१.१.१) नयेन, 'सर्वधर्म' (२.१.११) नयेन वा, सङ्गतिः, सर्वगुणवत्त्वं विषयः, संशयादिकं पूर्ववत् ।। एतदधिकरणार्थं दर्शयन्ति- **परमाण्वारम्भवादमिति** ।। परमाणव एव जगदारम्भका इति वादमित्यर्थः । पृषोदरादित्वात् समासः । **अपाकरोति** ।। वैशेषिकनैयायिकमतमपाकरोति सूत्रकार इति भावः । तन्मतनिराकरणं च तदीयप्रक्रियानिराकरणेन भवतीति तत्प्रक्रियामध्ये असमवायिकारणनिराकरणाय सूत्रम्-

**(पारिमाण्डल्यभिन्नानां कारणत्वमिति वादः न समीचीनः)**

**।। ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ ।। ११ ।।**

महदादिपदचतुष्टयं भावप्रधानम् । महद्दीर्घवदित्यत्र पञ्चम्यन्ताद्वतिः । 'पूर्ववत्सन' इति पाणिनिसूत्रे पूर्ववदित्यत्रेव सादृश्यार्थकवतिप्रत्ययान्तपदे प्रकृतिभागः स्वार्थसम्बन्धिक्रियापरः । कार्यमुत्पद्यत इति शेषः । वाशब्दोऽन्यथेत्यर्थे, अप्यर्थे च । नेति वर्तते । यथायथमावृत्तिविपरिणामौ । परिमण्डलमणुपरिमाणम् । अयमर्थः- **महद्दीर्घवत्** त्र्यणुकादिसमवायिकारणगतासमवायिकारणभूतमहत्त्वदीर्घत्वाभ्यां चतुरणुकादिकार्यगतमहत्त्वदीर्घत्वरूपकार्योत्पत्तिवत् **ह्रस्वपरिमण्डलाभ्यां** परमाण्वादिगतह्रस्वत्वपारिमाण्डल्याभ्यां कार्यं परमाण्वादिजन्यकार्येषु द्व्यणुकादिषु परिमाणाख्यकार्यमुत्पद्येत 'अन्यथा' (वाशब्द अन्यथेत्यर्थ इत्युक्तम्) ह्रस्वत्वपारिमाण्डल्ययोः न परिमाणोत्पादकत्वं किन्तु तत्समानाधिकरणसङ्ख्याद्युत्पादकत्वमेवेति स्वीकारे महद्दीर्घाभ्यामपि कार्यं नोत्पद्येतेति । तत्रापि त्र्यणुकादिगतसङ्ख्ययैवोपपत्तेः इति । महत्त्वदीर्घत्वयोः कारणत्वे अतिप्रसक्त्या असमवायिकारणं न सिद्ध्यतीति भावः ।।

**महत्त्वाद्दीर्घत्वाच्च यथा कार्यमुत्पाद्यते, एवं ह्रस्वत्वात् पारिमाण्डल्याच्चोत्पद्येत । वा शब्दादन्यथैतयोरपि न स्यात्, विशेषकारणाभावात् ।। ११ ।।**

भा. ।। सूत्राऽर्थमाहुः- **महत्त्वादिति** ।। **वा शब्दादिति** ।। सूचितमिति शेषः । **एतयोः**- द्व्यणुकादिगतमहद्दीर्घत्वयोः । **विशेषकारणाभावादिति** ।। इति सूचितमित्यन्वयः । त्र्यणुकादिगतपरिमाणस्यैव कारणत्वं न पारिमाण्डल्यादेरित्यत्र प्रमाणाभावादित्यर्थः ।। ११ ।।

**(ईश्वरेच्छायाः नित्यत्वानित्यत्वपक्षयोर्दुष्टत्वात् द्व्यणुकाद्यभावप्रसङ्गः)**

तद्रीत्या(सिद्ध)निमित्तकारणनिरासाय सूत्रम्-

**।। ॐ उभयथाऽपि न कर्मातस्तदभावः ॐ ।। १२ ।।**

अत इत्यावर्तते । प्रसज्यते, लये, इति शेषः । अयमर्थः- **अतः** ईश्वरेच्छायाः **उभयथापि** नित्यत्वे, अनित्यत्वे वा, **अतः** इच्छासकाशात् **कर्म** द्व्यणुकारम्भकपरमाणुव्यापारः **न** नोत्पद्यते । अतः परमाणुचेष्टाभावात् लये प्रलये **तदभावः** द्व्यणुकादिकार्याभावः प्रसज्यते इति । अयमाशयः- ईश्वरेच्छायाः नित्यत्वे प्रलये परमाणुकर्माभावात् अन्वयव्यभिचारः, अनित्यत्वे ईश्वरेच्छायाः प्रलये ईश्वरेच्छोत्पादक-सामग्रीविरहेण इच्छाया अभाव एव स्यादिति ।।

**ईश्वरेच्छाया नित्यत्वे तद्भावेऽपि परमाणुकर्माभावान्नेदानीमपि तत् स्यात् । अनित्यत्वे तत्कारणाभावात् । अतः परमाणुचेष्टाभावात्तत्कार्याभावः । वैदिकेश्वरस्य तु वेदेनैव सर्वशक्तित्वोक्तेः सर्वमुपपद्यते । स्वत एव काले [1]विशेषाङ्गीकृतेश्च ।।**

भा. ।। सूत्रार्थमाहुः- **ईश्वरेति** ।। **तद्भावेऽपि** - ईश्वरेच्छासत्वेऽपि । प्रलय इति शेषः । **कर्माभावात्** परमाणुकर्मरूपकार्याभावादित्यर्थः । **तत्** - इच्छायाः कारणत्वं न स्यादित्यर्थः । अन्वयव्यभिचारादिति भावः । **अनित्यत्वे इति** ।। ईश्वरेच्छाया इति वर्तते । **तत्कारणाभावादिति** ।। ईश्वरेच्छाजनकाभावादि-त्यर्थः । तन्न स्यादितिवर्तते । **अत इति** ।। ईश्वरेच्छायाः कारणत्वासिद्धेरित्यर्थः । **तत्कार्याभाव इति** ।। परमाणुचेष्टाकार्यभूतद्व्यणुकाद्यभावः प्रसज्यत इति शेषः । ननु सिद्धान्तेऽपि एतद्दूषणं सममत आहुः- **वैदिकेति** ।। वेदैकप्रमाणसिद्धेश्वरस्येत्यर्थः । **वेदेनेति** ।। 'परास्य शक्तिर्विविधैव श्रूयते' इत्यादिवेदेनैवेत्यर्थः । जगत्कारणत्वादिविषये वेदस्य मुख्यत्वमनङ्गीकृत्य युक्त्या कर्तृत्वादिसाधनं न सम्भवतीति भावः । इतश्च नायं दोषोऽस्मत्पक्षे इत्याहुः- **स्वत एवेति** ।। कार्योत्पत्तौ कालोऽपि निमित्तम् । प्रलये सामान्यतः कालसत्वेऽपि विशेषकालस्य सृष्टियोग्यतत्तद्व्यक्तिरूपस्याभावान्न सृष्टिरिति भावः । इदं भाष्यं टीकायां प्रकारान्तरेणापि व्याख्यातम् । ननु 'उभयथाऽपि तदभाव' इत्येव सूत्रमस्तु, उभयथाऽपि ईश्वरेच्छाया नित्यत्वे, अनित्यत्वे वा, तदभाव इत्यर्थः । कर्मग्रहणं

---

१. विभेदाङ्गीकृतेश्च - पाठान्तरम् ।

मास्त्विति चेन्न- ईश्वरेच्छायाः परमाणुकर्मणाऽन्यथासिद्धिः शङ्क्येतेति 'न कर्म' इत्युक्तत्वात् । 'उभयथाऽपि न कर्म' इत्योवोक्तौ इष्टापत्तिं कुर्यात् अनिष्टापादानार्थं 'तदभावः' इत्युक्तम् ॥१२॥

**(समवायसम्बन्धस्वीकारे समवायस्यापि समवायित्वाभ्यां भिन्नत्वसाम्याद् समवायपरम्पराभ्युपगमप्रसङ्गः)**

**समवायिकारणनिराकरणाय सूत्रम्-**

**॥ ॐ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॐ ॥ १३ ॥**

**समवायाभ्युपगमादित्युक्त्या भिन्नयोर्निर्वाहायेति आक्षिप्यते । यथायथमावृत्तिविपरिणामौ । नेति वर्तते । अयमर्थः- भिन्नयोरत्यन्तभिन्नत्वेनाऽङ्गीकृतयोः, पटतन्त्वादिकार्यकारणयोः, गुणगुण्यादयोश्च, निर्वाहाय, विशिष्टबुद्धिनिर्वाहाय च, समवायाभ्युपगमात् समवायाख्यनित्यसम्बन्धस्वीकाराद्धेतोः साम्यात् समवायस्यापि समवायिभ्यां भिन्नत्वसाम्यात् अनवस्थितेः समवायपरम्पराभ्युपगमप्रयुक्तानवस्थादोषप्रसक्तेः । समवायाभ्युपगमो न सम्भवतीति ॥**

**कार्यकारणादीनां समवायसम्बन्धाङ्गीकारात्तस्य च भिन्नत्वसाम्यात् समवायान्तरापेक्षायामनवस्थितेः । न च तत्प्रमाणम् । प्रथमसम्बन्धासिद्ध्यैव च तदसिद्धिः । स्वनिर्वाहकत्वे समवाय एव न स्यात् ॥**

भा. ॥ सूत्रार्थमाहुः- **कार्यकारणादीनामिति** ॥ कार्यकारणपदेन अवयवावयविनोर्ग्रहणम् । आदिना गुणगुण्यादीनां ग्रहणम् । कार्यकारणभावादिनिर्वाहायेति शेषः । **तस्य** - समवायस्य भिन्नत्वसाम्यात् । **समवायान्तरापेक्षायां** - समवायसमवायिनोर्विशेषणविशेष्यभावनिर्वाहाय समवायान्तरस्वीकृतौ अनवस्थादोषः स्यादित्यर्थः । ननु सन्तु अनेके समवायाः प्रामाणिकत्वादित्यत आहुः- **न चेति** ॥ तत् - तत्र समवायाऽनन्त्ये इत्यर्थः । ननु समवायाऽनन्त्येऽपि मूलक्षयाभावादनवस्था न दोषाय भवतीत्यत आहुः- **प्रथमेति** ॥ आदिसमवायस्यासिद्ध्यैव प्रमाणाभावप्रयुक्तासिद्ध्यैव तदसिद्धिः समवायपरम्परासिद्धिरित्यर्थः । नन्वेकस्यैव समवायस्य स्वनिर्वाहकत्वेन नोक्तदोषोऽत आहुः- **स्वनिर्वाहकत्वे इति** ॥ प्रथमसमवायस्य सम्बन्धविधया स्वविशिष्टबुद्धिनियामकत्वे इत्यर्थः । **समवाय एव न स्यादिति** ॥ द्रव्यस्यैव गुणगुण्यादिरूपेण, सम्बन्धरूपेण च, स्वनिर्वाहकत्वोपपत्तौ समवायकल्पनं व्यर्थमेव स्यादिति भावः ॥ १३ ॥

**(समवाय-समवायिकारण-निमित्तकारणानां भावात् न कदाचित्प्रलयः स्यात्)**

**एवमसमवायिप्रभृतिकारणत्रयनिरासेन तन्मते सृष्ट्यसम्भवं निरूप्य प्रलयनिरासाय सूत्रम्-**

**॥ ॐ नित्यमेव च भावात् ॐ ॥ १४ ॥**

**परिमण्डल, समवाय, अत, इति वर्तते । कार्यमिति शेषः । यथा यथमावृत्तिविपरिणामौ । अयमर्थः- परिमण्डलानां समवायिकारणपरमाणूनाम् अतो निमित्तकारणेश्वरेच्छायाः समवायस्य च नित्यं भावात् सर्वदा विद्यमानत्वेनाङ्गीकारादेव कार्यं द्व्यणुकादिकार्यं, द्व्यणुकाद्युत्पत्तिर्वा, नित्यमेव स्यादिति ॥ न कदाचित्प्रलयः स्यात् । अन्यथा कदाचिदपि कार्यं न स्यादिति भावः ॥**

**नित्यत्वाच्च परमाणूनां समवायस्य च तस्यैव जनित्वाङ्गीकारान्नित्यमेव कार्यं स्यात् । अन्यथा न कदाचित् ॥**

भा. ॥ सूत्रार्थमाहुः- **नित्यत्वादिति** ॥ **समवायस्य चेति** ॥ चेन ईश्वरेच्छाया ग्रहणम् । **तस्यैव**- प्रागसतः सत्तासमवायस्यैव । **कार्यमिति** ॥ द्व्यणुकादिकार्यं, जनिर्वेत्यर्थः । ननु सामग्रीसत्वेऽपि कार्यानुत्पत्तौ बाधकाभाव इत्यत आहुः- **अन्यथेति** ॥ समवायिकारणादिसत्वेऽपि प्रलये कार्याभावेऽङ्गीक्रियमाणे इत्यर्थः । **न कदाचिदिति** ॥ सृष्टिकालेऽपि कार्यं न स्यादित्यर्थः । सति कारणे कार्याऽनुत्पत्तौ तस्य कारणत्वमेव न स्यादिति भावः ॥ १४ ॥

**(पार्थिवादिपरमाणूनां रूपादिमत्त्वाद् अनित्यत्वप्रसक्तिः)**

**परमाणुनित्यत्वमङ्गीकृत्य दूषणमुक्तं नित्यत्वमपि नेति प्रतिपादनाय सूत्रम्-**

**॥ ॐ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॐ ॥ १५ ॥**

**परिमण्डलेति वर्तते । विपरिणम्यते षष्ठ्या । अयमर्थः- परिमण्डलानां पार्थिवादिपरमाणूनां रूपादिमत्वात् रूप-रस-गन्धादिमत्वात् विपर्ययः (पूर्वसूत्रोपस्थित) नित्यत्वविपर्ययः अनित्यत्वं स्यात् । दर्शनात् रूपादिमत्वाऽनित्यत्वयोर्व्याप्तिदर्शनादिति ॥ सिद्धान्ते तु भौतिकत्वे सति रूपादिमत्वं यत्र तत्रानित्यत्वमिति व्याप्त्यङ्गीकारात् नेशादौ व्यभिचार इति भावः ॥**

**रूपादिमत्त्वाच्च परमाणूनामनित्यत्वम् । तथा दृष्टत्वाल्लोके ॥**

भा. ॥ सूत्रं व्याचक्षते- **रूपेति** ॥ **तथेति** ॥ रूपादिमत्वानित्यत्वयोर्व्याप्तेरित्यर्थः ॥ १५ ॥

(परमाणूनां नित्यत्वानित्यत्वपक्षयोर्दुष्टत्वाद् द्व्यणुकादिकार्याभावः)

ननु परमाणूनां रूपादिमत्वेऽपि नित्यत्वं किं न स्यादिति शङ्कावारणाय सूत्रम्-

**॥ ॐ उभयथा च दोषात् ॐ ॥ १६ ॥**

परिमण्डल, रूपादिमत्, विपर्ययः, इति वर्तते । यथायथं विपरिणामः । अयमर्थः- रूपादिमतामपि परिमण्डलानाम् **उभयथा च** नित्यत्वे, अनित्यत्वे च, **दोषात्** नित्यत्वे परमाणुवत् सर्वं नित्यं स्यात्, रूपादिमत्वाऽविशेषात् अनित्यत्वे परमाणूत्पादकाऽभावात् परमाण्वभावप्रसङ्ग इति दोषप्राप्तेः विपर्ययः द्व्यणुकादिकार्याभावः स्यादिति ॥

**नित्यत्वे परमाणूनां तद्वत्सर्वनित्यत्वं स्यात् । विशेषप्रमाणाभावात् । अनित्यत्वे कारणाभावात्तदुत्पत्त्यभावः ॥**

भा. ॥ सूत्रार्थमाहुः- **नित्यत्वे इति** ॥ **विशेषप्रमाणाभावादिति** ॥ रूपादिमत्वेऽपि परमाणुर्नित्यः पटादिकमनित्यमित्यत्र नियामकाभावादित्यर्थः । न च पटादेरनित्यत्वे सावयवत्वं नियामकमिति वाच्यम्, सिद्धान्ते परमाणूनामपि सावयवत्वात् । **कारणाभावादिति** ॥ परमाणूत्पादककारणाभावादित्यर्थः । **तदुत्पत्त्यभावः**- परमाणूत्पत्त्यभावः ॥ १६ ॥

(श्रुत्यादिविरुद्धत्वात्तार्किकमतमुपेक्षणीयम्)

परमाण्वारम्भवादोऽप्रामाणिकश्चेति प्रतिपादनाय सूत्रम्-

**॥ ॐ अपरिग्रहाच्चात्यन्तमनपेक्षा ॐ ॥ १७ ॥**

अपेक्षेति 'गुरोश्चहल'इति कर्मणि अप्रत्ययान्तं नित्यस्त्रीलिङ्गम् । विरुद्धाऽर्थकनञा समासः । आनुमानमिति वर्तते । च उक्ताऽनुक्तसमुच्चये । अयमर्थः- **अपरिग्रहाच्च** श्रुत्यादिभिरपरिगृहीतत्वात्, चेन श्रुत्यादिविरुद्धत्वात्, पूर्वोक्तदोषदुष्टत्वाच्च, आनुमानं तार्किकमतम् **अत्यन्तम्** अतिशयेन **अनपेक्षा** उपेक्षणीयमिति ॥

**श्रुतिस्मृत्यपरिगृहीतत्वाच्चातिशयेनानपेक्ष्यता ।**
**'आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् ।' इति मोक्षधर्मे च ॥**

**भा.** ॥ सूत्राऽर्थमाहुः- **श्रुतीति** ॥ **अनपेक्ष्यतेति** ॥ उपेक्षणीयत्वमित्यर्थः । आनुमानस्येति शेषः । श्रुत्यादिविरुद्धत्वे स्मृतिमाहुः- [१]**आन्वीक्षिकीमिति** ॥ **मोक्षधर्मे चेति** ॥ मोक्षधर्म इत्युक्तेश्च अत्यन्तमनपेक्षतेत्यन्वयः ॥ १७ ॥ अ.६॥

॥ इति **वैशेषिकाधिकरणम्** ॥

---

१. **आन्वीक्षिकीमिति** ॥ 'इन्द्रः सृगालरूपेण बभाषे क्रुद्धमानसम्' इति पूर्वार्धवाक्ये प्रकृतस्य सृगालरूपस्येन्द्रस्य वाक्यमिदम् । 'अहमासं पण्डितको हैतुको वेदनिन्दकः । आन्वीक्षिकीं तर्कविद्याम् अनुरक्तो निरर्थिकाम् । तस्येयं फलनिष्पत्तिः सृगालत्वं यतो मतम्' इति पठ्यते । अयमर्थः **यतः अहं पण्डितकः** कुत्सितो विद्वान् **हैतुकः** शुष्कानुमानप्रामाण्यवादी, **वेदनिन्दकश्च, आसम्** अभवम् । **आन्वीक्षिकीं** दृष्टवदुत्प्रेक्षारूपां प्रत्यक्षाऽनुसारिणीं वा, **निरर्थिकां** परमात्मादिरूपोत्तमार्थाप्रतिपादिकां, मोक्षरूपप्रयोजनशून्यां वा, **तर्कविद्यामनुरक्तः** तत्रातीवासक्तोऽभवम् । अतः **तस्य** अनुरागस्य **इदं** सृगालत्वं **फलनिष्पत्तिः** फलरूपं मतमिति ॥ १७ ॥ अ.६ ॥

## ७. समुदायाधिकरणम्

### परमाणुपुञ्जवादिमतमपाकरोति

निराकार्यत्वेनावसरप्राप्तं पाषण्डमतं च द्विविधम् । अवैदिकं वैदिकं चेति । तत्राऽवैदिकपाषण्ड-बौद्धैकदेशिवैभाषिकसौत्रान्तिकमतमत्र नये निरस्यते ॥ अधिकरणार्थं दर्शयन्ति- **परमाणुपुञ्जवादि-मतमिति** ॥ परमाणुपुञ्ज एव घटादिबुद्धिविषयः न परमाणुपरिणामो घटादिः । नाऽपि परमाणुपुञ्जारब्ध इतिवादिमतम् । मयूरव्यंसकादित्वात्समासः । **अपाकरोतीति** ॥ तन्मतनिरासश्च तदीयप्रक्रियानिरासेन भवति । तदीया प्रक्रिया च समस्तं जगत् परमाणुपुञ्ज एव । स पुञ्जः परमाणुनिमित्तकः कालकर्मादिनिमित्तेन क्षणिकश्च अतः किमीश्वरेणेति ॥

**(परमाणुपुञ्जवादनिरासः)**

**तत्र पुञ्जे परमाणुनिमित्तकत्वनिराकरणाय सूत्रम्-**

**॥ ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ॥ इति ॥**

**उभयशब्दो अनेकपरः । उभये हेतुर्यस्येति, उभौ हेतुर्यस्येति वा, विग्रहः । प्रथमे अवयव्यर्थकायजन्त उभयशब्दः अनेकावयवकसमुदायानेकपरः । तेन मिलितानेकेति लब्धम् । द्वितीये तु विरलानेकेति अर्थाल्लब्धं परिमण्डलानामिति वर्तते । अयमर्थः- परिमण्डलानां परमाणूनां समुदाये घटादिकार्यरूपे समुदाये उभयहेतुकेऽपि** एकहेतुकत्वासम्भवेन मिलितानेकहेतुकत्वेन, विरलानेकहेतुकत्वेन वा, **स्वीक्रियमाणेऽपि तदप्राप्तिः** तस्य घटादिसमुदायस्य अप्राप्तिः असिद्धिः कादाचित्कत्वासिद्धिर्वेति । **आद्यपक्षे मेलने सति मिलितसमुदायसिद्धिः, मिलितसमुदायसिद्धौ च मेलनसिद्धिरिति अन्योन्याश्रयात् घटादिसमुदायासिद्धिः । द्वितीये- विरलानेकपरमाणुसमुदायस्य सदा सत्त्वेन तस्यैव कार्यत्वेन प्रलयासिद्धिरिति भावः ।**

**समुदायस्यैकहेतुकत्वं न युज्यते । उभयहेतुकेऽप्यन्योन्याश्रयात्तदप्राप्तिः । अन्यथा सर्वदा समुदायसत्त्वं स्यात् ॥**

भा. ॥ सूत्रार्थमाहुः- **समुदायस्येति** ॥ **न युज्यत इति** ॥ इतीति शेषः । इति हेतोरित्यर्थः । **उभयहेतुकेऽपि इति** ॥ मिलितानेकहेतुकत्वेन स्वीक्रियमाणेऽपीत्यर्थः । समुदाये इति शेषः । **तदप्राप्तिः-**

उक्तघटादिसमुदायस्यासिद्धिः । अन्यथा- अमिलितानेकहेतुकत्वेन स्वीक्रियमाणे । **समुदायसत्त्वं-** समुदायपदेन अनेकत्वसंख्या विवक्षिता तस्या एव तत्काले समुदायत्वेन तेनाङ्गीकारात् ॥ १८ ॥

विरलानेकपरमाणुसमुदायस्य नित्यत्वेऽपि न प्रलयानुपपत्तिः । तदा वित्तिव्यवहाराभावेन प्रलयोपपत्तेः । वित्तिव्यवहारौ च 'इदं च इदं च' इति परमाणुद्वयादिविषयकापेक्षाबुद्धिजन्यौ । अपेक्षाबुद्धिश्च परमाणुद्वयादेः समीपवृत्तित्वे भवति । प्रलये तु तदभावः इति शङ्कावारणाय सूत्रम्-

**(परमाणुपुञ्जवादिमते प्रळयानुपपत्तिः)**

## ॥ ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ ॥ १९ ॥

**नित्यं, च, समुदाय, उभयहेतुके, दर्शनात्, इति वर्तते ।** यथायथमावृत्तिविपरिणामौ, भावप्राधान्यं च । इतरेण सहितमितरत् इतरेतरत् साहित्यं च समीपवृत्तित्वसम्बन्धेन । तस्य प्रत्ययोऽपेक्षाबुद्धिः ययोः निमित्तं तयोर्भावः, तस्मात् **इतरेतरप्रत्ययत्वात्** । अयमर्थः- उभयहेतुकस्य विरलानेकपरमाणुहेतुकस्य समुदायस्य अनेकत्वसङ्ख्यारूपस्य नित्यं च नित्यत्वेऽपि दर्शने वित्तिव्यवहारौ न भवतः । दर्शनयोः वित्तिव्यवहारयोः इतरेतरप्रत्ययनिमित्तत्वात् । इतरविशिष्टेतरविषयकापेक्षाबुद्धिनिमित्तकत्वात् **इति चेन्न- उत्पत्तिमात्रनिमित्तत्वात्** । एकस्य एकोत्पत्तिमात्रनिमित्तत्वादिति ॥

अयमाशयः- उक्तरीत्या प्रलयोपपादनं न सम्भवति । तथा सति क्षणिकवादिमते विरलानेकपरमाणुभ्यो मिलितानेकपरमाणव उत्पद्यन्ते । ते च पुरुषेण दृश्यन्ते । दृष्टामिलितपरमाणवोऽन्यान्मिलितपरमाणूनुत्पाद्य नश्यन्ति । एवमन्ये मिलितपरमाणवोऽपि इतरान्मिलितपरमाणूनुत्पाद्य नश्यन्तीति मिलितपरमाणुसमुदाय-परम्पराया उत्पत्तिः पूर्वपूर्वसमुदायनाशश्च प्राप्नुतः । एवं द्रष्टुः पुरुषस्यापि क्षणिकत्वेन क्षणिकपुरुष-परम्परोत्पत्तिः । पूर्वपूर्वपुरुषनाशश्च प्राप्नुतः । इत्थं च एकस्मिन्मिलितानेकसमुदाये एकस्य पुरुषस्य दर्शनमन्यस्मिन् समुदाये अन्यस्य पुरुषस्याऽपेक्षाबुद्धिः । इतरस्मिन्मिलितानेकसमुदाये इतरस्य पुरुषस्य वित्तिः, अपरस्मिन्मिलितानेकसमुदाये अपरस्य पुरुषस्य व्यवहारादि, इति दर्शनादीनां भिन्नविषयकत्वं भिन्नपुरुषवृत्तित्वं च प्राप्नुत इति वित्तिव्यवहाराऽभाव एव प्रसज्यते इति परमाणुसमुदायानां नित्यत्वे प्रलयानुपपत्तिरिति ॥

**सर्वदा विद्यमानोऽपि समुदायः परस्परापेक्षया व्यवह्रियत इति चेन्न । एकं कार्यमुत्पाद्य तस्य विनष्टत्वात् परस्परप्रत्ययस्तदपेक्षया व्यवहार इति न युज्यते । कारणे सति कार्यं भवत्येवेति हि तस्य नियमः ॥**

भा. ॥ सूत्रतात्पर्यमाहुः- **सर्वदेति** ॥ **समुदायः**- विरलानेकपरमाणुसमुदायः । **कार्यमिति** ॥ मिलिताऽनेकपरमाणुसमुदायाऽन्तररूपकार्यमित्यर्थः । **तस्येति** ॥ विरलपरमाणुभ्यो जातस्य प्रथमस्य मिलिताऽनेकसमुदायस्येत्यर्थः । **परस्परप्रत्यय इति** ॥ तस्येति सम्बध्यते । **तदपेक्षया व्यवहार इति** ॥ अपेक्षाबुद्धिनिमित्तको व्यवहार इत्यर्थः । इदमुपलक्षणं वित्तेरपि । **न युज्यत इति** ॥ यतो न युज्यत, अत इति चेन्नेत्यन्वयः ॥

**सुधायां तु** - विरलानेकहेतुकसमुदायपक्षे विरलपरमाणूनां तत्रतत्र विद्यमानानामेव समुदायत्वेन सर्वत्र घटादिबुद्धिप्रसङ्गः । समुदायाङ्गीकारवैयर्थ्यं चेति दूषणान्तरमप्युक्तम् । ननु विरलपरमाणुजन्यस्य मिलितानेकपरमाणुसमुदायस्य तथा द्रष्टुरपि स्थायित्वं स्वीक्रियते, अतो नोक्तदोष इत्यत आहुः- **कारणेसतीति** ॥ **हि** यतः **तस्य** वैभाषिकादेः **कारणे सति कार्यं भवत्येवेति नियमः** । अतः प्रतिक्षणं कार्योत्पत्तिः स्यादिति शेषः । उत्पन्नानां घटादीनां स्थायित्वादल्पतरकालेन कुलालशालादौ अनन्त-घटादिसमृद्धिः स्यादिति भावः ॥ १९ ॥

**(विरलपरमाणुसमुदायान्मिलितपरमाणुरूपविसदृशकार्यं नोपपद्यते)**

**उपादानतो विसदृशकार्योत्पत्तिमङ्गीकृत्य दूषणमुक्तम् । तादृशकार्योत्पत्तिरपि न भवतीति प्रतिपादनाय सूत्रम्-**

**॥ ॐ उत्तरोत्पादे च पूर्वनिरोधात् ॐ ॥ २० ॥**

**नेति वर्तते । चो दूषणान्तरसमुच्चये, अवधारणे च । उत्पादेति निमित्तसप्तमी । यथायथमावृत्तिविपरि-णामौ । अयमर्थः- उत्तरोत्पादे च उत्तरस्य सदृशकार्यस्य उत्पत्तिमात्रेणैव पूर्वनिरोधात् पूर्वस्य कारणस्य नाशात् उत्तरोत्पादश्च विसदृशकार्योत्पत्तिरपि न स्यादिति ॥ एवं च विरलपरमाणुसमुदायान्मिलित-परमाणुरूपविसदृशकार्यमपि नोत्पद्येत, क्षणिकमते सदृशकार्योत्पत्तावेव कारणस्य सामर्थ्याङ्गीकारात् । अन्यथा घटादपि पटाद्युत्पादापातादिति भावः ।**

## कार्योत्पत्तावेव कारणस्य विनाशाच्च न विशेषकार्योत्पत्तिः ॥

भा. ॥ सूत्रं व्याचक्षते- **कार्येति** ॥ सदृशकार्योत्पत्तिमात्रेणैवेत्यर्थः । **कारणस्य**- विरलपरमाणूनाम् । सामर्थ्यादिति शेषः । **विनाशाच्चेति** ॥ कारणस्येति भावः । **विशेषेति** ॥ मिलितपरमाणुरूपेत्यर्थः । स्यादिति शेषः । अन्यथा कारणस्य नाशाङ्गीकारे क्षणिकत्वं न स्यादिति भावः ॥ २० ॥

**(क्षणिकमते न प्रतिक्षणं कार्योत्पत्तिर्युज्यते)**

प्रतिक्षणं कार्योत्पत्तिनिराकरणाय सूत्रम्-

**॥ ॐ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॐ ॥ २१ ॥**

पूर्वेति, उत्तरोत्पादे चेति च वर्तते । युगपच्छब्दोऽधिकरणशक्तिप्रधानोऽपि वृत्तिविषये आधेयप्रधानः। ततो भावे ष्यञ् । यथायथमावृत्तिविपरिणामौ । पूर्वं कारणम् उत्तरं कार्यम् । अयमर्थः- पूर्वस्मिन् कारणे **असति** अविद्यमाने उत्तरोत्पादः कार्योत्पत्तिश्चेत् **प्रतिज्ञोपरोधः** प्रतिज्ञायास्तत्कारणजन्यमिदं कार्यमिति व्यवस्थाया हानिः स्यात् । **अन्यथा** कार्योत्पत्तिसमये द्वितीयक्षणे कारणं वर्तमानं सत् कार्यमुत्पादयतीत्यङ्गीकारे, कारणसमये, कार्यस्थित्यङ्गीकारे च उत्तरेषां सर्वकार्याणां **यौगपद्यम्** अविच्छेदेनोत्पत्तिः । एककालवृत्तित्वं च स्यादिति ॥ अयमाशयः- कारणे विनष्टे कार्योत्पत्तिस्तु न सम्यक् अतिप्रसङ्गात् । कारणे विद्यमाने कार्योत्पत्तिश्चेत् एकस्मिन् क्षणे स्वयं स्वरूपं प्राप्य कार्योत्पत्तिक्षणेऽपि तस्यावस्थाने क्षणिकस्य द्विक्षणावस्थाने तदुत्तरत्र विनाशकारणाऽभावात् पुनस्तस्मात्कार्योत्पत्तयः स्युः । तेभ्यश्च तथेति सर्वकार्याणां यौगपद्यं स्यात् । अतः प्रतिक्षणं कार्योत्पत्तिर्न युक्तेति ॥

**कारणे विनष्टे कार्यमुत्पद्यते चेत्तत्कार्यमिति प्रतिज्ञाहानिः । तत्काले कारणमस्ति चेद्विनाशकारणाभावाद्यौगपद्यं सर्वकार्याणाम् ॥**

**भा.** ॥ सूत्राऽर्थमाहुः- **कारणे इति** ॥ **तत्कार्यमिति** ॥ तत्कारणजन्यं कार्यमित्यर्थः । **तत्काले** - कार्यसमये । **विनाशकारणाभावादिति** ॥ तन्मते पूर्वक्षणे विद्यमानवस्तुनो द्वितीयोत्तरक्षण एव नाश इत्यङ्गीकारेण द्वितीयादिक्षणेऽपि कारणस्य यदि वृत्तित्वम्, तर्हि विनाशकाभाव इति भावः । **यौगपद्यमिति** ॥ स्यादिति शेषः ॥ २१ ॥

**(प्रतिक्षणविनाश-सन्तानविनाशयोः क्षणिकमतेऽनुपपत्तिः)**

क्षणिकमतकार्यविनाशनिराकरणाय सूत्रम्—

**॥ ॐ प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॐ ॥ २२ ॥**

'प्रतिसङ्ख्या' बुद्धिपूर्वककार्यपरम्परासहितकारणनाशो मुद्गरपातादिना जायमानः । 'अप्रतिसङ्ख्या' अबुद्धिपूर्वककार्यपरम्परारहितकारणमात्रनाशः । प्रतिक्षणं जायमानः सौगतमतसिद्धः । यद्यपि सौगतमते उक्तपदयोरुक्तनाशान्तर्भावेण शक्तिः स्वीकृता । तथाऽपि निरोधेति विशेष्योपादानात् विशेष्यांशरहित-

बुद्धिपूर्वकत्वादिमात्रपरत्वम् । प्रतिसङ्ख्या चाप्रतिसङ्ख्या चेति द्वन्द्वः । ततो निरोधपदेन कर्मधारयः । ततो निरोधयोरप्राप्तिरिति षष्ठीसमासः । चेति वर्तते । अयमर्थः- **प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिः च** बुद्धिपूर्वकाबुद्धिपूर्वकनाशासम्भवश्च स्यात् । **अविच्छेदात्** कार्यविरामाभावादिति ॥ अयम्भावः- कारणं प्रतिक्षणं कार्यमुत्पाद्य नश्यतीति तेनाऽङ्गीकृतम् । तत्र कार्योत्पत्तिक्षणस्यैव कार्यवियोगक्षणत्वात् । तत्र क्षणे उत्पादकनाशककारणस्य सत्त्वाऽवश्यंभावेन 'स्वकार्यस्वध्वंसकाले कारणं सदेव' इति कार्यमुत्पादयेदेव 'कारणे सति कार्यं भवत्येव' इति नियमात् तदुत्पत्यनन्तरं च एवमिति कथं प्रतिक्षणं निःसन्ताननाशो घटेत, एवं ससन्ताननाशोऽपि न घटते । कार्यपरम्परासहितनाशक्षणे सतो हि कार्यपरम्परासहित-घटादेरात्यन्तिको नाशः (एवैष्टव्यो न त्वसतः, असतो नाशायोगात्) ततश्च असौ (घटादिः) कार्यमुत्पादयेदेव 'कारणे सतीति' न्यायात्, तत्कार्यमपि एवमिति सन्तानस्यैव सत्वेन सन्ताननाशप्रसक्तेः का वार्तेति ॥

**कारणे सति कार्यं भवत्येवेति नियमान्निस्सन्तानः ससन्तानश्च विनाशो न युज्यते ॥**

भा. ॥ सूत्रार्थमाहुः- **कारणे इति** ॥ **निस्सन्तानेति** ॥ सन्तानः कार्यपरम्परा, तस्मान्निर्गतः कारणमात्रप्रतियोगिकः । ससन्तानः कार्यपरम्परासहितकारणप्रतियोगिकः । यद्यपि सूत्रे ससन्ताननाश एव प्रतिसङ्ख्यापदेन प्रथममुक्तः, तथापि - निस्सन्तानविनाशस्य लोके प्रथितत्वाद्व्युत्क्रमेण व्याख्यातम् ॥ २२ ॥

ननु पदार्थानामर्थक्रियाकारित्वं सत्त्वम् । तच्च क्षणिकत्वमन्तरेण न सिद्ध्यति । तथाहि- **यद्याद्यक्षणे** घटो घटान्तरमुत्पाद्य न नश्यति, तथा घटाऽन्तरमपि तथेति अनन्तकार्योत्पत्तिः स्यात् । न चेष्टापत्तिः, एकस्मिन् क्षणे कुलालशालापूर्तिप्रसङ्गात् । अतः क्षणिकत्वमेष्टव्यं भावानामिति शङ्कापरिहाराय सूत्रम्-

**(कारणे सति कार्यं भवतीति नियमपक्षे तदभावपक्षे च कार्यकारणविशेषकार्यानुत्पत्त्यास्यदोषः)**

**॥ ॐ उभयथा च दोषात् ॐ ॥ २३ ॥**

क्षणिकमिति शेषः । असमञ्जसमिति वर्तते । अयमर्थः- **उभयथा च** 'कारणे सति कार्यं भवत्येव' इति नियमे, तदभावे च, **दोषात्** कार्यकारणभावाभावदोषात्, कार्यानुत्पत्तिदोषाच्च, क्षणिकमतमसमञ्जस-मिति ॥ अयं भावः- आद्ये अर्थानां कार्यजनकत्वं तदर्थं क्षणिकत्वमत एव कार्यजनकत्वमपि कारणक्षण एव उत्पन्नं च । एवमेव कार्यं जनयेदिति वक्तव्यम् । ततश्च सर्वत्र कार्यकारणयोरेककाले उत्पत्तिप्राप्त्या सव्येतरविषाणवत् कार्यकारणभावो न स्यात् । द्वितीये कारणे सत्यपि कार्योत्पत्तिनियमाभावेन कार्यस्य

तत्काले कार्यानुत्पादकत्वेन सत्त्वापत्या क्षणिकत्वभङ्ग इति ॥

**कारणे सति कार्यं भवत्येवेति नियमे सर्वदा कार्यभावान्न कार्यकारणविशेषः । अनियमे कार्यानुत्पत्तिः ॥**

भा. ॥ सूत्रार्थमाहुः- **कारण इति** ॥ कार्यस्य यावत्कारणभावित्वे इति यावत् । **न कार्यकारणविशेष इति** ॥ कार्यकारणभावो न स्यादित्यर्थः ॥ २३ ॥

अनुमानेन क्षणिकत्वं सिद्ध्यतीति शङ्कावारणाय सूत्रम्-

**(दीपदृष्टान्तेन सत्त्वहेतुना जगति क्षणिकत्वसाधने आकाशदृष्टान्तेनाक्षणिकत्वं दुष्परिहरम्)**

**॥ ॐ आकाशे चाविशेषात् ॐ ॥ २४ ॥**

सूत्रोक्तहेत्वनुरोधेन प्रतिज्ञांशः पूरयणीयः । अयमर्थः- 'विमतं क्षणिकं सत्त्वात् दीपादिवत्' इति चेन्न- **आकाशे च**, चात् प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधयोरपि **अविशेषात्** पूर्वोत्तरक्षणयोर्विशेषादर्शनादिति ॥ अयं भावः- दीपादौ विशेषदर्शनं हि क्षणिकत्वे निमित्तं तच्च आकाशादौ नास्तीति तस्याक्षणिकत्वात् 'विमतं न क्षणिकं सत्त्वादाकाशादिवत्' इत्यपि वक्तुं शक्यमिति ।

**दीपादिषु विशेषदर्शनात् क्षणिकत्वेनान्यत्रापि क्षणिकत्वमनुमीयते चेदाकाशादिष्वविशेषदर्शनादन्यत्रापि तदनुमीयेत ॥**

भा. ॥ सूत्राऽर्थमाहुः- **दीपादिष्विति** ॥ **विशेषेति** ॥ इदं दृष्टान्ते साध्यवैकल्यपरिहारार्थमुक्तम् । **अन्यत्राऽपि** - प्रप्रश्चेऽपि ॥ **तत्** - अक्षणिकत्वम् । **अनुमीयेतेति** ॥ सत्त्वादिति हेतुनेति भावः ॥२४॥

अनुमानस्य बाधेन क्षणिकत्वनिराकरणाय सूत्रम्-

**(प्रत्यभिज्ञानान्न क्षणिकत्वम्)**

**॥ ॐ अनुस्मृतेश्च ॐ ॥ २५ ॥**

अस्य हेत्वन्तरत्वेन पूर्वसूत्रप्रतिज्ञा वर्तते । अयमर्थः- 'विमतं क्षणिकं सत्त्वाद्दीपादिवत्' इति चेन्न- **अनुस्मृतेश्च** तदेवेदमिति प्रत्यभिज्ञानाच्चेति ॥ प्रत्यभिज्ञाविषयस्य क्षणिकत्वं बाधितमिति भावः ।

**तदेवेदमिति प्रत्यभिज्ञानाच्च । प्रत्यभिज्ञाया भ्रान्तित्वे विशेषदर्शनस्यापि भ्रान्तित्वम् ॥**

भा. ॥ सूत्रं व्याचक्षते- **तदेवेदमिति** ॥ **प्रत्यभिज्ञानाच्चेति** ॥ अस्य सौत्रपदार्थमात्रविवरण-रूपत्वेनान्यत्रान्वयो न । **भ्रान्तित्वे इति** ॥ परिलूनपुनर्जातकुन्तलकलापप्रत्यभिज्ञावत् भ्रान्तित्वे इत्यर्थः । **भ्रान्तित्वमिति** ॥ स्यादिति शेषः ॥ २५ ॥ अ.७ ॥

**॥ इति समुदायाधिकरणम् ॥**

## ८. असदधिकरणम्

**शून्यवादमपाकरोति–**

अत्र नये शून्यवादिमाध्यमिकमतनिरासः ॥ अधिकरणार्थं दर्शयन्ति- **शून्यवाद-मिति** ॥ शून्यं नाम प्रागभावोऽत्यन्ताभावो वास्तु । सर्वसामर्थ्यधर्मशून्यत्वेन तस्मिञ्छून्यशब्दप्रयोगः । सत्त्वानधिकरणत्वादसच्छब्दप्रयोगश्च । तच्च शून्यं सर्वदेशकालवृत्तीति **तत्वोद्योते** स्पष्टम् । शून्यमेव जगत्कारणमिति वादः शून्यवादः ।

**(काप्यसतः कारणत्वादर्शनात् शून्यस्य न विश्वकर्तृत्वम्)**

**॥ ॐ नासतोऽदृष्टत्वात् ॐ ॥ २६ ॥**

**कारणत्वमिति प्रकृतम् । अयमर्थः- असतः शून्यस्य कारणत्वं न युक्तम् अदृष्टत्वात् असत्कारणत्वस्य काप्यदर्शनादिति ॥ शून्यविषये प्रत्यक्षागमयोरभावेनानुमानस्य दृष्टान्ताभावेन जगत्कारणत्वे मानाभाव इति भावः ॥**

**अदृष्टत्वादसतः कारणत्वं न युज्यते ।**

**भा.** ॥ सूत्रार्थमाहुः- **अदृष्टत्वादिति** ॥ अत्र शून्यस्यासत्त्वमापाद्य दूषणोक्तिरिति ज्ञेयम् ॥ २६ ॥

**अदृष्टमपि कारणत्वं शून्यस्यास्त्विति शङ्कावारणाय सूत्रम्-**

**(असतः कारणत्वे खपुष्पादिभ्यः कार्यसिद्धिः स्यात्)**

**॥ ॐ उदासीनानामपि चैवं सिद्धिः ॐ ॥ २७ ॥**

**षष्ठी पञ्चम्यर्थे । स्यादिति शेषः । अयमर्थः - एवं काप्यदृष्टासत्कारणत्वस्वीकारे उदासीनानामपि हेयोपादेयबुध्यविषयखपुष्पादिभ्योऽपि सिद्धिः कार्योत्पत्तिः स्यात् । चशब्देन खपुष्पादेरसत्त्वादकारणत्वे शून्यस्यापि तन्न स्यादसत्त्वाविशेषादिति सूचितमिति ॥**

**असतः कारणत्वे उदासीनानां हेयोपादेयबुद्धिवर्जितानां खपुष्पादीनामपि सकाशात् कार्यसिद्धिः । चशब्दान्न चेदन्यत्रापि न स्यादविशेषात् ।**

**भा.** ॥ सूत्रार्थमाहुः- **असत इति** ॥ **बुद्धिवर्जितानमिति** ॥ बुध्यविषयाणामित्यर्थः । **चशब्दादिति** ॥

इति सूचितमिति शेषः । न चेत्- उदासीनेभ्य उत्पत्तिर्न चेत्, **अन्यत्रापि**- शून्यादपि । न स्यात्- कार्यसिद्धिर्न स्यात् । 'अविशेषात्' असत्त्वाविशेषादित्यर्थः ॥ इति सूचितमिति सम्बन्धः ॥ २७ ॥

**शून्यस्य पारमार्थिकजगज्जनकत्वस्वीकारेऽयं दोषः स्यात् संवृत्तिवशाच्छून्यमेव जगद्रूपेण भातीत्यभ्युपगमे नायं दोष इति शङ्कावारणाय सूत्रम्-**

**(विश्वस्य सदिति प्रतीयमानत्वेन शून्ये नारोपः)**

**॥ ॐ नाभाव उपलब्धेः ॐ ॥ २८ ॥**

भावः सन् अभावोऽसन् । जगदिति प्रकृतत्वाल्लभ्यते । इति चेदिति वर्तते । अयमर्थः- जगत् **अभावः** परमार्थतोऽविद्यमानमिति चेत् **न, उपलब्धेः** सदिति प्रतीयमानत्वादिति ॥ जगतोऽसत्त्वाभावेन शून्ये आरोपो नेति भावः ।

**न च जगदेव शून्यमिति वाच्यम् । दृष्टत्वात् ।**

भा. ॥ सूत्रार्थमाहुः- **न चेति** ॥ **एवेति** ॥ शून्यमेवेति सम्बध्यते । **जगत्**- जगत्वेन भासमानम् । **दृष्टत्वात्**- सदिति प्रतीयमानत्वात् ॥ २८ ॥

**स्वाप्नादेस्सत्वेन प्रतीयमानस्याप्यसत्त्ववज्जगतोऽप्यसत्त्वं किं न स्यादिति शङ्कावारणाय सूत्रम्-**

**(बाधाभावाज्जगतः सत्त्वं न प्रतिषेधार्हम्)**

**॥ ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ ॥ २९ ॥**

अभाव उपलब्धेरिति वर्तते । उपलब्धिपदं कर्मक्तिन्प्रत्ययान्तम् । षष्ट्यन्ताद्वतिः विरुद्धो धर्मो यस्य स विधर्मा तस्य भावो वैधर्म्यम् । युज्यत इति शेषः । अयमर्थः- उपलब्धेः **च** सत्त्वेन प्रतीयमानस्य जगतः **स्वप्नादिवत्** स्वाप्नगजादिजाग्रत्वरज्जुसर्पादीनामिव अभावोऽसत्त्वं **न** युज्यते **वैधर्म्यात्** । दृष्टान्तदार्ष्टान्तिकयोः स्वाप्नोऽयं न जाग्रद्गजादिः, रज्जुरयं नायं सर्पः, इत्यादिबाधवत्वतदभावरूपधर्मवैषम्यस्य सत्त्वादिति ॥

**न च दृष्टस्यापि स्वप्नादिवदभावः । तस्योत्तरकाले 'स्वप्नोऽयं' 'नायं सर्पः' इत्याद्यनुभवात् । न चात्र तादृशं प्रमाणमस्ति ॥**

**॥ इति असदधिकरणम् ॥**

भा. ॥ सूत्रभावमाहुः- **नचेति** ॥ **तस्य**- स्वाप्नगजादिजाग्रत्वादेः । **उत्तरकाले**- स्वप्नोत्तरबोधकाले ।

**स्वप्नोऽयं-** स्वाप्नगजादिरयम् । अत्र 'वाक्यैकदेश' इति न्यायेन न जाग्रदिति, रज्जुरियमिति च, पूरणीयम् । **अनुभवादिति** ॥ अनुभवरूपबाधकसद्भावादित्यर्थः । दार्ष्टान्तिके बाधकमस्तीति शङ्कां परिहरन्ति- **नचेति** ॥ च यतः अत्र प्रपञ्चे तादृशं बाधकं प्रमाणमसत्त्वप्रमापकं नास्ति । अतश्चाऽभावो नेत्यन्वयः ॥ २९ ॥ अ.८ ॥

**॥ इत्यसदधिकरणम् ॥**

## ९. अनुपलब्ध्यधिकरणम्

**विज्ञानवादमपाकरोति–**

अत्र नये विज्ञानवादियोगाचारमतं निराक्रियते ॥ अधिकरणार्थमाहुः- **विज्ञानवादमिति** ॥ नित्यं, निरञ्जनं, विज्ञानतत्त्वमेकमेव तन्मात्रमेवेदं जगत् तस्मादेव जगदुदयादीति वादं निराकरोतीत्यर्थः ।

**(प्रमाणाभावान्न विज्ञानात्मकं विश्वम्)**

**॥ ॐ न भावोऽनुपलब्धेः ॐ ॥ ३० ॥**

**भावः सद्रूपं ज्ञानम् । सत्तार्थकभवतेः, चिन्तनाऽर्थकचौरादिकभावयतेर्वा भाव इति रूपम् । जगदिति प्रकृतम् । अयमर्थः- जगत् भावः सद्रूपज्ञानात्मकं न न भवति अनुपलब्धेः प्रमाणाभावादिति ॥**

**न विज्ञानमात्रं जगत् । तथाऽनुभवाभावात् ॥**

भा. ॥ सूत्रार्थमाहुः - **विज्ञानमात्रमिति** ॥ ३० ॥

**युक्त्यन्तरेण जगतो विज्ञानात्मकत्वपरिहाराय सूत्रम्-**

**(विज्ञानस्य क्षणिकत्वात् जगतः स्थायित्वात् न विज्ञानात्मकत्वम्)**

**॥ ॐ क्षणिकत्वाच्च ॐ ॥ ३१ ॥**

**जगत्, न, भावो, वैधर्म्यादिति वर्तते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- जगत् भावो विज्ञानात्मकं न भवति, भावस्य विज्ञानस्य क्षणिकत्वात् जगतः वैधर्म्यात् क्षणिकत्वविरुद्धस्थायित्व-रूपधर्मवत्वात् च इति ॥**

**ज्ञानं क्षणिकम् । अर्थानां च स्थायित्वमुक्तम् । अतश्च नैक्यम् ॥**

भा. ॥ सूत्राऽर्थमाहुः- **ज्ञानमिति** ॥ **उक्तमिति** ॥ 'अकाशे चाविशेषात्' (२.२.२४) 'अनुस्मृतेश्च' (२.२.२५) इत्यत्रोक्तमित्यर्थः । **अतश्चेति** ॥ उक्तरीत्या वैधर्म्याच्चेत्यर्थः । **नैक्यमिति** ॥ विज्ञानजगतोरिति शेषः ॥ ३१ ॥

**प्रत्येकं दूषितबौद्धमतेषु सामान्यरूपेण शिष्यान् प्रति दूषणबोधनाय सूत्रम्-**

**(प्रमाणविरुद्धाः बौद्धप्रवादा उपेक्षणीयाः)**

**॥ ॐ सर्वथाऽनुपपत्तेश्च ॐ ॥ ३२ ॥**

उपपत्तिः प्रमाणम् । नञ् विरुद्धार्थे, अभावे च । बौद्धमतानीति शेषः । असमञ्जसमिति वर्तते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **सर्वथा** प्रत्यर्थं क्षणिकत्वकल्पने, प्रतिक्षणमुत्पत्तिविनाशकल्पने, शून्याद्वैतकल्पने, विज्ञानाद्वैतकल्पने, प्रकटने, प्रच्छादने च, **अनुपपत्तेः** प्रमाणाभावात् 'सर्वथाऽनुपपत्तेश्च' सर्वप्रमाणविरुद्धत्वात् **च**, बौद्धमतानि असमञ्जसानीति ॥

**प्रमाणाभावात् सर्वश्रुतिस्मृतियुक्तिविरुद्धत्वाच्च नैते पक्षा ग्राह्याः ।**

भा. ॥ सूत्रार्थमाहुः - **प्रमाणाभावादिति** ॥ **श्रुतीति** ॥ 'न ऋते त्वत्क्रियते', 'यच्च किञ्चित्', 'ब्रह्मण्येवेदम्' इत्याद्याः (२.२,पा.४.५) सूत्रे उक्ताः पाशुपतादिनये (२.२.११) वक्ष्यमाणाश्च श्रुतयः 'स एव भूयो निज...' (भाग.) इत्याद्या उक्ता, वक्ष्यमाणाश्च स्मृतयः सूत्रोक्ताश्च युक्तयः । **एते इति** ॥ वैभाषिक-सौत्रान्तिक-शून्यवादि-विज्ञानवादिनां पक्षा इत्यर्थः ॥ ३२ ॥ अ.९ ॥

**॥ इति अनुपलब्ध्यधिकरणम् ॥**

## १०. नैकस्मिन्नधिकरणम्

**स्याद्वादिमतं दूषयति—**

अत्र नये जैनक्षपणकमतनिराकरणम् ॥ अधिकरणार्थं दर्शयन्ति- **स्याद्वादिमत-मिति** ॥ सत्स्यात्, असत्स्यात्, सदसत्स्यात्, सदसद्विलक्षणं स्यात्, सत्त्वे सति सद्विलक्षणं स्यात्, असत्त्वे सति असद्विलक्षणं स्यात्, सदसत्त्वे सति सदसद्विलक्षणं स्यात्, इति सप्तभङ्गि जगत् इति वादि जैनमतमित्यर्थः । अत्र स्यादिति जैनग्रन्थस्थं पदं तिङन्तप्रतिरूपकमव्ययम्, अनैकान्त्यस्य, अनेकत्वस्य वा, द्योतकम् । उक्तार्थस्य सदादिपदार्थेऽन्वयः । तथा च - घटादिकं सत्स्यात् व्यभिचरितसत्त्ववदिति वा, अनेकप्रकारवद्घटादिकं सत्त्ववदिति वा, बोध इति ज्ञेयम् ॥

**(सप्तभङ्गिवादोऽनुपपन्नः)**

**॥ ॐ नैकस्मिन्नसम्भवात् ॐ ॥ ३३ ॥**

**जगदिति प्रकृतम् । सप्तभङ्गीति शेषः । अयमर्थः- जगत् सप्तभङ्गि इदं सत्स्यादित्यादिसप्तप्रकारवत् न भवति, एकस्मिन् एकैकस्मिन् वस्तुनि असम्भवात् सप्तभङ्गित्वस्यासम्भावितत्वादिति ॥ देशादि-भेदेन व्यवस्थितसदसत्प्रकारद्वयेनोपपत्तौ सदसत्त्वातिरिक्तप्रकारस्याप्रामाणिकत्वादयुक्तं सप्तभङ्गित्व-मिति भावः ।**

**सत्स्यादसत्स्यात्सदसत्स्यात्ततोऽन्यच्च स्यादित्येतन्नैकस्मिन् युज्यते । अदृष्टत्वेना-सम्भवात् ॥**

भा. ॥ आकाङ्क्षितपूर्त्या सूत्रं व्याचक्षते- **सत्स्यादिति** ॥ **ततोऽन्यत्स्यादिति** ॥ उक्तत्रिविधापेक्षया अन्यत् भिन्नं सदसत्त्वघटितप्रकारचतुष्टयमित्यर्थः । **इत्येतदिति** ॥ एकैकप्रकाराङ्गीकारे दोषभीरुणा जैनेनाङ्गीकृतं सप्तभङ्गित्वमित्यर्थः । **एकस्मिन्**- वस्तुनि ॥ **अदृष्टत्वेन**- अप्रामाणिकत्वेन तृतीयादिप्रकारस्येत्यादौ शेषः ॥ ३३ ॥

**यदपि जीवस्य शरीरपरिमितत्वमङ्गीकृतं तत्किं सर्वशरीरगतचेष्टोपपत्त्यर्थं किं वा शरीरावच्छेद-मन्तरेणाऽत्मनः परिमाणाभावाद्वा । तत्राद्यपक्षदूषणाय सूत्रम्-**

**(न शरीरपरिमाणः जीवः)**

**।। ॐ एवं चाऽत्माकात्स्न्यर्म् ॐ ।। ३४ ।।**

**एवमित्यनेन बुद्धिस्थजैनमतसिद्धदूषणीयप्रकारान्तरं गृह्यते । अयमर्थः- एवं शरीरस्य सर्वावयवाऽवच्छेदेन चेष्टासिद्ध्यर्थं जीवस्य शरीरपरिमाणत्वाङ्गीकारे आत्माकात्स्न्यं पिपीलिकादिशरीरस्थजीवस्य कर्मवशात् प्राप्तगजशरीरादौ अपूर्णत्वं स्यात् । गजशरीरसमानपरिमाणं न स्यादिति यावत् । चात् - गजशरीरस्थजीवस्य पिपीलिकादिदेहेऽधिकपरिमाणं स्यादिति सूचितमिति ।।**

**जीवस्य शरीरपरिमितत्वाङ्गीकारेऽण्वादिशरीरस्थस्य हस्त्यादिशरीरेऽकात्स्न्यं स्यात् ।**

**भा.** ।। सूत्रार्थमाहुः- **अण्वादीति** ।। पिपीलिकादीत्यर्थः ।। **शरीरस्थस्येति** ।। शरीरस्थत्वोपलक्षितस्येत्यर्थः । हस्त्यादिशरीरगतस्य पिपीलिकादिदेहप्राप्तावतिरेकः स्यादित्यपि ज्ञेयम् । तथा च जीवस्य शरीरपरिमाणत्वभङ्ग इति भावः ।। ३४ ।।

**ननु यदा यच्छरीरं प्राप्नोति जीवस्तदा तत्परिमाणः सः, अतो नोक्तदोषः इति शङ्कापरिहाराय सूत्रम्-**

**(तत्तच्छरीरपरिमाणाङ्गीकारे विकारित्वेनानित्यत्वप्रसक्तिः)**

**।। ॐ न च पर्यायादप्यविरोधो विकारादिभ्यः ॐ ।। ३५ ।।**

**चः तथा सतीत्यर्थे । आत्मेत्येकदेशो वर्तते, षष्ठ्या विपरिणम्यते च । अयमर्थः- पर्यायादपि परिमाणपरिवर्तनादपि तत्तच्छरीरस्थस्य तत्तच्छरीरसमानपरिमाणवत्त्वाद्यङ्गीकारादपीति यावत् । अविरोधः अकात्स्न्यादिदोषपरिहारो न भवति, च तथासति विकारादिभ्यः विकारादिदोषापत्तेरिति ।। एवं च परिमाणविपरिवर्तने विकारित्वं विकारित्वे च अनित्यत्वं, अनित्यत्वे च अनिर्मोक्षप्रसङ्गः अनिर्मोक्षे च शास्त्रवैयर्थ्यमिति हेतुहेतुमद्भावापन्नदोषपरम्परेति भावः ।।**

**तत्तच्छरीरस्थस्य तत्तत्परिमाणत्वमिति न मन्तव्यम् । विकारित्वादनित्यत्वप्रसक्तेः ।।**

**भा.** ।। सूत्रार्थमाहुः- **तत्तदिति** ।। अस्य तथा सतीत्यादौ शेषः । नन्वेवं सिद्धान्तेऽपि 'नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते' (३.१.१७ सू.) इति वक्ष्यमाणरीत्या, 'अल्पं तेजस्तथैवाल्पं जीवरूपं हि संसृतौ । तथैव सुमहत्तेजः करोति भगवान् महत्' इति बृहद्भाष्ये षष्ठाध्याये अल्पजीवरूपं मुक्तौ महच्च करोतीत्युक्तरीत्या च, जीवनीचोच्चतादिरूपपरिमाणव्यत्ययलक्षणविकारवत्त्वेनानित्यत्वा-

पत्तिरिति चेन्न 'नानित्यताऽस्मत्पक्षे तु चैतन्यादेर्विशेषिणः । लक्षणस्य निवृत्तौ तु स्यान्न तच्चेतने कचित्' इति **एतत्सूत्रीयानुव्याख्यानोक्त**रीत्या (ब्र.सू.अनु.) परिहारसम्भवात् । यतः **'यस्य वस्तुनो** यल्लक्षणं तन्निवृत्तिरूपोऽन्यथाभाव एव तदनित्यतानिबन्धनं नान्यथाभावमात्रम् । जीवस्य लक्षणं च चैतन्यादिकमेव न तु सुखादीत्यस्मदभ्युपगमः । अतः चैतन्यनिवृत्तावेवाऽत्मनोऽनित्यत्वं स्यादिति **सुधायां** व्याख्यातम् ॥ ३५ ॥

**शरीराऽवच्छेदमन्तरेणऽत्मनः परिमाणाऽभावादिति द्वितीयपक्षप्रतिक्षेपाय सूत्रम्-**

**(आत्मतद्देहयोर्नित्यत्वात् संसारिदेहस्य च नित्यत्वं स्यात्)**

**॥ ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ ॥ ३६ ॥**

**एवश्चेति वर्तते । संसारिदेहस्य स्यादिति शेषः । यथायोग्यमावृत्तिविपरिणामौ । अन्त्यावस्थितेरिति ल्यब्लोपे पञ्चमी । अयमर्थः- एवं शरीरावच्छेदमन्तरेण जीवस्य परिमाणाभावेन अवच्छेदकशरीर-समानपरिमाणत्वाङ्गीकारे अन्त्यावस्थितेः अन्त्यस्य मुक्तिगतात्मपरिमाणस्य अवस्थितिमनुरुध्य अन्त्यावस्थितिः अन्त्ये मुक्तौ शरीरावस्थितिः स्यात् । एवं च मुक्तौ शरीरे सति उभयनित्यत्वात्** आत्मतद्देहयोर्नित्यत्वात् संसारिदेहस्य च नित्यत्वं स्यात्, **अविशेषात्** परिमाणावच्छेदशरीरत्वाविशेषा-दिति ॥ यत् द्रव्यं तत् परिमाणवदेवेति नियमः ॥

**परिमाणाभावे स्वरूपाभावप्राप्त्याऽन्त्यपरिमाणस्थितेस्तदर्थत्वेन शरीरस्थितेरुभय-नित्यत्वादविशेषेण सर्वशरीरनित्यत्वं स्यात् ॥**

**भा.** ॥ सूत्रं व्याचक्षते- **परिमाणेति** ॥ **परिमाणाभावे**- आत्मनो मोक्षे परिमाणाभावे, स्वरूपाभावप्राप्त्या अन्त्यपरिमाणस्थितेः मोक्षे परिमाणस्थितेः, तदर्थत्वेन- मुक्तशरीरावच्छेदाऽर्थत्वेन, शरीरस्थितेः मुक्तशरीरस्थितेः सिद्धत्वेन, उभयनित्यत्वादात्मतद्देहयोर्नित्यत्वापत्त्या, अविशेषेण- अवच्छेदक-शरीरत्वाविशेषेण, सर्वशरीरनित्यत्वं संसारिशरीरस्यापि नित्यत्वं स्यादित्यर्थः ॥ ३६ ॥

**॥ इति नैकस्मिन्नधिकरणम् ॥**

## ११. पत्यधिकरणम्

**पाशुपतपक्षमपाकरोति-**

अत्र नये निरसनीयत्वेनाऽवसरप्राप्तवैदिक-पाषण्ड-पाशुपतमतनिरासः ।। अधिकरणाऽर्थं दर्शयन्ति- **पाशुपतेति** ।। पशुपतिरेव जगत्कर्तेति प्रतिपादकमतमित्यर्थः ।।

**(पारतन्त्र्यादिदोषसत्त्वेन नोमापतेर्विश्वकर्तृत्वम्)**

**।। ॐ पत्युरसामञ्जस्यात् ॐ ।। ३७ ।।**

**पतिशब्देन 'नामैकदेश'न्यायेन पशुपतेर्ग्रहणम् । कारणत्वमिति प्रकृतम् । नेति वर्तते । अयमर्थः- पत्युः पशुपते रुद्रस्य कारणत्वं जगत्कारणत्वं न, असामञ्जस्यात् पारतन्त्र्यजननादिदोषवत्त्वेन 'यं कामये' इत्यादि श्रुतौ श्रवणादिति ।।**

**'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्'**

**(ऋ.सं.१०–१२५–५) ।**

**'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ'**

**(ऋ.सं.१०–१२५–६) ।**

**'अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः ।**
**विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत् ।।'**

**(ऋ.सं.७–४०–५) ।**

**'एको नारायण आसीन्न ब्रह्मा नेशानो नाग्नीषोमौ' (म.ना.उ.१) इत्यादिश्रुतेः । पारतन्त्र्येणासमञ्जसत्वान्न पशुपतिरीश्वरो जगत्कर्ता ।।**

भा. ।। श्रुत्युपन्यासपूर्वं सूत्रार्थमाहुः- **'यं कामय इत्यादिना** ।। **पारतन्त्र्येण-** तदुपलक्षितजननमरणा-

---

१. **यं कामये इति** ।। (ऋ.१०.१२५.५) व्या.(४५-पु.) **अहं रुद्रायेति** ।। (ऋ.१०.१२५.६) **अहं शरवे** हिंसाशीलाय **ब्रह्मद्विषे** चतुर्मुखपञ्चममुखच्छेत्रे, संहारकाले ब्राह्मणादिद्विषे वा, **ब्रह्मद्विषां** दैत्यानां **शरवे** हिंसकाय वा, दक्षप्रजापतिद्विषे वा, **रुद्राय** उक्तविशेषणकं रुद्रं **हन्तवा उ** हन्तुमेव न तु भीषणार्थे प्रलये दुर्गारूपेण हननात्, **धनुरातनोमि** विस्तारयामि सज्जं करोमीति वा, **अहं जनाय** जनस्य **समदं** सन्ततमोदं **करोमि** ।

दिना । **असमञ्जसत्वात्**- अयुक्तत्वादित्यर्थः । अत्रेश्वरः, पशुपतिरिति उभयोपादानं तु अन्यतरोक्तौ योगेन अर्थान्तरभ्रमवारणाय ॥ ३७ ॥

**युक्त्यन्तरेण रुद्रस्य जगत्कर्तृत्वं नेति कथनाय सूत्रम्-**

**(सृष्ट्यादौ शरीराभावाच नेश्वरस्य विश्वकर्तृत्वम्)**

**॥ ॐ सम्बन्धानुपपत्तेश्च ॐ ॥ ३८ ॥**

न, पत्युः, कारणत्वमिति वर्तते । **सम्बन्धः** कर्तृत्वम् उपपत्तिर्हेतुः सशरीरत्वं तस्याभावोऽनुपपत्तिः । **अयमर्थः**- पत्युः पशुपतेः जगत्कारणत्वं नास्ति **सम्बन्धाऽनुपपत्तेश्च** कर्तृत्वादिसम्बन्धप्रयोजक-सशरीरत्वाभावाच्चेति ॥ अशरीरत्वादिति वक्तव्ये एवमुक्तिः कर्तृत्वसशरीरत्वयोः प्रयोज्यप्रयोजक-भावज्ञापनार्था ॥

**अशरीरत्वाच्चास्य जगता सम्बन्धो न युज्यते कर्तृत्वेन मृतपुरुषवत् ।**

भा. ॥ सूत्रफलितार्थमाहुः- **अशरीरत्वाच्चेति** ॥ **तस्य**- रुद्रस्य । **कर्तृत्वेनेति** ॥ अभेदस्तृतीयार्थः सम्बन्धेऽन्वेति ॥ **मृतपुरुषवदिति** ॥ इदं हेतुबलाल्लब्धम् । मृतपुरुषस्येवेत्यर्थः । त्यक्तदेहजीवस्येवेति यावत्, यतो न युज्यते अतः न पशुपतिरीश्वरः कर्तेति (पूर्वभाष्येऽन्वयः) ॥ ३८ ॥

**इतोऽपि न जगत्कर्तृत्वं रुद्रस्येति प्रतिपादनाय सूत्रम्-**

---

**अहं द्यावापृथिवी** तदुपलक्षितसर्वलोकान् धारणाय **आविवेश** । छान्दसोऽपरोक्षे लिट् । **अहम् अस्य जगतः पितरं** ब्रह्माणं **मूर्धन्** मूर्धनि सर्वजीवोत्कृष्टत्वे, सुषुम्नायां वा, **सुवे** जनयामि । न केवलं पदे स्थापयामि एवंभूताया **मम योनिः** कारणं **समुद्रे अप्सु** अपाम् **अन्तः** तिष्ठतीत्यर्थः । **अस्य देवस्येति** ॥ (ऋ.७.४०.५) **अस्य** प्रमितस्य **देवस्य** द्योतनादिगुणवतः **मीळ्हुषः** भक्ताऽभिलषितवर्षितुः, समर्थस्य वा, **एषस्य** आसमन्तादीशस्य ईशधातोः शस्य षः गुणश्चेकारस्य छान्दसः । यद्वा, **एषस्य** इच्छारूपस्य सत्यकामस्येति यावत्, 'इषु इच्छायाम्' इति धातोरिदं रूपम् । **विष्णोः** कर्मणा ज्ञानेन च, (ध्यानेन च) प्रभृथे भरणे, पूजने वा, **हविर्भिः** कृते सति तत्प्रसादात् **वयाः** अहङ्काराऽभिमानित्वेन जनानां बन्धकः **रुद्रः रुद्रियं महित्वं** रौद्रं पदं **विदे** विविदे लेभे, **हि** प्रसिद्धमेतत्, तथा **हे अश्विनौ** युवामपि विष्णुपूजयैव तत्प्रसादात् **इरावत्** अन्नवत् **वर्तिः** वर्तनं समस्त-भोगवत्पदं **यासिष्टम्** अयासिष्ठं प्राप्नुवन्तौ स्त इत्यर्थः ॥ **एक इति** ॥ (महाना. १) महाप्रलये **नारायणः एक एवासीत् ब्रह्मा** चतुर्मुखः **नासीत्** स्वातन्त्र्येण नाऽपि **रुद्र** आसीदित्यर्थः ॥ ३७-४० ॥

(अधिष्ठानाद्यभावात् सृष्टिरनुपपन्ना)

**॥ ॐ अधिष्ठानानुपपत्तेश्च ॐ ॥ ३९ ॥**

न,पत्युः, जगत्कारणमिति वर्तते । अयमर्थः- पत्युः पशुपतेः जगत्कारणत्वं नास्ति, **अधिष्ठानानुपपत्तेश्च** अधिष्ठानमधिकरणं तस्य अनुपपत्तेरसम्भवादिति ॥ सृष्टेः पूर्वं पृथिव्याद्यधिष्ठानाभावात् अधिष्ठानवत एव कर्तृत्वदर्शनादिति भावः ॥

**पृथिव्याद्यधिष्ठाने स्थितो हि कुलालादिः कार्यं करोति । न चास्य तदस्ति ।**

**भा.** ॥ सूत्रं व्याचक्षते- **पृथिव्यादीति** ॥ **अनेन** सूत्रसिद्धव्यतिरेकव्याप्तिः दर्शिता । **अस्य-** रुद्रस्य । **तत्-** अधिष्ठानम् ॥ च यतः अधिष्ठानं नास्ति अतश्च 'ईश्वरो न जगत्कर्ता' इति पूर्वभाष्येणान्वयः ॥३९ ॥

**(मायादिकारकजाताभ्युपगमे तत्प्रयुक्तोत्पत्तिविनाशभोगापत्तेः)**

सूत्रद्वयोक्तमाक्षिप्य समादधत्सूत्रम्-

**॥ ॐ करणवच्चेन्न भोगादिभ्यः ॐ ॥ ४० ॥**

पत्युरिति वर्तते । करणेत्येकदेश आवर्तते । अयमर्थः- करणं परिदृश्यमानं कारकजातं पत्युः पशुपतेः करणवत् शरीरवदधिकरणादिवच्च, भवतीति **चेन्न- भोगादिभ्यः** कारकजातगतोत्पत्तिविनाशप्रयुक्त-सुखदुःखादिभोगापत्तेः उत्पत्तिविनाशापत्तेश्चेति ॥

**इदमेव जगत्तस्य करणवदधिष्ठानादिरूपं नित्यस्यापि कस्यचिद्भावाद्युज्यत इति चेन्न भोगादिप्राप्तेः । उत्पत्तिविनाशौ सुखदुःखभोगाश्च प्राप्यन्ते तद्गताः ॥**

**भा.** ॥ सूत्रं व्याचक्षते- **इदमेवेति** ॥ परिदृश्यमानं जगत्कारकजातम् । **तस्य-** पशुपतेः । **करणवत्-** अस्मदादीनां शरीरवत् । **अधिष्ठानादिरूपम्** अधिष्ठानशरीररूपम् । ननु प्रलये परिदृश्यमानकारक-जातस्याभावात्कथं कार्यसृष्टिरत आहुः- **नित्यस्येति** ॥ नित्यस्यापि कस्यचिन्मायादिकारकजातस्य भावात् सत्त्वाङ्गीकारात् युज्यते इत्यर्थः । **भोगादिप्राप्तेरिति** ॥ अस्यैव स्वपदस्य विवरणम्- **उत्पत्तीति** ॥ सूत्रे भोगस्यादित्वेऽपि आदिपदग्राह्योरुत्पत्तिविनाशयोः सुखदुःखभोगप्रयोजकत्वेन तयोर्भाष्ये प्रथममुक्तिः । **तद्गताः-** कारकजातगताः, कारकजातप्रयुक्ताश्च । तत्र सुखदुःखयोः तत्प्रयुक्तत्वम् उत्पत्तिविनाशयोश्च तद्गतत्वमिति ज्ञेयम् ॥ ४० ॥

सूत्रद्वयोक्तस्य दृढीकरणाय सूत्रम्-

(पशुपतेर्देहाद्यभ्युपमे नाशासार्वज्ञ्यापातः)

**॥ ॐ अन्तवत्त्वमसर्वज्ञता वा ॐ ॥ ४१ ॥**

पत्युः, न, करणवदिति वर्तते । करणवदिति मतुबन्तमत्र, भावप्रधानं च । स्यादिति शेषः । **वाशब्दो** विकल्पे । तेन करणवत्त्वाभाव इति लभ्यते । **ज्ञतेति** भिन्नं पदं च । अयमर्थः- पत्युः पशुपतेः करणवत्त्वे देहेन्द्रियादिमत्त्वे **अन्तवत्त्वं** नाशवत्त्वं, परिच्छिन्नत्वं च स्यात् करणवत्त्वाभावे देहाद्यभावे **ज्ञता** ज्ञानित्वं न स्यात् । **असर्वज्ञता** सर्वज्ञत्वं सुतरां न स्यादिति ॥

**देहवत्त्वेऽन्तवत्त्वम् । अन्यथा ज्ञानाभावः । शरीरिण एव हि ज्ञानोत्पत्तिर्दृष्टा । विष्णोस्तु श्रुत्यैव विरोधाः परिहृताः ।**

**'यदात्मको भगवांस्तदात्मिका व्यक्तिः ।**
**किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मकः ॥' इति ।**
**'बुद्धिमनोऽङ्गप्रत्यङ्गवत्तां भगवतो लक्षयामहे ।**
**बुद्धिमान्मनोवानङ्गप्रत्यङ्गवान् ॥' इति ।**
**'सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।**
**ज्ञानज्ञानः सुखसुखः स विष्णुः परमाक्षरः ॥' इत्यादिकया ॥**

भा. ॥ सूत्रार्थमाहुः- **देहवत्त्व इति** ॥ अशरीरत्वाज्ज्ञानाभावापादने व्यतिरेकव्याप्तिमाहुः- **शरीरिण एवेति** ॥ ननु विग्रहवत्त्वस्येच्छाधीनतयाऽन्तवत्त्वदोषो नेति चेन्न- इच्छाया अपि शरीरवत्त्व एव सम्भवेनाशरीरस्य तदयोगात् । **श्रुत्येति** ॥ पैङ्गिश्रुत्येति सम्प्रदायविदः । **विरोधाः**- पशुपतिकर्तृत्वपक्षोक्तदोषाः । ननु कास्ताः श्रुतय इत्यतस्ताः श्रुतीराहुः- **'यदात्मक इत्यादि** ॥

१. **यदात्मक इति** ॥ अयमर्थः- **भगवान् यदात्मकः** यत्स्वरूपकः **व्यक्तिः** देहः **तदात्मिका** तत्स्वरूपः इति प्रतिज्ञा, **किमात्मको भगवानिति** प्रश्नः, उत्तरमाह- **ज्ञानात्मक इति** ॥ **बुद्धीति** ॥ **लक्षयामहे** इत्यन्तं प्रतिज्ञा, **बुद्धिः** ज्ञानं, **मनः** चेतः, **अङ्गं** शरीरं, **प्रत्यङ्गं** हस्तादि, एतद्वत्त्वं **लक्षयामहे** ज्ञापयामः तस्यैव विवरणं **बुद्धिमानित्यादीति** ॥ **सद्देह इति** ॥ यः **सद्देहः** जन्मच्छेदादिरहितदेहवान् **सुखगन्धश्च** सुगन्धिः, पुण्यगन्धः सुखात्मकगन्धवान् वा, **ज्ञानभाः** न तु तैजसभाः, **सत्पराक्रमः** अप्रतिहतपराक्रमः, **ज्ञानज्ञानः** अतिशयितज्ञानवान्, ज्ञानशब्दः कर्तृसाधनः **सुखसुखः** अतिशयितसुखवान्, सुखशब्दः 'अर्शआद्यजन्तः' ज्ञानेषु ज्ञान इत्यादिविग्रहः **सः** तादृशः **विष्णुः परमाक्षर** उत्तमाक्षरः भगवान् इति ॥४१॥अ.११॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥अ.१२॥

**इत्यादिकयेति** ॥ श्रुत्येत्यत्रान्वयः । आदिना 'स्वे महिम्नि' (छा.७.२४.१) 'किं स्विदासीदधिष्ठानम्' (ऋ.१०-८१-२) 'पतिं विश्वस्यात्मेश्वरम्' (महाना.११) इत्यादिकं ग्राह्यम् ॥ ४१ ॥ अ.११ ॥

**॥ इति पत्युरधिकरणम् ॥**

## १२. उत्पत्त्यधिकरणम्

**शक्तिपक्षं दूषयति–**

अत्र नये शाक्तमतनिरासः ॥एतदधिकरणार्थं दर्शयन्ति- **शक्तिपक्षमिति** ॥ शक्तिरेव जगत्कारणमिति प्रतिपादकं महावाम-मध्यमवामाऽणुवामानां पक्षमित्यर्थः । तत्र महावाममतनिरासाय सूत्रम्-

**(पुरुषाननुगृहीतशक्त्या न विश्वसृष्टिः)**

**॥ ॐ उत्पत्त्यसम्भवात् ॐ ॥ ४२ ॥**

**न, जगत्कारणमिति वर्तते । शक्तिरिति शेषः । तस्यावृत्तिविपरिणामौ । अयमर्थः- शक्तिः केवलशक्तिदेवता न जगत्कारणम् उत्पत्त्यसम्भवात् । शक्तेः सकाशात् जगत उत्पत्त्यसम्भवादिति ॥ शक्तेः पुरुषाऽननुगृहीतत्वान्नोत्पादकत्वमिति भावः ॥**

**न हि पुरुषाननुगृहीतस्त्रीभ्य उत्पत्तिर्दृश्यते ॥**

**भा.** ॥ सूत्रसिद्धव्याप्तिमाहुः- **नहीति** ॥ अस्य भाष्यस्य व्याप्तिप्रदर्शनमात्रपरत्वेन नान्यत्रान्वयापेक्षा ॥ ४२ ॥

**ननु अस्त्येव शक्त्यनुग्राहकः पुरुषः सदाशिवाख्यः अतस्तस्यास्सकाशात् जगदुत्पत्तिर्युक्तैवेति मध्यमवाममतनिरासाय सूत्रम्-**

**(अनुग्राहकस्य करणाद्यभावात् तदनुगृहीतशक्त्या न सृष्टिः)**

**॥ ॐ न च कर्तुः करणम् ॐ ॥ ४३ ॥**

**उत्पत्त्यसम्भवादिति वर्तते । चोऽनेकार्थेषु । अङ्गीक्रियमाणे इति शेषः । यथायथमावृत्तिविपरिणामौ । अयमर्थः- कर्तरि अनुग्राहककर्तरि सदाशिवाख्ये अङ्गीक्रियमाणे च कर्तुः उक्तानुग्रहकर्तुः करणं देहेन्द्रियादिकं न इति उत्पत्त्यसम्भवश्च ज्ञानादिप्रयोज्यानुग्रहाभावद्वारा शक्तिसकाशात् उत्पत्त्यसम्भव एवेति ॥**

**यदि पुरुषोऽङ्गीक्रियते तस्यापि करणाभावादनुपपत्तिः ॥**

**भा.** ॥सूत्रार्थमाहुः- **यदीति** ॥ **करणाऽभावादिति** ॥ तस्यापि निर्दिष्टपुरुषस्यापि अनुग्रहप्रयोजकीभूत-शरीरेन्द्रियादिकरणाभावादित्यर्थः । **अनुपपत्तिः**- उत्पत्त्यनुपपत्तिरेवेत्यर्थः ॥ ४३ ॥

शक्त्यनुग्राहकपुरुषस्य सार्वज्ञादिसद्भावेन जगदुत्पत्तिर्युक्तेति प्रतिपादकाणुवाममतनिरासाय सूत्रम्-

**(अनुग्राहकस्य विज्ञानशरीरादिभावे तत एव सिद्धेः शक्तिकर्तृत्वपक्षः न साधीयान्)**

**॥ ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ ॥ ४४ ॥**

कर्तुः, इति वर्तते । वाशब्दो मतभेदद्योतकः । अयमर्थः- कर्तुः अनुग्राहकस्य **विज्ञानादिभावे** विज्ञान-शरीरादिसत्त्वे तदप्रतिषेधः तस्य पशुपतिकर्तृत्ववादस्याप्रतिषेधः प्रतिषेधाभावः स्यात् स अनुमतः स्यादिति यावत् इति ॥ एवं च ज्ञानादिविशिष्टसदाशिवेनैव जगदुत्पत्तिनिर्वाहे शक्तिकर्तृत्ववादो न युक्तः । शैवपक्षः पूर्वमेव निराकृत इति भावः ॥

**यदि विज्ञानादिकरणं तस्याङ्गीक्रियते तदा तत एव सृष्ट्याद्युपपत्तेरीश्वर-वादान्तर्भावः ॥**

भा. ॥ सूत्रस्य फलितार्थमाहुः- **यदि तस्येति** ॥ शिवस्येत्यर्थः । **ईश्वरवादान्तर्भाव इति** ॥ पशुपतिकर्तृत्ववादे अन्तर्भवतीत्यर्थः ॥ ४४ ॥

महावाममध्यमवामाणुवाममतानि पृथग्घेतुभिः सूत्रत्रयेण क्रमेण निरस्य सामान्येन (तन्मत) निराकरणाऽर्थं सूत्रम्-

**(सकलप्रमाणविरुद्धत्वाच्च शक्तिकारणतावाद उपपन्नः)**

**॥ ॐ विप्रतिषेधाच्च ॐ ॥ ४५ ॥**

चः पूर्वोक्तहेतुसमुच्चये । असमञ्जसमिति वर्तते । शक्तिमतमिति शेषः । अयमर्थः- **विप्रतिषेधाच्च** सकल श्रुति-स्मृति-युक्तिविरुद्धत्वाच्च शक्तिमतमसमञ्जसमिति ॥

**सकलश्रुत्यादिविरुद्धत्वाच्चासमञ्जसम् ।**

॥ इति उत्पत्त्यधिकरणम् ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः ॥**

**भा.** ॥ सूत्रार्थमाहुः- **सकलेति** ॥ **श्रुत्यादीति** ॥ आदिना स्मृतियुक्तिपरिग्रहः । 'न ऋते' इत्यादयः श्रुतयः, 'स एव' इति स्मृतयः, तत्तत्सूत्रोक्ता युक्तयः, इति बोध्यम् । **असमञ्जसमिति** ॥ शक्तिमतमिति शेषः । ततश्च शाक्तादिमतस्य सकलप्रमाणविरुद्धत्वात् शाक्तादिमतविरोधाभावात् 'जन्मादि'सूत्रोक्तं हरेरखिलजगत्कारणत्वं प्रमाणसुस्थमिति सिद्धम् ॥ ४५ ॥ अ.१२ ॥

**॥ इति उत्पत्त्यधिकरणम् ॥ १२ ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीब्रह्मसूत्रभाष्यस्य व्याख्यायां भाष्यार्थसहितसूत्रार्थमणिमञ्जर्याम् द्वितीयाऽध्यायस्य द्वितीयः पादः ॥**

## ॥ अथ द्वितीयाध्याये तृतीयः पादः ॥

### (श्रुतिविरोधपरिहारः - तृतीयपादार्थः)

### १. वियदधिकरणम्

**जीवपरमात्माधिभूताधिदैवेषु श्रुतीनां परस्परं विरोधमपाकरोत्यनेन पादेन ।**

एतत्पादार्थं दर्शयन्ति- **जीवेति** ॥ अत्र पादे 'ज्ञोऽत एव' (१८-सू.)इत्यारभ्य नवस्वधिकरणेषु जीवविचारः, 'असम्भवस्तु सतोऽनुपपत्तेः', (३)'नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः'(१०) इति नयद्वये परमात्मविचारः, अवशिष्टेष्वष्टसु नयेषु अधिभूताधिदैवविचारः । अधिभूतं नाम सकारणकार्यभूतानि । अधिदैवं तदभिमानिदेवता । अध्यात्मविचारस्तु अग्रिमपादे करिष्यते । अधिभूतमित्यादौ विभक्त्यर्थेऽव्ययीभावः । जीवविचारस्यान्तिमत्वेऽपि जीवशब्दस्याल्पाच्त्वेन द्वन्द्वे प्राथम्यम् । **अपाकरोतीति** ॥ सूत्रकार इति भावः । विष्णोर्जगत्कारणत्वे युक्तिसमयविरोधपरिहारेऽपि श्रुतीनां परस्परं विरोधेन तत्सिद्धस्याविश्वसनीयत्वात् स विरोधोऽवश्यं परिहार्य इति सूत्रकारभावः ।

अत्र आचतुर्थपादसमाप्ति नयेषु 'समन्वय'नयेन (१.१.४) आक्षेपिकी सङ्गतिः, तत्र सकलशास्त्रस्य हरौ समन्वयेन तस्यैव निखिलजगत्कारणत्वमुक्तं तदाक्षेपेण पादद्वयस्य प्रवृत्तेः, पादद्वये उदाहरिष्यमाणश्रुतीनां परस्परविरोधेनाप्रामाण्ये जगत्कारणत्वश्रुतेरप्यप्रामाण्यं स्यादित्याक्षेपः । किञ्च निखिलजगत्कारणत्वं हरेर्न सम्भवति सर्वान्तःपातिनां वियदादीनामुत्पत्त्यभावादित्याक्षेपः । अत्र पक्षे जन्म(१.१.२)नयेन सङ्गतिः । विशेषसङ्गतिश्च तत्र तत्र वक्ष्यते । तत्तन्नयेषूदाहरिष्यमाणपूर्वोत्तर-पक्षश्रुतिविगानं तत्तन्नयसन्देहबीजमिति ज्ञेयम् । अत्र नये आकाशानुत्पत्तिश्रुतिविरोधपरिहारः । आकाशस्तदभिमानी च विषयः, जनिमान्न वेति संशयः, न जनिमानिति पूर्वपक्षः ॥

**(वियदुत्पत्तिमत्)**

**॥ ॐ न वियदश्रुतेः ॐ ॥ १ ॥**

**उत्पत्त्यसम्भवादिति वर्तते, प्रथमया विपरिणम्यते । उत्पत्त्यसम्भवोऽस्यास्तीति उत्पत्त्यसम्भवम् अर्शआद्यजन्तम् । यद्वा उत्पत्यसम्भवमत्तीति व्युत्पत्त्या असम्भवादिति पदं प्रथमान्तम् । अयमर्थः- वियत् भूताकाशाव्याकृताकाशतदभिमानिदेवतादिकम् उत्पत्त्यसम्भवम् उत्पत्तिशून्यं न, अश्रुतेः अनुत्पत्ति-**

श्रुत्यभावादिति ॥ भूताकाशस्य स्वरूपोत्पत्तिः, तदभिमानिनो देहत उत्पत्तिः, अव्याकृताकाशस्यावकाशप्रदत्वं, तदभिमानिप्रकृतेः पराधीनविशेषावाप्तिः, कार्योन्मुखत्वं चेति यथायथमुत्पत्तिर्बोध्या ॥

**न वियदनुत्पत्तिमत् । तथाऽश्रुतेः ॥**

भा. ॥ सूत्रार्थमाहुः- **न वियदिति ॥ तथाऽश्रुतेरिति** ॥ अनुत्पत्तिप्रतिपादिकश्रुत्यभावादित्यर्थः ॥१॥

**ननु आकाशस्योत्पत्त्यभावे मानं नापेक्षितम् । उत्पत्तौ मानाभावादेव तत्सिद्धेरिति शङ्कावारणाय सूत्रम्-**

**('आत्मन आकाशः सम्भूतः' इत्युत्पत्तिश्रुतिरस्ति)**

**॥ ॐ अस्ति तु ॐ ॥ २ ॥**

**तुरेवार्थे, हेतौ, समुच्चये च । न वियत् श्रुतेरित्येकदेशः, उत्पत्त्यसम्भवादिति वर्तते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- 'तु' यतः 'श्रुतिः' 'आत्मन आकाशः सम्भूतः' इति आकाशोत्पत्तिश्रुतिः अस्ति तु अस्त्येवातश्च वियत् उत्पत्त्यसम्भवं नेति ॥**

**अस्त्येव चोत्पत्तिश्रुतिः–**

**'आत्मन आकाशः सम्भूतः' (तै.उ.२–१) इत्यादि ।**

भा. ॥ सूत्रं व्याचक्षते- **अस्त्येवेति** ॥ तां श्रुतिमाहुः- **'आत्मन इति ॥ इत्यादीति** ॥ सामान्ये नपुंसकं, श्रुतिरित्यत्राभेदेनान्वेति । चो हेतौ समुच्चये च । 'च' यतः इत्याद्युत्पत्तिश्रुतिरस्त्येवातश्च 'न वियदनुत्पत्तिमत्' इति पूर्वसूत्रभाष्येऽन्वयः । आदिना 'नाभ्या आसीदन्तरिक्षम्' (तै.आ.३.१३) 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिः' । (आथ.४.३) इत्यादिकं गृह्यते ॥२॥

**अनया श्रुत्याकाशस्य नोत्पत्तिः साधयितुं शक्या । 'अनादिर्वा' इत्यनादित्वश्रुतिविरोधादश्रुतेरिति चासिद्धमिति शङ्कावारणाय सूत्रम्-**

---

१. **आत्मन इति** ॥ (तै.उ. २.३) **आत्मनः** परमात्मनः सकाशात् **आकाशः** भूताकाशः तदभिमानी, अभिमानिदेहः, नियामकभगवद्रूपविशेषश्च यथायोग्यमुत्पन्न इत्यर्थः ॥ २ ॥)

**(आकाशानादित्वश्रुतिः गौणानादित्वपरा)**

**॥ ॐ गौण्यसम्भवात् ॐ ॥ ३ ॥**

श्रुतेरिति वर्तते । तस्यावृत्तिविपरिणामौ । अयमर्थः- श्रुतिः 'अनादिर्वा अयमाकाशः' इत्याद्याकाशानुत्पत्तिश्रुतिः गौणी गौणानादित्वपरा श्रुतेः आकाशोत्पत्तिश्रुतेः **असम्भवात् गौणत्वकल्पनासम्भवादिति** ॥ अयंभावः- उत्पत्तिश्रुतेर्बहुत्वेन सैव बलवतीति । किञ्चानुत्पत्तिश्रुतेर्मुख्यत्वे 'आत्मन आकाशः' इत्यादावाकाशपदवाच्याव्याकृताकाशतदभिमानिनोः भूताभिमानिनश्च कथञ्चिदनादित्वसम्भवेऽपि भूताकाशेऽनादित्वासम्भवः । तस्य रूपित्वानुमानेन सादित्वादिति सर्वविषयकत्वासम्भवः, उत्पत्तिश्रुतेर्मुख्यत्वे तु भूतस्य स्वरूपत उत्पत्तिः, अव्याकृताकाशस्यावकाशप्रदत्वरूपोत्पत्तिः, अभिमानिनः पराधीनविशेषावाप्तिलक्षणोत्पत्तिरस्तीति सर्वविषयकत्वं सिद्ध्यतीति ॥

**'अनादिर्वा अयमाकाशः शून्योऽलौकिकः' इत्यादिश्रुतिर्गौणी । अन्यथोत्पत्तिश्रुतिबाहुल्यासम्भवात् ।**

**भा.** ॥ श्रुत्युदाहरणपूर्वं सूत्रार्थमाहुः- [1]**अनादिर्वेति** ॥ **अन्यथेति** ॥ पूर्वोक्ताद्वैतरीत्या इत्यर्थः । **असम्भवादिति** ॥ उत्पत्तिश्रुतेर्बहुत्वेन गौणत्वासम्भवादित्यर्थः ॥ ननु 'अस्ति तु' (२.३.२) इति सूत्रस्यानुत्पत्तिश्रुतिरस्ति 'गौण्यसम्भवात्' इत्यस्यानुत्पत्तिश्रुतिर्गौणी मुख्यत्वासम्भवादित्यर्थ इत्येव कुतो नोक्त इति चेन्न- तथा सति सूत्रकृतोत्पत्तिश्रुतेरनुपन्यासेन असम्भवोपपादनस्य निर्हेतुकत्वापत्तेः ॥ ३ ॥

**पूर्वसूत्रोक्ता व्यवस्था श्रुतिसिद्धा चेति प्रतिपादनाय सूत्रम्-**

**(आकाशस्य गौणानादित्वम् 'अथ ह वाव' इति श्रुतिसिद्धम्)**

**॥ ॐ शब्दाच्च ॐ ॥ ४ ॥**

श्रुतिः, गौणी, इति वर्तते । अयमर्थः- श्रुतिः 'अनादिर्वा' इति आकाशानादित्वश्रुतिः गौणी । **शब्दाच्च** 'अथ ह वाव' इति श्रुतेरपीति ॥

---

१. **अनादिर्वाऽयमिति** ॥ **अलौकिकः** लौकिकेन्द्रियाविषयः, **शून्यः** सूक्ष्मः, अप्रतिघ इति यावत् । शिष्टं स्पष्टम् ॥ ३ ॥

**'अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा काल इति । अथ यान्यनित्यानि प्राणः श्रद्धा भूतानि भौतिकानीति । यानि ह वा उत्पत्तिमन्ति तान्यनित्यानि । यानि ह वा अनुत्पत्तिमन्ति तानि नित्यानि । न ह्येतानि कदाचनोत्पद्यन्ते न विलीयन्ते पुरुषः प्रकृतिरात्मा काल इति । अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणः श्रद्धाऽऽकाश इति भागशो ह्युत्पद्यन्ते' इति भाल्लवेयश्रुतेश्च ॥**

भा. ॥ सूत्रसूचितश्रुतिमाहुः- **'अथ हेति ॥ श्रुतेश्चेति ॥** अस्य 'श्रुतिर्गौणी' इति पूर्वसूत्रभाष्येऽन्वयः ॥ ४ ॥

---

१. **अथ हेति ॥ पुरुषो** जीवचैतन्यं, तदभिमानी ब्रह्मा च, **प्रकृतिः**, चिदचित्प्रकृती, **आत्मा** परमात्मा, **कालः** तत्प्रवाहः, तदभिमानिनी रमैव, **इति** यानि तानि **नित्यानि, अथ प्राणो** मुख्यवायुः, **श्रद्धा** तत्पत्नी भारती, **भूतानि** आकाशादीनि, **भौतिकानि** भूतकार्यशरीरादीनि **इति यानि** तानि **अनित्यानि ह वा** वेति प्रसिद्धौ । इति वाक्यद्वयं प्रतिज्ञारूपम् । हेतुद्वयं तु क्रमेण अनादित्वात्सादित्वादिति । तल्लाभस्तु अग्रे वक्ष्यते । व्याप्तिमाह- **यानि हेति ॥ यानि उत्पत्तिमन्ति** सादीनि **तानि अनित्यानि** अन्तवन्ति **यान्यनुत्पत्तिमन्ति** अनादीनि **तानि नित्यानि** अन्तशून्यानि । उपनयमाह- **न हीति ॥ हि** यतः **पुरुषः प्रकृतिः, आत्मा, काल इत्येतानि कदाचन** कदाऽपि **नोत्पद्यन्ते** । निगमनमाह- **न विलीयन्त इति** ॥ तस्मात् **न विलीयन्ते** ध्वस्तानि न भवन्ति, भूतानि भौतिकानि च उत्पद्यन्ते यतः अतो विलीयन्ते इति उपनयनिगमने कल्प्ये । अथ प्राणश्रद्धाभूतभौतिकानां सर्वेषामेवानित्यत्वमिति न, किन्तु केषाञ्चिन्नित्यत्वमपीत्याह- **अथैतानीति** ॥ अत्र आकाशपदेन अव्याकृताकाशासंसृष्टाऽकाशौ तदभिमानिनौ च, ग्राह्यौ । **हि** यतः **प्राणः श्रद्धा आकाश इत्येतानि भागशः** बहुभागैः **उत्पद्यन्ते भागशः** कैश्चन भागैर्नेति शेषः । **न** उत्पद्यन्ते अत **उत्पत्तिमन्ति अनुत्पत्तिमन्ति च** । तस्मात् नित्यानित्यानीति शेषः । अत्रापि प्रतिज्ञावाक्यं, व्याप्तिवाक्यं च, कल्पनीयं पूर्ववदित्यर्थः ॥

नन्वितरचेतनवत्प्राणश्रद्धयोरपि शरीराद्यनित्यत्वमनित्यवर्गप्रविष्टभौतिकपदबोधितत्वेनैवोक्तमिति पुनरनित्यत्वं कुतो विशिष्योच्यत इति चेन्न- एतयोरनित्यत्वमितरविलक्षणमिति बोधनार्थत्वात् । तथाहि - इतरचेतनानां देहवृत्तिज्ञानादिकं सर्वं भौतिकमनित्यं, स्वरूपमात्रं नित्यं, प्राणश्रद्धयोस्तु देहमात्रमनित्यं स्वरूपं नित्यं वृत्तिज्ञानादिकं च प्रवाहतो नित्यं प्रलयेऽपि तयोः वृत्तिज्ञानादेः सत्त्वात् । न चैवम् 'अथैतानि' इत्युत्तर-वाक्येन प्राणश्रद्धयोः नित्यानित्यत्वविधानं व्यर्थं पूर्ववाक्यद्वयेन नित्यत्वानित्यत्वयोर्लाभादिति वाच्यम् । प्राणश्रद्धयोः नित्यत्वानित्यत्वविधानाभावे नित्यत्वबोधकवाक्येन पुरुषपदघटितेन नित्यत्वे प्राप्ते अनेन विशेषविहितेन अनित्यत्वेन **तक्रकौण्डिन्यन्यायेन** नित्यत्वस्य बाधापत्त्या अनित्यत्वमेवेति शङ्का स्यात्, तद्वारणाय पुनः नित्यत्वानित्यत्वविधानात् ॥ ४ ॥

ननु 'न जायते म्रियते वा विपश्चित्' (कठ. १.२.१८) इत्यादिश्रुतौ उत्पत्तिमदर्थकशब्दस्य मुख्यार्थत्व-दर्शनात् अनुत्पत्तिश्रुतिरपि मुख्यैव स्यात् ततश्च पूर्वोक्तव्यवस्था न सिद्ध्यतीति शङ्कावारणाय सूत्रम्-

(एकस्योत्पत्त्यनुत्पत्तिमत्त्वं गौणमुख्यापेक्षयोपपद्यते)

॥ ॐ स्याच्चैकस्य ब्रह्मशब्दवत् ॐ ॥ ५ ॥

शब्दवदिति षष्ठ्यन्ताद्वतिः । चोऽप्यर्थे एवार्थे च । गौणीति वर्तते । अनादिशब्दस्येत्यर्थाल्लभ्यते । यथायथमावृत्तिविपरिणामौ, भावप्रधानं च । अयमर्थः । एकस्मिन् मुख्ये परमात्मनि एकस्य च मुख्यस्यापि एकस्य च गौणे मुख्ये च एकप्रवृत्तिनिमित्तकस्यैव अनादिशब्दस्य अनाद्यर्थकशब्दस्य ब्रह्मशब्दवत् ब्रह्मशब्दस्येव एकस्मिन् अन्यत्राकाशादौ गौणी गौणत्वं स्यात् (एव) इति ॥ दृष्टान्ते अन्यत्र चतुर्मुखादाविति ज्ञेयम् ॥

**स्यादेवैकस्योत्पत्तिमत्त्वमनुत्पत्तिमत्त्वं च गौणमुख्यत्वापेक्षया । यथा ब्रह्मशब्दः । 'अथ कस्मादुच्यते परं ब्रह्मेति बृहति बृंहयति च' (अथर्वशिरः) इति श्रुतेः परे ब्रह्मणि मुख्योऽपि गौणत्वेन विरिञ्चादिष्वपि वर्तते । अत एवाब्रह्मत्वं च तेषाम् । एवमन्यत्राप्यनुत्पत्तिमच्छब्दः ॥**

**भा.** ॥ सूत्रार्थमाहुः- **स्यादेवेति** ॥ एवशब्द एकस्यैवेति सम्बद्ध्यते । एकस्यैव आकाशस्य उत्पत्तिमत्त्वं तदर्थकशब्दबोध्यत्वम् । अनुत्पत्तिमत्त्वं- तदर्थकशब्दबोध्यत्वम् । गौणमुख्यापेक्षया गौणमुख्य-वृत्त्यभिप्रायेणेत्यर्थः । यद्वा- अपेक्षा वैशिष्ट्यं, तृतीयार्थोऽभेदः । मुख्यत्वविशिष्टाभिन्नमुत्पत्तिमत्त्वं गौणत्वविशिष्टाभिन्नमनुत्पत्तिमत्त्वमित्यर्थः । सूत्रार्थमाहुः- **यथेति** ॥ ब्रह्मशब्दस्य परमात्मनि मुख्यत्वे श्रुतिमाहुः- **[1]अथ कस्मादिति** ॥ अब्रह्मत्वम् अपूर्णत्वम् एवम् 'एषह्येवाचिन्त्यः' इति श्रुतौ परे ब्रह्मणि मुख्योऽपि अनुत्पत्तिमच्छब्दः तदर्थकानादिशब्दः अन्यत्राकाशादावपि गौणत्वेन वर्तते इत्यर्थः । यतो वर्तते अतः स्यादेवेत्यन्वयः ॥ ५ ॥

ननु ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वमन्यत्रामुख्यत्वं च युक्तं कारणसत्त्वात् । प्रकृते च कारणं नास्तीति शङ्कावारणाय सूत्रम्-

---

१. **अथ कस्मादिति** ॥ (अथर्वशिरसि) परं वस्तु **कस्मात्** कारणाद् **उच्यते ब्रह्मेति** इति प्रश्नः, उत्तरमाह- **बृहतीति** ॥ यतः **बृहति** स्वयं वर्धते पूर्णं भवतीति यावत् **बृंहयति च** अन्यान् यथायोग्यं पूरयतीत्यर्थः ॥५॥

(आत्मनः सर्वसृष्टेरुक्तव्यवस्था युक्ता)

**॥ ॐ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॐ ॥ ६ ॥**

स्याच्च, न वियत्, गौणी, श्रुतिरिति वर्तते । चः चेदित्यर्थे । यथायथमावृत्तिविपरिणामौ । अयमर्थः- श्रुतिः 'अनादिर्वा' इति श्रुतिर्गौणी न चेत्, **प्रतिज्ञाहानिः** 'इदं सर्वमसृजत' इति प्रतिज्ञायाः विरोधः स्यात् । वियतश्च आकाशस्यापि **अव्यतिरेकात्** सर्वस्माद्बहिर्भावाभावात् सर्वान्तर्गतत्वादिति यावत् । अतः, **शब्देभ्यश्च** 'आत्मा वा इदमेक एव अग्रे' इति 'असदेव वा इदमग्रे' 'इदं वावाग्रे' इत्यादिश्रुतिभ्यश्च, श्रुतिः= 'अनादिर्वा' इत्यादिश्रुतिर्गौणीति ॥

**ब्रह्मणोऽन्यस्य नित्यत्वे 'स इदं सर्वमसृजत' (तै.उ.२–६) इत्यादिप्रतिज्ञाहानिः । आकाशस्यापि सर्वस्मादव्यतिरेकात् । 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ.उ.१–१–) 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छां.उ.६–२–१) 'इदं वा अग्रे नैव किञ्चनासीत्' (तै.आ.२–२–९) इत्यादिश्रुतिभ्यः ।**

भा. ॥ सूत्रं व्याचक्षते - **ब्रह्मण इति** ॥ **अन्यस्य-** आकाशस्य । **'स इदमिति** ॥ यद्यपि 'इदं सर्वमसृजत' इति पठ्यते अथापि- 'स तपस्तप्त्वा' इत्यतोऽनुवृत्त स इति कर्तृवाचकपदसहितमुदाहृतम् । आदिना 'पुरुषात्प्रकृतिर्जगदण्डम्' इत्यादिर्गृह्यते । परमात्मन एवानादित्वे श्रुतिमाहुः- [२]**'आत्मा वा' इत्यादि** ॥ **इत्यादिश्रुतिभ्य इति** ॥ आदिना 'आत्मैवेदमग्र आसीत्' (बृ.३.४.१) इत्यादिः गृह्यते । इदं भाष्यं सौत्रशब्देभ्य इत्येतत्पदार्थविवरणमात्रपरम् । अतो नान्यत्रान्वयमपेक्षते ॥ ६ ॥

अनुत्पत्तिश्रुतिर्ब्रह्मणि मुख्या, अन्यत्रामुख्येति सिद्ध्यर्थमनुमानेनापि ब्रह्मण एवानादित्वमन्येषां सादित्वं च साधयितुं सूत्रम्-

---

१. **स इदमिति**(तै.उ.२.१४) **स** परमात्मा **इदं** प्रमितं **सर्वं** जगत् **असृजत** इत्यर्थः ।

२. **आत्मा वा इति** ॥ (ऐ.आ.२.४.१) **इदमग्रे** अस्य जगतोऽग्रे प्रलये **आत्मा वै** नारायण एव **एकः** प्रधानः **आसीत्** इत्यर्थः । **सदेवेति** ॥ (छा.६.२.१) **सोम्य** हे श्वेतकेतो इदमग्रे प्रलये, **सदेव** ब्रह्मैव, स्वातन्त्र्येण **आसीत्**, तत् ब्रह्म **एकमेव** स्वसजातीयभेदशून्यं, स्वगतगुणक्रियादिभेदहीनं च, **अद्वितीयं** समाधिकशून्यमित्यर्थः । **इदं वा अग्रे इति** ॥ (तै.ब्रा.२.२) **इदम्** अस्य जगतः **अग्रे किञ्चन** विष्णुरमादिभ्योऽन्यत् **नासीत्** **वै** प्रसिद्धमित्यर्थः ॥ ६ ॥

(ब्रह्म अनुत्पत्तिमत् अविभक्तत्वात्)

## ॥ ॐ यावद्विकारं तु विभागो लोकवत् ॐ ॥ ७ ॥

विभागविकारशब्दौ कर्मघञन्तौ । विभक्ते वस्तुनि अल्पशक्तिदर्शनात् विभागपदमल्पशक्तिमल्लक्षकम् । यावद्विकारमित्यत्र यावच्छब्दोऽवधारणे । 'यावदवधारणे' इति अव्ययीभावः । तुशब्दः अर्थसिद्धहेतुसमुच्चये । अयमर्थः- **यावद्विकारं** विक्रियमाण एव उत्पद्यमानपदार्थ एव विकारोऽल्पशक्तिमान् **लोकवत्** लौकिकघटादिवदिति ॥ अवधारणेनानुत्पद्यमानोऽल्पशक्तिमान्नेति लभ्यते । अनेन व्याप्तिबोधकसूत्रेण इमौ प्रयोगौ सूचितौ- 'वियदादिकमुत्पत्तिमत् अल्पशक्तिमत्त्वात् घटवत्', 'ब्रह्म नोत्पत्तिमदल्पशक्तिमत्त्वाभावात् व्यतिरेकेण घटवत्' इति ॥ 'विभक्तत्वाच्च विकारित्वम्' इति भाष्यं तु सूत्रार्थे नान्तर्भवति, किन्तु तात्पर्यकथनपरमिति बोध्यम् ॥ यद्वा, विकारविभागशब्दौ भावघञन्तौ । समासः पूर्ववत् । यावच्छब्दः समनियतत्वरूपावधारणपरः । तुरवधारणे । अयमर्थः- **विभागोऽल्पशक्तिः यावद्विकारम्** उत्पत्तिसमनियत एव **लोकवत्** इति ॥ शेषं पूर्ववत् ॥ **तन्त्रदीपिकायां** पक्षान्तरमप्युक्तम् । तथाहि- वियदिति वर्तते ॥ तच्चोपलक्षणमाकाशादेः । तुः उक्तानुक्तसमुच्चये, हेतौ च । अयमर्थः- तु यतः वियत् आकाशादिकं **विभागोऽ**ल्पशक्तिमत् अतस्तु **यावद्विकारम्** उत्पत्तिमदेव निगमनत्वाच्चावधारणम्, अनुक्तसमुच्चयार्थकतुशब्देन ब्रह्म नोत्पत्तिमदविभक्तत्वाल्लोकवत् व्यतिरेकेण घटादिवदिति ॥ अत्र पक्षे- विभक्तत्वाच्च विकारित्वमिति भाष्यं सूत्रार्थे अन्तर्भूतमेव ॥

**विभक्तत्वाच्च विकारित्वं युक्तम् । विकारिण एव हि विभक्ता लोके दृश्यन्ते ।**

**'एकोऽविभक्तः परमः पुरुषो विष्णुरुच्यते ।**
**प्रकृतिः पुरुषः कालस्त्रय एते विभागतः ॥**
**चतुर्थस्तु महान् प्रोक्तः पञ्चमाऽहङ्कृतिर्मता ।**
**तद्विभागेन जायन्त आकाशाद्याः पृथक्पृथक् ॥**
**यो विभागी विकारः स सोऽविकारः परो हरिः ।**
**अविभागात्परानन्दो नित्यो नित्यगुणात्मकः ।**
**विभागो ह्यल्पशक्तित्वं न तदस्ति जनार्दने ॥' इति बृहत्संहितायाम् ।**

॥ इति वियदधिकरणम् ॥

भा. ॥प्रतिज्ञाहेतू बहिरेवोक्त्वा हेतोरप्रयोजकत्वनिरासार्थं सूत्रं व्याप्तिपरतया व्याचक्षते- **विभक्तत्वाच्चेत्यादिना** ॥ वियदादेरिति शेषः । विकारित्वम्- उत्पत्तिमत्त्वम् । **युक्तमिति** ॥ अविभक्तत्वादविकारित्वं ब्रह्मणो युक्तमित्यपि बोध्यम् । **विकारिण एवेति** ॥ हि यतो विकारिण एव विभक्ता दृश्यन्ते लोके अतो युक्तमित्यन्वयः । सूत्रार्थे स्मृतिं चाहुः- [1]**एक इति** ॥ **बृहत्संहितायामिति** ॥ बृहत्संहितायामित्युक्तेरित्यर्थः ॥ अस्यापि युक्तमित्यत्रान्वयः ॥ ७ ॥ अ.१ ॥

**॥ इति वियदधिकरणम् ॥**

---

१. **एकोऽविभक्त इति** ॥ यतः **विष्णुरेक एव परमः पुरुषः**, अतः स एक एव **अविभक्त उच्यते** । **प्रकृतिः** चिदचित्प्रकृती, **पुरुषो** जीवचैतन्यं, **कालः** तत्प्रवाहः, **एते त्रयः विभागतः** विभागवत्त्वेन प्रोक्ताः । **महान्** महत्तत्वाभिमानी चतुर्मुखस्तु विभक्तेषु **चतुर्थः प्रोक्तः** तत्त्वेन परिगणितः, एतत्त्रितयसृष्ट्यनन्तरं महतः सृष्टिरिति हृदयम् । यद्वा, प्रकृत्यादिपदत्रयेण श्री-भू-दुर्गाख्यश्रीरूपाणि ग्राह्याणि । अत्र पक्षे प्रकृत्यादिपदानि नित्यत्वेनाशङ्कितान्यस्याप्युपलक्षणम् । **अहंकृतिः** रुद्रस्तु **पञ्चमा** पञ्चमीत्वेन मता, **तद्विभागेन स** चासौ विभागश्चेति विग्रहः । **आकाशाद्याः पृथक्पृथक् तद्विभागेन** तेन विभक्तत्वेन हेतुना **जायन्ते** । प्रकृतिगुणेभ्यो महान् महतोऽहं तत आकाशः, आकाशाद्वायुः वायोरग्निरित्यादिक्रमेण जायन्त इति बोध्यम् । विभक्तत्वेऽपि कुतो जन्मेत्यत उक्तं - **य इति** ॥ यो विभागी विभागवान् स विकारः विकृतः, सः अविभक्तत्वेनोक्तो **हरिः अविभागाद्** हेतोः **अविकारः** अनादिनित्यः, **परो** लोकविलक्षणः, **परानन्दः** पूर्णानन्दः, **नित्यः** स्वरूपतो देहतश्चोत्पत्त्यादिरहितः, **नित्यगुणात्मकश्च** भवति **हि** यतः **विभागः** प्रकृते विभागशब्दवाच्यः, **अल्पशक्तित्वम्** अल्पसामर्थ्यं विवक्षितम्, **तच्च** अल्पसामर्थ्यं च जनार्दने **नास्ति** अत इत्यर्थः ॥ ७ ॥ अ.१ ॥

## २. मातरिश्वाधिकरणम्

**'अथ ह नित्याश्चानित्याश्च तेजोऽबन्नान्याकाश इति तान्यनित्यानि वायुर्वाव नित्यो वायुना हि सर्वाणि भूतानि नेनीयन्ते' 'अथ ह चेतनाश्चाचेतनाश्च तेजोऽबन्नान्याकाश इति तान्यचेतनानि वायुर्वाव चेतनो वायुना हि सर्वाणि भूतानि विज्ञायन्ते', 'कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् । ते वायवे मनवे बाधितायाऽऽवासयन्नुषसं सूर्येण' (ऋ.सं.७-९१-१), 'सा वा एषा देवताऽनादिर्योऽयं पवत इति ।' 'यस्य नादिर्न मध्यं नान्तो नोदयो न निम्लोचः' इत्यादिश्रुतिभ्यो वायोरनुत्पत्तिरित्यतो ब्रवीति–**

अत्र नये वाय्वनुत्पत्तिश्रुतिविरोधपरिहारः । मुख्यवायुर्विषयः । जनिमान्न वेति सन्देहः । न जनिमानिति पूर्वपक्षः ।। अभ्यधिकाशङ्काप्रदर्शनाय पूर्वपक्षे श्रुतीराहुः । **[१]अथ हेत्यादि ।। वायो-रिति ।।** मुख्यवायोरित्यर्थः । नन्वाकाशानन्तरं भूतवायोरेवोपस्थितिस्स्यान्न मुख्यवायोरिति चेन्न । पूर्वनये अभिमानिनोऽपि प्रसक्त्या तदभिमानिमुख्यवायुविषये अनुत्पत्तिश्रुतिसत्त्वेन, तद्विषये शङ्कोदयात्, भूतवायुविषये अनादित्वश्रुतेरभावाच्च । नन्वेवमप्यग्रिमपादे 'श्रेष्ठश्च'(२.४.९) इति सूत्रेण

---

१. **अथ हेति ।। नित्याश्च** अनादयश्च **अनित्याश्च** सादयश्च उच्यन्त इति शेषः । **अन्नं** पृथिवी, **आकाशो** भूताकाशः, **इति तानि** एतानि **अनित्यानि, वायुर्वाव नित्यः,** वायुरेवाऽतिशयितनित्यत्ववान् । **हि** यतः **सर्वाणि भूतानि** पृथिव्यादिचतुष्टयं **वायुनैव नेनीयन्ते** स्वस्वकार्येषु भृशं प्रेर्यन्ते अत इत्यर्थः । **अथ हेति ।। चेतनाः**अतिशयितचैतन्यवन्तः, **अचेतनाः** अल्पचैतन्यवन्तः, उच्यन्त इति शेषः । **तेज** इति तदभिमानिदेवता **इति तानि** इत्येतानि अल्पचैतन्यवन्ति, **वायुर्वाव** वायुरेव **चेतनः** अतिशयितचैतन्यवान् **हि** यतः **वायुनैव सर्वाणि भूतानि विज्ञायन्ते** विशेषेण ज्ञायन्ते अत इत्यर्थः । **कुविदङ्गेति ।।** व्या.(२४२.पु.) **सा वा एषेति ।।** श्रुत्यन्तरमिदम् ।। **पवते** शोधयति कल्मषमिति शेषः । सञ्चरतीति वा । शिष्टं स्पष्टम् । **इतिशब्दः** श्रुत्यन्तर्गतः। 'योऽयं पवते' इति श्रुतिः बृहदारण्यके 'अयं वै ब्रह्म योऽयं पवते' इति बह्वृचब्राह्मणे च वर्तते । **यस्येति ।। आदिः** उत्पत्तिः, **मध्यं** मध्यमवयः, **अन्तो** नाशः, **उदयः** प्रादुर्भावः, **निम्लोचः** तिरोभावश्च, **यस्या** देवताया एते **न** सन्ति सा वायुदेवता इति सम्बन्धः । पूर्वपक्षसिद्धान्तयोः समानोऽर्थः, अथापि **स्वरूपनित्यत्वपरा सिद्धान्ते** ।

मुख्यवायोरप्यनुत्पत्तिसमर्थनं कुत इति चेन्न । अत्र केवलश्रुत्या प्राप्तानुत्पत्तेः परिहारेऽपि सयुक्तिकश्रुतिप्राप्तानुत्पत्तेः परिहारार्थं तत्सूत्रारम्भात् तत्र पादे मुख्यप्राणविषयेऽनेकविचारस्य करिष्यमाणत्वेनानुत्पत्तेरपि प्रकरणवशादुक्तेः ॥

**(मुख्यवायुरुत्पत्तिमान्)**

**॥ ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥ ८ ॥**

अयमर्थः- **मातरिश्वा मुख्यवायुः एतेन 'अश्रुतेः' इत्याद्युक्तयुक्तिसमुदायेन व्याख्यातः गौणानुत्पत्तिमानिति कथितो भवतीति ॥ यद्वा 'मातरिश्वा' 'वायुर्वाव नित्यः' इत्यादिवाय्वनुत्पत्तिश्रुतिः 'एतेन' 'गौण्यसम्भवात्' इत्याद्युक्तहेतुतः 'व्याख्यातः' गौणार्थत्वेन विवृतो भवतीति ॥**

**एतेन मुख्यामुख्यानुत्पत्तिवचनेन विभक्तत्वाच्च वाय्वनुत्पत्तिश्रुतिरपि व्याख्याता ।**

**'नित्यः परमनित्यश्च तथाऽनित्यः परस्तथा ।
चतुर्धैतज्जगत्सर्वं परानित्यं तु पार्थिवम् ॥**

**अनित्यानि तु भूतानि नित्यो वायुरुदाहृतः
परस्तु नित्यः पुरुषः प्रकृतिः काल एव च ॥'
'एतच्चतुष्टयं विष्णुः स्वयं नित्यः परात्परः ।
प्रतिव्यूह्य व्यूह्य चासावतीत्य च जनार्दनः ।
धारयत्यनिशं देवो नित्यानन्दैकलक्षणः ॥' इति कौर्मे ॥**

**॥ इति मातरिश्वाधिकरणम् ॥**

भा. ॥ सूत्रार्थमाहुः- **एतेनेति** ॥ सौत्रपदमिदम् । तस्य विवरणं मुख्यामुख्येत्यादि । मुख्यानुत्पत्तिः-स्वरूपस्य । अमुख्यानुत्पत्तिस्तद्देहादेः । तयोर्बोधक-'अथ ह वाव नित्यानि' इत्यादिश्रुत्यर्थः । यद्वा, मुख्यस्य मुख्यवायोः अमुख्यानुत्पत्तिबोधकाथहेतिवचनेनेत्यर्थः । अनुत्पत्तिश्रुतिः ब्रह्मण्येव मुख्या अन्यत्रामुख्येति 'स्याच्चैकस्य'(२.३.५) इति सूत्रे उक्तत्वेन चेत्यर्थः । **विभक्तत्वाच्चेति** ॥ अल्पशक्तिमत्त्वाच्चेत्यर्थः । चेन 'न वियदश्रुतेः', 'अस्ति तु' इत्यादिहेतोः सङ्ग्रहः । **वाय्वनुत्पत्ति-**

**श्रुतिरपीति** ॥ अपिना मुख्यवायोः सङ्ग्रहः । उभयविषये हेतुर्बुध्या विवेक्तव्यः । ननु वायोर्मुख्यानुत्पत्त्यभावे उत्पत्त्यनुत्पत्तिमद्भ्यो वियदादिभ्यो विशेषरूपेणानुत्पत्तिर्मुख्यचेतनत्वादिति युक्तिश्च विरुध्यते अत आहुः- **[1]नित्य इति** ॥ **कौर्म इति** ॥ तत्रेत्युक्तेरित्यर्थः । 'अथ नित्याश्च' इति श्रुतिविरोधो नेति शेषः ॥ ८ ॥ अ.२ ॥

**॥ इति मातरिश्वाधिकरणम् ॥**

---

१. **नित्य इति** ॥ **एतत्** प्रमितमखिलं **जगत् नित्यं- परमनित्यम्- अनित्यं- परानित्यं चेति चतुर्धा,** तत्र **पार्थिवं** पृथिव्युपलक्षितभूतकार्यं संसृष्टमण्डादि, **परानित्यम्** । **भूतानि** असंसृष्टान्तर्गतानि आकाशादीनि तदभिमानिविनायकादीनि, **अनित्यानि तु** । भूतानामुपचयमात्रनाशः अभिमानिनामभिमानमात्रनाश इति अण्डान्तर्गतापेक्षया विलक्षणनाशवत्त्वं द्योतयितुं तुशब्दः । **वायुः** मुख्यवायुः **नित्य उदाहृतः** प्रमाणेषु । **पुरुषः प्रकृतिः काल एव च** पुरुषादिशब्दत्रयप्रतिपाद्यश्री-भू-दुर्गात्मिका चित्प्रकृतिः, **परो नित्यस्तु** स्वरूपतो देहतश्च नित्यः । **विष्णुस्तु परात्परो** नित्यः परमनित्याच्छ्रीतत्वादपि नित्यः । यतो **नित्यानन्दैकलक्षणो** नित्यानन्दैकस्वरूपो, देवः द्योतनादिमान्, **जनार्दनः, एतच्चतुष्टयं** विश्वं **व्यूह्य** अनित्यादिभेदेन विभज्य, राशीकृत्य वा, **स्वयं प्रतिव्यूह्य** स्वात्मानं जगत्प्रति नियामकत्वेन विभज्य, व्यूहशः कृत्वा, विभागेन तत्र प्रविश्य वा, **अतीत्य च गुणैः** शक्त्या चातिक्रम्य तदुत्तमो भूत्वेति यावत् । **अनिशं** सदा एतत् जगत् **स्वयं** स्वतन्त्र एव **धारयति** धत्ते पुष्णाति च अत इत्यर्थः ॥ ८ ॥ अ. २ ॥

## ३. असम्भवाधिकरणम्

अत्र नये परब्रह्मोत्पत्तिश्रुतिविरोधपरिहारः। ब्रह्म विषयः, जनिमन्न वेति संशयः। जनिमदिति पूर्वपक्षः॥

(असतः सदुत्पत्तिश्रुतिः विष्णोः प्राणजनिपरा)

॥ ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ ॥ ९ ॥

तुरेवार्थे, समुच्चये च। अनुपपत्तेरित्यावर्तते। अयमर्थः- सतः परब्रह्मणः **असम्भवस्तु** अनुत्पत्तिरेव **अनुपपत्तेः** कारणानुपपत्तेः कारणाभावादिति यावत्। अनुपपत्तेस्तु असतः कारणत्वानुपपत्तेरेव। अत एव आपातप्रतीते श्रुत्यर्थे अनुपपत्तेश्चेति एवार्थकतुशब्द आकाशादेरिव (भागशः) उत्पत्तिरनुत्पत्तिश्चेति पक्षव्यावर्तकः। ननु उत्पत्त्यसंभवादित्यनुवृत्त्या सिद्धेऽसंभवपदं व्यर्थमिति चेन्न- 'न वियत्' (२.३.१) इति सूत्रेऽनुवृत्तासम्भवादित्यस्य नञा सम्बन्धादत्रापि तथा स्यादिति शङ्काऽभावायासम्भव इत्युक्तेः। न च सतोऽनुपपत्तेः, 'न वियदश्रुतेः' इति सूत्र्यतामिति वाच्यम्। तथा सति 'तेजोऽत' इति सूत्रे अतःपदेन सतः परामर्शानापत्तेः। न च 'तेजोऽतः' इत्यादीन्यपि सूत्राणि 'न वियदश्रुतेः' इति सूत्रात्प्राक् क्रियन्तामिति वाच्यम्। आकाशवाय्वोः छान्दोग्ये उत्पत्त्यनुक्तेः युक्तेश्च नोत्पत्तिरिति शङ्कायाः प्रबलत्वेन प्राथम्यात्। तेजआदिविषये तु नोत्पत्तिशङ्का किन्तु विष्णुः कारणं न वेत्येव शङ्केति (तस्य) प्राथम्यायोगात्॥

**'असद्वा इदमग्र आसीत्। ततो वै सदजायत' (तै.उ.२–७) 'असतः सदजायत' (ऋ.सं.१०–७२–२) इत्यादिश्रुतिभ्यः सतोऽप्युत्पत्तिरिति चेन्न। अनुत्पत्तिरेव सतः। तुशब्देनोक्तव्यवस्थामपाकरोति। न ह्यसतः सदुत्पद्यते। अदृष्टत्वादनुपपत्तेः। 'तद्वा एतद् ब्रह्माहुर्बृहति बृंहयति चेति। तद्वा एतदसदाहुः न ह्यासादयति कश्चनेति। तद्वा एतत्परमाहुः परतो हि तदुदीक्ष्यते' इति श्रुतेरसच्छब्दो ब्रह्मवाची। 'देवानां पूर्वे युगेऽसतः सदजायतेति ब्रह्म वा असत् सद्वाव प्राणः प्राणो वाव महान् सह ओजो बलमित्याचक्षते' इति पैङ्गिश्रुतिः।**

**'त्वं देव शक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविरादधेऽजः।**
**ततो वयं सत्प्रमुखा यदर्थे बभूविमाऽत्मन् करवाम किं ते॥'**

**इति भागवते (३.६.२८)।**

**'अजायमानो बहुधा विजायते' (तै.आ.३–१३) इति च ।**
**'प्रत्यक्षत्वं हरेर्जन्म न विकारः कथञ्चन ।**
**पुरुषः प्रकृतिः कालो महानित्यादिषु क्रमात् ॥**
**विकार एव जननं पुरुषे तद्विशेषणम् ।**
**परतन्त्रविशेषो हि विकार इति कीर्तितः ॥' इति (च) पाद्मे ॥**

**'अविकारोऽपि भगवान् सर्वशक्तित्वहेतुतः ।**
**विकारहेतुकं सर्वं कुरुते निर्विकारवान् ॥**
**शक्तिशक्तिमतोश्चापि न विभेदः कथञ्चन ।**
**अविभिन्नाऽपि सेच्छादिभेदैरपि विभाव्यते ॥' इति भागवततन्त्रे ॥**

**॥ इति असम्भवाधिकरणम् ॥**

**भा.** ॥ श्रुत्युपन्यासपूर्वपक्षकथनपूर्वकं सूत्रं व्याचक्षते- **'असद्वा इत्यादिना ॥ श्रुतिभ्य इति** ॥ ननु 'असतः सदजायत' इति श्रुत्याऽसतः कारणत्वशङ्कैव नोदेति युक्तिपादे (२.१) असन्नये (२.२.८) श्रुतिप्राप्तस्यासत्कारणत्वस्य समयपादे (२.२) समयप्राप्तस्य च 'नासत'(२.२.२६) इत्यनेन निषेधात् न चासतो जगत्कारणत्वं नेत्युक्तं पूर्वत्र, अत्र तु विष्णुकारणत्वं नेत्युच्यते इति भेद इति वाच्यम् । असतो जगत्कारणत्वखण्डनयुक्तेरेवात्रापि वक्ष्यमाणत्वेन विशेषाभावाच्छङ्काया अयोगात्, इति चेन्न । पादद्वयेऽभावस्य कारणत्वनेत्युक्तमत्र तु - तुच्छस्य विष्णुं प्रति कारणत्वमस्त्विति शङ्कायाः सम्भवात् । किञ्च 'सदजायत' इति श्रुत्या विष्णोरुत्पत्तिरस्तीत्येव शङ्का न तूत्पत्तौ कारणं पुरस्कृत्येत्यभ्युपगमात् । न च असत इति प्रथमं श्रवणात् तत्परित्यागेन कथं शङ्का स्यादिति वाच्यम् । 'जन्म' (१.१.२) नये 'तद्विजिज्ञासस्व' इत्यादौ 'यतो वा' इत्यादिपूर्ववाक्यविस्मरणेन शङ्कादर्शनात् प्रकृते विष्णूत्पादककारणाभावादित्येव समाधानाच्च । न चैवं भाष्ये 'न ह्यसतः सदुत्पद्यते' इत्यसतः कारणत्वमाशङ्क्य 'अदृष्टत्वात्' इत्यादिना समाहितं तत्कथमुपपद्यत इति वाच्यम् । असतः सदुत्पद्यते इति नेति श्रुत्यर्थेन विषयस्यादृष्टत्वेनापातप्रतीतेऽर्थेऽनुपपत्तेरिति तद्भाष्यार्थेन तदुपपत्तेः । न चैवमपि

१. **असद्वा इति** ॥ (तै.उ. २.१५) **असतः सदिति** ॥ (ऋ.१०.७२.२) पूर्वपक्षे अनयोरापातप्रतीत एवार्थः। **सिद्धान्ते तु** - 'तद्वा' इत्यादिना भाष्य एव वक्ष्यते ।

'असतः सदजायत' इति श्रुतेः कथमसतः सज्जायेतेत्युत्तरवाक्येनापातेऽर्थेऽप्रामाण्योक्ते कथं तया श्रुत्या शङ्केति वाच्यम् । पूर्वपक्षिणः पूर्वोत्तरवाक्यापर्यालोचनस्योक्तत्वात् । **तुशब्देनेति** ॥ एवार्थकेनेति भावः । **उक्तव्यवस्थामिति** ॥ देहादिविषयभेदेनोत्पत्तिरनुत्पत्तिश्चेति व्यवस्थां शङ्कां ब्रह्मविषयेऽपाकरोति सूत्रकार इत्यर्थः ॥

ननु तर्हि 'असतः सदजायत' इति श्रुतेरप्रामाण्यं स्यादतस्तां श्रुतिं श्रुत्यन्तरेण व्याख्यान्ति- [1]**तद्वा इत्यादिना** ॥ **असदाहुरिति** ॥ एतावतैवासच्छब्दस्य ब्रह्मपरत्वे सिद्धे पूर्वोत्तर-वाक्योदाहारणमसच्छब्दस्यान्यपरत्वशङ्कावारणाय । नन्वसच्छब्दस्य ब्रह्मपरत्वे सिद्धेऽपि सच्छब्दस्यापि ब्रह्मपरत्वात्कथं समस्तश्रुत्यर्थवर्णनमित्यतो सच्छब्दो वायुवाचीति श्रुत्यैवाहुः- [2]**देवानामिति** ॥ अनयैव श्रुत्या सदसच्छब्दयोरुक्तार्थसिद्धौ 'असदाहुः' इति श्रुत्युदाहरणमसच्छब्दनिर्वचनार्थम् । सच्छब्दवाच्यवायोर्ब्रह्मोत्पन्नत्वे स्मृतिं चाहुः-[3]**त्वमिति** ॥ **भागवत इति** ॥ **यतः** पैङ्गिश्रुतिरस्ति, भागवत इत्युक्तेश्च । सच्छब्दितो वायुः असच्छब्दितब्रह्मोत्पन्न इति श्रुत्यर्थ इति शेषः । ननु

---

१. **तद्वा इति** ॥ **तदेतत्** नारायणाख्यचैतन्यं **ब्रह्मेत्याहुः वै** प्रसिद्धं यतः **बृहति** स्वयं वर्धते **च** यतश्च **बृंहयति** अन्यान्वर्धयति यथायोग्यं पूरयतीति हेतोः **तदेतत् असत् असच्छब्दवाच्यमाहुः हि** यतः **कश्चन** कोऽपि अतिसमर्थोऽपि **नासादयति** विशरणादिकं न प्रापयति इत्यतो हेतोः **तदेतत् ब्रह्म परमाहुः हि** यतः **परतो** रमादेः **उत्** उच्चत्वेन **तत्** ब्रह्म **ईक्ष्यते** ज्ञायतेऽत इत्यर्थः ।

२..**देवानामिति** ॥ 'देवानां पूर्वे युगेऽसतः सदजायत' इत्यृक्प्रतीकं गृहीत्वा 'ब्रह्म वेत्यादिना व्याख्याति श्रुतिः। **पूर्वे युगे** आदिसृष्टिकाले **देवानां** मध्ये प्रथमं **सत्** सच्छब्दवाच्यम् **असतो** असच्छब्दवाच्यतः सकाशाद् **अजायत** इत्यर्थक-ऋचि **असत्** असच्छब्दवाच्यं **ब्रह्मैव सत्** सच्छब्दवाच्यः **प्राणो वाव** मुख्यवायुरेव यतः **प्राणं** मुख्यवायुं **महान्** पूज्यः **सहः** सहनशक्तिमान् **ओजो बलमित्याचक्षते** ज्ञानिनः अतो महत्वादिगुणवत्वादित्यर्थः ।

३.**त्वं देवेति** (भाग. ३.६.२८) **हे देव त्वं कविः** अतिक्रान्तदर्शी **अजो** देहतोऽप्युत्पत्तिशून्यश्च. **तु** तथापि **गुणकर्मयोनौ** गुणानां ज्ञानादीनां, सत्त्वादीनां वा, कर्मणामदृष्टादीनां योनौ हेतुभूतायाम् **अजायां** जननरहितायां **शक्त्यां** भार्यायां चित्प्रकृतौ **रेतः** गर्भम् आदधे आधत्त । **ततः** अनन्तरं **ततः** चित्प्रकृतिसकाशात् **सत्प्रमुखाः** मुख्यवायुप्रभृतयः **वयं यदर्थे** यत्कार्याय **बभूविम, हे आत्मन्** स्वामिन् **वयं ते** तव **तत्** कार्यं **किं करवाम** न किमपीत्यर्थः । यद्यपि तात्पर्ये सत्प्रभृतयो महदादय इति व्याख्यातम् । तथाऽपि वायोरपि महत्तत्वाभि-मानित्वान्न विरोधः ।

रामकृष्णादिरूपेण हरेर्जनिमत्त्वात् कथं जन्माभाव इत्यत आहुः- [1]**अजायमान इति ॥ इति चेति ॥ सत्त्वादिति** शेषः । अजायमानस्य कीदृशं जन्मेत्यत आहुः- [2]**प्रत्यक्षत्वमिति** ॥ जगत्कारणत्वादीश्वरस्य कथं विकाराभाव इत्यत आहुः- [3]**अविकारोऽपीति ॥ भागवततन्त्र इति** ॥ तत्र इत्युक्तेरित्यर्थः । तथा च - हि यतः अदृष्टत्वादनुपपत्तेर्नासतः सदुत्पद्यते अत इति श्रुत्यर्थात्, **इति च** इति श्रुतिसत्त्वाच्च, पाद्मे इत्युक्तेश्च, भागवततन्त्रे इत्युक्तेश्च, अनुत्पत्तिरेव सतः अत इति चेन्नेति योजना ॥९॥अ.३ ॥

**॥ इति असम्भवाधिकरणम् ॥**

---

१. **अजायमान इति** ॥ व्या.(२०६-पु.)

२. **प्रत्यक्षत्वमिति ॥ प्रत्यक्षत्वम्** अवताररूपेणापरोक्षविषयत्वमेव । **पुरुषः** चेतनः, **प्रकृतिः** अचित्प्रकृतिः, **कालः** तत्प्रवाहः, **महान्** महत्तत्त्वम्, आदिना अहङ्कारादयः **एषु क्रमात्** पूर्वतत्वापेक्षया उत्तरोत्पन्नतत्वोपचयाधिक्यक्रमात् **विकार एव जननं, पुरुषे चेतने तद्विशेषणं** तेन विकारेण विशेषितत्वमेव भवति । स च विकारः विकारिवस्त्वभिमानकृतः तर्हि जीवस्य नोत्पत्तिरत आह- **परतन्त्रेति ॥ परतन्त्रविशेषो हि** पारतन्त्र्यविशषोऽपि **विकार इति कीर्तित** इत्यर्थः ।

३. **अविकारोऽपीति** ॥ कर्तृत्वहेतुकसुखदुःखाद्यनुभवरूपविकाररहित एव **निर्विकारवान्** विकाररहित-ज्ञानानन्दादिधर्मवान् **भगवान् सर्वशक्तित्वहेतुतः** सर्वशक्तिमत्त्वनिमित्तेन **विकारहेतुकं** विक्रियमाण-प्रकृत्युपादानकं **सर्वं** जगत् **कुरुते** । सर्वशक्तित्वहेतुत इत्यनेन शक्तियोगेन कर्तृत्वमुक्तं तन्नाशे कर्तृत्वं न स्यादत आह- **शक्तीति ॥ शक्तिशक्तिमतोः विभेदः** (भेदः) **कथञ्चन** केनापि निमित्तेन **नास्ति । अविभिन्नाऽपि** एकापि **सा शक्तिः इच्छादिभेदैरपि** इच्छात्वादिभेदकधर्मैः तद्वत्त्वेनेति यावत्, इच्छादिशब्दैश्च, **विभाव्यते** 'परास्य शक्तिः' इति श्रुतौ अभिधीयत इत्यर्थः ॥ ९ ॥

## ४. तेजोऽधिकरणम्

अत्र नये तेजसो वायूत्पन्नत्व (पर) श्रुतिविरोधपरिहारः । तेजो विषयः । ब्रह्मोत्पन्नं वायूत्पन्नं वेति संशयः, वायूत्पन्नमिति पूर्वपक्षः ।।

(विष्णोरेव तेजस उत्पत्तिः)

### ।। ॐ तेजोऽतस्तथा ह्याह ॐ ।। १० ।।

तु इति वर्तते । स एवार्थेऽप्यर्थे च । श्रुतिः उत्पद्यत इति शेषः । अयमर्थः- तेजः तु अग्निरपि अतः तु ब्रह्मत एव उत्पद्यते एव । हि यतः, श्रुतिः 'तत्तेजोऽसृजत' इति श्रुतिः, तथा उक्तप्रकारेण आह अत इति ।।

**'वायोरग्निः'(तै.उ.२-१) इत्यादेर्नान्यत उत्पत्तिर्ग्राह्या । अत एव परात्तदपि जायते । तत्तेजोऽसृजत इति ह्याह । कारणत्वेनेत्युक्तेऽप्यमुख्यतयाऽन्येषामपि शब्दोक्तत्वात् पुनरुक्तिरुभयकारणत्वनिवृत्त्यर्थम् ।**

।। इति तेजोऽधिकरणम् ।।

भा. ।। श्रुत्युपन्यासपूर्वं पूर्वपक्षमाहुः- [1]**वायोरग्निरिति** ।। **अन्यतः**- ब्रह्मान्यवायोः । **उत्पत्तिरिति** ।। तेजस इति शेषः । **ग्राह्या** वाच्या । **अत एवेति**- अनुवृत्ततुशब्दार्थकशब्दसहितं सौत्रपदम् । तस्य विवरणं- **परादिति** ।। परब्रह्मत इत्यर्थः । **तदपि**- तेजोऽपि । [2]**तत्तेजोऽसृजतेतीति** ।। इतिशब्द आवर्तते । हि यतः 'तत्तेजोऽसृजत' इति श्रुतिः परादेव तदपि जायत इत्याह अतोऽन्यत उत्पत्तिर्न ग्राह्येत्यन्वयः । सिद्धान्ते 'वायोरग्निः' इत्यादिश्रुतिः वाय्वादीनां द्वारकारणत्वपरा । ननु पूर्वाध्याये 'कारणत्वेन'(१.४.४) इति नये वाय्वादिशब्दानां ब्रह्मपरत्वोक्त्या तेजसो ब्रह्मजातत्वं सिद्धमत इदमधिकरणं व्यर्थमित्यत आहुः- **कारणत्वेनेति** ।। तत्र नये उक्तेऽपि 'वायोरग्निः' इत्यादिना वाय्वादिशब्दानां ब्रह्मपरत्वोक्त्या तेजआदीनां ब्रह्मजन्यत्वे सिद्धेऽपीत्यर्थः । **अन्येषामपि**- वाय्वादीनामपि । **शब्दोक्तत्वात्** श्रुतिस्थवाय्वादिशब्दवाच्यत्वाङ्गीकारात् **उभयकारणनिवृत्त्यर्थं** ब्रह्म तदन्यवाय्वाद्युभयकारणत्वशङ्कानिवृत्त्यर्थम् । पुनरुक्तिः- पुनरधिकरणारम्भ इत्यर्थः ।। १० ।। अ.४।।

।। इति तेजोऽधिकरणम् ।।

---

१. **वायोरग्निरिति** ।। (तै.उ.२.३) स्पष्टोऽर्थः पूर्वपक्षे । **सिद्धान्ते तु** - वायोर्द्वारकारणत्वमर्थः ।।

२. **तत्तेज इति** ।। (छा.६.२.३) **तत्** ब्रह्म **तेजः** भूतम् **असृजत** वायुद्वारा असृजत तेजोऽभिमानिनीं लक्ष्मीं साक्षादेवासृजतेत्यर्थः ।। १० ।। अ. ।। ४ ।।

रामकृष्णादिरूपेण हरेर्जनिमत्वात् कथं जन्माभाव इत्यत आहुः- [1]**अजायमान इति ॥ इति चेति ॥** सत्त्वादिति शेषः । अजायमानस्य कीदृशं जन्मेत्यत आहुः- [2]**प्रत्यक्षत्वमिति** ॥ जगत्कारणत्वादीश्वरस्य कथं विकाराभाव इत्यत आहुः- [3]**अविकारोऽपीति ॥ भागवततन्त्र इति** ॥ तत्र इत्युक्तेरित्यर्थः । तथा च - हि यतः अदृष्टत्वादनुपपत्तेर्नासतः सदुत्पद्यते अत इति श्रुत्यर्थात्, **इति च** इति श्रुतिसत्त्वाच्च, पाद्मे इत्युक्तेश्च, भागवततन्त्रे इत्युक्तेश्च, अनुत्पत्तिरेव सतः अत इति चेन्नेति योजना ॥९॥अ.३ ॥

**॥ इति असम्भवाधिकरणम् ॥**

---

१. **अजायमान इति** ॥ व्या.(२०६-पु.)

२. **प्रत्यक्षत्वमिति** ॥ **प्रत्यक्षत्वम्** अवताररूपेणापरोक्षविषयत्वमेव । **पुरुषः** चेतनः, **प्रकृतिः** अचित्प्रकृतिः, **कालः** तत्प्रवाहः, **महान्** महत्तत्त्वम्, आदिना अहङ्कारादयः **एषु क्रमात्** पूर्वतत्वापेक्षया उत्तरोत्पन्नतत्वोपचयाधिक्यक्रमात् **विकार एव जननं, पुरुषे चेतने तद्विशेषणं** तेन विकारेण विशेषितत्वमेव भवति । स च विकारः विकारिवस्त्वभिमानकृतः तर्हि जीवस्य नोत्पत्तिरत आह- **परतन्त्रेति ॥ परतन्त्रविशेषो हि** पारतन्त्र्यविशषोऽपि **विकार इति कीर्तित** इत्यर्थः ।

३. **अविकारोऽपीति** ॥ कर्तृत्वहेतुकसुखदुःखाद्यनुभवरूपविकाररहित एव **निर्विकारवान्** विकाररहित-ज्ञानानन्दादिधर्मवान् **भगवान् सर्वशक्तित्वहेतुतः** सर्वशक्तिमत्त्वनिमित्तेन **विकारहेतुकं** विक्रियमाण-प्रकृत्युपादानकं **सर्वं** जगत् **कुरुते** । सर्वशक्तित्वहेतुत इत्यनेन शक्तियोगेन कर्तृत्वमुक्तं तन्नाशे कर्तृत्वं न स्यादत आह- **शक्तीति ॥ शक्तिशक्तिमतोः विभेदः** (भेदः) **कथञ्चन** केनापि निमित्तेन **नास्ति । अविभिन्नाऽपि** एकापि **सा शक्तिः इच्छादिभेदैरपि** इच्छात्वादिभेदकधर्मैः तद्वत्त्वेनेति यावत्, इच्छादिशब्दैश्च, **विभाव्यते** 'परास्य शक्तिः' इति श्रुतौ अभिधीयत इत्यर्थः ॥ ९ ॥

## ४. तेजोऽधिकरणम्

अत्र नये तेजसो वायूत्पन्नत्व (पर) श्रुतिविरोधपरिहारः । तेजो विषयः । ब्रह्मोत्पन्नं वायूत्पन्नं वेति संशयः, वायूत्पन्नमिति पूर्वपक्षः ॥

(विष्णोरेव तेजस उत्पत्तिः)

**॥ ॐ तेजोऽतस्तथा ह्याह ॐ ॥ १० ॥**

तु इति वर्तते । स एवार्थेऽप्यर्थे च । श्रुतिः उत्पद्यत इति शेषः । अयमर्थः- तेजः तु अग्निरपि अतः तु ब्रह्मत एव उत्पद्यते एव । हि यतः, श्रुतिः 'तत्तेजोऽसृजत' इति श्रुतिः, तथा उक्तप्रकारेण आह अत इति ॥

**'वायोरग्निः' (तै.उ.२-१) इत्यादेर्नान्यत उत्पत्तिर्ग्राह्या । अत एव परात्तदपि जायते । तत्तेजोऽसृजत इति ह्याह । कारणत्वेनेत्युक्तेऽप्यमुख्यतयाऽन्येषामपि शब्दोक्तत्वात् पुनरुक्तिरुभयकारणत्वनिवृत्त्यर्थम् ।**

॥ इति तेजोऽधिकरणम् ॥

भा. ॥ श्रुत्युपन्यासपूर्वं पूर्वपक्षमाहुः- **[1]वायोरग्निरिति** ॥ **अन्यतः**- ब्रह्मान्यवायोः । **उत्पत्तिरिति** ॥ तेजस इति शेषः । ग्राह्या वाच्या । **अत एवेति**- अनुवृत्ततुशब्दार्थकशब्दसहितं सौत्रपदम् । तस्य विवरणं- **परादिति** ॥ परब्रह्मत इत्यर्थः । **तदपि**- तेजोऽपि । **[2]तत्तेजोऽसृजतेतीति** ॥ इतिशब्द आवर्तते । हि यतः 'तत्तेजोऽसृजत' इति श्रुतिः परादेव तदपि जायत इत्याह अतोऽन्यत उत्पत्तिर्न ग्राह्येत्यन्वयः । सिद्धान्ते 'वायोरग्निः' इत्यादिश्रुतिः वाय्वादीनां द्वारकारणत्वपरा । ननु पूर्वन्याये 'कारणत्वेन' (१.४.४) इति नये वाय्वादिशब्दानां ब्रह्मपरत्वोक्त्या तेजसो ब्रह्मजातत्वं सिद्धमत इदमधिकरणं व्यर्थमित्यत आहुः- **कारणत्वेनेति** ॥ तत्र नये उक्तेऽपि 'वायोरग्निः' इत्यादिना वाय्वादिशब्दानां ब्रह्मपरत्वोक्त्या तेजआदीनां ब्रह्मजन्यत्वे सिद्धेऽपीत्यर्थः । **अन्येषामपि**- वाय्वादीनामपि । **शब्दोक्तत्वात्** श्रुतिस्थवाय्वादिशब्दवाच्यत्वाङ्गीकारात् **उभयकारणनिवृत्त्यर्थं** ब्रह्म तदन्यवाय्वाद्युभयकारणत्वशङ्कानिवृत्त्यर्थम् । पुनरुक्तिः- पुनरधिकरणारम्भ इत्यर्थः ॥ १० ॥ अ.४॥

॥ इति तेजोऽधिकरणम् ॥

---

१. **वायोरग्निरिति** ॥ (तै.उ.२.३) स्पष्टोऽर्थः पूर्वपक्षे । **सिद्धान्ते तु** - वायोर्द्वारकारणत्वमर्थः ॥

२. **तत्तेज इति** ॥ (छा.६.२.३) **तत्** ब्रह्म **तेजः** भूतम् **असृजत** वायुद्वारा असृजत तेजोऽभिमानिनीं लक्ष्मीं साक्षादेवासृजतेत्यर्थः ॥ १० ॥ अ. ॥ ४ ॥

## ५. अबधिकरणम्

अत्र नयेऽपां तेजोजन्यत्वश्रुतिविरोधपरिहारः । आपो विषयः । तेजसो जायन्ते ब्रह्मणो वेति संशयः। तेजसो जायन्ते इति पूर्वपक्षः ॥

(अबादयः विष्णुजाताः)

॥ ॐ आपः ॐ ॥ ११ ॥

तु, तथा ह्याह, अतः, श्रुतिः, उत्पद्यते इति वर्तते । उत्पद्यन्त इति विपरिणामः । अयमर्थः- **आपः** अतस्तु ब्रह्मत एव उत्पद्यन्ते हि यतः श्रुतिः 'ब्रह्मैवेदम्' इति श्रुतिः । तथा ब्रह्मत एव अपामुत्पत्तिमाह इति ॥ आप इत्युपलक्षणं वाय्वादेरपि, अत 'अबादि' इति भाष्यानुरोधात् ॥

**'ब्रह्मैवेदमग्र आसीत्तदपोऽसृजत तदिदं सर्वम्' इति श्रुतेः**

**'अग्नेरापः' (तै.उ.२–१) इत्युक्तेऽपि ब्रह्मण एवाबादिसृष्टिः ।**

**'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।**
**खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' (मु.उ.२–१–३)**

**इत्यादि च ।**

**'कर्ता सर्वस्य वै विष्णुः एक एव न संशयः ।**
**इतरेषां तु सत्ताद्या यत एव तदाज्ञया ॥' इति भविष्यत्पुराणे ॥**

**'वामने च–**

**'तत्र तत्र स्थितो विष्णुः तत्तच्छक्तीः प्रबोधयन् ।**
**एक एव महाशक्तिः कुरुते सर्वमञ्जसा ॥' इति ।**

**घर्मात्स्वेदादिदृष्टेः पुनः प्रतिषेधः ॥ ॥ ११ ॥**

॥ इति अबधिकरणम् ॥

**भा.** ॥ श्रुत्युपन्यासपूर्वं सूत्रार्थमाहुः- [१]**ब्रह्मैवेदमिति** ॥ **ब्रह्मण इति** ॥ पञ्चमीयम् । अबादीत्यादिना वाय्वादेर्ग्रहणम् । **सृष्टिरिति** ॥ भवतीति शेषः । वाय्वादेः ब्रह्मजातत्वे मानमाहुः- [२]**एतस्मादिति** ॥ ननु विष्णोरिवान्यस्यापि कारणत्वं कुतो न स्यादत आहुः- [३]**कर्तेति** ॥ ननु तर्हि 'आपस्तेजसो जायन्ते अस्वात्स्वेदादिवत्' इति युक्तियुक्त 'अग्नेरापः' इति श्रुतेः का गतिरित्यत आहुः- **वामने च**- [४]**तत्र तत्रेति** ॥ तथा च अग्नेराप इत्युक्तेऽपि इति श्रुतेः, च यतः इत्यादिवचनम्, पुराणे आज्ञयेतीति वचनम्, वामने अञ्जसेति वचनमस्ति अतश्च, **ब्रह्मण** एवाबादिसृष्टिर्भवतीत्यन्वयः । नन्वग्नेः कारणत्वमपि पूर्वन्यायेन निरस्तमत आहुः- **घर्मादिति** ॥ जडघर्मात्तदभिमानितश्चेत्यर्थः । **दृष्टेरपीति** ॥ दृष्टिः दर्शनमूलकाऽशङ्का । ल्यब्लोपे पञ्चमी । शङ्का च वाय्वादेर्द्वारकारणत्वेऽप्यब्विषयेऽपि तेजसः साक्षादेव कारणत्वं घर्मात्स्वेदोत्पत्तिदर्शनादिति ॥ अनुमानप्रयोगस्तूक्तः । अयमर्थः- **दृष्टेः** घर्महेतुकस्वेदादिदर्शनमूलशङ्कामपेक्ष्य पुनः प्रतिषेधः शङ्कापरिहारार्थमधिकरणान्तरारम्भ इति ॥ अत्र शङ्काकाले घर्मपदेन अभिमानिनोऽपि ग्रहणेन घर्मस्य स्वेदोपादानत्वेऽपि निमित्तत्वाभावात्तदृष्टान्तेन शङ्कोत्थितिः कथमिति परास्तम् । सिद्धान्तेऽपि घर्मस्वेदस्थले घर्मान्तर्गतपरमात्मन एव स्वेदकर्तृत्वमिति न तद्विरोधः ॥ ११ ॥ अ. ५ ॥

**॥ इति अबधिकरणम् ॥**

---

१. **ब्रह्मैवेदमिति** ॥ **इदमग्रे** अस्य जगतोऽग्रे प्रलये, **ब्रह्मैवासीत्** **तत्** ब्रह्म **अपोऽसृजत इदं सर्वं** भूतवाय्वादिकं **तत्** ब्रह्म **असृजत** इत्यर्थः । **अग्नेराप इति** ॥ (तै.२.३) स्पष्टोऽर्थः पूर्वपक्षे । **सिद्धान्ते** तु- अपामग्निः द्वारकारणमिति तात्पर्यार्थः ।

२. **एतस्मादिति** ॥ (आ.३.३) **एतस्मात्** परब्रह्मणः, **प्राणो** मुख्यवायुः **जायते, मनः सर्वेन्द्रियाणि च** जडचेतनरूपाणि च जायन्ते, **खम्** आकाशः, **वायुः** भूतवायुः, **ज्योतिः** तेजः, **आपः विश्वस्य धारिणी पृथिवी** च, जायन्त इत्यर्थः ।

३. **कर्तेति** ॥ **विष्णुरेक एव सर्वस्य** जगतः **कर्ता संशयो** नास्ति, **यतः इतरेषां** वाय्वादीनां **सत्तायाः** सत्ताप्रतीतिशक्तयः **तदाज्ञया** विष्णोराज्ञामात्रेण भवन्ति अत इत्यर्थः ।

४. **तत्र तत्रेति** ॥ **तत्र तत्र** अग्न्यादिषु **सर्वम्** अबादिकम् **अञ्जसा** सम्यक् **कुरुते** अग्न्यादिद्वारा करोतीत्यर्थः। शिष्टं स्पष्टम् ॥ ११ ॥ अ.५ ॥

## ६. पृथिव्यधिकरणम्

**'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति । ता अन्नमसृजन्त'(छां.उ.६–२) इत्यद्भ्योऽन्नसृष्टिः श्रूयते । 'अद्भ्यः पृथिवी'(तै.उ.२–१) इति कुत्रचित्पृथिवीसृष्टिः । अतो विरुद्धत्वादप्रामाण्यमित्यतो वक्ति–**

अत्र नये अपामन्नकारणत्वपृथिवीकारणत्वश्रुत्योर्विरोधपरिहारः । आपो विषयः, अन्नस्य द्वारकारणं पृथिव्या वा इति संशयः । अन्नस्येति पूर्वपक्षः ॥ श्रुत्युदाहरणपूर्वं पूर्वपक्षमाहुः- **ता 'आप इत्यादि** ॥ **कुत्रचित्**- तैत्तिरीये । **पृथिवीसृष्टिरिति** ॥ श्रूयत इति वर्तते । **अत इति** । प्राप्ताप्रामाण्यपरिहारार्थमित्यर्थः ॥

**('ता अन्नमसृजन्त' इत्यत्रान्नशब्देन पृथिवीव्योक्ता)**

**॥ ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॐ ॥ १२ ॥**

हेतुबलादन्नमिति लभ्यते । एवार्थकतुशब्दो वर्तते । तत्रेति शेषः । अयमर्थः- तत्र 'ता अन्नमसृजन्त' इति श्रुतौ अन्नम् अन्नशब्दवाच्यं **पृथिवी** तु पृथिव्येव **अधिकाररूपशब्दान्तरादिभ्यः** अधिकारात् भूतसृष्टिप्रकरणस्थत्वात् रूपात् 'यत्कृष्णं तदन्नस्य' इति श्रुत्या कृष्णरूपवत्त्वेन प्रतिपादनात् शब्दान्तरात् 'आपश्च पृथिवी चान्नम्' इत्यादिश्रुत्यन्तरात् आदिना युक्तेर्ग्रहणं युक्तिश्च 'वेदो न अप्रमाणम् अपौरुषेयत्वात्' इत्यादिरिति ॥

**पृथिवी तत्रान्नशब्देनोच्यते । भूताधिकारत्वात् । कार्ष्ण्यप्रचुरा च पृथिवी । नान्नस्य तथा विशेषः । 'आपश्च पृथिवी चान्नम्'(ऐ.आ.२–३–१) । 'पृथिवी वा अन्नम् । (तै.उ.३–९) । 'ता आपोऽन्नमसृजन्त पृथिवी वा अन्नम्'इत्यादिशब्दान्तराच्च । आदिशब्दाद्युक्तिः अपौरुषेयत्वेनादोषस्य वाक्यस्य नाप्रामाण्यमित्यादि । कौर्मे च–**

---

१. **ता आप इति** ॥ (छा.६.२.४) **ताः** तेजोभिमानिरमाजन्यः **आपः** अब्भूताभिमानी मुख्यवायुः **ऐक्षन्त** व्यचिन्तयत् वयं **बह्व्यः** बहुरूपवत्यः **स्याम** भवेम तदर्थं **प्रजायेमहि** सृज्यं जगत् प्रजनयाम इति इत्थं विचिन्त्य **ता** आपः मुख्यप्राणः **अन्नं** अन्नाभिमानिनं रुद्रं, तदभिमन्यमानपृथिवीं च, **असृजत** इत्यर्थः **सिद्धान्ते** । पूर्वपक्षे तु- प्रतीत एवार्थः । **अद्भ्य इति** ॥ (तै.उ.२.३) उभयत्र स्पष्टोऽर्थः ।

**'विरोधो वाक्ययोर्यत्र नाप्रामाण्यं तदेष्यते ।**
**यथा विरुद्धता न स्यात्तथार्थः कल्प्य एतयोः' इति ॥**

**'रक्तोऽग्निरुदकं शुक्लं कृष्णैव पृथिवी स्वतः ।**
**नाभिपद्माभिसम्बन्धात्पीता सेत्यभिधीयते ।**
**क्षत्ररक्ताभिसम्बन्धाद्रक्तोदकबहुत्वतः ।**
**शुक्लत्वमेत्येवमेव वर्णान्तरमतिर्भवेत् ॥**
**विष्णुवीर्याभियोगाच्च पीतत्वं भुव इष्यते ।**
**स्वर्णवीर्यो हि भगवाननादिः परमेश्वरः ॥' इति व्योमसंहितायाम् ॥**

**॥ इति पृथिव्यधिकरणम् ॥**

**भा.** ॥ सूत्रार्थमाहुः- **पृथिवीत्यादिना ॥ तत्र** - 'अन्नमसृजन्त' इति श्रुतौ । ननु कृष्णरूपस्य प्रसिद्धान्नेऽपि सम्भवोऽत आहुः- **कार्ष्ण्यप्रचुरेति** ॥ च यतः पृथिवी कार्ष्ण्यप्रचुराऽत इत्यर्थः । **अन्नस्य-** प्रसिद्धान्नस्य । तथा पृथिवीवत् विशेषः कार्ष्ण्यप्राचुर्यम् । शब्दान्तरमाहुः- [1]**आपश्चेत्यादि** ॥ ननु 'ता अन्नमसृजन्त' इति श्रुतेरर्थान्तरं कुतः कल्प्यते विरुद्धश्रुतिद्वयस्याप्रामाण्यं कुतो न स्यादत आहुः- **आदिशब्दादिति** ॥ सूचितेति शेषः । युक्तिं विवृण्वन्ति- **अपौरुषेयत्वेनेति** ॥ **नाप्रामाण्यमिति** ॥ 'वेदो न अप्रमाणं दोषशून्यत्वात् प्रत्यक्षवत्' इत्यनुमानप्रयोगः । **इत्यादीति** ॥ सामान्ये नपुंसकं, युक्तावभेदेनास्यान्वयः । आदिना आप्तवाक्यत्वसदृशत्वादेर्ग्रहणम् । विरोधे वेदाप्रामाण्यं नेत्यत्र स्मृतिमाहुः- **कौर्मे च- विरोध**[2] इति ॥ **एतयोरितीति** ॥ कौर्मे इत्युक्तेश्च नाप्रामाण्यमिति सम्बन्धः।

---

१. **आपश्चेति** ॥(ऐ.आ.२.३.१) **आपः पृथिवी च अन्नम्** अन्नशब्देनोच्यन्त इत्यर्थः । **पृथिवी वा इति** ॥ (तै.उ. ३.६) स्पष्टोऽर्थः । **ता आप इति** ॥ श्रुत्यन्तरमिदम् । **'अन्नमसृजन्त'** इति स्वघटकस्य अन्नशब्दस्य व्याख्यानम्- **पृथिवी वा अन्नमिति** ॥

२. **विरोध इति** ॥ **यत्र** विषये **विरोधः** आपाततः प्रतीयत इति शेषः । तदा **तत्र** विषये **नेष्यते नाङ्गीक्रियते**, एतयोः विरुद्धतया प्रतीतार्थकयोरित्यर्थः । शिष्टं स्पष्टम् ।

पृथिवी काष्र्ण्यप्रचुरेत्यत्र स्मृतिमाहुः- [1]**रक्तेत्यादि** ॥ **संहितायामिति** ॥ तत्रेत्युक्तेः पृथिवी काष्र्ण्यप्रचुरेति सम्बन्धः ॥ १२ ॥ अ.६ ॥

**॥ इति पृथिव्यधिकरणम् ॥**

१. **रक्त इति** ॥ **अग्निः** तेजः, **स्वतो रक्तः** रक्तरूपवान्, **सा पृथिवी**, **नाभिपद्माभिसम्बन्धात्** स्वाधारभूत-विष्णुसम्बन्धिनाभिपद्मदलसंयोगात्, **पीता** इत्यपि पीतवर्णयुक्तापीति **अभिधीयते**, **क्षत्ररक्ताभिसम्बन्धात्** दुष्टक्षत्रियरक्तसम्बन्धात्, **रक्तेत्यपि अभिधीयते**, **उदकबहुत्वतः** बहूदकसम्बन्धात्, **सा शुक्लत्वं** शुक्लरूपमपि, **एति** प्राप्नोति । **एवमेव** उपाधिविशेषसम्बन्धादेव, **वर्णान्तरगतिः** पृथिव्या वर्णान्तरप्राप्तिः, **भवेत्** । **विष्णुवीर्याभियोगाच्च** विष्णुवीर्यविकाराण्डद्वारा वीर्यसम्बन्धाच्च । **हि** यतः **अनादिः परमेश्वरः भगवान् विष्णुः स्वर्णवीर्य** इत्यर्थः । शिष्टं स्पष्टम् ॥ १२ ॥ अ.६. ॥

## ७. तदभिध्यानाधिकरणम्

**'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकस्तेनान्नेनाप्यायस्व' (म.ना.उ.१६–२) इत्यादिनाऽन्यः संहर्ता प्रतीयत इत्यतो ब्रूते–**

अत्र नये रुद्रस्य संहारकर्तृत्वश्रुतिविरोधपरिहारः । सङ्गतिः पूर्वनयवत् । अधिभूताधिदैवानि विषयः। 'किं भगवता लीयन्ते रुद्रेण वा' इति संशयः । रुद्रेणेति पूर्वपक्षः ॥ श्रुत्युपन्यासपूर्वं पूर्वपक्षमाहुः- **'प्राणानामित्यादिना ॥ अन्य इति ॥** विष्ण्वन्यो रुद्र इत्यर्थः ॥

**(सर्वसंहर्ता विष्णुः)**

### ॥ ॐ तदभिध्यानादेव तु तल्लिङ्गात्सः ॐ ॥ १३ ॥

**अभिध्यानमिच्छा । तुः अभिध्यानगतसञ्जिहीर्षात्वरूपविशेषद्योतकः । एव अनादेरपि बन्धस्येच्छया निवृत्तौ किमु सादेर्जगत इति, लिङ्गादेव संहर्तृत्वे सिद्धे किमु स्पष्टश्रुतिभ्य इति कैमुत्यस्य च द्योतकः । संहर्तेति शेषः । तदिति भिन्नं पदं लुप्तषष्ठ्यन्तं च । यथायथमावृत्तिः । अयमर्थः- तदभिध्यानादेव तस्याभिध्यानादेव अनादिबन्धनिवर्तकत्वेन 'तस्याभिध्यानात्' इति श्रुतिसिद्धात् तल्लिङ्गादेव तस्य सादिजगत्संहर्तृत्वस्य लिङ्गात् ज्ञापकात् तस्य विष्णोः अभिध्यानादेव तु सञ्जिहीर्षारूपेच्छा अत एव कैमुत्येन 'यमप्येति भुवनं साम्पराये' 'इदं सर्वमसृजत' इत्यादिस्पष्टश्रुतिभ्यश्च तस्य सादेर्जगतः संहर्ता सः एव विष्णुरेवेति ॥**

**'तस्याभिध्यानाद्योजनात्तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे.उ.१–१०) इति बन्धलयस्य तदभिध्याननिमित्तत्वलिङ्गात्तत्कर्तृकत्वं प्रतीयते, किमु सादेर्जगत इत्येतस्मादेव सर्वसंहारकर्ता विष्णुरिति प्रतीयते, किमु 'यमप्येति भुवनं साम्पराये स नो हरिर्घृतमिहायुषेऽत्तु देवः' । 'य इदं सर्वं विलापयति स हरिः परः परमात्मा' इत्यादिश्रुतिभ्य इति एवशब्दः ।**

> **'स्रष्टा पाता च संहर्ता स एको हरिरीश्वरः ।**
> **स्रष्टृत्वादिकमन्येषां दारुयोषावदुच्यते ॥**

१. प्राणानामिति ॥ व्या. (२०० पु.)

**एकदेशक्रिया चात्र न तु सर्वात्मनेरितम् ।**
**सृष्ट्यादिकं समस्तं तु विष्णोरेव पराद्भवेत् ॥' इति च स्कान्दे ॥**

**'निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः ।**
**हिरण्यगर्भश्शर्वश्च कालाख्यारूपिणस्तव ॥' इति च भागवते (१०.७२.८) ॥**

**'स ब्रह्मणा विसृजति स रुद्रेण विलापयति सोऽनुत्पत्तिरलय एक एव हरिः परः परानन्दः' इति च महोपनिषदि ॥**

**॥ इति तदभिध्यानाधिकरणम् ॥**

**भा.** ॥ श्रुत्युदाहरणपूर्वं सूत्रार्थमाहुः- **'तस्येति** ॥ **निवृत्तिरितीति** ॥ इति श्रुतिसिद्धादित्यर्थः । **बन्धलयस्य-** अनादिबन्धलयस्य । **तदभिध्यानादिति** ॥ विष्णुनिष्ठसञ्जिहीर्षानिमित्तकत्वरूपा-ल्लिङ्गादनुमानात् । **तत्कर्तृकत्वं-** विष्णुकर्तृत्वम् । समासान्तविधेरनित्यत्वान्न कप्प्रत्ययः । **प्रतीयते-** अनुमीयते । अनुमानप्रयोगस्तु- 'अनादिबन्धलयो विष्णुकर्तृकः तदिच्छानिमित्तकत्वात् यद्यदिच्छानिमित्तकं तत् तत्कर्तृकं यथा घटः' इति । **जगत इतीति** ॥ इति कैमुत्यन्यायसहितादि-त्यर्थः । **एतस्मादेवेति** ॥ अनादिबन्धलयकर्तृत्वरूपादेवेत्यर्थः । **संहारेति** ॥ (सादेर्जगत इत्यत्रा-न्वेति ।) **प्रतीयते-** अनुमीयते । अनुमानप्रयोगस्तु- 'विष्णुः सादिजगत्संहारकर्ता कैमुत्यन्यायसहिताऽ-नादिबन्धलयकर्तृत्वात् व्यतिरेकेण घटवत्' इति । **किम्विति** ॥ लिङ्गादेव संहर्तृत्वे सिद्धे किमु वक्तव्यम् 'इत्यादिस्पष्टश्रुतिभ्य इत्यर्थम् एवशब्दः सूचयतीति शेषः । स्पष्टश्रुतिमेवाहुः- [2]**यमपीत्यादि** ॥

---

१. **तस्याभिध्यानादिति** ॥ (श्वे.१.१०) तस्मिन् भगवति, **तस्य** मनसः, संयोजनात्, **भूयश्च** भूयोभूयः, **तत्वभावात्** तस्य भगवतः यथार्थध्यानात्, यथार्थज्ञानाच्च, जातादिति शेषः । **अभिध्यानात्** मध्यमप्रसादरूप-भगवदिच्छाविशेषात् । **अन्ते** परिपाककाले, अप्रारब्धकर्मावसाने सति, **विश्वमायानिवृतिः** विश्वबन्धकारण-मायाशब्दितस्वगुणाच्छादिकाद्यावरणनिवृत्तिर्भवतीत्यर्थः ।

२. **यमप्येतीति** ॥ (घृत.सू.) व्या.(१५४-पु.) ॥ **य इदमिति** ॥ यः विलापयति लयं प्रापयति इत्यर्थः । अन्यत्स्पष्टम् ॥

प्राणानां ग्रन्थिरिति श्रुतेर्गतिमाहुः- [1]**स्रष्टेत्यादिना** ॥ पारतन्त्र्यस्य संहारे द्वारकारणत्वमिति भावेन तत्र स्मृतिमाहुः- [2]**निमित्तमिति** ॥ स्मृतेर्मूलश्रुतिश्चाहुः- **स ब्रह्मणा इति** ॥ **महोपनिषदिति** ॥ स्कान्द इत्युक्तेः, भागवते इत्युक्तेः, महोपनिषदि इत्युक्तेश्च, संहारकर्ता विष्णुरेवेत्यन्वयः । तथा च रुद्रो द्वारकारणमिति भावः ॥ १३ ॥ अ. ७॥

**॥ इति तदभिध्यानाधिकरणम् ॥**

---

१.**स्रष्टेति** ॥ **पाता** रक्षकः, **ईश्वरः** ईशेभ्यो ब्रह्मादिभ्यो वरः (श्रेष्ठः) **अन्येषां** ब्रह्मादीनां, **दारुयोषावत्** दार्वात्मक-स्त्रीप्रतिमावत्, अस्वातन्त्र्येणेति यावत् । **एकदेशक्रिया** जगदेकदेशकर्तृत्वं, **सर्वात्मना** क्रिया सर्वकर्तृत्वम् । **अत्र** श्रुत्यादौ **ईरितम्** उक्तं, **परात्** स्वातन्त्रादित्यर्थः । अन्यत्स्पष्टम् ॥

२. **निमित्तेति** ॥ (भाग.१०.७१.८) हे कृष्ण कालाख्यारूपिणः काल इत्याख्या रूपं च अस्य स्त इति तथा । तस्य, **ईशस्य तव, विश्वसर्गनिरोधयोः** प्रपञ्चस्य सृष्टौ, लये च, विषये **हिरण्यगर्भः** शर्वश्च, **निमित्तमात्रं** द्वारमात्रमित्यर्थः । उद्धववाक्यमेतत् ॥ **स इति** ॥ **स** हरिः **ब्रह्मणा** (चतुर्मुखेन) द्वारभूतेनेति शेषः, **विसृजति** विविधं सृजतीत्यर्थः । शिष्टं स्पष्टम् ॥ १३ ॥ अ.७ ॥

## ८. विपर्ययाधिकरणम्

**'अत एव हीदं परात्क्रमादुत्पद्यते क्रमाद्विलीयते नासावुदेति नास्तमेति' इति भाल्लवेयश्रुतौ क्रमाल्लयः प्रतीयते ।**

**'अक्षरात्परमादेव सर्वमुत्पद्यते क्रमात् ।**
**व्युत्क्रमाद्विलयश्चैव तस्मिन्नेव परात्मनि ॥'**

**इति चतुर्वेदशिखायां व्युत्क्रमाल्लयः प्रतीयते । अत आह—**

अत्र नये आदिसृष्टिक्रमेण लयबोधकश्रुतिविरोधपरिहारः । सङ्गतिः पूर्वनयेन, (२.३.७) 'जन्म'नयेन वा, अधिभूतादीनि विषयः, किमुत्पत्तिक्रमेण लीयन्ते उत व्युत्क्रमेणेति सन्देहः । क्रमेणेति पूर्वपक्षः ॥ सन्देहबीजश्रुतीराहुः- 'अत एवेत्यादि ॥

**(क्रमेणोत्पत्तिः व्युत्क्रमेण लयः)**

**॥ ॐ विपर्ययेण तु क्रमोऽत उपपद्यते च ॐ ॥ १४ ॥**

यथायथमावृत्तिविपरिणामौ । अयमर्थः- **क्रमस्तु** महाप्रलये 'क्रमाद्विलीयते' इति श्रुत्युक्तलयक्रमस्तु **अतः** सृष्टिक्रमात् **विपर्ययेण** वैपरीत्येन भवति । अतः चतुर्वेदशिखायां व्युत्क्रमाल्लयप्रतिपादनात् अतः पूर्वोत्पन्नपदार्थसामर्थ्याद् विपर्ययो लयक्रमवैपरीत्यम् **उपपद्यते च** उपपन्नश्च भवतीति ॥

**क्रमवचनमपि विपरीतक्रमापेक्षया ।**

**'कर्ता प्राणादिकस्यास्य हन्ता भूम्यादिकस्य च ।**
**यः क्रमाद्व्युत्क्रमाच्चैव स हरिः पर उच्यते ॥'**

**इत्यत एव भाल्लवेयश्रुतिवचनात् ।**

**'अनुरूपः क्रमः सृष्टौ प्रतिरूपो लये क्रमः ।**
**इति क्रमेण भगवान् सृष्टिसंहारकृद्धरिः ॥' इति च पाद्मे ॥**

---

१. **अत एवेति ॥ अत एव** पूर्वं प्रकृतादेव, **परात्** उत्तमात् हरेः, **इदं** जगत्, **क्रमात्** तत्त्वदेवतातारतम्यक्रमेणैव **उत्पद्यते** । क्रमेण लीयते । **असौ** परमात्मा, **नोदेति** नोत्पद्यते, **नास्तमेति** नाशं न प्राप्नोतीत्यर्थः ॥ **अक्षरादिति ॥ परमात्** हरेः । स्पष्टार्थोऽन्यः ।

**पूर्वेषां पूर्वेषां सामर्थ्याधिक्यादुपपद्यते च । वामने च–**

**'पूर्वेपूर्वे यतो विष्णोः सन्निधानं क्रमाधिकम् ।**
**सामर्थ्याधिक्यमेतेषां पश्चादेव लयस्तथा ।**
**व्याप्तिश्चाभ्यधिका तेषामत एव न संशयः॥' इति च ॥**

**॥ इति विपर्ययाधिकरणम् ॥**

**भा.** ॥ सूत्रतात्पर्यार्थमाहुः- **क्रमवचनमपीति** ॥ 'क्रमाद्विलीयते' इति वचनं तु विपरीतक्रमापेक्षया प्रवृत्तमित्यर्थः । उक्तार्थे श्रुतिमाहुः- [1]**कर्तेति** ॥ ननु सृष्टिक्रमेण लयश्रुत्या व्युत्क्रमश्रुतेरेव बाधः किन्न स्यादित्यत आहुः- [2]**अनुरूप इति** ॥ **पाद्म इति** ॥ तत्रेत्युक्तेः, विपरीतक्रमापेक्षयेत्यन्वयः । एवं च क्रमपदस्य विपरीतक्रमेऽपि प्रयोगात् क्रमे व्युत्क्रमपदाप्रयोगात् क्रमलयश्रुतेरेव स्वार्थपरित्याग उचित इति भावः । ननु लोके प्राय उत्पत्तिक्रमेणैव लयो दृश्यते न तु व्युत्क्रमेण पश्चात्तनवस्तुलयपर्यन्तं पूर्वोत्पन्नवस्तुनः स्थितौ सामर्थ्याभावादत आहुः- **उपपद्यते इति** ॥ विपरीतक्रमापेक्षया क्रमवचनमपीति वर्तते । ननु लोके पूर्वोत्पन्नस्यानन्तरवस्तुलयपर्यन्तं स्थितौ सामर्थ्याभावेऽपि आदिसृष्टवस्तुनि तदस्तीत्यत्र मानमाहुः- **वामने च** - [3]**पूर्वेपूर्वे इति** ॥ **इति चेति** ॥ वामन इत्युक्तेश्च सामर्थ्याधिक्यादित्यन्वयः ॥ १४ ॥ अ.८ ॥

॥ इति विपर्ययाधिकरणम् ॥

---

१. **कर्तेति** ॥ **यः प्राणादिकस्य** ब्रह्मादिकस्य **अस्य** जगतः **क्रमात् कर्ता,** भूम्यादेः कस्यचित् **व्युत्क्रमात् हन्ता** संहर्ता **स हरिरेव पर** इत्यर्थः ।

२. **अनुरूप इति** ॥ **अनुरूपः** उत्तमादिकः अधमावसानकः, **प्रतिरूपः** अधमादिकः उत्तमावसानक इत्यर्थः। शिष्टं स्पष्टम् ॥

३. **पूर्व इति** ॥ **पूर्वेपूर्वे** आदिसृष्टौ पूर्वोत्पन्नेषु चतुर्मुखादितत्वदेवेषु, **विष्णोः सन्निधानं** सन्निधिः **क्रमाधिकं** तारतम्यक्रमेणाधिकम् । यद्वा- **पूर्वेपूर्वे** पूर्वमुत्पन्नास्तत्वदेवाः, **विष्णोः क्रमाधिकं सन्निधानं** प्रतिमारूपाः, यतः, अतः **एतेषां सामर्थ्याधिक्यं, तथा व्याप्तिश्च** अण्डाद्बहिः व्याप्तिः । **तेषां** ब्रह्मादीनाम् **अभ्यधिका** तारतम्यक्रमेणाधिकैव, यतः एवम्, **अतः** तेषां **पश्चादेव लयः, नात्र संशय** इत्यर्थः ॥ १४ ॥ अ.८ ॥

# ९. अन्तराधिकरणम्

अत्र नये विज्ञानतत्वमनस्तत्वयोर्व्युत्क्रमेण लयाभावश्रुतिविरोधपरिहारः । पूर्वनयेन सङ्गतिः । अधिभूतादीनि विषयः । सर्वाणि व्युत्क्रमेण लीयन्ते, किं वा कतिपयानीति सन्देहः । 'अक्षरात्परमादेव' इति श्रुतेः, वक्ष्यमाणलिङ्गस्य च विरोधः सन्देहबीजम्, ।। पूर्वपक्षस्य सूत्र एव सत्त्वात् सूत्रं पठन्ति-

**(विज्ञानमनस्तत्त्वयोर्यथोत्पत्तिलय इत्यत्र मानाभावः)**

**।। ॐ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॐ ।। १५ ।।**

**अन्तराशब्दो विनार्थकः । विनार्थो भेदवान् । विपर्ययेणेति वर्तते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- विज्ञानमनसी अन्तरा** विज्ञानतत्व-मनस्तत्वप्रतियोगिकभेदवतां विपर्ययेण लयः विज्ञानमनसोः **क्रमेण 'प्राणान्मनः मनसश्च विज्ञानम्'** इति उक्तोत्पत्तिक्रमेण लयः **तल्लिङ्गात् 'यच्छेद्वाङ्मनसी'** इति श्रुतौ विज्ञानोत्पादकमनसो विज्ञाने लयदर्शनलिङ्गात् **इति चेन्न- अविशेषात्** विज्ञानमनसोः यथोत्पत्तिक्रमं लय इति विशेषवचनाभावात् इति ।

**'प्राणान्मनो मनसश्च विज्ञानम्' 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि' (कठ.उ.३–१३) इति लिङ्गाद्विज्ञानमनसी अन्तरा विपरीतक्रम इति चेत् – न, विशेषप्रमाणाभावात् ।। १५ ।।**

भा. ।। श्रुत्युपन्यासपूर्वं सूत्रार्थमाहुः- **'प्राणादिति ।। विज्ञानमिति ।।** इति पूर्वस्येति शेषः । मनसश्च विज्ञानमिति श्रुत्यवगतपूर्वोत्पत्तिकमनस इत्यर्थः । **आत्मनीतीति ।।** इति श्रुत्यवगतोत्पत्तिक्रमानुसारि-लयरूपलिङ्गादित्यर्थः । **विपरीतक्रम इति ।।** लय इति भावः ।। १५ ।।

---

१. **प्राणान्मन इति ।। प्राणात् मनः** मनस्तत्वं जातं, ततो विज्ञानतत्वं जातमित्यर्थः पूर्वपक्षे । **सिद्धान्ते तु- प्राणात्** मुख्यप्राणात्, मनोरूपेन्द्रियं, ततो वृत्तिज्ञानं जातमित्यर्थः । **यच्छेदिति ।।** (का.१.३.१३) पूर्वपक्षे मनश्शब्दस्तत्वपरः । **सिद्धान्ते तु- प्राज्ञो** ज्ञानी, **वाक्,** वाक्तत्वं, तदभिमानिनी उमा च , **मनसी** मनस्तत्वे, तदभिमानिनि रुद्रे, **यच्छेद्** उपरमत् तद्वशत्वात्तत्र लीयते, **तत्** मनः, **ज्ञान आत्मनि** विज्ञानतत्वाभिमानिन्यां वाण्यां लीयते इति ध्यायेदित्यर्थः । मनसीत्यत्र दीर्घश्छान्दसः ।। १५ ।।

विज्ञानमनस्तत्वयोर्यथोत्पत्तिक्रमं लयविषये 'यच्छेद्वाङ्मनसी' इति श्रुतेः सत्त्वात्कथं विशेषप्रमाणाभाव इति शङ्कावारणाय सूत्रम्-

**('मनश्च विज्ञानम्' इति श्रुतिर्न तत्त्वविषया)**

**॥ ॐ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॐ ॥ १६ ॥**

मनः, वृत्तिज्ञानं च, चरं चञ्चलत्वात् । मनस्तत्वं, विज्ञानतत्वं च, अचरं स्थिरत्वात् । चरे चाचरे च चराचराणि तानि व्यपाश्रयो विषयो यस्य सः चराचराणां व्यपाश्रयो, विषयतयाऽऽधार इति वा विग्रहः । भागवाचिभक्तशब्दात् 'तस्येदम्' इत्यणि भाक्तः । तद्व्यपदेश इति कर्मधारयः । 'चरेति चराचरेति' चैकदेश आवर्तते, विपरिणम्यते च । तुरेवार्थे, अप्यर्थे च । अयमर्थः- **चराचरव्यपाश्रयस्तु** उक्तमनआदिचतुष्टयविषयकत्वेन भासमानोऽपि **तद्व्यपदेशः** 'मनसश्च विज्ञानम्' इति श्रौतो व्यवहारः **भाक्तः तु** उक्तचतुष्टयैकदेशवृत्तिज्ञानमनोविषयक एव **स्यात्** नतु मनस्तत्वादिविषयकः चरस्य तु वृत्तिज्ञानस्यैव चराचरे जङ्गमस्थावरविषये **तद्भावभावित्वात्** । तद्भावेन मनोभावेनालोचनेनेति यावत् भावित्वात् जातत्वादिति ॥ 'यच्छेद्वाङ्मनसी' इति श्रुतिः तत्वलयपराऽपि 'मनसश्च विज्ञानम्' इति श्रुतिः तत्वविषया न भवति । अतो लिङ्गदर्शनं त्वदुक्तार्थे मानं न भवतीति भावः ।

**'मनसश्च विज्ञानम्' इति व्यपदेशश्चराचरेष्वालोचनाद्विज्ञानं भवतीति भागापेक्षया स्यात् । न विज्ञानतत्त्वापेक्षया । स्कान्दे च–**

**'परादव्यक्तमुत्पन्नमव्यक्तात्तु महांस्तथा ।**
**विज्ञानतत्त्वं महतस्समुत्पन्नं चतुर्मुखात् ॥**
**विज्ञानतत्त्वात्तु मनो मनस्तत्त्वाच्च खादिकम् ।**
**एवं बाह्या परा सृष्टिरन्तस्तद्व्यक्त्यपेक्षया ।**
**विपरीतक्रमो ज्ञेयो यस्मादन्ते हरेर्दृशिः ॥' इति ॥**

**॥ इति अन्तराधिकरणम् ॥**

भा. ॥ श्रुत्युपन्यासपूर्वसूत्रार्थमाहुः- **'मनसश्चेति** ॥ विज्ञानमिति ॥ वृत्तिज्ञानमित्यर्थः । **भागापेक्षया-**

---

१. मनसश्चेति ॥ व्या. (४२०-पु.) ॥

एकदेशापेक्षया । ननु 'मनसश्च विज्ञानम्' इति श्रुतिस्तत्वविषया किं न स्यादित्यत आहुः- **स्कान्दे च-** [२]**परादिति ॥ दृशिरितीति ॥** स्कान्द इत्युक्तेः, भागापेक्षया स्यादित्यन्वयः ॥ १६ ॥ अ. ९ ॥

**॥ इति अन्तराधिकरणम् ॥**

---

२. **परादिति ॥ परात्** परमात्मनः, **अव्यक्तं** श्रीतत्वाभिमन्यमानजडप्रकृत्याख्यं, **महान्** महत्तत्वं चतुर्मुखाभिमानिकं, **महतः** चतुर्मुखात् चतुर्मुखाभिमानिकमहत्तत्वात्, **विज्ञानतत्वं** वाण्यभिमन्यमानं विज्ञानतत्वं, **मनः** रुद्राभिमानिकं मनस्तत्वं, **खादिकम्** आकाशादिकमिन्द्रियादिकं वा । **एवम्** एवंरूपा सृष्टिः **बाह्या** अण्डाद्बहिःप्रदेशे जाता, **परा च** तारतम्यनियामकत्वेनोत्तमा च । विपरीतक्रमसृष्टेर्गतिमाह-**अन्तरिति ॥ विपरीतक्रमः** 'परादव्यक्तम्' इत्युक्तक्रमापेक्षया विपरीतक्रमबोधकश्रुतिः 'प्राणान्मनो मनसश्च विज्ञानम्' इत्यादिरूपा, **अन्तः** ब्रह्माण्डस्य देहस्य च, अन्तः **तद्व्यक्त्यपेक्षया** तादृशतत्वाभिमानिदेवताभिव्यक्त्यपेक्षया व्यक्तिपदमपरोक्षदृशेरप्युपलक्षणम्, तत्वाभिव्यक्तौ, ज्ञानिनां तदापरोक्ष्ये चेति यावत् । **यस्मात्** अधमतत्वाभिमानिदेवतादर्शनात्, **अन्ते** पश्चात्, **हरेर्दृशिः** अपरोक्षज्ञानं भवति । तादृशापरोक्ष्ये च इति शेष इत्यर्थः । **शिष्टं स्पष्टम्** । इदमाकूतं- ब्रह्माण्डान्तः तत्वदेवानामुत्पत्तिः । तारतम्यक्रमं विनाऽपि उत्तमस्य पश्चादधमस्य पूर्वमस्ति । किं च ज्ञानिनामपरोक्षसाधनतत्वदेवदर्शनमपि पूर्वमधमतत्वाभिमानिदेवदर्शनं तत उत्तम (तत्वाऽभिमानि)दर्शनमित्यपि अस्ति क्रमः । एतदुभयापेक्षया विपरीतक्रमबोधकश्रुतिप्रवृत्तिरिति ॥ १६ ॥ अ.९ ॥

## १०. आत्माधिकरणम्

अत्र नये परमात्मलयश्रुतिविरोधपरिहारः । अत्र परमात्मा विषयः, लीयते न वेति सन्देहः, परमात्मा लीयत इति पूर्वपक्षः ॥

(न विष्णोर्विलयः क्वापि)

**॥ ॐ नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॐ ॥ १७ ॥**

लीयत इति शेषः । अयमर्थः- **आत्मा** विष्णुः **न** लीयते । **अश्रुतेः** क्वापि ब्रह्मलयस्य निरवकाशतयाऽश्रवणात् **ताभ्यः** 'नित्यो नित्यानाम्' इत्यादिश्रुतिभ्यो **नित्यत्वाच्च** आत्मनो नित्यत्वावगमाच्चेति ॥

**'स इदं सर्वं विलाप्यान्तस्तमसि निलीनस्तद्विलाप्य व्युत्तिष्ठते स इदं सर्वं विसृजति विलापयति विस्थापयति प्रस्थापयत्याच्छादयति प्रकाशयति विमोचयत्येक एव' इति श्रुतेः परमात्माऽपि न लीयते । अश्रुतत्वाद्ब्रह्मलयस्य । निलीन-शब्देनापिहितत्वमुच्यते । तुच्छयेनाऽभ्वपिहितं यदासीत्',(ऋ.१०.१२९.३) इति श्रुतेः । 'स एतस्मिंस्तमसि निलीनः प्रकृतिं पुरुषं कालं चानुपश्यति नैनं पश्यति कश्चन' इति पैङ्गिश्रुतिः । 'नित्यो नित्यानां चेतनश्चेतनानाम्' (कठ.उ.५–१३) 'स नित्यो निर्गुणो विभुः परः परमात्मा', 'नित्यो विभुः कारणो लोकसाक्षी परो गुणैः सर्वदृक् शाश्वतश्च' इत्यादिश्रुतिभ्यो नित्यत्वाच्च ॥ १७ ॥**

**॥ इति आत्माधिकरणम् ॥**

भा. ॥ ब्रह्मलयशङ्कायां श्रुतिमाहुः- **'स इदमिति** ॥ व्युत्तिष्ठत इत्यन्तं वचनं शङ्काप्रापकम् । उत्तरभागोदाहरणं पूर्वभागस्येश्वरविषयकत्वज्ञापनार्थम् । **श्रुतेरिति** ॥ परमात्माऽपि लीयते श्रुतेरिति

---

१.**स इदमिति** ॥ **स** परमात्मा **एक एव इदं सर्वं** जगत् **विलाप्य** संहृत्य, स्वयं **तमस्यन्तः विलीनः** प्रकृतौ छन्नः, **तत्** प्रकृतिरूपं तमः **विलाप्य** आच्छाद्य स्वयं **व्युत्तिष्ठते** प्रादुर्भवति । अथ **इदं सर्वं विसृजति** विविधं स्थापयति । **विलापयति** संहरति । **प्रस्थापयति** प्रेरयति **आच्छादयति** अज्ञानेनावृतं करोति । **प्रकाशयति** अनुभवयुक्तं करोति । **विमोचयति** बन्धादिति शेष इत्यर्थः **सिद्धान्ते** । पूर्वपक्षे तु- **विलीनः** देहत्यागपूर्वकं प्रकृतौ लयं प्राप्तः । **व्युत्तिष्ठते** देहत उत्पद्यते इत्यर्थः । शिष्टं समानम् ॥

नेत्यन्वयः । ननु ब्रह्मलये 'अन्तस्तमसि' इति श्रुतेः सत्त्वात्कथं ब्रह्मलयस्याश्रुतत्वमत आहुः- **विलीनशब्देनेति** ॥ अपिहितत्वमाच्छादितत्वम् । तत्र समाख्याश्रुतिमाहुः- [1]**तुच्छेनेति** ॥ **श्रुतेरिति** ॥ श्रुतिसमाख्यानादित्यर्थः । विलीनत्वमपिहितत्वमित्यत्र श्रुत्यन्तरं चाहुः- [2]**स इति** ॥ **गौपवनश्रुतिरिति** ॥ यतः श्रुतिरस्ति अतश्चोच्यत इत्यन्वयः । ननु 'अन्तस्तमसि' इति श्रुतेरर्थान्तरकल्पनं कुतो लय एव किं न स्याद् ब्रह्मण इत्यतः श्रुतीराहुः- [3]**नित्य इति** ॥ **नित्यो विभुरिति** ॥ श्रुत्यन्तरमिदम् ॥ १७ ॥ अ. १० ॥

**॥ इति नात्माधिकरणम् ॥**

---

१. **तुच्छ्येनेति** ॥ व्या.(२८१-पु.) ॥

२. **स इति** ॥ **स** परमात्मा, **एतस्मिन्** प्रकृतिरूपे **तमसि विलीनः** छन्नः स्वयं प्रकृतिजीवकालान् **अनुपश्यति** । **एनं** तु न कोऽपि **पश्यति** इत्यर्थः ॥

३. **नित्य इति** ॥ (का.२.२.१३)**नित्यानां** स्वरूपतोऽविनाशिनां जीवानां सकाशात्, **नित्यः** देहतोऽपि नित्यः परमनित्य इति यावत् । नित्यानां नित्यत्वप्रदो वा । **चेतनानां** ज्ञातॄणां **चेतनः** परमचेतनः, चेतनत्वप्रदो वा, इत्यर्थः ॥ **स नित्य इति** ॥ **स** परमात्मा **निर्गुणः** सत्त्वादिगुणरहितः, **नित्यो** देहतोऽपि, **विभुः**, **परो** लोकविलक्षण इत्यर्थः ॥ **नित्य इति** ॥ **परः** परमात्मा, **नित्यो विभुः**, **कारणः** जगतः कारणं, **लोकसाक्षी** लोकस्य साक्षाद्द्रष्टा, **गुणैः** सत्त्वादिगुणेभ्यः, **परो** विलक्षणः, सत्त्वादिगुणमयदेहरहित इति यावत् । **सर्वदृक्** सर्वज्ञः, **शाश्वतः** निर्विकार इत्यर्थः ॥ १७ ॥ अ. १० ॥

## ११. ज्ञाधिकरणम्

**'नित्यो नित्यानाम्', (कठ.५-१३) इति जीवस्यापि नित्यत्वमुक्तम् । 'सर्व एते चिदात्मानो व्युच्चरन्ति' इत्युत्पत्तिरुच्यते । अतो विरोध इत्यत आह–**

अत्र नये जीवानुत्पत्तिश्रुतिविरोधपरिहारः । जीवो विषयः । उत्पत्तिमान्न वेति सन्देहः । नोत्पत्तिमानिति पूर्वपक्षः ॥ संशयबीजश्रुती आहुः- [1]**नित्य इत्यादि ॥**

**(जीवोऽपि विष्णोरुत्पद्यते)**

**॥ ॐ ज्ञोऽत एव ॐ ॥ १८ ॥**

**जानातीति ज्ञः इगुपधलक्षणः कप्रत्ययः । अत एवेत्यावर्तते । उत्पद्यत इति शेषः । एवोऽप्यर्थे च । अयमर्थः- ज्ञ एव जीवोऽपि अत एव प्रस्तुतपरमात्मन एव उत्पद्यते अत एव 'ते वा एते चिदात्मानः' इति श्रुतेरेवेति ॥**

**जीवोऽप्यत एव परमेश्वरादुत्पद्यते । शब्दादेव । 'ते वा एते चिदात्मानोऽविनष्टाः परं ज्योतिर्निविशन्त्यविनष्टा एवोत्पद्यन्ते न विनश्यन्ति कदाचन' इति च काषायणश्रुतिः ॥**

भा. ॥ सूत्रं व्याचक्षते- **जीवोऽपीति** ॥ जीवोत्पत्तौ श्रुतिमाहुः- [2]**ते वा इति** ॥ **श्रुतिरिति** ॥ इति या श्रुतिः तादृशशब्दादेवेत्यर्थः ॥ १८ ॥

**नन्वनादिनित्यस्योत्पत्तिः श्रुताऽपि कथमुपपद्यते इति शङ्कावारणाय सूत्रम्-**

**(उपाध्यपेक्षया जीव उत्पद्यते)**

**॥ ॐ युक्तेश्च ॐ ॥ १९ ॥**

---

१. **नित्यो नित्यानामिति** ॥ व्या. (४२३ - पुं) ॥ **सर्व एते इति** ॥ **चिदात्मानः** जीवाः, **व्युच्चरन्ति** मातृदेहात् बहिः निस्सरन्ति जायन्त इति यावत् इत्यर्थः ॥ अयं च पूर्वपक्षे । **सिद्धान्ते तु-** वक्ष्यते ।

२. **ते वा एते इति** ॥ **ते** प्रसिद्धाः, **एते** जीवाः, यतः **चिदात्मनः** ज्ञानस्वरूपाः, अतः **अविनष्टाः** सन्तः **ज्योतिः** प्रकाशरूपं **परं** ब्रह्म, **निविशन्ति** मुक्तौ, प्रलये च, **अविनष्टा** एव स्वरूपनाशरहिता एव देहत **उत्पद्यन्ते कदाचन** न **विनश्यन्तीत्यर्थः** ॥ १८ ॥

**ज्ञः, उत्पद्यते एवेति वर्तते । हेतुबलान्नित्योऽपीति लभ्यते । अयमर्थः- नित्योऽपि ज्ञः जीव उत्पद्यत एव 'युक्तेश्च' नित्यस्यापि पराधीनविज्ञेषदेहाद्युपाध्यपेक्षयोत्पत्तेर्युक्तत्वाच्चेति ॥**

**नित्यस्यापि हि जीवस्योपाध्यपेक्षयोत्पत्तिर्युज्यते ।**

**'उत्पद्यन्ते चिदात्मानो नित्यान्नित्याः परात्मनः ।**

**उपाध्यपेक्षया तेषामुत्पत्तिरपि गीयते ॥' इति च व्योमसंहितायाम् ॥**

**॥ इति ज्ञाधिकरणम् ॥**

**भा.** ॥ सूत्रार्थमाहुः- **नित्यस्येति** ॥ अत्र स्मृतिं चाहुः- **'उत्पद्यन्ते इति** ॥ **संहितायामिति** ॥ तत्र इत्युक्तेरित्यर्थः ॥ १९ ॥ अ. ११ ॥

**॥ इति ज्ञाधिकरणम् ॥**

१. **उत्पद्यन्त इति** ॥ **चिदात्मानः** ज्ञानस्वरूपाः जीवाः **नित्या** अपि, **नित्यात्** देहतोऽपि नित्यात् **परात्मनः** परमात्मनः सकाशात्, **उत्पद्यन्ते**; **तेषाम्** उक्तस्वरूपकाणां जीवानाम्, **उत्पत्तिरपि** उत्पत्तिवचनमपि, **उपाध्यपेक्षया** बाह्यदेहाद्युपाध्यपेक्षया **गीयते** युज्यते इत्यर्थः ॥ १९ ॥ अ. ११ ॥

## १२. उत्क्रान्त्यधिकरणम्

**'व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च सर्वात्मानः सर्वरूपा अनन्ताः' इति काषायणश्रुतौ व्याप्तत्वं प्रतीयते । 'अणुर्ह्येष आत्मा यं वा एते सिनीतः । पुण्यं च पापं च' इति गोपवनश्रुतावणुत्वमित्यतो विरोध इति । अतो ब्रवीति–**

अत्र नये जीवव्यापकत्वश्रुतिविरोधपरिहारः । जीवो विषयः, व्याप्तोऽणुर्वेति संशयः । व्याप्त इति पूर्वपक्षः । संशयबीजं श्रुत्या दर्शयन्ति- **'व्याप्ता इति** ॥ **व्याप्तत्वमिति** ॥ जीवस्येति शेषः । **अणुत्वमिति** ॥ जीवस्य प्रतीयत इति वर्तते ॥

**(उत्क्रान्तिगत्यागतेः जीवोऽणुः)**

**॥ ॐ उत्क्रान्तिगत्यागतीनाम् ॐ ॥ २० ॥**

हेतुबलात् व्यापको नेति लभ्यते । ज्ञ इति वर्तते । अयमर्थः- ज्ञो व्यापको न **उत्क्रान्तिगत्यागतीनां** 'सोऽस्मात्' इति श्रुत्युक्तोत्क्रान्त्यादिसकाशादिति ॥ मध्यमपरिमाणस्य 'न च पर्यायात्' (२.२.३५) इति सूत्रेण निषेधात् 'अणुर्ह्येष' इति श्रुतेश्चाणुरेव जीव इति भावः ॥

**हेतूनां सकाशादणुरेव । 'सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छत्यमुष्मादिमं लोकमागच्छति स गर्भीभवति स प्रसूयते स कर्म कुरुते' इति पौष्यायणश्रुतेः ॥ तत्र स्वातन्त्र्यप्रतीतेः–**

**'एकः प्रसूयते जन्तुरेक एव प्रमीयते ।**
**एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥' इत्यादेश्च ।**

**स्वयमेवेत्यतो वक्ति–**

---

१. **व्याप्ता इति** ॥ **आत्मानः** भगवद्रूपविशेषाः । **व्याप्ताः** परममहापरिमाणाः, **चेतनाः** ज्ञानरूपाः **निर्गुणाः** सत्त्वादिगुणशून्याः, **सर्वात्मानः** सर्वस्यादानादिकर्तारः, **सर्वरूपाः** पूर्णस्वरूपाः, **अनन्ताः** कालादिपरिच्छेदशून्या इत्यर्थः **सिद्धान्ते** । पूर्वपक्षे तु- आत्मशब्दो जीवपरः विशेषणानि तस्यैवेति ज्ञेयम् ॥ **अणुरिति** ॥ **यम्** आत्मानं **पुण्यं च पापं** चेत्येते **सिनीतः** बध्नीतः, **एष** आत्मा **अणुर्हि** अणुपरिमाणवान्हीत्यर्थः ॥

**भा.** ॥ सूत्रार्थमाहुः- **हेतूनामिति** ॥ हेतुसत्त्वे श्रुतिमाहुः- [1]**सोऽस्मादिति** ॥ **श्रुतेरिति** ॥ इदं हेतूनामित्यत्रान्वेति ॥ **अणुरेवेति** ॥ फलितार्थकथनमिदम् ॥ २० ॥

प्रसङ्गादुत्क्रान्त्यादिविषये किञ्चिद्विचारार्थं प्रवृत्तं सूत्रमवतारयन्ति- **तत्रेति** ॥ उत्क्रान्त्यादिविषय इत्यर्थः । तत्र स्पष्टस्मृतिमाहुः- [2]**एक इति** ॥ **स्वयमेवेति** ॥ जीवेनैवेत्यर्थः । उत्क्रान्त्यादयो भवन्तीति शेषः ॥

**(विष्णुनैव जीवस्योत्क्रान्त्यादयः)**

**॥ ॐ स्वात्मना चोत्तरयोः ॐ ॥ २१ ॥**

**उत्क्रान्तिगत्यागतीनां, ज्ञः, इति वर्तते । चोऽवधारणे ॥ यथायथं विपरिणामः । अयमर्थः- ज्ञस्य उत्क्रान्त्यादयः स्वात्मना च परमात्मनैव भवन्ति उत्तरयोः 'स एतेनैव स्वात्मन' इति 'एष ह्येव' इति चेत्युत्तरवाक्ययोः सत्त्वादिति ॥**

**'स एतेनैव स्वात्मना परेणेमं गर्भमनुप्रविशति परेण जायते परेण कर्म कुरुते परेण नीयते परेणोन्नीयते । तं वा एतमभिवदन्ति स्वात्मेति' । 'एष ह्यानन्दमादत्ते एष ह्येनं जीवमभिजीवयत्येष उद्गमयत्येष गमयत्येष आगमयति' इत्युत्तरयोर्वाक्ययोः परमात्मनैवोत्क्रान्त्यादयः ॥ २१ ॥**

**भा.** ॥ श्रुत्युदाहरणपूर्वं सूत्रार्थमाहुः- [3]**स एतेनैवेति** ॥ २१ ॥

---

१. **सोऽस्मादिति** ॥ **स** जीवः, **अस्मात्** बाह्यात् **अमुम्** आमुष्मिकम्, **इमं** भूरूपं, **गर्भी** गर्भस्थः, **प्रसूयते** उत्पद्यते इत्यर्थः । अन्यत्स्पष्टम् ॥

२. **एक इति** ॥ **एकः** स्वतन्त्रः । इतरत् स्पष्टम् ॥ २० ॥

३. **स एतेनेति** ॥ **स** जीवः **एतेन** स्वस्थितेन **स्वात्मना** स्वात्मशब्दवाच्येन, **परेण** परमात्मना, **इमं** मातृदेहस्थ**गर्भं प्रविशति** नीयते लोकान्तरमिति शेषः । **उन्नीयते** ऊर्ध्वं नीयते मोक्षार्थमिति शेषः । **तमेनं** विष्णुं **स्वात्मेत्यभिवदन्ति** इत्यर्थः । अनेन स्वात्मशब्दस्य विद्वद्रूढिर्दर्शिता । शिष्टं स्पष्टम् । **एष इति** ॥ **एष** परमात्मा, **आनन्दं** जीवसुकृतफलं, स्वरूपानन्दं वा, **आदत्ते अभिजीवयति** धृतप्राणं करोति, **उद्गमयति** देहात् निस्सारयति, ऊर्ध्वं गमयतीति वा, **आगमयति** देहं प्रवेशयति, भूमिमागमयतीति वा, इत्यर्थः ॥ २१ ॥

उत्क्रान्त्यादीनां मनोधर्मत्वेन जीवे उपचारात् जीवस्य व्याप्तत्वे बाधकाभावेन 'व्याप्ता हि' इति श्रुतिर्जीवपरा स्यादिति शङ्कावारणाय सूत्रम्-

(व्याप्तश्रुतिरीश्वरपरा)

**॥ ॐ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॐ ॥ २२ ॥**

अधिक्रियते बोध्यते अस्मिन्ननेन चेति अधिकारः भावप्रधानः । ज्ञ इति वर्तते । अतच्छ्रुतेरित्यावर्तते । अयमर्थः= ज्ञः **अणुर्न अतच्छ्रुतेः** अतस्य अणुत्वविरुद्धमहत्त्वस्य बोधक 'व्याप्ता ह्यात्मानः' इति श्रुतेः **इति चेन्न** - अतच्छ्रुतेः उक्तव्यापकत्वश्रुतेः **इतराधिकारात्** प्रकृतजीवभिन्नपरमात्मप्रकरणत्वेन इतराधिकारात् परमात्मप्रतिपादकत्वादिति ॥

**'व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च' इति व्याप्तिश्रुतेर्नाणुर्जीव इति चेन्न । 'स आत्मेदं सृजति स द्विधेदं विभर्ति अन्तर्बहिश्च । स बहुधेदमनुप्रविश्याऽत्मनोऽभिनयति । स आत्मा स आत्मानः स ईशः स विष्णुः स परः परोवरीयान्' इति परमात्माधिकारत्वात् ।**

**'एकशब्दैर्द्विशब्दैश्च बहुशब्दैश्च केशवः ।**
**एक एवोच्यते वेदैस्तावता नास्य भिन्नता ॥' इति च भविष्यत्पुराणे ।**

**'तदयं प्राणोऽधितिष्ठति । तदुक्तमृषिणा— आ तेन यातम्' (ऐ.आ.२—३—८) इत्यादि च ।**

भा. ॥ श्रुत्युदाहरणपूर्वं सूत्रार्थमाहुः- **'व्याप्ता हीति ॥ परमात्माधिकारत्वादिति ॥** व्याप्तश्रुतेरिति वर्तते । ननु 'व्याप्ता ह्यात्मानः' इति बहुवचनश्रुत्या परमात्मनां(तत्स्वरूपाणां) भेदः स्यादत आहुः-

---

१. व्याप्ता इति ॥ (४२५-पु.) अत्र श्रुतौ **आत्मान** इति बहुवचनेन अस्याः श्रुतेरीश्वरपरत्वं न सम्भवतीति पूर्वपक्षी मन्यते ॥ **स आत्मेति** ॥ **आत्मनः** स्वस्य **अभि** आभिमुख्येन **आत्मा आत्मानः** एकवचनान्तबहुवचनान्ततादृशशब्दवाच्यः द्विवचनान्तशब्दवाच्यश्चेत्यपि बोध्यम्, **परोवरीयान्** सर्वोत्तमः, **नयति** स्वक्रियानुकूलक्रियं करोतीति, इत्यर्थः ॥ शिष्टं स्पष्टम् ॥

[1]**एकशब्दैरिति** ॥ अभिन्नेऽपीश्वरे द्विवचनादिप्रयोगं दर्शयन्ति- [2]**तदयं प्राण इति** ॥ अनेन एकस्य प्राणस्य शरीरेऽधिष्ठातृत्वमुक्त्वा प्रमाणत्वेनोदाहृते 'आ तेन यातम्' इत्यादौ अश्विनाविति द्विवचनान्तप्रयोगः कृत इति भावः । **इत्यादि चेति** ॥ नास्य भिन्नतेति शेषः । पुराणे इत्युक्तेः, च यतः इत्यादिप्रयोगश्चास्ति अतश्च, अस्य भिन्नता आत्मान इति बहुवचनप्रयुक्तभेदो नेत्यर्थः ॥२२॥

**बहुवचनश्रुत्या प्राप्तजीवपरत्वस्य दुर्बलप्रकरणमात्रेण कथं बाध इति शङ्कावारणाय सूत्रम् -**

**(आत्मशब्दापरिमितत्वलिङ्गादिना व्याप्तत्वश्रुतिर्विष्णुपरा)**

**॥ ॐ स्वशब्दोन्मानाभ्यां च ॐ ॥ २३ ॥**

**मानादुद्भूत उन्मानः भावप्रधानः । अतच्छ्रुतेः, इतराधिकारादिति वर्तते । विपरिणम्यते च प्रथमया । अयमर्थः- अतच्छ्रुतिः इतराधिकारः परमात्मप्रतिपादकः स्वशब्दोन्मानाभ्यां च 'एषो ह्यात्मा' इति वाक्यशेषस्थस्वशब्दपर्यायात्मशब्दपरिमाणातीतत्वलिङ्गाभ्यां चेति ॥**

---

१. **एकेति** ॥ **वेदैः** वेदगतैः **एकशब्दैः** एकवचनान्तशब्दैः, **द्विशब्दैः** द्विवचनान्तशब्दैः, **बहुशब्दैः** बहुवचनान्तशब्दैरित्यर्थः । स्पष्टमन्यत् ॥

२. **तदयमिति** ॥ (ऐ.आ.२.३.८)व्या.(१३२.पु.) **तदुक्तमिति** ॥ **ऋषिणा** मन्त्रद्रष्ट्रा हयग्रीवेण उक्तार्थे मानमुक्तमित्यर्थः । 'आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना । यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः' (ऋ.१०.३९.१२) इति मन्त्रः । अयमर्थः- **हे अश्विनौ** आशुगतिवन्तौ भगवन्तौ, **ऋभवः** सर्वे देवाः, **यं रथं वां** युवयोरर्थे **चक्रुः**, **यस्य च** देहाख्यरथस्य **योगे** मनोवाक्कर्मभिः सह युष्मत्सम्बन्धे सति **विवस्वतः** विवस्वच्छब्दवाच्याद्विष्णोः, तत्प्रसादेनेति यावत्, **दिवः** रमाभिमन्यमानविद्यातः, **दुहिता** ब्रह्मापरोक्षज्ञानं सरस्वत्यभिमन्यमानं, जायते जीवस्येति शेषः, **सुदिने** तत्साध्यभूते **उभे अहनी** जीवन्मुक्तिमुक्त्यवस्थे च जायते **तेन** तादृशेन **मनसोऽपि जवीयसा** वेगवता रथेन देहाख्येन, प्रसिद्धेन च, **आयातम्** आगच्छतमित्यर्थः । देहरथपक्षे अत्र देहे सन्निधिं कुरुतमित्यर्थः । यद्यपि **ऐतरेयभाष्ये अश्विनौ** विष्णुवायू इति व्याख्यातं- तथापि एकस्यैव द्विवचनान्तशब्दवाच्यत्वे प्रमाणतयोपन्यासादेवं व्याख्यातं टीकायाम् । **ऐतरेयभाष्येऽपि** विष्णु-वायू इति वायुशब्देन तदन्तर्गतभगवद्रूपस्य विवक्षाऽस्तु ॥ 'निमिषश्चिज्जवीयसा रथेना यातमश्विना । अन्तिषद्भूतु वामवः' (ऋ.८.६३.३) इति द्वितीयो मन्त्रः । **हे अश्विनौ निमिषश्चित्** चक्षुर्निमेषादपि **जवीयसा रथेन** देहाख्यरथेन **आयातं**, **वां** युवयोः सकाशात् यत् **अव** अवनं तत् **अन्तिषत्** अस्मत्समीपे, **भूतु** भवत्वित्यर्थः ॥ २२ ॥

**'एषो ह्यात्माऽध्युद्गतो मानशक्तेस्तथाप्यसौ प्रमितिं याति वेदैः ।**
**पूर्णोऽचिन्त्यः सर्व-वेदैकयोनिः सर्वाधीशः सर्ववित्सर्वकर्ता ॥'**

**इति वाक्यशेषे आत्मशब्दोन्मानाभ्यां च ।**

**'आत्माऽमेयः परं ब्रह्म परानन्दादिकाभिधाः ।**
**वदन्ति विष्णुमेवैकं नान्यत्राऽसां गतिः क्वचित् ॥' इति च कौर्मे ।**

भा. ॥ श्रुत्युदाहरणपूर्वं सूत्रं व्याचक्षते-[1]**एषो हीति** ॥ स्वशब्दोन्मानत्वयोर्वैष्णवत्वे मानमाहुः-[2]**आत्मेति ॥ कौर्म इति** ॥ तत्र 'इति च' इति वचनसिद्धवैष्णवत्वविशिष्टवाक्यशेषस्थात्मशब्दोन्मानाभ्यां चेत्यर्थः । अस्य पूर्वभाष्ये इति चेन्नेत्यत्रान्वयः ॥ २३ ॥

**जीवो नाणुः हस्तपादाद्यवच्छेदेन तत्रतत्र परिज्ञानाय शरीरव्याप्तेः आवश्यकत्वादिति शङ्कावारणाय सूत्रम्-**

**(अणोरपि जीवस्य सर्वशरीरव्याप्तिर्युज्यते)**

**॥ ॐ अविरोधश्चन्दनवत् ॐ ॥ २४ ॥**

विरोधो दोषः सर्वशरीरव्याप्त्यभावरूपः तस्याभावोऽविरोधः सर्वशरीरव्याप्तिः । ज्ञोऽणुश्चेति वर्तते । षष्ठ्या विपरिणम्यते । चोऽप्यर्थे । युज्यत इति शेषः । अयमर्थः- अणोश्च अणोरपि ज्ञस्य **अविरोधः** अंशैः सर्वशरीरव्याप्तिः **चन्दनवत्** हरिचन्दनस्येव युज्यत इति ॥

**अणोरपि जीवस्य सर्वशरीरव्याप्तिर्युज्यते । यथा हरिचन्दनविप्रुष एकदेशपतितायाः सर्वशरीरव्याप्तिः ।**

---

१. **एष इति** ॥ एष हरिः, यतो गुणैः **पूर्णः**, **अचिन्त्यश्च**, **सर्ववेदैकयोनिः** सर्ववेदैकवेद्यः, **सर्वाधीशः सर्ववित्** सर्वज्ञः **सर्वकर्ता**, अतो **मानशक्तेः** परिमाणशक्तेः **अध्युद्गतः** परिमाणातीत इति यावत् । **तथापि असौ** परमात्मा **वेदैः प्रमितिं याति** वेदजन्यज्ञानविषयो भवतीत्यर्थः । अपरिमितस्यापि विष्णोः वेदैकदेशज्ञानविषयता तत्प्रसादाद्भवतीति भावः ॥

२. **आत्मेति** ॥ **अमेयः** अपरिमितः **पर, आनन्द** इति पृथक्पदं लुप्तप्रथमाकम् । इतीति शेषः । **आत्मा अमेयः परंब्रह्म पर, आनन्द, इत्यादिका अभिधाः** शब्दाः **विष्णुमेकमेव वदन्ति** मुख्यतः प्रतिपादयन्ति, **अन्यत्र** जीवे, **आसाम्** अभिधानां **गतिः** मुख्यवृत्तिः **क्वचित्** कदापि **नास्ति** इत्यर्थः ॥ २३ ॥

**'अणुमात्रोऽप्ययं जीवः स्वदेहं व्याप्य तिष्ठति ।**
**यथा व्याप्य शरीराणि हरिचन्दनविप्रुषः ॥' इति च ब्रह्माण्डपुराणे ॥ २४ ॥**

भा. ॥ सूत्रं व्याचक्षते- **अणोरपीति** ॥ तथेत्यादौ शेषः । दृष्टान्तमात्रेण कथमर्थसिद्धिः नियामकाभावादत आहुः- **[1]अणुमात्रोऽपीति** ॥ **ब्रह्माण्डपुराण इति** ॥ तत्रेत्युक्तेश्च युज्यत इति सम्बन्धः ॥ २४ ॥

**उक्तमाक्षिप्य समादधत्सूत्रम् -**

**(हृदि अंशिरूपेणान्यत्रांशरूपेण जीवस्तिष्ठति)**

**॥ ॐ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॐ ॥ २५ ॥**

**ज्ञोऽणुः, अविरोधो, युज्यते, चन्दनेति वर्तते । हृदि हीति श्रुतिप्रतीकम् । हि हृदीति भिन्ने पदे च । विशेष एव वैशेष्यम् । यथायथमावृत्तिविपरिणामौ । अयमर्थः- अणोश्चन्दनस्य अवस्थितिवैशेष्यात् एकदेशेऽंशिरूपेण सम्यगवस्थानरूपविशेषात् अन्यत्रांशरूपेणासम्यगवस्थानविशेषात् अविरोधः सर्वशरीरव्याप्तिर्युज्यते न तु ज्ञस्य इति चेन्न- ज्ञस्य हि जीवस्यापि हृदि हि 'हृदि ह्येष आत्मा' इति श्रुत्या हृदि हि हृदये अवस्थितिवैशेष्यस्यांशिरूपेण सम्यगवस्थानस्य अवस्थितिवैशेष्यस्य अन्यत्रांशरूपेणासम्यगवस्थानस्य च अभ्युपगमात्** इति ॥

**सम्यगसम्यगवस्थानविशेषाद्युज्यते चन्दनस्येति चेन्न । 'हृदि ह्येष आत्मा' (प्र.उ.३–६) इति जीवस्यापि तथाऽभ्युपगमात् ॥ २५ ॥**

भा. ॥ सूत्रार्थमाहुः- **चन्दनस्येति** ॥ सर्वशरीरव्याप्तिरिति शेषः । सूत्रसूचितश्रुतिमाहुः- **[2]हृदीति** ॥ **तथेति** ॥ एकदेशे सम्यगवस्थानमन्यत्रासम्यगवस्थानम्[3] इतीत्यर्थः ॥ २५ ॥

---

१. **अणुमात्र इति** ॥ **अणुमात्रः** अणुपरिमाणः, **व्याप्य** तथा अंशैरिति शेषः । अन्यार्थः स्पष्टः ॥ २४ ॥
२. **हृदीति** ॥ (ष.प्र.३-६) **हि** यतः **एष आत्मा** जीवः, **हृदि** हृदयेऽस्ति, अतः इन्द्रियप्रवृत्तिं विना अणोस्तस्य न विषयसङ्गतिरित्यर्थः ॥ २५ ॥
३. **असम्यगिति** ॥ **हि** यतः **सुरा** देवा **असम्यक् सम्यगित्यवस्थाभेदतः** असम्यगवस्थानम् । अंशैर्हृदयेतर-स्थानेऽवस्थानं, सम्यगवस्थानं हृदयेंऽशिनोऽवस्थानमित्यवस्थानभेदमपेक्ष्यैव **व्याप्त्यव्याप्तियुतः** । **अन्ये** देवेतरे **चिद्गुणेनैव** व्याप्तियुताः **नाऽन्यथा** अंशैर्व्याप्ता न, **चिद्गुणस्य** प्रकाशगुणस्य स्वरूपत्वात् जीवस्वरूपाभिन्नत्वात् व्याप्तिश्च जीवव्याप्तिव्यवहारोऽपि **युज्यते** । **सुराणां** देवानां **तु**, **शक्तियोगात्** गन्धर्वाद्यपेक्षया अधिकशक्ति-मत्त्वात्, **विविधा च** नानाविधा **व्यवस्थितिः** विशिष्टावस्थानं युज्यत इत्यर्थः । अयं भावः - देवानां शक्तियोगात् सम्यगवस्थानमेव बहुषु व्याप्तिश्च अधिका अत्युत्तमानान्वितोऽपि विशेष इति ॥ १६ ॥ अ.१२ ॥ ॥२५॥

उक्तविषये निदर्शनान्तरकथनाय सूत्रम्-

**(अणोर्जीवस्य दीपस्येव प्रकाशरूपेण सर्वशरीरव्याप्तिर्युज्यते)**

**॥ ॐ गुणाद्वाऽऽलोकवत् ॐ ॥ २६ ॥**

ज्ञस्याणोश्च, अविरोधः, युज्यत इति वर्तते । अयमर्थः- अणोश्च अणोरपि ज्ञस्य **आलोकवत्** दीपस्येव **गुणात्** प्रकाशगुणेन अविरोधः सर्वशरीरव्याप्तिः युज्यते । **वा**शब्दः सांशानामंशैर्व्याप्तिः निरंशानां चिद्गुणेनेति व्यवस्थितविकल्पे इति ॥ जीवपक्षे प्रकाशश्चिद्रूपः दीपपक्षे प्रसिद्ध एव ॥

**यथाऽऽलोकस्य प्रकाशगुणेन व्याप्तिर्ज्योतीरूपेणाव्याप्तिः एवं चिद्गुणेन व्याप्तिर्जीव-रूपेणाव्याप्तिरिति वा । स्कान्दे च–**

**'असम्यक्सम्यगिति च व्यवस्थाभेदतस्सुराः ।**
**व्याप्त्यव्याप्तियुतास्त्वन्ये चिद्गुणेनैव नान्यथा ॥**
**चिद्गुणस्य स्वरूपत्वात्तद्व्याप्तिश्चेति युज्यते ।**
**शक्तियोगात्सुराणां तु विविधा च व्यवस्थितिः ॥' इति ।**

**॥ इति उत्क्रान्त्यधिकरणम् ॥**

भा. ॥ सूत्रार्थमाहुः- **यथेति** ॥ **ज्योतीरूपेणेति** ॥ स्वरूपेणेत्यर्थः । नन्वंशैर्गुणैश्च व्याप्तिरेकत्र विरुद्धा व्यर्था च । न च व्यवस्थयाऽविरोधः- अस्यांशैर्व्याप्तिरस्य गुणैरिति व्यवस्थायाः प्रमाणाधीनत्वादत आहुः- **स्कान्दे च सम्यगिति** ॥ **इति चेति** ॥ तत्रेत्युक्तेर्व्याप्तिर्वेति सम्बन्धः ॥ २६ ॥ अ. १२ ॥

॥ इति उत्क्रान्त्यधिकरणम् ॥

## १३. व्यतिरेकाधिकरणम्

**'स नित्यो निरवयवः पुण्ययुक् पापयुक् च स इमं लोकममुं चाऽवर्तते स विमुच्यते स एकधा न सप्तधा न दशधा न शतधा' इति गौपवनश्रुतावेकस्याबहुत्वं प्रतीयते । 'स पञ्चधा स सप्तधा स दशधा भवति स शतधा च सहस्रधा स गच्छति स मुच्यते' इति पाराशर्यायणश्रुतौ बहुरूपत्वं प्रतीयते । अतो विरोधं परिहरति–**

अत्र नये जीवस्यैकरूपत्वानेकरूपत्वश्रुत्योर्विरोधपरिहारः । जीवो विषयः । किमेकरूपः उताऽनेकरूप इति सन्देहः' एकरूप एवेति पूर्वपक्षः ।। तद्बीजश्रुतिं दर्शयन्ति- **'स नित्य इत्यादि ।। अत इति ।।** प्राप्तमिति शेषः ।।

**(अंशिनो जीवादंशाः गच्छन्ति)**

**।। ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ ।। २७ ।।**

अंशानामस्ति श्रुतिरिति शेषः । गन्धवदिति लुप्तपञ्चम्यन्तं, मतुबन्तं च । चो हेतौ, स्मृतिसमुच्चये च । ज्ञ इत्यनुवर्त्य पञ्चम्या विपरिणम्यते । अयमर्थः - अंशानां जीवांशानां ज्ञादंशिजीवात् **व्यतिरेकः** पृथग्भावो **गन्धवत्** गन्धवत्पुष्पेभ्यो गन्धवत् गन्धानामिवाऽस्ति च यतः श्रुतिः 'अथैक' इत्यादिश्रुतिः **तथा** उक्तप्रकारेण **दर्शयति** अतः **च** 'अचिन्त्ययेश....' इति स्मृतेश्चेति ।।

**यथा पुष्पाद्गन्धः पृथग्गच्छति एवमंशिनो जीवादंशाः पृथग्गच्छन्ति । 'अथैक एव सन् गन्धवद्व्यतिरिच्यते । अथैकीभवति । अथ बह्वीभवति । तं यथा यथेश्वरः प्रकुरुते तथा तथा भवति सोऽचिन्त्यः परमो गरीयान्' इति शाण्डिल्यश्रुतिः ।**

**'अचिन्त्ययेशशक्त्यैव ह्येकोऽवयववर्जितः ।**
**आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदा ।।' इति च पाद्मे ।।**

**।। इति व्यतिरेकाधिकरणम् ।।**

---

१. **स नित्य इति ।। स** जीवः, **इमं लोकं** भूलोकम्, **अमुं** आमुष्मिकम्, **आवर्तते** प्रत्यावर्तते गच्छति च । **एकधा** एकरूप एव भवतीत्यर्थः । शिष्टं स्पष्टम् । **स पञ्चधेति ।। स** जीवः **गच्छति** परलोकं प्रतीति शेषः। स्पष्टमन्यत् । श्रुतिद्वयेऽपि जीवपरत्वज्ञापनायाधिकांशोदाहरणम् ।।

भा. ॥ सूत्रतात्पर्यमाहुः- **यथेति** ॥ उक्तार्थे श्रुतिस्मृती आहुः- [1]**अथेत्यादि** ॥ **पाद्मे इति** ॥ यतः श्रुतिरस्ति अतः, पाद्मे इत्युक्तेश्च पृथग्गच्छन्तीत्यन्वयः ॥ २७ ॥ अ. १३ ॥

**॥ इति व्यतिरेकाधिकरणम् ॥**

१. **अथैक इति** ॥ जीवः स्वरूपतः **एक एव सन् गन्धवत् व्यतिरिच्यते** अंशिनं विहाय अंशैः पृथक् भवति **अथ** पुनः **एकीभवति** अंशिनैक्यं प्राप्नोति **अथ** योगसम्पदा **बहुीभवति** बहुरूपः सम्पद्यते **ईश्वरः** तं जीवं **यथायथा** एकधा अनेकधा **प्रकुरुते**, जीवः **तथा तथा भवति**, **स ईश्वरः अचिन्त्यः परमो** लोकोत्तरः **गरीयान्** गुरुतम इत्यर्थः । **अचिन्त्ययेति** ॥ एक एव जीवः **अवयववर्जितः**, भिन्नांशशून्योऽपि **अचिन्त्ययेशशक्त्यैव** प्राप्तयेति शेषः । **योगसम्पदा** योगशास्त्रोक्तयोगाख्यसम्पत्त्या **स्वात्मानं बहुधा कृत्वा क्रीडते** इत्यर्थः ।।२७।।अ.१३ ॥

## १४. पृथगुपदेशाधिकरणम्

**'तत्त्वमसि' (छां.उ.३-८-७) 'अहं ब्रह्मास्मि' (बृ.उ.३-४-१०) इत्यादिषु जीवस्य परेणाभेदः प्रतीयते । 'नित्यो नित्यानां चेतनश्चेतनानाम्' (श्वे.उ.६-१३) 'द्वा सुपर्णा' (श्वे.उ.४-६) इत्यादिषु भेदः । अत उच्यते-**

अत्र नये जीवस्य ब्रह्माभिन्नत्वश्रुतिविरोधपरिहारः । जीवो विषयः । किं ब्रह्माभिन्न उत तद्भिन्न इति सन्देहः । ब्रह्माभिन्न इति पूर्वपक्षः ॥ सन्देहबीजं श्रुतिं दर्शयन्ति- [१]**तत्त्वमसीत्यादि ॥ भेद इति** प्रतीयत इति वर्तते । बलवदद्वैतश्रुतिविरोधेन भेदश्रुतिरप्रमाणमिति भावः । **अत इति ॥** शङ्कापरिहारार्थमित्यर्थः ॥

**(जीवः परात् भिन्नः)**

### ॥ ॐ पृथगुपदेशात् ॐ ॥ २८ ॥

ज्ञोऽत एवेति वर्तते । अयमर्थः- ज्ञो जीवः अतः परमात्मनः **पृथक्** एव भिन्न एव **उपदेशात्** 'भिन्नोऽचिन्त्यः' 'द्वा सुपर्णा' इत्यादिश्रुतेरिति ॥

**'भिन्नोऽचिन्त्यः परमो जीवसङ्घात्पूर्णः परो जीवसङ्घो ह्यपूर्णः ।**
**यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छेत् ॥'**

**इति सोपपत्तिककौशिकश्रुतेर्भिन्न एव जीवः ॥ २८ ॥**

भा. ॥ उपदेशपदार्थकथनपूर्वं सूत्रार्थमाहुः- [२]**भिन्न इत्यादि** ॥ २८ ॥

'तत्त्वमसि' इत्यादिश्रुतिगतिप्रदर्शनाय सूत्रम्-

**(ब्रह्मगुणसदृशगुणवत्त्वाद् जीवस्य ब्रह्माभेदव्यपदेशः)**

### ॥ ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॐ ॥ २९ ॥

---

१. **तत्त्वमसीति** ॥ व्या.(१०१.पु.) **अहं ब्रह्मेति** ॥ (बृ.३.४.१०) पूर्वपक्षे प्रतीत एवार्थः। **नित्य इति** ॥ व्या. (४२३-पु.) **द्वा सुपर्णेति** ॥ व्या.(२०८-पु.) ॥

२. **भिन्नोऽचिन्त्य इति ॥ यतोऽसौ** परमात्मा **नित्यमुक्तः, अयं च** जीवश्च, **बन्धात् मोक्षं, ततः** परमात्मत **एव, अभिवाञ्छेत्** इच्छति, **हि** प्रसिद्धं **हि** यतः **परः** परमात्मा **जीवसङ्घात् परमः** उत्तमः **पूर्णः** गुणादिपूर्णः, **अचिन्त्यः, जीवसङ्घश्चापूर्णः,** अनुत्तमः चिन्त्यश्च, अतः **परः** परमात्मा **जीवसङ्घाद्भिन्न** इत्यर्थः ॥ २८ ॥

ज्ञ इत्यनुवर्त्य ज्ञस्येति विपरिणम्यते । युज्यत इति शेषः । तच्छब्देन स्वात्मनेति प्रकृतब्रह्मपरामर्शः । अयमर्थः- **ज्ञस्य** जीवस्य **तद्व्यपदेशः** 'तत्त्वमसि' इत्यादि ब्रह्माभेदव्यवहारः **तद्गुणसारत्वात्** ब्रह्मसम्बन्धि-ज्ञानानन्दादिगुणसदृशगुणस्वरूपकत्वात् **प्राज्ञवत्** प्राज्ञस्य परमात्मनः पृथिव्यादिनिष्ठधारकत्वादिगुणसदृश-गुणस्वरूपकत्वात् 'सर्वं खल्विदं ब्रह्म' इत्यभेदव्यवहारवद्युज्यत इति ॥ यत्र यद्गुणसारत्वं तत्र तदभेदव्यपदेश इति व्याप्तिर्बोध्या ॥

**ज्ञानानन्दादिब्रह्मगुणा एवास्य यतः सारः स्वरूपमतोऽभेदव्यपदेशः । यथा सर्व-गुणात्मकत्वात् सर्वात्मकत्वं ब्रह्मण उच्यते 'सर्वं खल्विदं ब्रह्म' (छा.उ.३–१४–१) इति । भविष्यत्पर्वणि च–**

**'भिन्ना जीवाः परो भिन्नस्तथापि ज्ञानरूपतः ।**
**प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः ॥' इति ॥ २९ ॥**

**॥ इति पृथगुपदेशाधिकरणम् ॥**

भा. ॥ सूत्रार्थमाहुः- **ज्ञानेति** ॥ **ब्रह्मगुणा इति** ॥ ब्रह्मगुणसदृशगुणा इत्यर्थः । **सर्वगुणात्मकत्वात्**-पृथिव्यादिनिष्ठधारकत्वादिगुणसदृशगुणात्मकत्वात् । **सर्वात्मकत्वं** पृथिव्याद्यात्मकत्वम् । **ब्रह्मेति** ॥ इति सर्वात्मकत्वमित्यर्थः । तादृशगुणवत्त्वेन सर्वात्मकत्वव्यपदेशे श्रुतिमाहुः- **'सर्वं खल्विति** ॥ सूत्रार्थे स्मृतिं चाहुः- **भविष्यत्पर्वणि च- भिन्ना[२] इति** ॥ **इतीति** ॥ इत्युक्तेश्चाभेदव्यपदेश इति सम्बन्धः । ननु सूत्रकृता त्वं तदिति पदच्छेदाभिप्रायेणेदमधिकरणं कृतं तत्कथं विष्णुतत्वनिर्णयादौ भाष्य-कारैरतत्त्वमसीति कृतः पदच्छेद उपपन्नः स्यादिति चेन्न । सोऽहमस्मीत्याद्यर्थमधिकरणं प्रवृत्तम् । तत्र पदच्छेदस्योभयसम्मतत्वात् 'स आत्मा तत्त्वमसि' इत्यत्र अतत्त्वमित्येव पदच्छेदः । तथापि परसिद्धे त्वं तदिति च्छेदे पराभिमतासिद्धिरिति द्योतनाय भाष्ये तत्त्वमसीति वाक्यस्योदाहृतत्वेनादोषात् ॥ २९ ॥ अ. १४ ॥

**॥ इति पृथगुपदेशाधिकरणम् ॥**

१. **सर्वं खल्विदमिति** ॥ (छा.३.१४.१) **ब्रह्म इदम्** अतिसमीपस्थं **सर्वं** पृथिव्यादिवृत्तिधारकत्त्वादि-सर्वधर्मवत्त्वात् सर्वाभिन्नमित्यर्थः ॥

२. **भिन्ना इति** ॥ **ज्ञानतः** ज्ञानस्वरूपत्वसादृश्यात् **ब्रह्मरूपेण** ब्रह्मत्वेन, ब्रह्माभेदेन वा, **सर्वशः** सर्वेऽपीत्यर्थः। अन्यत्स्पष्टम् ॥ २९ ॥ अ. १४ ॥

## १५. यावदधिकरणम्

**जीवस्याप्युत्पत्तिरुक्ता । अतस्तस्य 'सोऽनादिना पुण्येन पापेन चानुबद्धः । परेण निर्मुक्त आनन्त्याय कल्प्यत' इत्यनादिकर्मसम्बन्ध आनन्त्यावाप्तिश्च न युज्यत इत्यत आह–**

अत्र नये रीत्यन्तरेण जीवनित्यत्वश्रुतिविरोधपरिहारः । जीवो विषयः । नित्योऽनित्यो वेति सन्देहः, अनित्य इति पूर्वपक्षः ॥ पूर्वपक्षमाहुः- **जीवस्येति** ॥ **उत्पत्तिरुक्तेति** ॥ ज्ञोऽत एव (२.३.१८) इति सूत्रेण जीवस्य देहाद्युपाधिहेतुकोत्पत्तिरुक्तेत्यर्थः । स चोपाधिः प्रतिबिम्बताप्रयोजको दर्पणादिवत् । तत्र प्रतिफलितो यः स एव जीवः बिम्बस्तु विष्णुः तस्य च नित्यत्वात् । जीवस्य स्वरूपतो जन्माङ्गीकारेऽपि 'युक्तेश्च' (२.३.१९) इति सूत्रमपि युक्तमिति भावः । **अत इति** ॥ प्रतिफलनरूपोत्पत्तिमत्त्वादुत्पन्नभावस्य नाशनियमादुपाधिनिमित्तकोत्पत्तिमतः प्रतिबिम्बस्योपाधिनाशे नाशदर्शनाच्च लोके अस्यापि नाशावश्यकत्वादित्यर्थः । **तस्य**- अनित्यजीवस्य । श्रुतिमाहुः- **'सोऽनादिनेति** ॥ **आनन्त्यावाप्तिश्चेति** ॥ मोक्षप्राप्तिश्चेत्यर्थः । **न युज्यत इति** ॥ कर्मणोऽनादित्वे तदाश्रयजीवस्यानादित्वं वक्तव्यम् । जीवस्य मोक्षे नाशाभावो वक्तव्यः तदुभयं न युज्यत इत्यर्थः ॥

**(परात्मवज्जीवस्यापि नित्यत्वश्रुतेः नाप्रामाण्यदोषः)**

### ॥ ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ ॥ ३० ॥

**आत्मा विष्णुः आत्मानं यावत् यावदात्मा मयूरव्यंसकादित्वात् समासः । यावदात्मनि भवतीति यावदात्मभावी 'सुप्यजातौ णिनिस्ताच्छील्य' इति णिनिप्रत्ययः तस्य भावस्तस्मात् । ताच्छील्यं तत्स्वभावकत्वम् । चशब्द उपाधेः, स्मृतेश्च, समुच्चये । ज्ञस्येति वर्तते । अयमर्थः- ज्ञस्योपाधेश्च प्रतिबिम्बताप्रयोजकजीवस्वरूपोपाधेश्च यावदात्मभावित्वात्** परमात्माधिकरणयावत्कालवृत्तित्वात् अनादिनित्यत्वादिति यावत्, **दोषः** 'सोऽनादिना' इत्यादिश्रुत्यप्रामाण्यं **न** । **तद्दर्शनात्** 'नित्यः पर' इति

---

१. **सोऽनादिनेति** ॥ **स** जीवः **परेण** परमात्मना तत्प्रसादेनेति यावत्, **मुक्तः** बन्धकपुण्यपापभ्यां मोचितः, **आनन्त्याय** मोक्षाय **कल्पते** समर्थो भवतीत्यर्थः । स्पष्टमन्यत् ॥

**यावदात्मभावित्वश्रुतेः, 'आत्मा नित्यः' इति स्मृतेश्चेति ॥ तथा च 'ज्ञोऽत एव' इत्यत्रोक्तोत्पत्तिर्देहादि-विशेषणविशिष्टत्वेन विवक्षिता न तु तद्देहरूपोपाधौ प्रतिफलनरूपेण । अतो देहादिरूपविशेषणस्य नाशेऽपि जीवनाशो नेति भावः ।**

**यावत्परमात्मा तिष्ठत्यनाद्यनन्तत्वेनैवं जीवोऽपि ।**

**'नित्यः परो नित्यो जीवोऽनित्यास्तस्य धातवः ।**
**अत उत्पद्यते च म्रियते च विमुच्यते च ॥' इति च आग्निवेश्यश्रुतिः ।**
**'आत्मा नित्यः सुखदुःखे त्वनित्ये ।'**
**'जीवो नित्यो धातुरस्य त्वनित्यः ॥' इति च भारते ॥**

**॥ इति यावदधिकरणम् ॥**

**भा.** ॥ सूत्रार्थमाहुः- **यावदिति** ॥ यावत्कालमित्यर्थः । अस्यैव विवरणम् - **अनाद्यनन्तत्वेनेति** ॥ वैशिष्ट्यं तृतीयार्थः । तिष्ठतीति स्थितावन्वेति । एवं च नित्य इति फलितम् । जीवनित्यत्वादौ श्रुतिस्मृती आहुः- **'नित्य इत्यादि** ॥ **श्रुतिरिति** ॥ च यतः श्रुतिरस्ति अतः भारते इत्युक्तेश्च । 'एवं जीवोऽपि' इत्यन्वयः ॥ ३० ॥ अ.१५ ॥

**॥ इति यावदधिकरणम् ॥**

---

१. **नित्यः पर इति** ॥ **परः** परमात्मा, **जीवः नित्यः** यावत्परमात्मभावि, **तस्य** जीवस्य, **धातवः** बाह्यदेहाः, इत्यर्थः । स्पष्टमन्यत् । **आत्मेति** ॥ **आत्मा** जीवः **सुखदुःखे** एतदुपलक्षितबाह्योपाधिरित्यर्थः । शिष्टं स्पष्टम् । अयं पादोऽन्यश्लोकस्थः । **जीवो नित्य** इति पादस्तु श्लोकान्तरस्थ इति न पौनरुक्त्यम् ॥ ३० ॥ अ. १५ ॥

## १६. पुंस्त्वाधिकरणम्

**'विज्ञानात्मा सह देवैश्च सर्वैः' (प्र.उ.४–११)। 'स आनन्दः स बलः स ओजः स परेणामुं लोकं नीयते स विमुच्यते' इति जीवस्य ज्ञानानन्दादिरूपत्वमुच्यते। 'स दुःखाद्विमुक्त आनन्दीभवति। सोऽज्ञानाद्विमुक्तो ज्ञानीभवति। सोऽबलाद्विमुक्तो बलीभवति। स नित्यो निरातङ्कोऽवतिष्ठते' इति पैङ्गिश्रुतावनानन्दादिरूपत्वं प्रतीयते। अत आह–**

अत्र नये मुक्तियोग्यस्याऽनन्दाद्यभाववत् तत्स्वरूपत्वश्रुतिविरोधपरिहारः। जीवो विषयः। ज्ञानादिरूपो न वेति संशयः, न ज्ञानादिरूपो जीव इति पूर्वपक्षः॥ सन्देहबीजश्रुती आहुः- [२]**विज्ञाने-त्यादि**॥ **प्रतीयते** जीवस्येति वर्तते। **अतः**- प्राप्तविरोधपरिहारार्थम्॥

**(विद्यमानमेव पुंस्त्वं यथा यौवनेऽभिव्यज्यते तथाऽऽनन्दादयो गुणाः मुक्तौ अभिव्यज्यन्ते)**

**॥ ॐ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॐ ॥ ३१ ॥**

**अस्येत्यनेन प्रकृततद्गुणसारत्वस्य ग्रहणम्। तुरेवार्थे। पूर्वं मुक्ताविति शेषः। तद्व्यपदेशः, ज्ञः, इति वर्तते। ज्ञे इति विपरिणम्यते। अयमर्थः- ज्ञे जीवे पूर्वं मुक्तेः पूर्वं सतः तु विद्यमानस्यैव अस्य तद्गुणसारत्वस्य ज्ञानानन्दादिरूपत्वस्येति यावत्। पुंस्त्वादिवत्त्वस्य यौवनात्पूर्वं विद्यमानस्यैव पुंस्त्वादेर्यौवनेऽभि-व्यक्तिवत् मुक्तौ अभिव्यक्तियोगात तु व्यक्तियोगादेव तद्व्यपदेशः 'दुःखाद्विमुक्त आनन्दी भवति' इत्यादि मुक्तिकालिकव्यपदेशो न तु आगन्तुकानन्दादियोगेनेति॥ अनेन न्यायेनासज्जीवानां तमसि दुःखाद्यभिव्यक्तिर्बोध्या॥**

---

२. **विज्ञानेति**॥ (ष.प्र.४.११) अस्य 'प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र। तदेतदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाविवेश' इति वाक्यशेषः। अयमर्थः- **विज्ञानात्मा** विज्ञानस्वरूपो जीवः **प्राणाः** चक्षुराद्याः, तद्विषयाश्च रूपादयः, **भूतानि** पृथिव्यादीनि, **सर्वैर्देवैः** अभिमानिभिः, **सह यत्र** अक्षरे ब्रह्मणि, **सम्प्रतिष्ठन्ति, तदेतदक्षरं यो वेदयते** जानाति, **स** उक्तप्रकारेण **सर्वज्ञः, सर्वं** गुणपूर्णं ब्रह्म **आविवेश** इति॥ **स आनन्द इति**॥ **स** जीवः, **आनन्द** आनन्दरूपः **परेण** परमात्मना **अमुं परलोकम्** इत्यर्थः। अन्यत् स्पष्टम्॥ **स दुःखादिति**॥ **स** जीवः दुःखात् संसारात् **आनन्दी भवति** आविर्भूतानन्दवान् भवति, **निरातङ्कः** निर्भयः सन्, **नित्योऽवतिष्ठते** मुक्तावित्यर्थः। स्पष्टमन्यत् (अयं च **सिद्धान्ते**। पूर्वपक्षे तु- प्रतीत एवार्थः॥)

**यथा बालस्य सदेव पुंस्त्वं यौवनेऽभिव्यज्यते, एवं सतामेवाऽनन्दादीनां व्यक्त्यपेक्षया तदुक्तिः ।**

**'बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् ।**

**स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः ॥' इति च गौपवनश्रुतिः ॥**

भा. ॥ सूत्रार्थमाहुः- **यथेति** ॥ **तदुक्तिरिति** ॥ आनन्दीभवतीत्यादिव्यवहार इत्यर्थः । ननु श्रुतिः प्रागसतामुत्पत्तिवादिनी किं न स्यादित्यत आहुः- **'बलमिति** ॥ **श्रुतिरिति** ॥ यतः श्रुतिरस्ति अतो व्यपेक्षया तदुक्तिरिति सम्बन्धः ॥ ३१ ॥

सत आनन्दादेरभिव्यक्तिरिति न युक्तमभिव्यक्तेरावरणाऽधीनत्वादावरणस्य चाभावादिति शङ्का वारणाय सूत्रम्-

**(आवरणसत्त्वादेव स्वरूपभूतानामपि ज्ञानादीनामननुभवः)**

**॥ ॐ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॐ ॥ ३२ ॥**

ज्ञः, अस्येति वर्तते । उपलब्ध्यनुपलब्ध्योः प्रसङ्ग इति तत्पुरुषः । नित्यमुपलब्ध्यनुपलब्धिप्रसङ्ग इति 'मयूरव्यंसकादित्वात्' समासः । उपलब्ध्यनुपलब्धिपदयोरस्येत्यनेन सम्बन्धादानन्दादिसाक्षात्कारोऽर्थः। ततः अन्त्योपलब्धिपदस्य विरुद्धार्थकनञा समासे अनुपलब्धिपदं दुःखादिसाक्षात्कारार्थकम् । ज्ञ इत्यस्यावृत्तिविपरिणामौ । वाशब्दो व्यवस्थितविकल्पे । अयमर्थः- **अन्यथा** अभिव्यक्तिफलकावरणानङ्गीकारे ज्ञयोः सज्जीवदुर्जीवयोः अस्य **नित्योपलब्ध्यनुपलब्धिप्रसङ्गः** आनन्दादिसाक्षात्कारो, दुःखादिसाक्षात्कारश्च, सदा स्यात् । ज्ञस्य मिश्रजीवस्य **अन्यतरनियमः** उक्तसाक्षात्कारद्वयनैयत्यम् उभयोर्यौगपद्यमिति यावत् स्यादिति ॥ वाशब्दादुक्ता व्यवस्था सिद्ध्यति । केचित्तु- 'नित्योपलब्धि' इति वाक्यं मिश्रजीवविषयकम् । अन्यतरनियमवाक्यं तु सज्जीवदुर्जीवविषयकमिति वदन्ति । यद्वा- अनुपलब्धिप्रसङ्गो वैषयिकानन्दादेरनुभवाभावप्रसङ्ग इत्यर्थः । शेषं पूर्ववत् ॥

**व्यक्त्यनङ्गीकारे देवानां च नित्योपलब्धिरानन्दादीनामसुराणां नित्यानुपलब्धिर्मनुष्याणां च नित्योपलब्ध्यनुपलब्धी च प्रसज्यन्ते । 'नित्यानन्दो नित्यज्ञानो नित्यबलः परमात्मा नैवमसुरा एवमनेवं च मनुष्याः' इति ह्यग्निवेश्यश्रुतिः ।**

१.**बलमिति** ॥ **ओजः** पराक्रमः, **सहः** सहनशक्तिः, **अनाकुलम्**, असंशयविपर्ययज्ञानं व्यज्यन्त एव न तूत्पद्यन्ते मुक्तावित्यर्थः । स्पष्टमन्यत् ॥ ३१ ॥

**भविष्यत्पर्वणि च–**

**'नित्यानन्दज्ञानबला देवा नैवं तु दानवाः ।**
**दुःखोपलब्धिमात्रास्ते मानुषास्तूभयात्मकाः ॥**
**तेषां यदन्यथा दृश्यं तदुपाधिकृतं मतम् ।**
**विज्ञानेनाऽऽत्मयोग्येन निजरूपे व्यवस्थितिः ॥**
**सम्यज्ज्ञानं तु देवानां मनुष्याणां विमिश्रितम् ।**
**विपरीतं च दैत्यानां ज्ञानस्यैवं व्यवस्थितिः ॥' इति ।**

**॥ इति पुंस्त्वाधिकरणम् ॥**

भा. ॥ सूत्रतात्पर्यार्थमाहुः- **व्यक्त्यनङ्गीकारे इति** ॥ व्यक्तिकारणसावरणत्वानङ्गीकारे इत्यर्थः । **देवानां**- मुक्तियोग्यानाम् । आनन्दादीनां नित्योपलब्धिः- आनन्दादिविषयकनित्यानुभवः । **असुराणां**- तमोयोग्यानामानन्दादीनां नित्यानुपलब्धिः, आनन्दादिविषयकानुभवाभावनैयत्यम् । **मनुष्याणां**- मिश्रजीवानाम् । आनन्दादीनां नित्योपलब्ध्यनुपलब्धी इत्यर्थः । जीवस्वरूपे आनन्दादिकं दुःखादिकं च नास्तीत्यङ्गीकारे प्रमाणविरोधमाहुः- **'नित्यानन्द इति** ॥ उक्तश्रुतावेवं देवा इति पदं न श्रूयत इति स्मृतिं चाहुः - **भविष्यत्पर्वणि 'नित्यानन्द इति** ॥ एतदनुरोधेन श्रुतावेवं देवा इति व्याख्येयम् । **इतीति** ॥ च यतः अग्निवेश्यश्रुतिरस्ति अतः, पर्वणि इत्युक्तेश्च, जीवस्वरूपे ज्ञानानन्दादिकमस्तीति शेषः । 'अधिकरणार्थे स्मृतिं चाऽऽह' इति टीकाया अधिकरणप्रवृत्तिहेतुभूतस्वरूपज्ञानादिकमाहेत्यर्थः ॥ ३२ ॥ अ. १६ ॥

**॥ इति पुंस्त्वाधिकरणम् ॥**

---

१. **नित्यानन्द इति** ॥ परमात्मेत्यनन्तरम् 'एवं सुरा यथायोग्यम्' इति शेषः । **एवं** परमात्मवत् **सुराः** मुक्तियोग्याः, **अनेवं** परमात्मादिप्रकारविरुद्धप्रकारेण च **असुराः** तमोयोग्याः, **मनुष्याः** नित्यसंसारिण इत्यर्थः । स्पष्टमन्यत् ॥

१. **नित्यानन्देति** ॥ **नित्यानन्दज्ञानबलस्वरूपाः** । ते **दानवाः**, **दुःखोपलब्धिमात्राः** दुःखानुभवमात्रयोग्याः, **उभयात्मकाः** दुःखादिसुखाद्यात्मकाः, **तेषां** देवादीनां, **यत् अन्यथा** स्वरूपविरुद्धत्वेन **दृश्यम्** अनुभूयमानं दुःखादि, **तत्** देवादीनामिदानीन्तनदुःखादि, असुराणामिदानींतनसुखादि मिश्राणां केवलं सुखं दुःखं चेदानींतनम् **उपाधिकृतं मतम्**, तेषां देवानामात्मयोग्येन विज्ञानेन निजरूपेण मुक्तौ व्यवस्थितिर्भवतीत्यर्थः । शिष्टं स्पष्टम् ॥ ३२ ॥ अ.१६ ॥

## १७. कर्तृत्वाधिकरणम्

**ईश्वरस्यैव कर्तृत्वमुक्तम् । 'यत्कर्म कुरुते तदभिसम्पद्यते' (बृ.उ.६–४–५) इति जीवस्योपलभ्यते । अत आह–**

अत्र नये ईश्वरैककर्तृत्वजीवकर्तृत्वश्रुत्योः विरोधपरिहारः । जीवो विषयः, कर्ता न वेति सन्देहः, न कर्तेति पूर्वपक्षः ॥ **उक्तमिति** ॥ 'इतरव्यपदेशात्' (२.१.२२) इति सूत्रे । सन्देहबीजं श्रुतिविरोधं दर्शयन्ति- **'यत्कर्मेति** ॥ **अत इति** ॥ सयुक्तिक-ईश्वरैककर्तृत्वश्रुतिविरोधेन प्राप्तजीवकर्तृत्व-श्रुत्यप्रामाण्यपरिहारार्थमित्यर्थः ॥

**(विधिनिषेधशास्त्रस्यावैयर्थ्याय जीवस्य कर्तृत्वमङ्गीकरणीयम्)**

**॥ ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ ॥ ३३ ॥**

ज्ञश्चेति वर्तते । चोऽप्यर्थे । अयमर्थः- ज्ञश्च जीवोऽपि **कर्ता** स्वोचितक्रियाविषये कर्तृत्ववान् **शास्त्रार्थवत्त्वात्** विधिनिषेधशास्त्रयोरर्थवत्त्वान्यथानुपपत्तेरिति । अन्यथा शास्त्रमप्रयोजकं स्यादिति भावः । यद्वा शास्त्रार्थवत्त्वात् शास्त्रबोधितफलोद्देश्यत्वादित्यर्थः । तस्य तत्कर्तृत्वं विनाऽनुपपन्नत्वाज्जडे, ईशे च शास्त्रानुष्ठानजन्यफलायोगेन जीव एव कर्ता कल्प्य इति भावः ॥

**जीवस्य कर्तृत्वाभावे शास्त्रस्याप्रयोजकत्वप्राप्तेर्जीवोऽपि कर्ता ॥**

**भा.** ॥ सूत्रार्थमाहुः- **जीवस्येति** ॥ ३३ ॥

**ननु जीवस्य स्वतः कर्तृत्वाभावेऽपि परमतकर्तृत्वे विवेकाग्रहेण स्वस्य कर्तृत्वं मन्यमानं प्रति शास्त्रमर्थ-वदिति शङ्कापरिहाराय सूत्रम्-**

**(मोक्षे विहारोपदेशाज्जीवः कर्तैव)**

**॥ ॐ विहारोपदेशात् ॐ ॥ ३४ ॥**

**ज्ञः, कर्तेति वर्तते । अयमर्थः- ज्ञः कर्ता वास्तवकर्तृत्ववान् विहारोपदेशात् 'स्त्रीभिर्वा यानैर्वा' इत्यादिना मुक्तौ क्रीडाकर्तृत्वोपदेशादिति ॥ मुक्तौ कर्तृत्वं वास्तवमेव भवेदिति भावः ।**

---

२. **यत्कर्मेति** ॥ (बृ.६.४.५) यत् यादृशं **कर्म कुरुते** जीवः तादृशकर्मफलम् **अभिसम्पद्यते** प्राप्नोतीत्यर्थः। अयं च **सिद्धान्ते** । पूर्वपक्षे तु - प्रतीतोऽर्थः ॥ ३३ ॥

**'स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा' (छा.उ.८-१२-३) इत्यादिना मोक्षेऽपि ॥**

भा. ॥ श्रुतिमाहुः- **'स्त्रीभिरिति ॥ इत्यादिना मोक्षेऽपीति** ॥ अस्य सूत्रेऽन्वयः । सूत्रस्य 'जीवोऽपि कर्ता' इति पूर्वभाष्येऽन्वयः ॥ ३४ ॥

मुक्तौ वास्तवकर्तृत्वेऽपि संसारे वास्तवं तन्नेति शङ्कावारणाय सूत्रम्-

**(नौपाधिकं कर्तृत्वमपि तु साधनाद्युपादात् फलानुभवाच्च वास्तवमेव)**

**॥ ॐ उपादानात् ॐ ॥ ३५ ॥**

ज्ञः, कर्तेति वर्तते । संसारेऽपीति शेषः । अयमर्थः- ज्ञः संसारेऽपि कर्ता वास्तवकर्ता **उपादानात्** मुक्त्यर्थं जीवस्य साधनाद्युपादानदर्शनादिति[२] ॥ ततः फलदर्शनादित्यपि ज्ञेयम् । परनिष्ठकर्तृत्वस्य स्वनिष्ठताज्ञानमात्रेण फलादर्शनादिति भावः ।

**साधनाद्युपादानप्रतीतेश्च ॥**

भा. ॥ सूत्रं व्याचक्षते- **साधनेति ॥ प्रतीतेश्चेति** ॥ प्रत्यक्षसिद्धत्वाच्चेत्यर्थः । अस्य 'जीवोऽपि कर्ता' इति पूर्वभाष्येऽन्वयः ॥ ३५ ॥

श्रुत्याऽपि जीवस्य कर्तृत्वसमर्थनाय सूत्रम् -

**(श्रुतिरेव जीवमुपासनाकर्तारमाह)**

**॥ ॐ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॐ ॥ ३६ ॥**

ज्ञः, कर्तेति वर्तते । यथायथमावृतिः । अयमर्थः- ज्ञः कर्ता **क्रियायाम्** उपासनादिक्रियायां **व्यपदेशाच्च** 'आत्मानमेव लोकमुपासीत' इति जीवस्य कर्तृत्वेन निर्देशाच्च, **न चेत्** ज्ञः कर्ता न चेत् **निर्देशविपर्ययः** अत्मैवेति प्रयोगव्यत्यासः स्यादिति ॥ जीवस्य कर्तृत्वे परमात्मन एव कर्तृत्वात्प्रथमान्तः प्रयोगः स्यादिति भावः ।

**'आत्मानमेव लोकमुपासीत' (बृ.उ.३–४–१५) इति क्रियायां व्यपदेशाच्च । अन्यथाऽऽत्मैव लोकमिति निर्देशः स्यात् ।**

१. स्त्रीभिर्वेति ॥ (छा.८.१२.३) व्या. (२३५-पु.) ॥ ३४ ॥ ३५ ॥

२. साधनाद्युपादानादिर्स्वाकारदर्शनादिति (पा.)

भा. ॥ सूत्रघटकपदार्थमाहुः - [1]**आत्मानमेवेति** ॥ **उपासीतेति** ॥ प्रकृत्यर्थोपासनाक्रियायां तिङा कर्तृत्वेन व्यपदेशाच्चेत्यर्थः । अन्यथेति न चेदित्यादेरर्थः ॥ ३६ ॥

**तर्हि कथमीश्वरस्यैव कर्तृत्वमित्यतो वक्ति—**

उत्तरसूत्रमवतारयन्ति- **तर्हीति** ॥ जीवस्य कर्तृत्वे इत्यर्थः । **कर्तृत्वमिति** ॥ युक्तिपादे (२.१) उक्तं कथं घटेतेति भावः ।

**(जीवकर्तृत्वप्रतिषेधपरा श्रुतिः स्वातन्त्र्यनिषेधपरा)**

**॥ ॐ उपलब्धिवदनियमः ॐ ॥ ३७ ॥**

क्रियायां, ज्ञः, कर्तेति वर्तते । यतोऽतः, उक्तमिति शेषः । उपलब्धिवदिति सप्तम्यन्ताद्वतिः । यथायथमावृत्तिविपरिणामौ । अयमर्थः- ज्ञस्य **उपलब्धिवत्** ज्ञाने इव क्रियायाम् **अनियमः** नियतप्राप्त्यभावो यतः अतो ज्ञः कर्ता नेत्युक्तमिति ॥ अयं भावः- यथा इदं ज्ञास्यामीति सङ्कल्पवत्यपि जीवे क्वचिद् विवक्षितविषयकज्ञानलाभो न भवति तथा इदं कुर्यामिति सङ्कल्पवत्यपि विवक्षितक्रियालाभो न भवति अतो 'हिताकरणादि' (२.१.७) नये जीवस्य कर्तृत्वं स्वतन्त्रकर्तृत्वं नेत्युक्तमिति ॥

**यथा ज्ञाने इदं ज्ञास्यामीत्यनियमः प्रतीयते एवं कर्मण्यपि जीवस्य । 'य आत्मानमन्तरो यमयति' (माध्यन्दिनपाठः) इति च श्रुतिः ॥**

भा. ॥ सूत्रं व्याचक्षते- **यथेति** ॥ **ज्ञास्यामीति** ॥ उद्देशेऽपीति शेषः । **अनियमः प्रतीयते इति** ॥ अनुभवरूपप्रतीतिसिद्धानियम इत्यर्थः । जीवस्य कर्मण्यनियमे मानमाहुः- [2]**य इति** ॥ **श्रुतिरिति** ॥ च यतः श्रुतिरस्ति अत एवं कर्मण्यपीति सम्बन्धः ॥ ३७ ॥

**कुतः ?—**

ईशजीवयोः कर्तृत्वाविशेषे जीवस्यानियमः किं निबन्धन इति पृच्छन्ति- **कुत इति** ॥ अनियम इति वर्तते । अस्योत्तरतया सूत्रं पठन्ति-

१. **आत्मानमेवेति** ॥ (बृ. ३.४.१५) **लोकं** सर्वाश्रयं, प्रकाशरूपं वा, **आत्मानं** विष्णुम् **उपासीत** जीव इत्यर्थः ॥ ३६ ॥

२. **य इति** ॥ (बृ.५.७.२२) **य आत्मानं** चतुर्मुखादिजीवम् **अन्तरः** तत्तदन्तर्गतः, **यमयति** नियमयति एष परमात्मा तवान्तर्यामीत्यर्थः । अयं माध्यन्दिनपाठः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

(अल्पशक्तित्वाज्जीवस्य पराधीनकर्तृत्वम्)

**॥ ॐ शक्तिविपर्ययात् ॐ ॥ ३८ ॥**

विपर्ययस्य सावधिकत्वादीश्वरशक्त्यपेक्षयेति लभ्यते । अनियमो, ज्ञस्य, अत इति वर्तते । अनियमपदमनियमप्रयोजकास्वातन्त्र्यपरमपि । अयमर्थः- ज्ञस्य **शक्तिविपर्ययात्** ईश्वरशक्त्यपेक्षया विपरीतशक्तित्वात् अल्पशक्तिमत्त्वादिति यावत् । अनियमोऽस्वातन्त्र्यम् अतोऽनियमः नियतप्राप्त्यभाव इति ॥

**अल्पशक्तित्वाज्जीवस्य ॥**

भा.॥ **अल्पशक्तित्वादिति** ॥ अस्यान्वयो वक्ष्यते ॥ ३८ ॥

युक्त्यन्तरेणोक्तार्थसाधनाय सूत्रम्-

(अलम्बुद्ध्यभावाच्च जीवस्य पराधीनकर्तृत्वम्)

**॥ ॐ समाध्यभावाच्च ॐ ॥ ३९ ॥**

ज्ञस्यानियमोऽत इति वर्तते । अयमर्थः- ज्ञस्य **समाध्यभावाच्च** अलंबुद्ध्यभावाच्च अनियमोऽस्वातन्त्र्यमतोऽनियम इति ॥

**समाधानाभावाच्चास्वातन्त्र्यं प्रतीयते ॥**

भा.॥ सूत्रं विवृण्वन्ति - **समाधानेति** ॥ **प्रतीयत इति** ॥ अनुमीयत इत्यर्थः । **अत इति** ॥ अस्वातन्त्र्यादित्यर्थः । अनियम इति वर्तते । ततश्च कुतोऽनियम इति प्रश्नस्य जीवस्याल्पशक्तित्वात्, समाधानाभावाच्च, अस्वातन्त्र्यं प्रतीयते । अतोऽनियत इत्युत्तरमिति ज्ञेयम् ॥ ३९ ॥

जीवस्य स्वातन्त्र्याभावे कर्तृत्वं न स्यात् स्वतन्त्रो हि कर्ता भवतीति शङ्कावारणाय सूत्रम्-

**अतः—**

(कारयितृनियतत्वं कर्तृत्वं च जीवस्याप्रतिहतम्)

**॥ ॐ यथा च तक्षोभयथा ॐ ॥ ४० ॥**

चो दार्ष्टान्तिकसमुच्चये । ज्ञ इति वर्तते । उच्यत इति शेषः । यथायथमावृत्तिः । अयमर्थः- **यथा तक्षा**

शिल्पी उभयथा प्रासादादिकारयितृनियम्यः प्रासादादिकर्तेति चोच्यते । तथा ज्ञश्च उभयथा ईश्वरनियम्यः साधनादिकर्तेति चोच्यते इति । सादृश्यं तु नियम्यत्वकर्तृत्वमात्रेणेति ज्ञेयम् । 'स्वतन्त्रः कर्ता' इति पाणिनिसूत्रं तु प्रकृतधातूपात्तप्रधानव्यापाराश्रयः कर्तेत्यर्थकमिति न तद्विरोधः ॥

**यथा तक्ष्णः कारयितृनियतत्वं कर्तृत्वं च विद्यते एवं जीवस्यापि ॥**

भा. ॥ सूत्रफलितार्थमाहुः- **यथेति** ॥ ४० ॥

तक्ष्णः कर्तृत्वशक्तेः कारयित्रनधीनवत् जीवकर्तृत्वशक्तेरीश्वरानधीनत्वमिति शङ्कावारणाय सूत्रम्-

**(कर्तृत्वं जीवस्थविष्णोरेव)**

**॥ ॐ परात्तु तच्छ्रुतेः ॐ ॥ ४१ ॥**

ज्ञ इत्यनुवर्त्य ज्ञस्येति विपरिणम्यते । तुरेवार्थे । भवतीति शेषः । अयमर्थः- ज्ञस्य तत् कर्तृत्वसामर्थ्यं परात्तु ईश्वरादेव भवति । श्रुतेः 'कर्तृत्वं करणत्वं च' इति श्रुतेरिति ॥

**सा च कर्तृत्वशक्तिः परादेव ।**

**'कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः ।**
**यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया ॥' इति हि पैङ्गिश्रुतिः ॥**

भा. ॥ सूत्रार्थमाहुः- **सा चेति** ॥ श्रुतिस्वरूपं दर्शयन्ति- **'कर्तृत्वमिति** ॥ **श्रुतिरिति** ॥ यतः श्रुतिरस्ति अतः परादेवेति सम्बन्धः ॥ ४१ ॥

जीवकर्तृत्वस्येशाधीनत्वे कर्तृत्वं नेत्येवेत्यागतं ततश्च शास्त्रमप्रयोजकमेवेति शङ्कावारणाय सूत्रम्-

**(जैवयोग्यताकर्मादिकमपेक्ष्य प्रेरकः विष्णुः)**

**॥ ॐ कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः ॐ ॥ ४२ ॥**

विहितं विधिशास्त्रं प्रतिषेधो निषेधशास्त्रं, तयोरवैयर्थ्यमादिर्येषां तेभ्यः, तादर्थ्ये चतुर्थी । कृतं कर्म ।

---

१. **कर्तृत्वमिति** ॥ कर्तृत्वशक्तिः जीवस्य, करणत्वशक्तिरिन्द्रियाणां, **स्वभावः** परिणामादिः, प्रकृत्यादीनां, जीवस्याल्पज्ञत्वादिशक्तिरूपो वा, **चेतना** चेतसो व्याप्तिः, चैतन्यं वा, **धृतिः** देहधारणसामर्थ्यमित्येतानि, **यत्प्रसादात्** यस्य परमात्मनः प्रसादात् **सन्ति, यदुपेक्षया** यत्कटाक्षाभावेन **न सन्ति** इत्यर्थः ॥ ४१ ॥

**प्रयत्नेत्युपलक्षणं योग्यतादेरपि । कृतप्रयत्नापेक्ष इति तथा । तुरेवार्थे कारयतीति शेषः । परात्, ज्ञ इति वर्तते, विपरिणम्यते यथायथम् । अयमर्थः-** परः परमात्मा **विहितप्रतिषेधावैयर्थ्यादिभ्यः** विधिनिषेध-शास्त्रावैयर्थ्या(द्य)र्थम्, आदिना वैषम्यनैर्घृण्यपरिहारार्थं च, **कृतप्रयत्नापेक्षस्तु** जीवसम्बन्ध्य-नादिकर्मप्रयत्नयोग्यतापेक्षः सन्नेव ज्ञेन प्रवृत्त्यादिकं कारयतीति ॥ यद्यपि 'वैषम्यनैर्घृण्य' (२.१.१०) नय एवैतद्दोषपरिहारः कृतः । तथापि शास्त्रानर्थक्यपरिहाराय तस्यैव स्मरणमित्यदोषः ॥

**ततोऽप्रयोजकत्वं शास्त्रस्य नाऽपद्यते । कृतप्रयत्नापेक्षत्वात्तत्प्रेरकत्वस्य । आदि-शब्देनावैषम्यादि ।**

**'पूर्वकर्म प्रयत्नं च संस्कारं चाप्यपेक्ष्य तु ।**
**ईश्वरः कारयेत् सर्वं तच्चेश्वरकृतं स्वयम् (मतम्) ।**
**अनादित्वाददोषश्च पूर्णशक्तित्वतो हरेः ॥' इति भविष्यत्पर्वणि ।**
**'एतदेवं न चाप्येवमेतदस्ति च नास्ति च ॥' इति च मोक्षधर्मे ॥**

**॥ इति कर्तृत्वाधिकरणम् ॥**

**भा. ॥** सूत्रार्थमाहुः- **तत इति ॥** तच्छब्देन पूर्वसूत्रार्थः परामृश्यते । अपीति शेषः । जीवकर्तृत्वस्य पराधीनत्वेऽपीत्यर्थः । **शास्त्रस्य-** विधिनिषेधशास्त्रस्य । **अप्रयोजकत्वं-** प्रयोजनशून्यत्वम् । **नाऽपद्यते-** न प्रसज्यते इत्यर्थः । **अवैषम्यादीति ॥** सङ्गृहीतमिति शेषः । ननु कर्माद्यपेक्षया कारयितृत्वे कर्मादेः स्वातन्त्र्यं स्यादिति शङ्कावारणाय सूत्रार्थे स्मृतिमाहुः- [1]**पूर्वे इति ॥ पर्वणीति ॥** तत्रेत्युक्तेः कृतप्रयत्नापेक्ष इत्यन्वयः । अधिकरणार्थे स्मृतिमाहुः- [2]**एतदेवमिति ॥ मोक्षधर्मे इति ॥** एतदधिकरणार्थ उक्त इति शेषः ॥ ४२ ॥ अ.१७ ॥

**॥ इति कर्तृत्वाधिकरणम् ॥**

---

१. **पूर्वकर्मेति ॥ संस्कारो** योग्यता । जीवेनेति शेषः । **कारयेत्** कारयति, **सर्वं** पुण्यपापादि, **तच्च** अपेक्ष्यमाणं कर्म, अनादित्वात्कर्मण इति शेष इत्यर्थः । शिष्टं स्पष्टम् ॥

२. **एतदेवमिति ॥** यत **एतत्** जीवस्य कर्तृत्वम् **एवं** प्रामाणिकम् **एवं न** ईश्वरवत् स्वातन्त्र्येण न अत **एतत्** जीवस्य कर्तृत्वमस्वातन्त्र्येण **अस्ति** स्वातन्त्र्येण **नास्ति** इत्यर्थः । अतः श्रुतौ 'नान्यः कर्ता' इत्युच्यत इति भावः ॥ ४२ ॥अ.१७॥

## १८. अंशाधिकरणम्

**'अंशा एव हीमे जीवा अंशी हि परमेश्वरः ।**
**स्वयमंशैरिदं सर्वं कारयत्यचलो हरिः ॥'**

**इति गौपवनश्रुतौ अंशत्वं जीवस्योपलभ्यते ।**

**'नैवांशो न सम्बन्धो नापेक्ष्यो जीवः परस्य ।**
**तथाऽपि तु यथायोगं फलदः प्रभुरेकराट्**
**न नियम्यः स कस्यापि स सर्वस्य नियामकः ॥' इति च भाल्लवेयश्रुतौ ।**

**अतो ब्रवीति–**

अत्र नये जीवस्येशानंशत्वश्रुतिविरोधपरिहारः । जीवो विषयः । ईश्वरांशो न वेति सन्देहः, नेश्वरांशो जीव इति पूर्वपक्षः । यद्वा- ईश्वरांशत्वेनानंशत्वेन वा जीवो निर्णेतुं शक्यो न वेति सन्देहः। न शक्य इति पूर्वः पक्षः ॥ सन्देहबीजश्रुती आहुः- **'अंशा इत्यादि ॥ अंशत्वमिति** ॥ पूर्वपक्षे । अंशत्वं चाभिन्नत्वे सत्युपजीवकत्वं यथा इन्द्रादेरर्जुनादौ, मृदादेर्घटादौ । **श्रुताविति** ॥ अनंशत्वमिति शेषः । तत्त्वं च - भिन्नत्वे सत्युपकारकत्वाभावः । जीवस्योपलभ्यत इति वर्तते । **अत इति** ॥ परस्परविरोधप्रयुक्तोभयश्रुत्यप्रामाण्यपरिहारार्थमित्यर्थः ॥

**(विष्णोर्भिन्नांशः जीवः)**

### ॥ ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ ॥ ४३ ॥

**परात्तु, ज्ञः,** इति वर्तते । यथायथमावृत्तिविपरिणामौ । **चापिशब्दौ अन्यथेत्यस्योभयत्रापि सम्बन्धबोधनाय । अयमर्थः** - **ज्ञः** परस्य परमात्मनः **अंशः** तु अंश एव **नानाव्यपदेशात् 'मां रक्षन्तु' इति स्मृतौ 'द्वा सुपर्णा' इति श्रुतौ, पितृत्वपुत्रत्वसखित्वादिनानाविधसम्बन्धित्वेन उपजीवकत्वेनेति यावत् । व्यपदेशात्,**

---

१.**अंशा इति** ॥ **इमे** प्रतीयमानाः **अंशा एव** परमात्मनोऽंशभूता एव तदुपजीव्यकत्वेन शेषभूता एव, ततोऽनधिकत्वे सति सादृश्ययुक्ता एव वा, **अचलः** स्वपदभ्रंशरहित इत्यर्थः । शिष्टं स्पष्टम् ॥ **नैवेति** ॥ **जीवः परस्य** परमात्मनः **अंशो नैव, न सम्बन्धः** लौकिकपित्रादिवत् पोषकत्वादिसम्बन्धवान्न भवति, **नापेक्ष्यः** उपकर्ताऽपि न, **तथापि** एवमपि, **स** ईशः, जीवस्य **यथायोगं** योग्यतामनतिक्रम्य, **फलदः** स्वर्गमोक्षादिफलप्रदः, **एकराट्** स्वतन्त्रः, **प्रभुः** समर्थः, **कस्यापि न नियम्यः, सर्वस्य नियामक** इत्यर्थः । प्रभुत्वात् योग्यताऽपि परमात्माधीनेति ज्ञेयम् ॥

**अन्यथा च** 'नासावस्य कुतश्चन' इति श्रुत्या असम्बन्धित्वेन च अनुपजीव्यत्वादिनेति यावत् । व्यपदेशात्, यत एके शाखिनः परस्य ब्रह्मणो **दाशकितवादित्वं** 'ब्रह्मदाशा ब्रह्मकितवाः' इत्यादिना दाशत्व-कितवत्वोपलक्षिततत्तज्जातियुक्तत्वं जीवाभिन्नत्वमिति यावत् । **अधीयते** वदन्ति, तुल्यन्यायेन जीवस्य ब्रह्माभिन्नत्वं वदन्तीति यावत् । **एके** अन्यथा च 'अन्यः परः' इत्यादिना जीवस्य ब्रह्मभिन्नत्वमधीयतेऽत-श्चेति ॥ अयंभावः- अंशत्वं तदधीनसत्ताकत्वे सति तत्सदृशत्वं सूत्रे नानाव्यपदेशतदभावव्यपदेशयोरंशत्वघटक-तदधीनसत्ताकत्वे प्रयोजकत्वं भेदाभेदव्यपदेशयोस्तु सादृश्ये प्रयोजकत्वं भेदाभेदान्यतरमात्रस्य सादृश्य-नियामकत्वाभावेन उभयोपादानम् । भेदो वास्तवः । अभेदव्यपदेशस्तु सादृश्यमूलकः । यद्वा- अंशत्वं द्विविधम् - उपजीवकत्वमनधिकत्वे सति (न्यूनत्वे सति वा) सदृशत्वं च इति । तत्राद्यांशत्वस्य साधको नानाव्यपदेशात्तदभावरूपहेतुः । द्वितीयांशत्वस्य साधको भिन्नत्वाभिन्नत्वव्यपदेश इति ॥

**'मां रक्षतु विभुर्नित्यं पुत्रोऽहं परमात्मनः'** । **'अवः परेण पितरं यो अस्यानुवेद पर एनावरेण' (ऋ.सं.१–१६४–१८) । 'यस्तद्वेद स पितुष्पिताऽसत्' (म.ना.उ.२–४) । 'यस्ता विजानात्स पितुष्पिताऽसत्' (ऋ.सं.१–१६४–१६) ।**

**'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मु.उ. ३–१–१) इत्यादिना नानाव्यप-देशादंशो जीवः । तथा च पाराशर्यायणश्रुतिः –**

**'अंशो ह्येष परस्य योऽयं पुमानुत्पद्यते च म्रियते च नाना ह्येनं व्यपदिशन्ति पितेति पुत्रेति भ्रातेति च सखेति च' इति । 'अन्यः परोऽन्यो जीवो नासावस्य कुतश्चन । नायं तस्यापि कश्चन' इत्यन्यथा च काषायणश्रुतिः । 'ब्रह्म दाशा ब्रह्म कितवाः, ब्रह्मैवेमे दाशाः' इत्यभेदेनाप्येकेऽधीयते । तथा चाग्निवेश्यश्रुतिः–'अंशो ह्येष परस्य भिन्नं ह्येनमधीयिरेऽभिन्नं ह्येनमधीयिरे' इति । वाराहे च–**

**'पुत्रभ्रातृसखित्वेन स्वामित्वेन यतो हरिः ।**
**बहुधा गीयते वेदैर्जीवोंऽशस्तस्य तेन तु ॥**
**यतो भेदेन तस्यायमभेदेन च गीयते ।**
**अतश्चांशत्वमुद्दिष्टं भेदाभेदौ न मुख्यतः ॥' इति ॥**

भा. ॥ व्यपदेशविषये स्पष्टत्वात्प्रथमं स्मृतिमुदाहरन्ति- [1]**मामिति** ॥ तत्रैवार्थे श्रुतिमाहुः- [2]**अवःपरेणे-त्यादि** ॥ नानाव्यपदेशादंशो जीव इत्यत्र श्रुतिमाहुः- [3]**अंशो ह्येष इति** ॥ **इति चेतीति** ॥ वक्तीति शेषः । अन्यथेति सूत्रखण्डस्यार्थस्फोरणायान्यथाव्यपदेशं श्रुत्याऽऽहुः- [4]**अन्यः पर इति** ॥ **अन्यथा चेति** ॥ वक्ष्यमाण'ब्रह्म दाशा'इति श्रुत्युक्ताभिन्नत्वपूर्वश्रुत्युक्तसम्बन्धित्वाभ्यामन्यथा सम्बन्धित्व-

---

१. **मामिति** ॥ स्पष्टम् । **सिद्धान्ते** अंशत्वबोधकश्रुतिर्भिन्नांशत्व''' अनंशत्वबोधकश्रुतिः स्वरूपांशत्वनिषेध-परा । पूर्वपक्षे तु आपातप्रतीत एवार्थः ।

२. **अव इति** ॥ (ऋ.१.१४४.१८) 'कवीयमानः क इह प्रावोचद्देवं मनः कुतोऽधि प्रजातम्' इत्युत्तरवाक्य-मस्य । यतः **परेण** हरेः सकाशात् **अवः** अव(ध)मो **यो** जीवः, **अस्य** जगतः, स्वस्य वा, **पितरं** परमात्मानम्, **अनुवेद** यथावज्जानाति अतोऽयं **परः** परमात्मा, **एन** एतेन **अवरेण** जीवेन जात इति व्यपदिश्यत इति शेषः। **इह** लोके **कवीयमानः** सर्वज्ञकल्पत्वेनाभिमतः, **को नु** को वा, **इह** प्रजासु **अधि ब्रह्म प्रावोचत्** न कोऽपि, **कुतः** कस्य वा **देवं** देवसम्बन्धि ब्रह्मविषयकं **मनः** ज्ञानम् **अधि** आधिक्येन **प्रजातं** समुत्पन्नं न कस्यापीत्यर्थः। एवं च ब्रह्मविषयकज्ञानस्य दुर्लभत्वात् ज्ञानविषयीकरणमेव ब्रह्मण उत्पत्तिरित्युच्यते । ज्ञान-विषयत्वेऽपि तदुत्पन्नत्वव्यवहारो नास्ति । घटादौ तज्ज्ञानस्य दुर्लभत्वाभावादिति भावः ॥ **यस्तद्वेदेति** ॥ (महा.ना. १.१४) अस्य पूर्ववाक्यं 'त्रीणि पदा निहिता गुहासु' इति । यस्य **त्रीणि पदानि** स्वरूपाणि नारायणवासुदेव-वैकुण्ठाख्यानि, गूहितत्वात् **गुहासु** श्वेतद्वीपानन्तासनवैकुण्ठेषु **निहितानि तत्** ब्रह्म **यो वेद, स** जीवः **पितुः** जगत्पितुः ब्रह्मणः, **पिता आसत्** अभवदित्यर्थः । **यस्ता इति** ॥ (ऋ.१.१६४.१६) अस्य पूर्ववाक्यम्- 'स्त्रियस्सतीस्ता उ मे पुंस आहुः पश्यदक्षण्वान्नविचेतदन्धः। कविर्यः पुत्रः स ईमा चिकेत' इति । **सतीः** सत्यः निर्दुष्टाः **स्त्रियः** स्त्रीलिङ्गशब्दवाच्य **मे** मदुपास्याः या भगवन्मूर्तयः **ता उ** ता एव **पुंसः** पुल्लिङ्गशब्दवाच्यान् **आहुः** वेदादयः, योऽधिकारी, **ताः पश्यत्** पश्यति, **सोऽक्षण्वान्** चक्षुष्मान्, **यो न विचेतत्** न विजानाति सः **अन्धः यः कविः** सर्वज्ञः भगवत्पुत्रोऽपि विरिञ्चः, **स ई** स एव, **ईम्** एवार्थः, **आ** समन्तात् सम्यक् **चिकेत** जानाति, **यश्च ताः** मूर्तीः, **विजानात्** जानाति, **सः पितुः** जगत्पितुर्विष्णोः, **पिता** जनकः अभिव्यञ्जकत्वात्, **अ सत्** अभवदित्यर्थः । **द्वा सुपर्णेति** ॥ व्या. (२०८-पु.)

३. **अंशो ह्येष इति** ॥ स्पष्टम् ॥

४. **अन्यः पर इति** ॥ **परः** परमात्मा **अन्यः**, **जीवोऽन्यः**, परस्परभेदवन्ताविति यावत् । **असौ** परमात्मा, **अस्य** जीवस्य, **कुतश्चन** केनापि प्रकारेण उपकर्तव्यो **न** किन्तु उपकर्तैव, **अयं** जीवोऽपि **तस्य** परमात्मनः **कश्चन** उपकर्ता **न** किन्तूपकर्तव्य एवेत्यर्थः ॥

भिन्नत्वेनेत्यर्थः । भिन्नत्वाभिन्नत्वाभ्यामंशत्वे श्रुतिं चाहुः- [1]**ब्रह्म दाशा इत्यादि** ॥ समग्रसूत्रार्थे स्मृतिमाहुः- [2]**पुत्रेति** ॥ **इतीति** ॥ ततश्च इति पाराशर्यायणश्रुतिस्तथा वक्ति, इति काषायणश्रुतिरन्यथा वक्ति यतोऽधीयते, इत्याग्निवेश्यश्रुतिस्तथा वक्ति, अतश्च, वाराहे इत्युक्तेश्चांशो जीव इति सम्बन्धः ॥ ४३ ॥

**श्रुत्याप्यंशत्वसाधनाय सूत्रम्-**

**(जीवस्यांशत्वं श्रुतिसिद्धम्)**

## ॥ ॐ मन्त्रवर्णात् ॐ ॥ ४४ ॥

**ज्ञः, परस्य, अंश इति वर्तते । अयमर्थः- मन्त्रवर्णात् 'पादोऽस्य विश्वा भूतानि' इति ऋङ्मन्त्रसत्त्वात् ज्ञः परस्यांश इति ॥**

**'पादोऽस्य विश्वा भूतानि' (ऋ.सं.१०—९०—३) इति ॥**

**भा.** ॥ मन्त्रं पठन्ति- [3]**पादोऽस्येति** ॥ **इतीति** ॥ अस्य सूत्रेऽन्वयः । सूत्रस्य 'अंशो जीव' इति पूर्वभाष्येऽन्वयः ॥ ४४ ॥

**स्मृत्यांऽशत्वसाधनाय सूत्रम्-**

**(स्मृत्याऽपि जीवस्य परांशत्वं सिद्धम्)**

## ॥ ॐ अपि स्मर्यते ॐ ॥ ४५ ॥

**ज्ञः, परस्य, अंश इति वर्तते । अयमर्थः- ज्ञः परस्यांश इति स्मर्यते 'ममैवांशः' इति स्मृत्या अपि प्रतिपाद्यते इति ॥**

१. **ब्रह्म दाशा इति** ॥ 'ब्रह्मैवेमे दाशा' इति वाक्यमुपसंहारस्थं, शाखान्तरस्थं वा, अतो न पुनरुक्तिः । ये **दाशाः** नौ तारकाः, ते **ब्रह्म** तदभिन्नाः, ये **कितवाः** ते ब्रह्माभिन्नाः, ये च **अमी दाशाः** स्वामिषु आत्मानमुपक्षिपन्तः तेऽपि ब्रह्माभिन्ना इत्यर्थः ।
**अंशो हीति** ॥ **हि** यतः, **एनं** जीवं **भिन्नं** परमात्मनो भिन्नम्, **अभिन्नं च**, **अधीयिरे** । अतः **परस्यांशो हि** अंश एव एष जीव इत्यर्थः ॥

२. **पुत्रेति** ॥ **यतो हरिः** पुत्रत्वादिना **बहुधा गीयते वेदैः**, **तेन** निमित्तेन **तस्य** हरेः **अंशो जीवः** अयं जीवो **यतश्च तस्य** हरेः **भेदेनाभेदेन च गीयते । अतश्च अंशत्वमुद्दिष्टम्** । ईशजीवयोः **भेदाभेदौ मुख्यतः** घटकपालयोरिव **न** इत्यर्थः ॥ ४३ ॥

३. **पादोऽस्येति** ॥ (ऋ.१०-९-३) **विश्वा भूतानि** सर्वे जीवाः, **अस्य** विष्णोः, **पादः** अंश इत्यर्थः ॥४४॥

**'ममैवांशो जीवलोके जीवभूतः सनातनः' (भ.गी.१५–७) इति ॥**

भा. ॥ स्मृतिमाहुः- **'ममैवेति ॥ इतीति ॥** अस्य सूत्रेऽन्वयः । सूत्रस्य यतः स्मर्यते अतः 'अंशो जीवः' इति पूर्वभाष्येऽन्वयः ॥ ४५ ॥

**अनंशत्वश्रुतेर्गतिं चाह–**

उत्तरसूत्रमवतारयन्ति- **अनंशत्वेति ॥ श्रुतेरिति ॥** नैवांश इत्युदाहृतश्रुतेरित्यर्थः । **गतिं चेति ॥** गतिं विषयं, चेन मत्स्याद्यसाम्यं गृह्यते ॥

**(अनंशत्वश्रुतिः जीवस्यापूर्णशक्तिप्रतिपादिका)**

**॥ ॐ प्रकाशादिवन्नैवं परः ॐ ॥ ४६ ॥**

**प्रकाशादीति बहुव्रीहिः । तृतीयान्ताद्वतिः । अपीति वर्तते, स च समुच्चये । प्रकाशपदेन तेजोंऽशकालाग्न्यभिमानी, आदिना जलांशामृतसमुद्राभिमानी, पृथिव्यंशमेरुपर्वताभिमानी च, गृह्यते । अयमर्थः- परो मत्स्यादिरूपी परमात्मा तु अपि अंशत्वाविशेषेऽपि एवं भिन्नांशो न, प्रकाशादिवत् तेजोंऽशकालाग्न्यादिवदिति । अयं भावः- यथा तेजोंऽशत्वाविशेषेऽपि कालाग्न्याद्यभिमानिनां स्वमूलरूपात् खद्योताद्यभिमान्यपभ्रष्टदेवतावद्भिन्नांशत्वं नास्ति तथा अंशत्वाविशेषेऽपि मत्स्यादिरूपिणः परस्य जीववद्भिन्नांशत्वं नेति ॥**

**अंशत्वेऽपि न मत्स्यादिरूपी पर एवंविधः । यथा तेजोंऽशस्यैव कालाग्नेः खद्योतस्य च नैकप्रकारता । यथा जलांशस्यामृतसमुद्रस्य मूत्रादेश्च । यथा च पृथिव्यंशस्य मेरोर्विष्टादेश्च । अभिमानिदेवतापेक्षयैतत् ॥**

भा. ॥ सूत्रभावमाहुः- **अंशत्वेऽपीति ॥ एवंविध इति ॥** जीववद्भिन्नांशम् इत्यर्थः । **नैकप्रकारतेति ॥** मूलभूतेनात्यन्ताभेदवत्त्वं वाऽत्यन्तभेदवत्त्वं वा नेत्यर्थः । किन्तु कालाग्न्यादेरत्यन्ताभेदः खद्योतादेरत्यन्तभेद एवेति भावः । ननु कालाग्न्यादेः, खद्योतादेश्च, मूलतेजःप्रभृतिभिर्भेदाभेदाङ्गीकारात्कथं कालाग्न्यादेरत्यन्ताभेदः खद्योतादेरत्यन्तभेद इत्यत आहुः- **अभिमानीति ॥ एतदिति ॥** प्रकाशादिदृष्टान्तवर्णनमित्यर्थः ॥ ४६ ॥

---

१. **ममैवेति ॥** (गी.१५.७) **जीवलोके** जीवच्छरीरे, स्थितः **सनातनो** नित्यः. **जीवभूतः** जीवभावोपेतो ब्रह्मादिचेतनः **ममैवांश** इत्यर्थः ॥ ४५ ॥ ४६ ॥

कथं दृष्टान्तमात्रेणार्थसिद्धिर्मानाभावादिति शङ्कावारणाय सूत्रम्-

(स्वरूपांशाः भिन्नांशा अपूर्णाः)

**॥ ॐ स्मरन्ति च ॐ ॥ ४७ ॥**

नैवं पर इति वर्तते । च इत्यर्थे च । अयमर्थः- च यतः परः मत्स्यादिरूपी विष्णुः एवं जीववद्भिन्नांशोऽपि नेति **स्मरन्ति** स्मृत्या बोधयन्ति व्यासादयः अतश्च परः एवं नेति ॥

**'एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्' (भागवते १)**

**'अतः परं यदव्यक्तमव्यूढगुणबृंहितम् ।**
**अदृष्टाश्रुतवस्तुत्वात् स जीवो यः पुनर्भवः ॥' (भागवते १)**

**'स्वांशश्चाथो विभिन्नांश इति द्वेधांऽश इष्यते ।**
**अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथा स्थितिः ॥**
**तदेव नाणुमात्रोऽपि भेदः स्वांशांशिनोः क्वचित् ।**
**विभिन्नांशोऽल्पशक्तिः स्यात् किञ्चित्साद्दश्यमात्रयुक् ॥' इति वाराहे ।**

**'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽस्य' (भ.गी. ११–४३) इत्यादि ।**

भा. ॥ स्मृतीरुदाहरन्ति- '**एते इति** ॥ **पुनर्भव इति** ॥ इति भागवत इति शेषः । मत्स्यादीनां चोक्त-

---

१. **एते इति** ॥ एते वराहाद्या अवताराः, **पुंसः** परमपुरुषस्य नारायणस्य, **स्वांशकलाः** स्वांशरूपतया कल्प्याः। **स्वयं** साक्षात् **भगवान् कृष्णस्तु** मूलरूप्येव, एते मूलरूपात्यन्ताभिन्नाः, एते वराहादयः, **इन्द्रारिव्याकुलं** दैत्यैः पीडितं **लोकं** जनं **युगे युगे** पुनः पुनरवतीर्य **मृडयन्ति** रक्षन्ति, सुखयन्ति च । **अतः** परमपुरुषात् जडाच्च **परम्** अन्यत् **अव्यक्तम्** अकार्यं, सूक्ष्मं वा, **अव्यूढगुणबृंहितं** कदापि अनपगतसत्त्वादिगुणकं चैतन्यम् **अदृष्टाश्रुतवस्तुत्वात्** अदृष्टमसाक्षात्कृतं अश्रुतं श्रवण-मनन-निदिध्यासनाविषयीकृतं वस्तु ब्रह्म येन तत् तथा तस्य भावः तस्मात् । **यः पुनर्भवः** पुनः पुनः जन्मादिमान् स जीव इत्यर्थः । अत्र 'युगे युगे' इत्यनन्तरम्, 'अतः परम्' इत्यतः पूर्वम् 'ऋषयो मनवो देवा ऋषिपुत्रा महौजसः । कलाः सर्वे हरेरेव सप्रजापतयः, स्मृताः' इति श्रूयते । अत्र 'स्वांशकलाः' इत्यनेन वराहादीनां स्वरूपांशत्वमुक्तम् । 'ऋषयो मनवः' इत्यनेन जीवानां भगवदंशत्वमुक्त्वा 'अतःपरम्' इत्यनेन भिन्नत्वं चोक्तमिति ज्ञेयम् ।

वैलक्षण्ये स्मृतिमाहुः- [1]**स्वांशश्चेति** ॥ स्वरूपांशत्वं कृष्णाद्यवतारेष्वस्तीत्यत्र स्मृतिमाहुः- [2]**नेति** ॥ भागवते पुनर्भव इति, वाराहे मात्रयुगिति, अन्य इति च, स्मरन्तीति सूत्रेणान्वयः । सूत्रस्य 'एवंविध' इति पूर्वभाष्येणान्वयः ॥ ४७ ॥

**युक्त्यन्तरेण जीवानां, मत्स्यादीनां चैकविधतापरिहाराय सूत्रम्-**

**(जीवानां मत्स्यादीनां च नैकविधता)**

## ॥ ॐ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॐ ॥ ४८ ॥

**परात्तु, नैवं, परः, अंशोऽपि, ज्ञः, इति वर्तते । यथायथमावृत्तिविपरिणामौ, भावप्राधान्यं च । अनुज्ञा तत्प्रयोज्या प्रवृत्तिः ।** ज्योतिरादिवदिति षष्ठ्यन्ताद्वतिः । ज्योतिःपदेन **सूर्यांशचक्षुरभिमानी, सूर्यांश-प्रभाऽभिमानी वा ग्राह्यः । आदिना** जलांशश्लेष्माभिमानी, जलांशामृतसमुद्राभिमानी वा, **गृह्यते । अत** इति शेषः । **अयमर्थः- ज्योतिरादिवत्** सूर्यांशचक्षुरभिमानिजलांशश्लेष्माभिमानिनोरेव **स्वांशिसूर्यात् स्वांशिकर्मानिर्मितदेहसम्बन्धहेतुकानुज्ञापरिहारवत्** ज्ञस्य तु जीवस्यैव परात् स्वांशिपरमात्मसकाशात् **देहसम्बन्धात्** स्वांशिकर्मानिर्मितदेहसम्बन्धाद्धेतोः **अनुज्ञापरिहारौ** भवतः अतो वैलक्षण्यात् ज्ञो जीवः एवं परवदभिन्नांशो नेति । दृष्टान्ते एवेन सूर्यांशप्रभाभिमानिजलांशामृतसमुद्राभिमानिनोः सूर्य-वरुणांशयोर्व्यावृत्तिः, दार्ष्टान्तिके मत्स्यादिरूपिणो व्यावृत्तिः । यद्वा- ज्योतिरादिवत् सूर्यांशप्रभाभिमानि-जलांशामृतसमुद्राभिमानिनोरंशितः स्वांशिकर्मानिर्मितदेहसम्बन्धहेतुकानुज्ञापरिहाराभाववत् परस्य मत्स्यादि-रूपिणः परात् स्वांशिपरमात्मनः देहसम्बन्धात् स्वांशिकर्मानिर्मितदेहसम्बन्धाद्धेतोः अनुज्ञापरिहारौ न भवतः । अतो वैलक्षण्यात् पर एवं जीववद्भिन्नांशो नेत्यर्थः ॥ तथा चेमौ प्रयोगौ- 'जीवः स्वांश्यधीन-प्रवृत्त्यादिमान् स्वांशिकर्मानिर्मितदेहवत्त्वादपभ्रष्टदेवतावत्' स्वकर्मनिर्मितदेहवत्त्वस्य हेतुत्वे सूर्यप्रकाशे व्यभिचारः । मत्स्यादिरूपी परः स्वांश्यधीनप्रवृत्त्यादिमान्न भवति स्वांशिकर्मानिर्मितदेहाभावात् सूर्य-प्रभाभिमानिवदिति ॥

**परानुज्ञया प्रवृत्तिः, परतो बन्धनिवृत्तिश्च जीवस्य प्रतीयते, अंशत्वेऽपि देह-सम्बन्धात् । 'य आत्मानमन्तरो यमयति'(माध्यन्दिनपाठः) । 'तमेवं विद्वान्'**

---

१. **स्वांशश्चेति** ॥ **सामर्थ्यं** जगत्सृष्ट्यादिसामर्थ्यं **स्वरूपं** ज्ञानानन्दादिस्वरूपं, **स्थितिः** सर्वोत्तमत्वादिरूपा, सर्वगतत्वादिपरिमाणं वा, **तदेव** (सामर्थ्याद्येव) स्वरूपांशस्यापीति शेष इत्यर्थः । शिष्टं स्पष्टम् ।

२. **न त्वत्सम इति** ॥ (गी.११-४३)**त्वत्सम एव नास्ति कुतोऽभ्यधिक** इत्यर्थः । शिष्टं स्पष्टम् ॥४७॥

(तै.आ.३–१२) इत्यादिना । न तु परस्य । 'वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नारसिंहो वामनो रामो रामः कृष्णो बुद्धः कल्किरहं शतधाऽहं सहस्रधाहममितोऽहमनन्तोऽहं नैवैते जायन्ते न म्रियन्ते नैषामनुज्ञा न बन्धो न मुक्तिः सर्व एव ह्येते पूर्णा अजरा अमृताः पराः परानन्दा' इति हि चतुर्वेदशिखा-याम् । युज्यते च ज्योतिरादिवत् । यथाऽऽदित्यो वियद्गतस्तत्प्रकाशश्चैकप्रकारः । 'शुक्लं कृष्णं कनीनिकेति' (ऐ.आ.२–१–५) इति तदंशस्याप्यक्ष्णो देहसम्बन्धान्न तादृशी शक्तिः । तदनुग्राह्यत्वं तेनैवाऽवृतिपरिहारश्च । यथा बाह्यामृतजलस्यामृत-समुद्रस्य चैकत्वं तदंशस्यापि श्लेष्मणस्तदनुग्राह्यत्वं तेनैव विरोधिनिवृत्तिश्च । मोक्षधर्मे च–

'यत्किञ्चिदिह लोकेऽस्मिन् देहबद्धं विशाम्पते ।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ॥
ईश्वरो हि महद्भूतं प्रभुर्नारायणो विराट् ।
भूतान्तरात्मा विज्ञेयः[१] सगुणो निर्गुणोपि च ॥
भूतप्रलयमव्यक्तं शुश्रूषुर्नृपसत्तम ॥' इति ॥

वाराहे च–

'अंशाश्च देहयोग्यत्वाज्जीवा बन्धादिसंयुताः ।
अनुग्राह्याश्चेश्वरेण न तु मत्स्यादिको हरिः ॥
अदेहबन्धयोग्यत्वाद्यथा सूर्यप्रभाक्षिणी ।
यथाऽमृतसमुद्रस्य श्लेष्मादेश्च द्विरूपता ।
अनुग्राह्यत्वमन्यस्य तेनैवाऽवृतिरोधनम् ॥' इति ।

१. 'वरदः' इति सूत्रार्थमणिमञ्जरीसम्मतः पाठः ।

**भा.** ॥ सूत्रं व्याचक्षते- **परेति** ॥ प्रतीयत इत्यत्र मानमाहुः- [1]**य आत्मानमित्यादि** ॥ **आदिनेति** ॥ इत्यादिना प्रतीयत इति सम्बन्धः ॥ **न तु परस्येति** ॥ प्रतीयत इति वर्तते । अत्र मानमाहुः- [2]**वासुदेव इति** ॥ **शिखायामिति** ॥ तत्रेत्युक्तेः 'न परस्य प्रतीयते' इति सम्बन्धः । जीवोऽश्यधीनप्रवृत्त्यादिमान् देहसम्बन्धादित्यत्र व्याप्तिमाहुः- **युज्यते चेति** ॥ ज्योतिरादिवदित्यस्य विवरणम्- **यथेत्यादि** ॥ **आदित्य इति** ॥ वियद्गतादित्यमण्डलाभिमानी, तत्प्रकाशश्च- वियद्गततत्प्रभाभिमानी च । **एकप्रकारः**- अंश्यनुज्ञादिरहितः । [3]**शुक्लं कृणं कनीनिकेतीति** ॥ इति श्रुत्या 'यदेतदादित्यस्य शुक्लम्भाः सैव ऋक् । अथ यन्नीलं परःकृष्णं तत्साम' इति (१.६.७) छान्दोग्योक्तसूर्यसमानधर्मवत्त्वबोधनद्वाराऽवगतस्येत्यर्थः । **तदंशस्यापि** - सूर्यांशस्यापि । **अक्ष्णः**- तदभिमानिनः **आवृतिः**- तम इत्यर्थः । आदिशब्दग्राह्यं दृष्टान्तमाहुः- **यथा बाह्यजलस्येति** ॥ अंशबाह्यशुद्धजलाभिमानिवरुणस्य । अमृतसमुद्रस्य बहिरावरणोदकसप्तसमुद्राभिमानिवरुणांशस्य च । एकत्वम् एकप्रकारत्वं, तदंशस्यापि जलांशस्यापि । **श्लेष्मणः**- तदभिमान्यपभ्रष्टदेवतायाः । **विरोधीति** ॥ पित्तधातुरित्यर्थः । नन्वंश्यधीनप्रवृत्त्यादिशून्ये मत्स्यादिरूपिणि स्वांशिकर्मानिर्मितदेहवत्त्वहेतोर्व्यभिचार इत्यत आहुः- **मोक्षधर्मे च**- [4]**यत्किञ्चिदिति** ॥ चः शङ्कानिर्वर्तकः । मोक्षधर्मे इत्युक्तेः न व्यभिचारशङ्केत्यर्थः । तथा च-

---

१. **य इति** ॥ व्या. (४४२.पु.) ॥ **तमिति** ॥ व्या.(३९.पु.) ॥

२. **वासुदेव इति** ॥ विष्णुवाक्यमेतत् । **वासुदेवादिचतूरूपवान्**, **मत्स्यादिदशरूपवान्**, **रामः** भार्गवः, **रामः** दाशरथिः, **शतधा** नारायणादिशतरूपवान्, नारायणादेरष्टोत्तरशतत्वेऽपि शतसङ्ख्यायाः प्रचुरत्वाद्ग्रहणं, **सहस्रधा** विश्वादिसहस्ररूपवान्, **अमितः** पद्मादिबहुरूपवान्, **अनन्तः** अमिताद्यनन्तरूपी, **एषां** वासुदेवादीनाम् **अनुज्ञा** प्रवृत्यर्थं परानुज्ञा, **हि** यस्मात् एते **सर्वे पूर्णाः**, **अमृता** नित्यमुक्ताः, **परा** लोकविलक्षणा अत इत्यर्थः । शिष्टं स्पष्टम् ।

३. **शुक्लं कृष्णमिति** ॥ (ऐ.आ. २.१.५)(तृ) 'त्रिवृदिव वै चक्षुः' इति पूर्ववाक्यम् । **चक्षुः शुक्लं कृष्णं कनीनिकेति त्रिवृदिव वै** त्रित्वेन वर्तत एवेत्यर्थः ।

४. **यत्किञ्चिदिति** ॥ **हे विशाम्पते** युधिष्ठिर, **अस्मिन्** जगति **यत्किञ्चित्** जीवजातं **देहबद्धं** वर्तते, तत् **ईश्वरबुद्धिजैः** तन्निमित्तकैः **पञ्चभिर्भूतैराविष्टं** बद्धं, **हि** यस्मात् **ईश्वरः महत्** पूज्यः, अपरिच्छिन्नो वा, **भूतं** सदास्थितः निर्विकारो वा, **नारायणो** मुक्ताश्रयः, **प्रभुः** समर्थः, **विराट्** विशेषेण राजमानः, **भूतान्तरात्मा** सर्वजीवान्तर्यामी, **वरदो** मोक्षदः, **सगुणः** ऐश्वर्यादिगुणोपेतः, **निर्गुणः** सत्त्वादिगुणशून्यश्च, अतः **हे नृपसत्तम**, **भूतप्रलयं** भूतसम्बन्धाधीनलयोपेतम्, **अव्यक्तम्** अकार्यं जीवचैतन्यं **शुश्रूषुः** नारायणं जिज्ञासुर्भवतीत्यर्थः ।

भौतिकदेहवत्त्वस्य हेतुत्वान्न व्यभिचार इति भावः । सूत्रार्थे स्मृतिं चाहुः- **वाराहे च** [1]**'अंशाश्चेति ॥** एतत्सूत्रार्थ उक्त इति शेषः । 'प्रकाशादिवन्नैवं पर' (२.३.४६) इति सूत्रं दृष्टान्तमात्रेण मत्स्यादीनां जीवानां च वैलक्षण्यपरम्, इदं सूत्रं तु दृष्टान्तेन युक्तिमुपपाद्योक्तवैलक्षण्यपरमिति भेदः । किञ्च 'प्रकाशादिवत्' इति सूत्रं मत्स्यादीनामभिन्नांशत्वपरम्, इदं सूत्रं तु जीवस्य भिन्नांशत्वपरमिति भेदः । अत एव जीवपराण्युत्तरसूत्राणि सङ्गच्छन्ते ॥ ४८ ॥

**जीवस्याल्पशक्तित्वात् परेण साम्यनिषेधाय सूत्रम्-**

**(अपूर्णशक्तित्वाज्जीवस्य न पूर्णसाम्यं विष्णुना)**

**॥ ॐ असन्ततेश्चाव्यतिकरः ॐ ॥ ४९ ॥**

**सम्यग्व्याप्तिपरसन्ततिपदेन तत्प्रयोजकपूर्णशक्तिर्लक्ष्यते । न विद्यते सन्ततिर्यस्येति बहुव्रीहिः । व्यतिकरो व्यत्यासो विरुद्धधर्मवत्त्वम् । विरुद्धार्थकनञा समासः । अव्यतिकरः साम्यम् । ज्ञः, परो, नेति वर्तते । यथायथं विपरिणामः । अयमर्थः- ज्ञस्य परेण मत्स्यादिना अव्यतिकरः पूर्णसाम्यं नास्ति । असन्ततेश्च अपूर्णशक्तित्वाच्चेति ॥ यद्वा ज्ञस्य असन्ततेश्चाव्यतिकरः पूर्वसूत्रार्थस्य व्यत्यासाभाव इत्यर्थः । अत्र पक्षे पर इति नानुवर्तनीयम् ॥**

**अपूर्णशक्तित्वाच्च जीवस्य न मत्स्यादिसाम्यम् । तथा च चतुर्वेदशिखायाम्— 'तस्य ह वा एतस्य परमस्य त्रीणि रूपाणि कृष्णो रामः कपिल इति । तस्य ह वा एतस्य परमस्य पञ्चरूपाणि दशरूपाणि शतरूपाणि सहस्ररूपाण्यमितरूपाणि । तानि ह वा एतानि सर्वाणि पूर्णानि सर्वाण्यनन्तानि सर्वाण्यसम्मितानि । अथावराः सर्व एवापूर्णाः सर्व एव बध्यन्तेऽथ मुच्यन्ते च केचन' इति ।**

---

१. **अंशाश्चेति ॥ जीवा अंशा अपि देहयोग्यत्वात् बन्धादिसंयुताः** बन्धमोक्षयुक्ताः, **ईश्वरेणानुग्राह्याश्च, मत्स्यादिको हरिस्तु** अदेहयोग्यत्वात् बन्धादिसंयुतः ईश्वरेणानुग्राह्यश्च **न, यथा सूर्यप्रभाक्षिणी** सूर्यप्रभाभिमानिनी सूर्यांशः अक्ष्यभिमानिनी अपभ्रष्टदेवता च नैकप्रकारेति शेषः, **यथा अमृतसमुद्रस्य** तदभिमानिनः वरुणांशस्य **श्लेष्मादेश्च** तदभिमान्यपभ्रष्टदेवस्य च, **द्विरूपता** भिन्नप्रकारता । **अन्यस्य** भिन्नांशस्याक्षिश्लेष्माद्यभिमानिनोऽपभ्रष्टदेवस्य **तेन** एवांशिनैव, **आवृतिरोधनं** तमःपित्तादेर्निवृत्तिः भवति तथेत्यर्थः ॥४८॥

**भा.** ॥ सूत्रं व्याचक्षते- **अपूर्णेति** ॥ जीवस्याल्पशक्तित्वे मानमाहुः- **'तस्य हेति** ॥ **इतीति** ॥ शिखायामित्युक्तेरित्यर्थः ॥ ४९ ॥

जीवस्य प्रतिबिम्बत्वेनोक्तार्थसाधनाय सूत्रम्-

**(जीवस्य विष्णुप्रतिबिम्बत्वादेवाल्पसाम्यम्)**

**॥ ॐ आभास एव च ॐ ॥ ५० ॥**

**हेतौ, समुच्चये च चः । ज्ञो, अव्यतिकरो, न, पर इति वर्तते । आवृत्तिविपरिणामौ यथायथम् । अयमर्थः- च यतः ज्ञः परस्य परमात्मनः आभास एव प्रतिबिम्ब एव अतश्च ज्ञस्य परेण मत्स्यादिरूपिभगवता अव्यतिकरो नेति ॥ उक्तस्य व्यत्यासाभाव इति वाऽर्थः, शेषं प्राग्वत् ॥**

**'रूपंरूपं प्रतिरूपो बभूव' (ऋ.सं.६-४७-१८)**

**इति प्रतिबिम्बत्वाच्च न साम्यम् ।**

**वाराहे च-**

**'द्विरूपावंशकौ तस्य परमस्य हरेर्विभोः ।**
**प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव च ॥**
**प्रतिबिम्बांशका जीवाः प्रादुर्भावाः परे स्मृताः ।**
**प्रतिबिम्बेष्वल्पसाम्यं स्वरूपाणीतराणि तु ॥' इति ॥**

**'सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेयते ।**
**जीवः परस्यानुपाधिरिन्द्रचापो यथा रवेः ॥' इति पैङ्गिश्रुतिः ।**

**'यथैषा पुरुषे च्छाया एतस्मिन्नेतदाततम्' (प्र.उ.३-३) इति च श्रुतिः ।**

**॥ इति अंशाधिकरणम् ॥**

---

१. **तस्येति** ॥ तस्य प्रसिद्धस्य, एतस्य प्रकृतस्य, कृष्णादिरूपत्रयं व्यूह इत्येके, नेत्यन्ये । **पञ्च** नारायणादीनि, **दश** मत्स्यादीनि, **सहस्राणि** विश्वादीनि, **अमितानि** अजितादीनि, **पूर्णानि** देशादिभिरपरिच्छिन्नानि, **असम्मितानि** निरूपमानि, **अवराः** चेतनाः **केचन** मुच्यन्त इत्यर्थः । शिष्टं स्पष्टम् ॥ ४९ ॥

**भा. ॥** प्रतिबिम्बत्वे श्रुतिमुपन्यस्य सूत्रं व्याचक्षते- **'रूपं रूपमिति ॥ इतीति ॥** श्रुतिसिद्ध-प्रतिबिम्बत्वाच्चेत्यर्थः । जीवस्येति वर्तते । **साम्यं**- मत्स्यादिसाम्यम् । प्रतिबिम्बत्वे पूर्णसाम्यं नेत्यत्र स्मृतिमाहुः- **वाराहे च- २द्विरूपाविति ॥** तत्रेत्युक्तेश्चेत्यर्थः । जीवस्य प्रतिबिम्बत्वं न युक्तमुपाध्य-भावादित्यत आहुः- **सोपाधिरिति ॥** श्रुतिरित्युभयत्रापि निरुपाधिकप्रतिबिम्बत्वमाहेति शेषः । इदमुक्तं भवति । तत्प्रतिबिम्बत्वं च तदधीनस्वरूपसत्ताक्रियादिमत्त्वे सति तत्सदृशत्वे सति भिन्नत्वम् । सादृश्यं च तदीयावयवसंस्थानविशेषसदृशावयवसंस्थानविशेषवत्त्वम् । अत्यन्तसदृशयोश्चैत्रमैत्रयोर्बिम्ब-प्रतिबिम्बभाववारणाय प्रथमदलम् । घटादेरीश्वरप्रतिबिम्बत्ववारणाय द्वितीयदलम् । रामकृष्णादेर्मूलरूप-प्रतिबिम्बत्ववारणाय तृतीयदलम् । ननु नीलादिरूपादीनामवयवसंस्थानाभावेन कथं बिम्बप्रतिबिम्बभाव इति चेदुच्यते । नीलादिरूपविशिष्टद्रव्ययोरेव बिम्बप्रतिबिम्बभावः न तु रूपादेरित्यदोषः इति छायापि प्रतिबिम्बविशेष एव । प्रतिबिम्बो द्विविधः नित्योऽनित्यश्चेति । जीव ईशस्य नित्यप्रतिबिम्बः । अनित्यस्तु दर्पणाद्युपाधिगतसूक्ष्मावयवोपादानको मुखादिप्रतिबिम्बः । प्रतिमापि विष्णुप्रतिबिम्ब एव । नन्वधमदेवस्त्रीणामुत्तमपुंदेवप्रतिबिम्बत्वमधमपुंदेवानामुत्तमदेवस्त्रीप्रतिबिम्बत्वमुक्तं भारततात्पर्ये तत्कथं सङ्गतं स्यादवयवसाम्याभावादिति चेन्न । यावदवयवसंस्थानसाम्याभावेऽपि करचरणादि-साम्यमादाय प्रतिबिम्बत्वोपपत्तेः । यावदवयवसंस्थानसाम्यस्याविवक्षितत्वादिति । एतत्सर्वं **मध्व-सिद्धान्तसारे** स्पष्टम् ॥ ५० ॥ अ. १८ ॥

**॥ इति अंशाधिकरणम् ॥**

---

१. **रूपं रूपमिति ॥** (ऋ. ६-४७.१८) 'रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश' इति मन्त्रः । 'शृण्वे वीरम्' इत्यादिना प्रकृतः त्रिविधजीवसङ्घः, **अस्य** परमात्मनः **रूपं रूपं** प्रति **प्रतिरूपः** प्रतिबिम्बो **बभूव** भूत्वा वर्तते । **तत्** बिम्बरूपम्, **अस्य** प्रतिरूपत्वेनोक्तस्य योग्यजीवस्य, **प्रतिचक्षणाय** साक्षात्काराय भवति तद्विषयो भवति । स च **इन्द्रः** परमेश्वरः, **मायाभिः** स्वसामर्थ्यैरिच्छाभिर्वा, **पुरुरूपः** अनन्तजीवबिम्बरूपः, **ईयते** ज्ञायते, **अस्य** ईश्वरस्य, **शता** अजिताद्यनन्तरूपाणि, दशशतानि विश्वादिसहस्ररूपाणि, **शतानि** नारायणादीनि, **दश** मत्स्यादीनि, **दश** बहूनि परादीनि, **हरयः** हरिनामकानि रूपाणि, **युक्ता** व्यूहशः सन्ति, **हि** प्रसिद्धमित्यर्थः ।

२. **द्विरूपाविति ॥** अंशकाविति स्वार्थे कप्रत्ययः । **प्रादुर्भावाः** मत्स्याद्यवताराः **स्वरूपाणि** स्वरूपांशा **इतराणि** अल्पसाम्यवद्भ्यो भिन्नानी(यावत्साम्यवन्ती)त्यर्थः । शिष्टं स्पष्टम् । **सोपाधिरिति ॥** अयमर्थः- जीव ईशस्या **अनुपाधिः** प्रतिबिम्बः, दृष्टान्तमाह- **इन्द्रचाप इति ॥** दृष्टान्ते बिम्बाऽतिरिक्तोपाध्यभावः, दार्ष्टान्तिके प्रतिबिम्बाऽतिरिक्तोपाध्यभाव इति भेद इति ज्ञेयम् । **यथैषेति ॥** (ष.प्र. ३.३) **यथा** पुरुषस्य देहस्य **छाया, पुरुषे** पुरुषदेहे **आतता** तदधीना तत्प्रतिरूपा, तद्वत् **एतस्मिन्** विष्णौ **एतत्** प्रतिबिम्बरूपं, विश्वं जीवजातं वा **आततं** तदधीनं वर्तत इत्यर्थः । अन्यत् स्पष्टम् । ५० ॥अ. १८ ॥

# १९. अदृष्टाधिकरणम्

**प्रतिबिम्बानां मिथो वैचित्र्ये कारणमाह--**

अत्र नये जीवस्य प्रतिबिम्बत्वाभावपरसयुक्तिकश्रुतिविरोधपरिहारः । पूर्वनयेन सङ्गतिः । जीवो विषयः । प्रतिबिम्बो न वेति सन्देहः । नेति पूर्वपक्षः, 'रूपंरूपम्' इति श्रुतिः 'नैवांशो न सम्बन्धः' (२.३.४३- सू.उ.) इति श्रुतिश्च सन्देहबीजम् । अधिकरणार्थमाहुः ॥ **प्रतिबिम्बानामिति** ॥ एक-निरूपितप्रतिबिम्बत्ववताम् । **वैचित्र्ये-** सुरनरादिवैचित्र्ये इत्यर्थः । अनेन जीवा नैकप्रतिबिम्बाः मिथो वैचित्र्यात् घटपटवदिति पूर्वपक्षयुक्तिः सूचिता ॥ ३-सू.अ. ॥

**(अनादिविद्याकर्माविभेदात् प्रतिबिम्बवैचित्र्यम्)**

**॥ ॐ अदृष्टानियमात् ॐ ॥ ५१ ॥**

**आभासः, परश्चेति वर्तते । अनियमादित्येकदेश आवर्तते । युज्यत इति शेषः । नियम एकप्रकारता अनियमो अनेकप्रकारता वैचित्र्यमिति यावत् । यथायथं विपरिणामः । अयमर्थः-** परस्य आभासानां च परमात्मप्रतिबिम्बानामपि अनियमो वैचित्र्यम् **अदृष्टानियमात्** अनादिविद्यादीनां वैचित्र्यात् युज्यत इति । प्रतिबिम्बानां मिथो वैचित्र्यमन्यथोपपन्नमिति भावः ॥

**अनादिविद्याकर्मादिवैचित्र्याद्वैचित्र्यम् ॥**

भा. ॥ सूत्रं व्याचक्षते- **अनादीति** ॥ **वैचित्र्यमिति** ॥ प्रतिबिम्बानामिति वर्तते ॥ ५१ ॥

**प्रतिबिम्बानां वैचित्र्ये रागादिदोषाः कारणं न त्वनादिविद्यादीति शङ्कावारणाय सूत्रम्-**

**(अदृष्टादेव सुखदुःखादिवैचित्र्यं ज्ञेयम्)**

**॥ ॐ अभिसन्ध्यादिष्वपि चैवम् ॐ ॥ ५२ ॥**

अयमर्थः- **अभिसन्ध्यादिष्वपि** रागद्वेषादिष्वपि एवम् अदृष्टानियमाद्वैचित्र्यं युज्यते चेत् प्रतिक्षण-वैचित्र्यं च इति अदृष्टवैचित्र्यमेव सर्ववैचित्र्ये कारणमिति भावः ।

**इच्छाद्वेषसुखदुःखादिवैचित्र्यं चादृष्टादेव । चशब्देन प्रतिक्षणवैचित्र्यं च ॥**

भा. ॥ सूत्रं व्याचक्षते- **इच्छेति** ॥ ननु पूर्वदोषादुत्तरोत्पत्तौ किमदृष्टेनेत्यत आहुः- **चशब्देनेति** ॥ **वैचित्र्यं चेति** ॥ सङ्गृहीतमिति शेषः । अदृष्टवैचित्र्यं विना प्रतिक्षणवैचित्र्यं न स्यादिति भावः ।।५२ ॥

**स्वर्गादिस्थानवैचित्र्यादेव प्रतिबिम्बवैचित्र्यमस्त्विति शङ्कावारणाय सूत्रम्-**

**(अदृष्टविशेषादेव देवादिवैचित्र्यम्)**

**॥ ॐ प्रदेशादिति चेन्नान्तर्भावात् ॐ ॥ ५३ ॥**

च, आभासः, अदृष्टानियमादिति वर्तते । चोऽप्यर्थे, समुच्चये च । यथायथमावृत्तिविपरिणामौ । **अयमर्थः**- आभासानां प्रतिबिम्बानाम् अनियमो देवत्वादिवैचित्र्यं **प्रदेशात्** स्वर्गादिप्रदेशहेतुकमिति **चेन्न**- प्रदेशस्य च तत्प्राप्तेरपि **अदृष्टे अन्तर्भावात्** तदधीनत्वात् एकदेशस्थितानामपि वैचित्र्यदर्शनाच्चेति ॥

**न स्वर्गभूम्यादिप्रदेशविशेषाद्वैचित्र्यम् । तत्प्राप्तेरप्यदृष्टापेक्षत्वात् । एकदेशस्थितानामेव वैचित्र्यदर्शनाच्च ॥**

**॥ इति अदृष्टाधिकरणम् ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये द्वितीयाध्यायस्य तृतीयः पादः ॥**

भा. ॥ **सूत्रार्थमाहुः- नेत्यादिना** ॥ एकदेशेति ॥ भूम्याद्येकैकदेशेत्यर्थः ॥ ५३ ॥ अ. १९ ॥

॥ इति अदृष्टाधिकरणम् ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीब्रह्मसूत्रभाष्यस्य व्याख्यायां भाष्यार्थसहितायां सूत्रार्थमणिमञ्जर्यां द्वितीयाध्यायस्य तृतीयः पादः ॥

# ॥ अथ चतुर्थः पादः ॥

(युक्तिसहितश्रुतिविरोधपरिहारः पादेऽत्र क्रियते)

## १. प्राणाधिकरणम्

**युक्तिसहितश्रुतिविरोधं श्रुतीनामपाकरोत्यनेन पादेन । 'प्राणा एवेदमग्र आसुस्तेभ्यो भूतानि जज्ञिरे । भूतेभ्योऽण्डमण्डस्यान्तस्त्विमे लोकाः । अथ प्राणा एवानादयः प्राणा नित्याः' इति काषायणश्रुतौ प्राणानामनुत्पत्तिः प्रतीयते (श्रूयते) ।**

**'नोपादानं हीन्द्रियाणामतोऽनुत्पत्तिरिष्यते ।**
**उपादानकृता सृष्टिः सर्वलोकेषु दृश्यते' ॥ इति भविष्यत्पर्वणि ॥**

**'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' (मुं.उ.२–१–३) इति च ।**

**अत उच्यते–**

एतत्पादार्थं दर्शयन्ति- **युक्तीति** ॥ श्रुतौ युक्तिसाहित्यं च स्वसाध्यसाधकयुक्तेः प्रायेण साधकत्वेन बोधनं (स्वयमेव) एवं च सिद्धान्तसाध्यबोधकश्रुतीनामपि श्रुतिलिङ्गादियुक्तिसहितत्वेऽपि तादृशयुक्तेः स्वसाध्यसाधकत्वेन तादृशश्रुत्याऽबोधनात् उभयोः श्रुत्योर्भेद इति ज्ञेयम् । **श्रुतिविरोधमिति** ॥ श्रुतिभिः पूर्वपक्षप्रापकश्रुतिभिः, विरोधं तद्विरुद्धार्थबोधकत्वं श्रुतीनां सिद्धान्तबोधकश्रुतीनामित्यर्थः । पूर्वपक्षप्रापक-श्रुतीनामर्थान्तरपरिकल्पनेन विरोधपरिहार इति भावः । ततश्च युक्तिसहितश्रुतिविरोधपरिहारात्मक-त्वात्, अध्यात्मश्रुतिविरोधपरिहारात्मकत्वाच्च, अस्य पादस्य पूर्वस्माद्भेदः । तत्र मनआदीन्द्रियाणि द्विधा- तत्वरूपाणि, तद्भिन्नानि चेति । तत्वानामिन्द्रियत्वं च इन्द्रियवाचकमनआदिशब्दवाच्य-त्वम् । तत्त्वानां तदभिमानिनां, प्रसिद्धेन्द्रियाणां तदभिमानिनां च, विचारोऽस्मिन्पादे क्रियते क्वचिन्नये तत्वविषय एव शङ्का, यथा आद्यनये । सिद्धान्तस्तु चतुष्टयविषये । क्वचिदिन्द्रियविषये एव शङ्का-समाधाने । यथा द्वितीयादिनये । क्वचिच्चाभिमानिविषय एव । क्वचित्तु एतत्सम्बन्धिविषयान्तर एवेति विवेकः । एतत्पादीयनयानां सङ्गतिः, संशयबीजं च, पूर्वपादोपक्रम एवोक्तम् ।

अत्र नये इन्द्रियानुत्पत्तिश्रुतिविरोधपरिहारः । प्राणा विषयः । जनिमन्तो न वेति सन्देहः । न जनिमन्त इति पूर्वपक्षः । संशयबीजं दर्शयन्ति- **'प्राणा इत्यादि ॥ श्रूयते इति** ॥ सयुक्तिका श्रूयत इत्यर्थः । **पर्वणीति** ॥ अनुत्पत्तिः श्रूयते इति वर्तते । **इति चेति** ॥ इत्यत्र त्वित्यर्थः । प्राणानां श्रूयते इति वर्तते । उत्पत्तिरिति शेषः । **अत इति** ॥ प्राप्तविरोधपरिहारार्थमित्यर्थः ॥

**(इन्द्रियाणि तदभिमानिनश्च विष्णोरेवोत्पद्यन्ते)**

**॥ ॐ तथा प्राणाः ॐ ॥ १ ॥**

**तथापदेन समीपस्थोऽपि जीवो न गृह्यते, किन्तु आकाशादिरेव, प्राणपदस्य इन्द्रियतदभिमानिपरत्वेन वियदादिपदस्यापि तादृशत्वात् । अत इति वर्तते । उत्पद्यन्त इति शेषः । अयमर्थः- तथा वियदादिवत्, प्राणाः इन्द्रियाणि, तदभिमानिनश्च, उत्पद्यन्ते अतः वियदाद्युत्पत्तौ उक्तयुक्तित इति ॥ अत्र सर्वत्र परमात्मत इति न वक्तव्यम् । उत्पत्तिस्वीकारे विष्णुकारणकत्वस्य निर्विवादात् ॥**

**यथाऽऽकाशादयः परमात्मन उत्पद्यन्ते तथा प्राणा अपि ॥**

**भा.** ॥ सूत्रं व्याचक्षते- **यथेति** ॥ १ ॥

**प्राणानादित्वपरश्रुतेर्गतिप्रदर्शनाय सूत्रम्-**

**(प्राणानादित्वश्रुतिर्गौणी)**

**॥ ॐ गौण्यसम्भवात् ॐ ॥ २ ॥**

**श्रुतेरित्यनुवर्त्य प्रथमया विपरिणम्यते । अयमर्थः- श्रुतिः 'अथ प्राणा वाव अनादय' इति श्रुतिः, गौणी गौणानादित्वपरा, असम्भवात् मुख्यानादित्वासम्भवात् 'एतस्माज्जायते प्राणः' इति श्रुतेरर्थान्तरासम्भवाच्चेति ॥**

**अनादित्वश्रुतिर्गौणानादित्वापेक्षया । मुख्यासम्भवात् ।**

---

१. **प्राणा एवेत्यादि** ॥ **इदमग्रे** अस्य जगतोऽग्रे प्रलये **प्राणा** इन्द्रियाणि, **आसुः** बभूवुः, **तेभ्यः** इन्द्रियेभ्यः, **भूतानि** आकाशादीनि, **इमे लोकाः** चतुर्दशभुवनानि, **आसुः** आसन् **अथ** तस्मात्, **अनादय** उत्पत्तिशून्याः नित्या ध्वंसशून्या इत्यर्थः । अन्यत्स्पष्टम् । **नोपादानमिति** ॥ **हि** यतः **उपादानं** परिणामिकारणं **अतो** निरुपादानत्वात् । व्यतिरेकव्याप्तिमाह- **उपादानकृतेति** ॥ **सर्वलोकेषु** घटादिकार्येषु, इत्यर्थः । शिष्टं स्पष्टम् । **एतस्मादिति** ॥ (आ.४.३) व्या.(४१३.पु.) ॥ १ ॥

**'नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः ।**
**तेषां भूतैरुपचयः सृष्टिकाले विधीयते ।**
**परेण साम्यसम्प्राप्तेः कस्य स्यान्मुख्यनित्यता' इति हि भविष्यत्पर्वणि ॥**

भा. ॥ (सूत्रं व्याचक्षते- **अनादीति** ॥) **अपेक्षयेति** ॥ प्रवृत्तेति शेषः । तर्कि गौणानादित्वं कथं च मुख्यासम्भवोऽत आहुः- [1]**नित्यानीति** ॥ **इति हीति** ॥ हि यतः भविष्यत्पर्वणि इति इत्युक्तमतो मुख्यासम्भवादिति सम्बन्धः । एवं च इन्द्रियाणां सूक्ष्मोपचितभागद्वयात्मकत्वेन तत्र सूक्ष्मरूपैकदेशानादित्वपरा श्रुतिरिति ज्ञेयम् ॥ २ ॥

**'प्रतिज्ञाहानिरव्यतिरेकात्' इति सूत्रोक्तयुक्त्याऽप्येतदर्थसमर्थनाय सूत्रम्-**

**(विष्णोः सर्वसृष्ट्युक्तेः प्राणानामुत्पत्तिरङ्गीकार्या)**

**॥ ॐ प्रतिज्ञाऽनुपरोधाच्च ॐ ॥ ३ ॥**

**हेतौ पञ्चमी । हेतुः फलं प्राणा उत्पद्यन्त इति वर्तते । इति स्वीकार्यमिति शेषः । अयमर्थः- प्रतिज्ञाऽनुपरोधाच्च 'इदं सर्वमसृजत' इति प्रतिज्ञाविरोधाभावार्थं च, प्राणा उत्पद्यन्ते इति स्वीकर्तव्य-मिति ॥**

**'स इदं सर्वमसृजत' (तै.उ.२–६) इति ।**

**॥ इति प्राणाधिकरणम् ॥**

भा. ॥ प्रतिज्ञास्वरूपं (श्रुत्या) दर्शयन्ति- [2]**स इदमिति** ॥ **असृजतेति** ॥ अस्य सूत्रेऽन्वयः । सूत्रार्थः स्वयमूह्यः (इति भावः) ॥ ३ ॥ अ.१ ॥

॥ इति प्राणोत्पत्त्यधिकरणम् ॥

---

१. **नित्यानीति** ॥ **सर्वशः** सर्वाणि, **सौक्ष्म्येण** सूक्ष्मरूपेण, **नित्यानि** उत्पत्तिनाशरहितानि । **तेषां** सूक्ष्मरूपेण नित्यानां प्रलये वियुक्तांशानामिन्द्रियाणां **सृष्टिकाले भूतैः** आकाशादिभिः, **उपचयः** स्थूलभावः, **परेण** परमात्मना, **विधीयते** क्रियते । **मुख्यनित्यता** सर्वांशनित्यत्वं **परेण** विना **कस्य स्यात्,** परेण परमात्मना **साम्यसम्पत्तेः** सर्वांशसाम्यापत्त्या न कस्यापि स्यादित्यर्थः ॥ २ ॥

२. **स इदमिति** ॥ व्या. (४०२-पु.) ॥ ३ ॥ अ.१ ॥

## २. मनोऽधिकरणम्

**'द्विधा हैवेन्द्रियाणि नित्यानि चानित्यानि च । तत्र नित्यं मनोऽनादित्वान्न ह्यमनाः पुमांस्तिष्ठत्यनित्यान्यन्यानि' इति गौपवनश्रुतौ मनसोऽनुत्पत्तिः सयुक्तिका श्रूयते । अत आह–**

अत्र नये मनोऽनुत्पत्तिश्रुतिविरोधपरिहारः । मनो विषयः । जनिमन्न वेति संशयः । न जनिमदिति पूर्वपक्षः ॥ पूर्वपक्षप्रापकश्रुतिमाहुः- [१]**द्विधेति** ॥

**(मनसोऽपि उत्पत्तिरस्ति विष्णोः)**

**॥ ॐ तत्प्राक् श्रुतेश्च ॐ ॥ ४ ॥**

विषयवाक्यबलात् मन इति लभ्यते । चेन स्मृतेः सङ्ग्रहः । उत्पद्यते इति वर्तते । **अयमर्थः-** मनः तद्रूपमिन्द्रियम् उत्पद्यते **तत्प्राक् श्रुतेः** इन्द्रियोत्पत्तेः पूर्वमुत्पत्तिपर'मनस्सर्वेन्द्रियाणि च' इति श्रुतेः, 'पूर्वं मनःसमुत्पन्नम्' इति स्मृतेः च इति ॥

**'मनः सर्वेन्द्रियाणि च' (मुं.उ.२–१–३) इति पूर्वोक्तत्वान्नानुत्पत्तिर्मनसो युज्यते ।**

**'पूर्वं मनः समुत्पन्नं ततोऽन्येषां समुद्भवः ।**
**तदनुत्पत्तिवचनमल्पोपचयकारणात् ॥'**

**इति वायुप्रोक्तवचनं चशब्देन गृहीतम् ।**

**॥ इति मनोऽधिकरणम् ॥**

**भा.** ॥ श्रुत्युदाहरणपूर्वं सूत्रार्थमाहुः- [२]**मन इति** ॥ ननु कुतो मनसः पूर्वमुत्पत्तिः, उत्पत्तिस्वीकारे द्विधा हीति श्रुत्याद्यविरोधश्च कथं मनः सर्वेति श्रुतौ मनसः पाठ एव पूर्वमस्ति न तूत्पत्तिरित्यतः आहुः- **पूर्वमिति** ॥ ४ ॥ अ.२ ॥

॥ इति मनोऽधिकरणम् ॥

---

१. **द्विधेति** ॥ अनादित्वात् अनादिपुरुषसम्बन्धित्वादित्यर्थः । शिष्टं स्पष्टम् ॥

१. **मन इति** ॥ व्या. (४१३-पु.) ॥ **पूर्वं मन इति** ॥ **समुत्पन्नम्** उपचितरूपेणेति शेषः । **अन्येषाम्** इन्द्रियाणाम्, **अल्पोपचयकारणात्**, इतरेन्द्रियापेक्षयोपचितभागस्याल्पत्वाद्धेतोः, प्रवृत्तमिति शेष इत्यर्थः । अन्यत् स्पष्टम् ॥ ४ ॥ अ.२ ॥

## ३. तत्पूर्वकत्वाऽधिकरणम् (वागधिकरणम्)

**'नित्ययाऽनित्यया स्तौमि परमात्मानमच्युतमिति वाग्वाव नित्या न ह्येषोत्पद्यतेऽस्यां हि श्रुतिरवतिष्ठत इति' सयुक्तिकं पौष्यायणश्रुतौ वाचोऽनुत्पत्तिरुच्यते । अतो ब्रवीति–**

अत्र नये वागनुत्पत्तिश्रुतिविरोधपरिहारः । वागिन्द्रियं विषयः । जनिमन्न वेति सन्देहः । न जनिमदिति पूर्वपक्षः ।। पूर्वपक्षे श्रुतिमाहुः- **'नित्ययेत्यादि ।। उच्यत इति** ।। सयुक्तिकानुत्पत्तिश्रुतिविरोधादुत्पत्तिश्रुतिरप्रमाणमिति भावः । अत्रेन्द्रियविषये शङ्का ।।

**(वाचः नानुत्पत्तिः)**

**।। ॐ तत्पूर्वकत्वाद्वाचः ॐ ।। ५ ।।**

**उत्पद्यते, एवेति वर्तते । वाच इत्यस्यावृत्तिविपरिणामौ । तत् मनः पूर्वं कारणं यस्य तस्य भावः, तस्मात् । अयमर्थः - वाचो वागिन्द्रियस्य तत्पूर्वकत्वात् 'तस्मान्मन एव पूर्वरूपम्' इति श्रुत्या मनोजन्यत्वोक्तेः वाक् वागिन्द्रियमुत्पद्यत एवेति ।।**

**'तस्मान्मन एव पूर्वरूपं वागुत्तररूपम्' (ऐ.आ.३–१–१) इति मनःपूर्वकत्वाद् वाचो नानुत्पत्तिः ।**

**'वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यता ।**
**उत्पत्तिर्मनसो यस्मान्न नित्यत्वं कुतश्चन ।।' इति वायुप्रोक्ते ।।**

**।। इति तत्पूर्वत्वाधिकरणम् (वागधिकरणम्) ।।**

१.**नित्ययेति ।। अवतिष्ठते इति ।।** इति **पौष्यायणश्रुतिः** अच्युतमित्यन्तं मन्त्रमुदाहृत्य मन्त्रस्थनित्यपदं सयुक्तिकं व्याख्याति- **वाग्वाव नित्येत्यादिना ।।** अच्युतमित्यन्तो मन्त्रभागः । इति शब्दः पौष्यायणश्रुतिघटकः न तु मन्त्रस्थः नापि भाष्यकारीयः । अयमर्थः- **इति** इत्यत्र एवंरूपे मन्त्रे **नित्या** नित्यशब्दार्थः **वाग्वाव** वागिन्द्रियमेव **हि** यतः **अस्यां** वाचि वागिन्द्रिये **श्रुतिः** वेदः **अवतिष्ठते** नित्यमुच्चार्यतया वर्ततेऽत इति । विशिष्टमन्त्रार्थस्तु स्पष्टः। **पैङ्गिब्राह्मणे तु** 'नित्ययाऽनित्यया स्तौमि ब्रह्म तत्परमं पदमिति श्रुतिर्वाव नित्या अनित्या वाव स्मृतयः' इति पठ्यते । तत्र व्याख्येयमन्त्रोऽन्यः । अतो न तद्विरोधः । मन्त्रद्वयेऽपि स्तौमीति मन्त्रद्रष्टा ऋषिराहेति ध्येयम् ।

**भा.** ॥ श्रुतिमुपन्यस्य सूत्रं व्याचक्षते- [1]**तस्मान्मन इति** ॥ अनुत्पत्तिश्रुत्यविरोधं स्मृत्याऽऽहुः- [2]**वागिन्द्रियस्येति** ॥ **वायुप्रोक्ते इति** ॥ तत्रेत्युक्तेरित्यर्थः ॥ ५ ॥ अ. ३ ॥

**॥ इति तत्पूर्वकत्वाधिकरणम् ॥ (वागधिकरणम्)**

---

१. **तस्मान्मन एवेति** ॥ (ऐ.आ.३.१.१) **तस्मात्** मनसा सङ्कल्पितस्य वाचा व्यवहाराद्धेतोः **मनः** तदन्तर्गतरूपम्, अभिमानी च, **पूर्वरूपं** कारणम्, **उत्तररूपं** कार्यमित्यर्थः । एवमुत्तरत्रापि बोध्यम् ।

२. **वागिन्द्रियस्येति** ॥ **श्रुतिसन्निधियोग्यता** नित्यभूतवेदसन्निधानयोग्यतावत्त्वमेव **वागिन्द्रियस्य नित्यत्वं** श्रुत्यादावुक्तं न तु स्वरूपतः, **यस्मात्** कारणात् **मनसः** मनःसकाशात्, वागिन्द्रियस्य **उत्पत्तिः** श्रूयते अतो **नित्यत्वं कुतश्चन न** स्यात् न कुतोऽपीत्यर्थः ॥ ५ ॥ अ. ३ ॥

## ४. सप्तगत्यधिकरणम्

**'सप्त प्राणाः प्रभवन्ति तस्मात्' (मुं.उ.२–१–८) इति श्रुतिः । 'सप्तैव मारुता बाह्ये प्राणाः सप्त तथाऽऽत्मनि । अधिदैवे तथाऽध्यात्मे सङ्ख्यासाम्यं विदो विदुः' इति च स्कान्दे । 'द्वादश वा एते प्राणा द्वादश मासा द्वादशाऽदित्या द्वादशराशयो द्वादश ग्रहाः' इति कौण्डिन्यश्रुतौ द्वादशप्राणा दृश्यन्ते । अतो वक्ति–**

अत्र नये इन्द्रियसङ्ख्याविषयश्रुतिविरोधपरिहारः । प्राणा विषयः, सप्त वा द्वादश वेत्यनिर्णयः, उत द्वादशैवेति निर्णयः इति संशयः । अनिर्णय इति पूर्वपक्षः ।। संशयबीजमाहुः- [1]**सप्तेति ।। श्रुतिरिति ।।** प्राणानां वक्तीति वर्तते । सप्तत्वमिति शेषः । युक्तिबोधकस्मृतिमाहुः- [2]**सप्तैवेति ।। स्कान्द इति ।।** युक्तिरुक्तेति शेषः । समसंख्याकत्वरूपा युक्तिः । [3]**द्वादशेति ।।** मासादेरेकदेवताकत्वयुक्ति-सहितत्वादस्याः श्रुतेः पूर्वश्रुत्या बाधाभावादुभयोरप्रामाण्ये कारणत्वश्रुतिरप्यप्रमाणमिति भावः । **अत इति ।।** अप्रामाण्यपरिहारार्थमित्यर्थः ।।

**(ज्ञानजनकेन्द्रियापेक्षया सप्त प्राणा इत्युक्तिः)**

**।। ॐ सप्त गतेर्विशेषितत्वाच्च ॐ ।। ६ ।।**

**'द्वादश वा' इति श्रुतिबलात् द्वादशेति लभ्यते । प्राणाः, श्रुतेः, एवेति वर्तते । चः श्रुतिसमुच्चये, त्वर्थे च । सप्तपदमावर्तते । गतिशब्दः करणप्रत्ययान्तः । ल्यब्लोपे पञ्चमी । अयमर्थः- प्राणा इन्द्रियाणि द्वादशैव श्रुतेः 'द्वादश वा' इति श्रुतेः 'सप्त प्राणास्त्ववगतेश्च' इति स्मृतेश्च सप्त च 'सप्त प्राणाः' इति श्रुतौ सप्तत्वोक्तिस्तु गतेश्च ज्ञानजनकेन्द्रियमपेक्ष्यैव, विशेषितत्वात् 'गुहायां निहिताः सप्त सप्त' इति वाक्यशेषे**

---

१. **सप्त प्राणा इति ।।** (आ.३.८) **तस्मात्** परमात्मन इत्यर्थः । शिष्टं स्पष्टम् ।

२. **सप्तैवेति ।।** यथा **बाह्ये** देहात् बहिः स्थिताः **मारुता** इन्द्रियाणि अभिमानिदेवताः **सप्तैव, तथा आत्मनि** देहे स्थिता अपि **प्राणाः** सप्तैव, यथा **अधिदैवे** देहाद्बहिर्गतेषु देवेषु. **अध्यात्मे** देहान्तर्गतेषु अभिमन्यमानेषु च, **सङ्ख्यासाम्यं** समसंख्याकत्वं, **विदो** ज्ञानिनो **विदुः** तस्मादित्यर्थः ।

३. **द्वादशेति ।। प्राणा** इन्द्रियाणि, **राशयो** मेषादयः **ग्रहाः** सोमयागे सोमरसग्राहकाः सूक्ष्मोलूखलाकाराः पात्रविशेषा **वै** प्रसिद्धम् इत्यर्थः । शिष्टं स्पष्टम् ।

'सप्त प्राणास्त्ववगतेः' इति स्मृतौ च ज्ञानेन्द्रियाणामेव सप्तेति विशेषितत्वादिति ॥ टीकापर्यालोचनयैवमर्थ उक्तः, भाष्यं तु सूत्रघटकपदानामेवार्थविवरणपरमतो न विरोधः ॥

**ज्ञानेन्द्रियापेक्षया सप्तत्वम् । 'गुहाशयां निहिताः सप्त सप्त' (मुं.उ. २–१–८) इति विशेषणात् ।**

**'सप्त प्राणास्त्ववगतेः पञ्च प्राणाश्च कर्मणः ।**
**एवं प्राणद्वादशकं शरीरे नित्यसंस्थितम् ॥'**

**इति भविष्यत्पर्ववचनं चशब्दात् ।**

भा. ॥ सूत्रभावमाहुः- **सप्तत्वमिति** ॥ सप्तत्वोक्तिरित्यर्थः । श्रुतिमाहुः- [1]**'गुहाशयामिति** ॥ ननु सप्तत्वविशेषणेन तावन्त एव प्राणाः सन्त्वित्यत आहुः- [2]**सप्त प्राणा इति** ॥ **चशब्दादिति** ॥ सङ्गृहीतमिति शेषः । ज्ञानेन्द्रियाणि तु - श्रोत्रचक्षुःस्पर्शनरसनघ्राणमनोबुद्धयः ॥ ६ ॥

कर्मेन्द्रियसत्त्वे 'सप्त प्राणाः' इति श्रुतौ ज्ञानेन्द्रियैः सह पाठः कुतो न कृतः न च श्रुत्यन्तरेण तत्स्वरूपसिद्धिः- तथा सति तेषां परमात्मना जन्यत्वस्य, अजन्यत्वस्य वा आपत्तेरिति शङ्कावारणाय सूत्रम्-

**(ज्ञानाजनकत्वात् कर्मेन्द्रियाणां पृथगुक्तिः)**

**॥ ॐ हस्तादयस्तु स्थितेऽतो नैवम् ॐ ॥ ७ ॥**

स्थितं कर्म तादर्थ्ये सप्तमी । तुर्विशेषे । अयमर्थः- **हस्तादयः** पाणि-पाद-पायूपस्थ-वाचः तद्रूपेन्द्रियाणि **स्थिते** आदानादिकर्मार्थम्, **अतो** वैलक्षण्यात् **एवं** ज्ञानेन्द्रियैः सहपाठो **न** इति ॥ एवं च सहपाठाभावे वैलक्षण्यमेव निमित्तं न त्वजन्यत्वं, नापि विष्ण्वजन्यत्वं, न वासत्वमिति ज्ञेयम् ॥

**हस्तादीनां कर्मविषयत्वान्न सहपाठः ।**

---

१. **गुहाशयामिति** ॥ **गुहाशयायां** बुध्यर्थं **निहिताः** । **सप्तसप्तेति** वीप्सा तु प्रतिपुरुषमेवमिति द्योतनार्थमित्यर्थः।

२. **सप्तप्राणा इति** ॥ **अवगतेः** ज्ञानस्य सम्बन्धिनः, **कर्मणः** क्रियायाः सम्बन्धिनः ॥ आदानादिक्रियाजनका इत्यर्थः । शिष्टं स्पष्टम् ॥ ६ ॥

**'संसारस्थितिहेतुत्वात् स्थितं कर्म विदो विदुः ।**
**तस्मादुद्गतिहेतुत्वाज्ज्ञानं गतिरिहोच्यते ॥' इति च वायुप्रोक्ते ।**

**॥ इति सप्तगत्यधिकरणम् ॥**

भा. ॥ सूत्रं व्याचक्षते- **हस्तेति** ॥ स्थितगतिशब्दयोरुक्तार्थे मानमाहुः- **'संसारेति ॥ वायुप्रोक्ते इति** ॥ गतिस्थितशब्दयोः शक्तिरुक्तेति शेषः ॥ ७ ॥ अ.४ ॥

**॥ इति सप्तगत्यधिकरणम् ॥**

---

१ .संसारेति ॥ स्थितं स्थितशब्दवाच्यं, तस्मात् संसारात्, उद्गतिहेतुत्वात् मोक्षहेतुत्वादित्यर्थः ॥ शिष्टं स्पष्टम् ॥ ७ ॥ अ. ४ ॥

## ५. अण्वधिकरणम्

**'दिवीव चक्षुराततम्'(ऋ.सं.१–२२–२०) इति व्याप्तिः प्रतीयते । दूरश्रवण-दर्शनादियुक्तिश्च । अणुभिः पश्यत्यणुभिः कृणोति प्राणा वा अणवः प्राणैर्ह्येतद्भवति' इति च कौण्डिन्यश्रुतिः । अतो वक्ति–**

अत्र नये प्राणपरिमाणश्रुतिविरोधपरिहारः । प्राणा विषयः । व्याप्ता वा अणवो वेति संशयः । व्याप्ता इति पूर्वपक्षः ।। सन्देहबीजं दर्शयन्ति - [1]**दिवीवेति** ।। **व्याप्तिरिति** । प्राणानामिति शेषः। **युक्तिरिति** ।। युक्तिसिद्धा च व्याप्तिरित्यर्थः । क्वचित्पुस्तके युक्तेश्चेति पठ्यते । यदीन्द्रियाणां व्याप्तिर्न स्यात्तर्हि दूरस्थवस्तुविषयकश्रवणादिकं न स्यादिति युक्तिः । अणुत्वेऽपि श्रुतिमाहुः- [2]**अणुभिरिति** ।। **श्रुतिरिति** ।। प्राणानामिति वर्तते । अणुत्वमिति शेषः । वक्ति इति अपकृष्यते ।।

**(प्राणाः स्वरूपतोऽणवः प्रकाशतो व्याप्ताः)**

**।। ॐ अणवश्च ॐ ।। ८ ।।**

**प्राणाः, श्रुतेरिति वर्तते । चोऽनुक्तसमुच्चये । अयमर्थः-** प्राणा **अणवः** स्वरूपतोऽणुरूपाः प्रकाशतो व्याप्ताः च श्रुतेः 'तद्यथा' इति श्रुतेरिति ।।

**'तद्यथा ह्यणुनश्चक्षसः प्रकाशो व्यातत एवमेवास्य पुरुषस्य प्रकाशो व्याततोऽणुर्ह्येवैष पुरुषो भवति' इति शाण्डिल्यश्रुतिः ।।**

**।। इति अण्वधिकरणम् ।।**

---

१. **दिवीवेति** ।। (ऋ.१.२२.२) **चक्षुः दिवि** आकाशे **आततं** व्याप्तमपि न दृश्यते, किन्तु फलोपलब्धिरूपेण फलेनानुमीयते । तथा परमेश्वरस्वरूपं सर्वगतमपि न दृश्यं, किन्तु अस्वतन्त्राणां पदार्थानां सत्ताप्रतीति-प्रवृत्तिभिः, ज्ञायते इति तात्पर्यार्थः **ऋग्भाष्यटीकायाम्** उक्तः ।

२. **अणुभिरिति** ।। पुरुषः **अणुभिः** ज्ञानेन्द्रियैः **पश्यति** तत्तदिन्द्रिययोग्यं वस्तु जानाति **अणुभिः** कर्मेन्द्रियैः **कृणोति** तत्तदिन्द्रिययोग्यकार्यं करोति । **हि** यतः **प्राणैः** एतत् उक्तज्ञानादि **भवति** तस्मादित्यर्थः । शिष्टं स्पष्टम् ।।

भा. ॥ हेतुभूतश्रुतिं पठन्ति- [१]**तद्यथेति** ॥ **श्रुतिरिति** ॥ यतः श्रुतिरस्ति अतोऽणवश्चेति सूत्रेण सम्बन्धः ॥ ८ ॥ अ.५ ॥

॥ **इत्यण्वधिकरणम्** ॥

१. **तद्यथेति** ॥ **यथा अणुनः** स्वरूपतोऽणुभूतस्य, **चक्षसः** चक्षुषः, **प्रकाशः** तेजः **व्याततः** व्याप्तः **एवं पुरुषस्य** जीवस्य **प्रकाशो व्याततः हि** यतः **एष पुरुषः अणुरेव भवति** इत्यर्थः ॥ ८ ॥ अ.५ ॥

## ६. मुख्यप्राणाधिकरणम् (श्रेष्ठाधिकरणम्)

**'नैष प्राण उदेति नास्तमेत्येकल एव मध्ये स्थाता । अथैनमाहुर्मध्यमः' इति मुख्यप्राणस्यानुत्पत्तिः श्रूयते ।**

**'यत्प्राप्तिर्यत्परित्याग उत्पत्तिर्मरणं तथा ।**
**तस्योत्पत्तिर्मृतिश्चैव कथं प्राणस्य युज्यते ॥' इति युक्तिर्वायुप्रोक्ते ।**

**'आत्मत एष प्राणो जायते'(प्र.उ.३—३) इति च । अत आह—**

अत्र नये मुख्यप्राणानुत्पत्तिश्रुतिविरोधपरिहारः । मुख्यप्राणो विषयः । जनिमान्न वेति संशयः । न जनिमानिति पूर्वपक्षः ॥ सन्देहबीजं दर्शयन्ति- **'नैष इत्यादि ॥ इति चेति** ॥ इत्यत्र त्वित्यर्थः । उत्पत्तिरिति शेषः । श्रूयत इति वर्तते ।

**(मुख्यप्राणोऽपि विष्णोरुत्पद्यते)**

**॥ ॐ श्रेष्ठश्च ॐ ॥ ९ ॥**

**प्राणाः, उत्पद्यन्ते, श्रुतेरिति वर्तते । यथायथं विपरिणम्यते । अयमर्थः- प्राणानां श्रेष्ठश्च मुख्यप्राणोऽपि, उत्पद्यते, श्रुतेः 'सौक्ष्म्येण ह' इति श्रुतेरिति ॥**

**'सौक्ष्म्येण ह वा एषोऽवतिष्ठते स्थूलत्वेनोदेति सूक्ष्मश्चाथो स्थूलश्च प्रकृतितः सूक्ष्मोऽन्यतः स्थूलोऽथैनमाहुः सादिरनादिरिति' इति गौपवनश्रुतेः ॥**

---

१. **नैष इति ॥ एष** मुख्यप्राणः, **नोदेति** नोत्पद्यते, **अस्तं** नाशं च **नैति** न प्राप्नोति, किन्तु **एकलः** प्रधानः एकप्रकारो वा, **मध्ये** जननमरणयोर्मध्यावस्थायां, यौवने, देहमध्ये वा, **स्थाता अथ तस्मात् एनं** मुख्यप्राणं **मध्यम इत्याहुः** इत्यर्थः । **यत्प्राप्तिरिति ॥ यत्प्राप्तिः** यस्य मुख्यप्राणस्य प्राप्तिः, देहे सम्बन्धः **उत्पत्तिः** इत्युच्यते । **यत्परित्यागः** यस्य मुख्यप्राणस्य **परित्यागः** देहाद्बहिर्गमनं मरणमित्युच्यते, **तस्य** मुख्यप्राणस्येत्यर्थः । शिष्टं स्पष्टम् । **आत्मत इति** ॥ (ष.प्र.३.३) **आत्मतः** परमात्मनः सकाशादित्यर्थः । शिष्टं स्पष्टम् ॥

२. **सौक्ष्म्येणेति ॥** सूक्ष्मरूपेण **अवतिष्ठते** सदा तिष्ठति, **एष** मुख्यप्राणः, **स्थूलत्वेन** स्थूलभावेन, **उदेति** उत्पद्यते, **प्रकृतितः** स्वभावतः,**अन्यतः** शरीरादितः **अथो** तस्मादित्यर्थः। स्पष्टमन्यत् । यद्यपीदमितर-जीवानामपि तुल्यम्। तथाऽपि मुख्यप्राणस्य स्वरूपे अन्यजीवानामिव अभिमानकृतविक्रियाविशेषो नेति विशेष इति ज्ञेयम् ॥९॥

भा.॥ हेतुभूतश्रुतिमाहुः- [२]सौक्ष्म्येणेति ॥ श्रुतेरिति ॥ अस्य सानुवृत्तिसूत्रेणैकवाक्यतयाऽन्वयः ॥९॥

प्राणशब्दस्य भूतवायुक्रियारूपार्थान्तरपरत्वेन प्राणोत्पत्तिश्रुतिर्नेयेति शङ्कावारणाय सूत्रम्-

(प्राणोत्पत्तिश्रुतिर्न भूतवायुपरा)

॥ ॐ न वायुक्रिये पृथगुपदेशात् ॐ ॥ १० ॥

श्रुतेः, प्राणाः, श्रेष्ठ इति वर्तते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- श्रुतौ 'आत्मत एष प्राणोऽजायत' इति, 'स प्राणमसृजत' इति च श्रुतौ प्राणौ प्राणशब्दवाच्ये वायुक्रिये बाह्यजडवायुः, चेष्टारूपक्रिया चेति चेत् न । श्रुतौ तत्र श्रुतौ वायुक्रिययोः श्रेष्ठात् पृथगुपदेशात् 'खं वायुः' इति 'कर्म' इति च पृथग्ग्रहणादिति ॥

'चेष्टायां बाह्यवायौ च मुख्यप्राणे च गीयते ।
प्राणशब्दस्त्रिषु ह्येषु मुख्ये मुख्यः प्रकीर्तितः ॥'

इति वायुक्रिययोरपि व्यपदेशादुत्पत्तिश्रुतिस्तयोर्न स्यात् । 'स प्राणमसृजत .... खं वायुर्ज्योतिरापः .... तपो मन्त्राः कर्म' (प्र.उ.६–४) इति पृथगुपदेशात् ।

'भूतानि चेष्टा मन्त्राश्च मुख्यप्राणादिदं जगत् ।
मुख्यप्राणः परस्माच्च न परः कारणान्वितः ॥' इति वायुप्रोक्ते ॥ १० ॥

॥ इति मुख्यप्राणाधिकरणम् ॥(श्रेष्ठाधिकरणम्)

---

१.चेष्टायामिति ॥ चेष्टा स्पन्दनं, बाह्यवायुः भूतवायुः, गीयते प्रयुज्यते इत्यर्थः । अन्यत्स्पष्टम् ।

२. स प्राणमिति ॥ (ष.प्र.६-४) 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च' इति मन्त्रः । स प्रकृतः परमपुरुषः, प्राणं जीवकलाभिमानिनम् असृजत, प्राणाच्छ्रद्धां प्राणं निमित्तीकृत्य जीवास्तिक्यनिष्ठां भारतीं, ततश्च खम् आकाशं वायुः ज्योतिः आपः पृथिवी इत्येतानि शरीरोपादानभूतानि, ततः इन्द्रियं मनः प्रधानेन्द्रियम्, अन्नम्, अन्नाद्वीर्यं रेतः, तपः, मन्त्राः वेदान्, कर्म पापपुण्यरूपं, लोकाः गोलकाः इन्द्रियाश्रय भूतान्, लोकेषु सृष्टेषु, नाम च असृजत इत्यर्थः ।

३. भूतानीति ॥ भूतानि आकाशादीनि, चेष्टा कर्म, मन्त्राश्च इत्येवमादि जगत् मुख्यप्राणाद् उत्पन्नं, परस्माच्च मुख्यप्राणः उत्पन्नः, परः परमात्मा कारणान्वितो न अजन्य इत्यर्थः ॥ १० ॥ अ.६ ॥

**भा.** ॥ सूत्रं व्याचक्षते- [1]**चेष्टायामिति** ॥ **वायुक्रिययोरिति** ॥ सप्तमीयम् । **व्यपदेशादिति** ॥ प्राणपदस्य तत्र शक्तिबोधनात् । तयोः वायुक्रिययोर्विषये स्यादिति नेत्यर्थः । (हेतुबोधक)श्रुतिमाहुः- [2]**स इत्यादि** ॥ (पृथगुपदेशात्- पुनः उत्पत्तिमत्त्वेन कथनात्) श्रुत्यर्थे स्मृतिमाहुः- [1]**भूतानीति** ॥ **वायुप्रोक्ते इति** ॥ 'कर्म' इति श्रुतौ, वायुप्रोक्ते तयोः प्राणात्पृथग्ग्रहणादिति नेत्यन्वयः । (उत्पत्तेरन्यविषयत्वे पुनरुक्तिः स्यादिति भावः) ॥ १० ॥ अ.६ ॥

**॥ इति श्रेष्ठाऽधिकरणम् ॥**

## ७. चक्षुराद्यधिकरणम्

**'प्राणादिदमाविरासीत् प्राणो धत्ते प्राणे लयमभ्युपैति न प्राणः किञ्चिदाश्रितः' इत्याग्निवेश्यश्रुतौ ।**

**'यदाश्रयादस्य चेष्टा सोऽन्यं कथमुपाश्रयेत् ।**
**यथा प्राणस्तथा राजा सर्वस्यैकाश्रयो भवेत् ॥' इति च युक्तिर्भारते ।**
**'प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थितः ।**
**न परः किञ्चिदाश्रित्य वर्तते परमो यतः ॥' इति पैङ्गिश्रुतिः ।**

**अत आह–**

अत्र नये मुख्यप्राणस्वातन्त्र्यश्रुतिविरोधपरिहारः । मुख्यप्राणो विषयः । स्वतन्त्रो न वेति संशयः । स्वतन्त्र इति पूर्वपक्षः ॥ सन्देहबीजं दर्शयन्ति- **'प्राणादित्यादि ॥ श्रुताविति** ॥ मुख्यप्राणस्य स्वातन्त्र्यं प्रतीयत इति शेषः । **भारत इति** ॥ प्राणस्य स्वातन्त्र्यविषये युक्तिर्भारते प्रतीयत इत्यर्थः । **पैङ्गिश्रुति-रिति** ॥ प्राणस्येति वर्तते ॥ अस्वातन्त्र्यमिति शेषः । आहेत्यपकृष्यते ॥

**(चक्षुरादिवन्मुख्यप्राणोऽपि विष्णुवश एव)**

**॥ ॐ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॐ ॥ ११ ॥**

**श्रेष्ठश्चेति वर्तते । हेतुबलात् परमात्माधीन इति लभ्यते । शिष्टिः शासनविषयत्वं तेन तदुक्तिर्लक्ष्यते तैः सह शिष्टिरिति 'मयूरव्यंसकादि'त्वात्समासः । आदिना ईश्वरद्वयायोगावान्तरेश्वरत्वादियुक्तीनां परिग्रहः । अयमर्थः- श्रेष्ठश्च मुख्यप्राणोऽपि, चक्षुरादिवत् परमात्माधीनः तु (तद) अधीन एव, तत्सह-शिष्ट्यादिभ्यः** 'सर्वं ह्येवैतत्' इति गौपवनश्रुतौ तैः चक्षुरादिभिः सह तद्वशत्वेनोक्तयुक्तिभिश्चेति ॥

**चक्षुरादिवन्मुख्यप्राणोऽपि परमात्मवश एव । 'सर्वं ह्येवैतत्परमेऽवतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च स ह्येक एवैतान्नयत्युन्नयति वशीकरोति' इति गौपवनश्रुतौ चक्षुरादिभिः सह तद्वशत्वेनैव शासनात् ।**

१. **प्राणादिति** ॥ इदं जगत् । अन्यत्स्पष्टम् । **यदाश्रयादिति** ॥ **अस्य** जगतः, **स** प्राणः, यथेति प्राणो दृष्टान्तः. राजा दार्ष्टान्तिक इत्यर्थः । प्राणस्य सर्वाश्रयत्वं सिद्धमिति तस्य दृष्टान्तत्वेन ग्रहणमिति ज्ञेयम् । अन्यत् स्पष्टम् । **प्राणस्येति** ॥ **एतत्सर्वं** जगत् **प्राणस्य वशे** वर्तते । **प्राणः परवशे** परमात्मवशे **स्थितः, यतः परो** विष्णुः परमः सर्वोत्तमः अतः **परः किञ्चिदाश्रित्य न वर्तते** इत्यर्थः ।

**'सर्वकर्ताऽपि सन्प्राणः परमाधारतः स्थितः ।**
**कथमेवान्यथा स स्याद्यतो नैवेश्वरद्वयम् ॥**
**अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत् ।**
**अतो मध्यमतामाहुस्तस्य वेदेषु वेदिनः ॥**
**अनन्येश्वरता प्राणे तदन्येश्वरवर्जनम् ।**
**यतो विशेषवाक्येन ह्रियते समतावचः ॥'**

**'नान्योऽतोऽस्ति द्रष्टा' (बृ.उ.५–७–२३) 'नान्यदतोऽस्ति द्रष्टृ' (बृ.उ.५–८–१२) इत्यादिवचनयुक्तयश्चादिशब्दोक्ताः ॥**

भा. ॥ सूत्रं व्याख्यान्ति- **चक्षुरिति** ॥ हेतुबोधकश्रुतिमाहुः- [1]**सर्वं हीति** ॥ ननु स्वातन्त्र्ये युक्तियुक्तश्रुतिसद्भावात् कथं श्रुतिमात्रेण निर्णयोऽत आहुः- [2]**सर्वकर्तेत्यादि ॥ वचनयुक्तय इति ॥** वचनसिद्धा युक्तयः, वचनानि युक्तयश्चेति वाऽर्थः ॥ ११ ॥

---

१. **सर्वं ह्येतदिति ॥ प्राणः** मुख्यप्राणः, **प्राणाः** इतरेन्द्रियाणि, **प्राणिनो** जीवाः, **हि** यतः **स** परमात्मा, **एकः** स्वतन्त्रः, **नयति** जन्मादिकं प्रापयति, **उन्नयति** ऊर्ध्वं नयति अतः **एतत् परमे अवतिष्ठते** इति सम्बन्धः । अन्यत्स्पष्टम् ॥

२. **सर्वकर्तेति ॥ यतः** कारणात् **अन्यथा** प्राणस्य परमाधारतया स्थित्यनङ्गीकारे, प्रसक्तमिति शेषः । **ईश्वरद्वयं** जगत ईश्वरद्वयविशिष्टत्वं **न** युज्यते । अतः **स मुख्यप्राणः कथमेव** स्वतन्त्रः स्यात् , अतः **सर्वकर्ताऽपि सन् प्राणः परमाधारतः स्थितः** परमात्माधारकत्वेन (स्थितः) 'प्राणादिदमाविरासीत्' इत्यादेर्गतिमाह- **अवान्तरेति ॥ तस्य** प्राणस्य **ईश्वरवचः** जगदीश्वरत्वप्रतिपादक'प्राणादिदम्'इत्यादिवाक्यम्, **अवान्तरेश्वरत्वेन** तत्परत्वेन, **भवेत्** उपपन्नं भवेत् । अतः अवान्तरेश्वरत्वात्, **वेदिनो** ज्ञानिनः **वेदेषु** 'मध्यमः प्राणः मध्ये स्थाता' इत्यादिवेदेषु, **तस्य** मुख्यस्य **मध्यमतामाहुः, प्राणे** मुख्यप्राणविषये **अनन्येश्वरता** अन्येश्वरराहित्यप्रतिपादकं 'न प्राणः किञ्चिदाश्रितः' इत्यादिवाक्यं, **तदन्येश्वरवर्जनम्** भगवदन्येश्वरराहित्य(प्रतिपादन)परं, **यतः** कारणात् **विशेषवाक्येन** 'प्राणः परवशे स्थितः' इत्यादिविशेषवचनेन, **समतावचः** ईश्वरसाम्यप्रतिपादक-'प्राणादिदमाविरासीत्'इत्यादिवाक्यं **ह्रियते** अवान्तरेश्वरपरतया नीयते, अतः अनन्येश्वरपरतेत्यर्थः । तदन्येश्वरवर्जनादिति पाठे भगवदितरेश्वरवर्जनाद्धेतोः प्राणे श्रुत्युक्तानन्येश्वरपरता अन्येश्वरशून्यत्वमुपपन्नेत्यर्थो बोध्यः । नान्योऽतोऽस्तीति व्या.(२२२-पु.) **नाऽन्यदिति** ॥ (बृ.५.८.११) **अतः** ब्रह्मणः सकाशादन्यत् **द्रष्टृ** स्वातन्त्र्येण द्रष्टृ **न** इत्यर्थः ॥ ११ ॥

मुख्यप्राणस्य चक्षुरादिवदेवेश्वराधीनत्वेऽवान्तरेश्वरत्वाद्यभिधायकश्रुतिर्व्यर्थेत्याशङ्कावारणाय सूत्रम्-

(न प्राणस्यावान्तरेश्वरत्वाभावः)

## ॥ ॐ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॐ ॥ १२ ॥

श्रेष्ठश्चेति वर्तते । श्रेष्ठस्येति विपरिणम्यते च । चः अन्येन्द्रियाणां करणत्वादित्यनुक्तसमुच्चये । अयमर्थः- श्रेष्ठस्य मुख्यप्राणस्य अकरणत्वात् तत्तच्छरीराधिष्ठितजीवकर्तृप्रयोज्यत्वाभावात् अन्येन्द्रियाणां करणत्वाच्च, दोषः करणत्वप्रयुक्तावान्तरेश्वरत्वाभावो मुख्यस्य न, हि यतः, श्रुतिः माण्डव्यश्रुतिः, तथा दर्शयति अत इति ॥

**इतरेषां प्राणानां करणत्वान्मुख्यस्याकरणत्वाच्च तस्यान्येभ्य उत्तमत्वं युज्यते । माण्डव्यश्रुतिश्च– 'तानि ह वा एतानि सर्वाणि करणान्यथ प्राण एवाकरणस्तस्मान्मुख्यस्तस्मान्मुख्य इत्याचक्षते' इति ।**

॥ इति चक्षुराद्यधिकरणम् ॥ ७ ॥

भा. ॥ सूत्रं व्याचक्षते- **इतरेषामिति** ॥ **माण्डव्यश्रुतिश्चेति** ॥ 'दर्शयति' इति सूत्रेणान्वयः । तामेव श्रुतिमाहुः- **'तानीति** ॥ १२ ॥ अ.७ ॥

॥ इति चक्षुराद्यधिकरणम् ॥

१. **तानीति** ॥ तान्येतानि चक्षुरादीनि **सर्वाणि करणानि** कर्तृप्रयोज्यानि, **यतः** मुख्य**प्राण** एव **अकरणः** कर्त्रप्रयोज्यः, **तस्मान्मुख्य इत्याचक्षते** विद्वांस इत्यर्थः । स्पष्टमन्यत् ॥ १२ ॥ अ.७ ॥

## ८. पञ्चवृत्त्यधिकरणम्

**'सर्वे वा एते मुख्यदासाः प्राणोऽपानो व्यान उदानः समान इति । अथ प्राणो वाव सम्राट्' इति कौण्डिन्यश्रुतिः ।**

**'प्राणापानादयः सर्वे मुख्यदासा यतोऽनिशम् ।**
**अतस्तदाज्ञया नित्यं स्वानि कर्माणि कुर्वते ॥' इति युक्तिर्वायुप्रोक्ते ।**

**'मुख्यस्यैव स्वरूपाणि प्राणाद्याः पञ्च वायवः ।**
**स एव प्राणिनां देहे पञ्चधा वर्ततेऽनिशम् ॥' इति च गौपवनश्रुतिः । अतो वक्ति–**

अत्र नये प्राणापानादीनां मुख्यदासत्वतत्स्वरूपत्वश्रुत्योर्विरोधपरिहारः । प्राणा विषयः । मुख्यप्राणदासा वा, तत्स्वरूपाणि वेति संशयः । दासा इति पूर्वपक्षः ॥ सन्देहबीजश्रुतिमाहुः- **'सर्वे इत्यादि ॥ युक्तिरिति** ॥ वायुप्रोक्तोक्तयुक्तिसहिता कौण्डिन्यश्रुतिरित्यर्थः । **गौपवनश्रुतिरिति** ॥ अस्या अपि प्राणादयो मुख्यस्य स्वरूपाणि व्यक्तसद्गुणत्वादित्यादियुक्तिसाहित्यमस्ति । श्रुतिरित्युभयत्रापि अस्तीति शेषः । **अत इति** ॥ श्रुतिद्वयसत्त्वेन प्राप्तसंशयपरिहारार्थमित्यर्थः ॥

**(मुख्यप्राणः प्राणादिपञ्चरूपः)**

### ॥ ॐ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॐ ॥ १३ ॥

**श्रेष्ठश्चेति वर्तते । पञ्चवृत्तिरित्यावर्तते । अयमर्थः- मनोवत् यथा मनोभिमानी मनो बुद्धिरहङ्कारश्चित्तं चेतनेति पञ्चरूपवान्, मनआदिपञ्चदासवांश्च, तथा श्रेष्ठो मुख्यप्राणः पञ्चवृत्तिः प्राणापानादिपञ्चरूपः, तादृशपञ्चदासवांश्चेति व्यपदिश्यते** 'अथ पञ्च' इति श्रुतेरिति ॥

**'अथ पञ्चवृत्त्यैतत्प्रवर्तते प्राणो वाव पञ्चवृत्तिः प्राणोऽपानो व्यान उदानः समान**

---

१. **सर्वे वा इति ॥ प्राणोऽपानो व्यान उदानः समान इत्येते, मुख्यदासाः** मुख्यप्राणस्य भृत्याः । **अथ** तस्मात्, **प्राणः** मुख्यप्राणः, **सम्राड्** इत्यर्थः । अन्यत्स्पष्टम् । **प्राणापानादय इति** ॥ स्पष्टम् । स्वानि कर्माणि तु- बृहद्भाष्ये (१.अ.) उक्तानि 'प्राणः प्रवृत्तिहेतुः स्यादपानस्तन्निवर्तने । वनकर्मा तथा व्यान उदानो योगकर्म-कृत् ॥ देहेन्द्रियमनोनेता समानोऽन्तःस्थितिप्रदः' इति ॥ **मुख्यस्यैवेति** ॥ स्पष्टम् ।

**इति । तेभ्यो वा एतेभ्यः पञ्च दासाः प्रजायन्ते । प्राणाद्वाव प्राणोऽपानादपानो व्यानाद्व्यान उदानादुदानः समानादेव समानो यथा ह वै मनः पञ्चधा व्यपदिश्यते मनो बुद्धिरहङ्कारश्चित्तं चेतनेति । तेभ्यो वा एतेभ्यः पञ्च दासाः प्रजायन्ते । मनसो वाव मनो बुद्धेर्बुद्धिरहङ्कारादहङ्कारश्चित्ताच्चित्तं चेतनाया एव चेतनैवमिति' इति ।**

**॥ इति पञ्चवृत्त्यधिकरणम् ॥**

**भा.** ॥ व्यपदेशाकारश्रुतिमुदाहरन्ति- **'अथ पञ्चेति ॥ इतीति** ॥ व्यपादिश्यत इति सौत्रेणान्वयः । सूत्रार्थः स्पष्ट इति भावः । मुख्यप्राणस्य प्राणापानादिपञ्चक एको व्यूहः स्वरूपभूतः । अन्य एतद्व्यूह-घटकप्राणापानादेः क्रमेण पुत्रभूतप्राणापानादिपञ्चको व्यूहो दासः । एवं च स्वरूपत्वदासत्व-श्रुत्योर्भिन्नव्यक्तिविषयकत्वेनाविरोध इति ज्ञेयम् ॥ १३ ॥ अ.८ ॥

**॥ इति पञ्चवृत्त्यधिकरणम् ॥**

---

१. **अथ पञ्चेति** ॥ **अथ** प्रमेयान्तरमारभ्यते । एतत् शरीरं, **पञ्चवृत्त्या** पञ्चस्वरूपविशिष्टेन **प्रवर्तते** । पञ्चवृत्तिः पञ्चसङ्ख्याकाः वृत्तयः रूपाणि यस्य स तथा, **पञ्चवृत्ति**शब्दवाच्यः, **प्राणो वाव** मुख्यप्राण एव । पञ्चवृत्तीराह- **प्राण इति** ॥ **समान इतीति** ॥ पञ्चवृत्तय इति शेषः । **प्राणः समान** इत्यन्तेन **पञ्चधा व्यपदिश्यते** इत्यपि योज्यम् । **मनः पञ्चधा व्यपदिश्यते** इति दृष्टान्तानुरोधात्, **एभ्यः** प्राणादिभ्यः, **एते** वक्ष्यमाणाः मनःसङ्कल्पविकल्पात्मकम् । तत्र करिष्ये यक्ष्ये इत्यादिक्रियाहेतुभूतः, **कामः** सङ्कल्पः । स एव नानार्थविषयो **विकल्पः**, निश्चयरूपा **बुद्धिः** अस्वरूपे स्वरूपत्वबुद्धिः, परधर्मे स्वातन्त्र्यादौ स्वधर्मत्वबुद्धिश्च । **अहङ्कारः** अभिमानः, स्मरणहेतुः **चित्तं**, बहुस्मरणशक्तिः **चेतना**, इति पञ्चधा व्यपदिश्यते इत्यन्वयः. इति पञ्चवृत्तिश्चेति शेषः । **तेभ्यः** उक्त-मनआदिभ्यः, **एवम्** इत्यस्य दार्ष्टान्तिकेऽन्वयः इत्यर्थः । अन्यत्स्पष्टम् । अत्र दृष्टान्तेऽपि अधिष्ठानसहितः चेतनोऽपि ग्राह्यः । अधिकं **भाष्यदीपिकायां** द्रष्टव्यम् ॥ १३ ॥ अ.८ ॥

## ९. प्राणाणुत्वाधिकरणम्

**'प्राण एवाधस्तात्प्राण उपरिष्ठात्प्राणो मध्यतः प्राणः सर्वतः प्राण एवेदं सर्वम्' इति प्राणस्य व्याप्तिः प्रतीयते ।**

**'यतः सर्वं जगद्व्याप्य तिष्ठति प्राण एव तु ।**
**अतो धृतं जगत्सर्वमन्यथा केन धार्यते ॥' इति च युक्तिर्वायुप्रोक्ते ।**

**'अणुनैतत्सृजतेऽणुनैतद्धार्यते अणौ लयमभ्युपैति प्राणो वा अणुः प्राणैर्ह्येतद्भवति' इति च सौत्रायणश्रुतिः । अत आह–**

अत्र नये मुख्यप्राणपरिमाणश्रुतिविरोधपरिहारः । मुख्यप्राणो विषयः । व्याप्तो अणुर्वेति संशयः । व्याप्त इति पूर्वपक्षः ॥ सन्देहबीजं दर्शयन्ति- **'प्राण इत्यादि ॥ युक्तिरिति ॥** वायुप्रोक्तोक्तयुक्तिसहिता व्याप्तिरिति सम्बन्धः । **इति चेति** - अणुत्वमित्यनुक्तसमुच्चये चः । **श्रुतिरिति ॥** वक्तीति शेषः । (प्राणस्येति वर्तते ।) इति श्रुतिः प्राणस्याणुत्वं वक्तीत्यर्थः ।

**(मुख्यप्राणोऽध्यात्ममणुः बहिर्व्याप्तः)**

**॥ ॐ अणुश्च ॐ ॥ १४ ॥**

**श्रेष्ठोऽत इति वर्तते । चोऽनुक्तसमुच्चये, एवार्थे च । अयमर्थः-** श्रेष्ठः (मुख्यप्राणः) **अणुश्च** अणुरेव, व्याप्तश्च अतः 'स वा एष प्राणः' इति श्रुतेरिति ॥ अध्यात्ममणुः देहाद्बहिर्वर्तमानेन मुख्यप्राणरूपेण व्याप्त इति भावः ॥

**'स वा एष प्राणोऽणुर्महान्नामान्तर्वाऽणुर्बहिर्महान्प्राणो वा ईशितव्येश ईशो ह्यसौ सर्वस्येशितव्यश्च परस्य' इति हि कौण्डिन्यश्रुतिः ॥**

**॥ इति प्राणाणुत्वाधिकरणम् ॥**

---

१. **प्राण एवेति ॥** श्रुतौ अस्तीति शेषः । **इदं सर्वं प्राणः,** प्राणाधीनमित्यर्थः । शिष्टं स्पष्टम् । **यत इति ।** स्पष्टम् ॥ **अणुनेति ॥ प्राणो वाव** मुख्यप्राण एव, निगमनमाह- **प्राणैरिति ॥ प्राणैः** पञ्चभी रूपैः, एतत् जगत्स्रष्टृत्वादिकमित्यर्थः । स्पष्टमन्यत् ॥

**भा.** ॥ सूत्रसूचितश्रुतिमाहुः- **'स वा इति** ॥ **श्रुतिरिति** ॥ यतः श्रुतिरस्ति, अतः 'अणुश्च' इति सूत्रेण सम्बन्धः ॥ १४ ॥ अ.९ ॥

**॥ इत्यण्वधिकरणम् ॥**

---

१. **स वा इति** ॥ **अन्तः** देहान्तः, **बहिः** देहाद्बहिः, अध्यात्मगतरूपेण **अणुः**, अधिदैवरूपेण **महान्, हि** यतः **असौ** मुख्यप्राणः, **सर्वस्य** स्वस्माद्विष्णोश्चेतरस्य जगतः **ईशः परस्य** परमात्मनः **ईशितव्यः,** नियम्यश्च । अतः **प्राणो वाव** मुख्यप्राण एव, **ईशितव्येशः** ईशितव्यश्चासौ ईशश्चेति ईशितव्येशः । **हि** प्रसिद्धमित्यर्थः । स्पष्टमन्यत् ॥ १४ ॥ अ.९ ॥

## १०. ज्योतिरधिकरणम्

**करणत्वं प्राणानामुक्तम्-**

**'जीवस्य करणान्याहुः प्राणानेतांस्तु सर्वशः ।**
**यस्मात्तद्वशगा एते दृश्यन्ते सर्वदेहिषु ॥'**

**इति सौत्रायणश्रुतौ सयुक्तिकं जीवकरणत्वं प्रतीयते । 'ब्रह्मणो वा एतानि करणानि चक्षुः श्रोत्रं मनो वागिति तद्ध्यैतैः कारयति' इति च काषायणश्रुतौ, अत आह—**

अत्र नये चक्षुरादीनां जीवकरणत्वश्रुतिविरोधपरिहारः । चक्षुरादीति (२.४.७) नयेनापि सङ्गतिः । प्राणा विषयः । जीवकरणानि ब्रह्मकरणानि वेति सन्देहः । जीवकरणानीति पूर्वपक्षः ॥ **उक्तमिति** ॥ 'अकरणत्वाच्च' (२.४.१२)इति चेन, 'तानि ह वा' इति श्रुत्या चोक्तमिति भावः । सन्देहबीजं श्रुतिविरोधं दर्शयन्ति- [1]**जीवस्येति** यद्यपि जीवकरणत्वविषये 'तानि ह वा' इति श्रुतिरुदाहृतैव, अथापि जीवकरणत्वविषये युक्तिसूचनार्थं श्रुत्यन्तरोदाहरणम् । **जीवकरणत्वमिति** ॥ प्राणानामिति भावः । जीवकरणत्वाभावे श्रुतिमाहुः- [2]**ब्रह्मण इति** ॥ **श्रुताविति** ॥ ब्रह्मकरणत्वमिति शेषः । प्रतीयत इति वर्तते ॥

**(प्राणप्रेरकस्य विष्णोश्चक्षुरादिप्रेरकत्वं कैमुत्यन्यायसिद्धम्)**

### ॥ ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ ॥ १५ ॥

**ज्योतिरादिरधिष्ठानं यस्येति बहुव्रीहिः । तुरेवार्थे । यथायथमावृत्तिविपरिणामौ । अयमर्थः- ज्योतिराद्यधिष्ठानं 'योऽग्नौ तिष्ठन्' इत्यादिश्रुतिसिद्धाग्न्यादिप्रेरकत्वेनाग्न्यादौ स्थितं तत् तु ब्रह्मैव । ज्योतिराद्यधिष्ठानम् अग्न्याद्यंशचक्षुरादिप्रेरकत्वेन तत्र स्थितमस्ति । तदामननात् तस्य चक्षुरादिप्रेरक-**

---

१. **जीवस्येति** ॥ **सर्वशः** सर्वान् **प्राणान्**, इन्द्रियाणि **जीवस्यैव करणानि**, तत्प्रयोज्यानि **आहुः** वृद्धाः, **यस्मात्** कारणाद् **एते** प्राणाः, **सर्वदेहिषु** सर्वप्राणिभिः **तद्वशगाः दृश्यन्ते** स्ववशवर्तिन एवानुभूयन्ते तस्मादित्यर्थः।
२. **ब्रह्मण इति** ॥ **चक्षुः श्रोत्रं मनो वागिति** एतानि **ब्रह्मण** एव **करणानि** प्रयोज्यानि, **हि** यतः तत् **ब्रह्म** । **एतैः** चक्षुरादिभिः **कारयति** अत इत्यर्थः । अत्र चक्षुरादिकं कार्यं करोति तेन कारयति इत्यर्थप्रतीत्या चक्षुरादेः कर्तृत्वं प्रतीयते, तथाऽपि करणे कर्तृत्वोपचार एवेति बोध्यम् ।

**प्राणप्रेरकत्वस्य, चक्षुरादिप्रेरकत्वस्य च । आमननात्, 'यः प्राणे तिष्ठन् यश्चक्षुषि तिष्ठन्' इत्यादिश्रुतौ प्रतिपादनादिति ।। ब्रह्मणोऽग्न्यादिप्रेरकत्वेनाग्न्यादौ स्थितत्वविशेषणं तु अग्न्यादिप्रेरकत्वात्तदंशचक्षुरादेरपि ब्रह्मैव प्रेरकं भवेदिति सूचनाय आकाशादीति वक्तव्ये ज्येतिराद्युक्तिस्तु चक्षुरादिवदित्यत्र प्रसक्त-चक्षुरादिकमपेक्ष्य । एवं च चक्षुरादीनि ब्रह्मकरणान्येवेति भावः ।।**

**यज्ज्योतिराद्यधिष्ठानं ब्रह्म तदेवैतैः करणैः प्रवर्तयति । 'यः प्राणे तिष्ठन्'(बृ.उ.५—७—१६) इत्यादि तदामननात् ।। १५ ।।**

भा. ।।सूत्रार्थमाहुः- **यज्ज्योतिरिति** ।। इतरप्राणप्रेरकमुख्यप्राणप्रेरकस्य ब्रह्मणः किमु चक्षुरादिप्रेरकत्वमिति कैमुत्यसूचनाय । मुख्यप्राणप्रेरकत्वे श्रुतिमुदाहरन्ति- **'यः प्राणे इति** ।। आदिना 'यश्चक्षुषि तिष्ठन्' इत्यादेर्ग्रहणम् ।। **इत्यादि तदामननादिति** ।। इत्यादिश्रुतौ तत्प्रतिपादनादित्यर्थः ।। १५ ।।

**कथं जीवकरणत्वश्रुतिरित्यतो वक्ति—**

सूत्रमवतारयन्ति- **कथमिति** ।। एवं चेदित्यादौ शेषः । एवं चेत् प्राणानां ब्रह्मकरणत्वं चेदित्यर्थः । **श्रुतिरिति** ।। 'जीवस्य करणान्याहुः' इत्यादिश्रुतिरित्यर्थः । उपपद्यत इति शेषः ।।

**('एष ह्यनेन' इति श्रुतेः जीवेनैव स्वकरणैः कारयति विष्णुः)**

**।। ॐ प्राणवता शब्दात् ॐ ।। १६ ।।**

**ज्योतिरादि, तत्तु, न दोष इति वर्तते । कारयतीति शेषः । यथायथमावृत्तिविपरिणामौ । अयमर्थः- तत् ब्रह्म, यतः ज्योतिरादिभिः अग्न्याद्यंशैः चक्षुरादिभिः, प्राणवता जीवेन तत् दर्शनादिकं कारयति । शब्दात् 'एष ह्येव' इति श्रुतेः, तु अतः, न दोषः 'जीवस्य करणान्याहुः' इति श्रुतिविरोधो नेति ।।**

**जीवेनैव स्वकरणैः कारयति परमात्मा । अतो न विरोधः । 'एष ह्यनेनाऽऽत्मना चक्षुषा दर्शयति श्रोत्रेण श्रावयति मनसा मनयति बुद्ध्या बोधयति तस्मादेतावाहुः सृतिरसृतिरिति' इति भाल्लवेयश्रुतेः ।**

---

१. **यः प्राणे इति** (बृ.५.७.१६) **प्राणे** सर्वप्राणप्रेरकमुख्यप्राणे **तिष्ठन्** तस्मादन्तरो विविक्तः । एष त आत्मा अन्तर्यामीत्यर्थः । विशिष्टार्थस्तु अन्यत्रोक्तोऽनुसन्धेयः ।। १५ ।।

**'करणैः कारणं ब्रह्म पुरुषापेक्षयाऽखिलम् ।**
**श्रोत्रादिभिः कारयति करणानीत्यतो विदुः ॥**
**न जीवापेक्षया मुख्यं कारयेत्परमेश्वरः ।**
**केवलात्मेच्छया तस्मान्मुख्यत्वं तस्य निश्चितम् ॥' इति च वाराहे ।**

भा. ॥ (सूत्रं व्याचक्षते- **जीवेनेति** ॥) **न विरोध इति** ॥ उक्तश्रुतिविरोधो नेत्यर्थः । सौत्रशब्द-पदोपात्तश्रुतिं दर्शयन्ति - [1]**एष ह्यनेनेति** ॥ उक्तार्थे स्पष्टस्मृतिं चाहुः- [2]**करणैरिति** ॥ **वाराहे इति** ॥ यतः श्रुतिरस्ति अतः । वाराहे इत्युक्तेश्च, न विरोध इत्यन्वयः ॥ १६ ॥

**प्रकारान्तरेण प्राणानां जीवकरणत्वश्रुतिविरोधपरिहाराय सूत्रम् ।**

**(जीवकरणसम्बन्धस्यानादिनित्यत्वात् जीवकरणत्वश्रुतिरुपपन्ना)**

**॥ ॐ तस्य च नित्यत्वात् ॐ ॥ १७ ॥**

**तस्येत्यनेन प्राणवतः, चेन मतुप्रकृत्युपात्तप्राणानां, मतुबर्थसम्बन्धस्य च, ग्रहणम् । शब्दादित्यस्या-नुवृत्तिविपरिणामौ । उपपद्यत इति शेषः । अयमर्थः- तस्य च जीवकरणतत्सम्बन्धानां, नित्यत्वात् अनादिनित्यत्वात्, शब्दः जीवकरणत्वश्रुतिः, उपपद्यत इति ॥ जीवे चिरकालं प्राणानां सत्त्वात्तदीयत्वेन व्यवहार इति भावः ॥**

**अनादिनित्यत्वाच्च जीवकरणसम्बन्धस्य युज्यते तत्करणत्वश्रुतिः । 'अथावि-**

---

१. **एष हीति** ॥ **हि** यत **एष** परमात्मा, **अनेन** प्रकृतेन **आत्मना**, अस्वतन्त्रकर्त्रा जीवेन **चक्षुषा** स्वकरणेन **दर्शयति** रूपं, **श्रावयति** शब्दं, **बुद्ध्या** बुद्धीन्द्रियेण, मननं सामान्यज्ञानं बोधनं विशेषज्ञानम् **एतौ** ईशजीवौ, **सृत्यसृती** स्वतन्त्रप्रवृत्तिमत्तद्विपरीतौ **इत्याहुः** इत्यर्थः ।

२. **करणैरिति** ॥ यतः **कारणं** जगत्कारणं **ब्रह्म पुरुषापेक्षया** जीवप्रयत्नापेक्षया जीवप्रत्ययापेक्षया वा, जीवाभिप्रायानुसारेण वा, **अखिलं श्रोत्रादिभिः करणैः कारयति** । **अतः** जीवस्य **करणानीति विदुः** इत्यर्थः। **न जीवेति** ॥ यस्मात् **परमेश्वरः**, **मुख्यं** मुख्यप्राणं, **जीवापेक्षया न कारयेत्** जीवेच्छाप्रयत्नप्रयोज्यं न करोति । किन्तु- **केवलमात्मेच्छया** स्वेच्छाप्रयत्नमात्रप्रयोज्यं करोति । **तस्मात् जीवापेक्षया** करणत्वाभावात् **तस्य** मुख्यप्राणस्य **मुख्यत्वं निश्चितम्** अविरुद्धमित्यर्थः ॥ १६ ॥

**योगीनि । करणैर्वाव न वियुज्यते देहेनैव वियुज्यत इत्येतद्वाव करणानां करणत्वं यद्वाव न वियुज्यते' इति गौपवनश्रुतिः । चशब्दः करणसम्बन्धग्राही ॥ १७ ॥**

**॥ इति ज्योतिराद्यधिकरणम् ॥**

भा. ॥ सूत्रं विवृण्वन्ति- **अनादीति** ॥ **जीवकरणसम्बन्धस्येति** ॥ समाहारद्वन्द्वः । जीवकरण-तत्सम्बन्धानामित्यर्थः । तत्करणत्वश्रुतिः जीवकरणत्वश्रुतिः । तां श्रुतिमाहुः- '**अथेति** ॥ **गौपवनश्रुति-रिति** ॥ यतोऽतो वक्तीति शेषः । यतः श्रुतिः इति वक्ति, अतोऽनादिनित्येति सम्बन्धः । **ग्राहीति** ॥ करणतत्सम्बन्धयोः समुच्चयविधया ग्राहक इत्यर्थः ॥ १७ ॥ अ. १० ॥

॥ इति ज्योतिराद्यधिकरणम् ॥

---

१. **अथेति** ॥ यतः जीव इति शेषः । **करणैः** इन्द्रियैः **न वियुज्यते** । अतः **अवियोगीनि** । करणानि **देहेनैव वियुज्यते** जीवः **करणैः न वियुज्यते इति यत्**, तत् **करणानाम्** इन्द्रियाणां **करणत्वं** जीवकरणत्वव्यवहार-निमित्तमित्यर्थः ॥ १७ ॥ अ. १० ॥

## ११. त इन्द्रियाधिकरणम्

**'अथेन्द्रियाणि प्राणा वा इन्द्रियाणि प्राणा हीदं द्रवन्ति' इति सयुक्तिका पौत्रायणश्रुतिः सामान्येन प्राणानामिन्द्रियत्वं वक्ति । 'द्वादशैवेन्द्रियाण्याहुर्मनोबुद्धी तु द्वादश' इति च काषायणश्रुतिः । अतः कस्येन्द्रियत्वं निवार्यत इत्यतो वक्ति--**

अत्र नये मुख्यप्राणस्य इन्द्रियत्वश्रुतिविरोधपरिहारः । इन्द्रियत्वं विषयः । त्रयोदशानां द्वादशानामेव वा इति संशयः, त्रयोदशानामिति पूर्वपक्षः ॥ संशयबीजश्रुतिमाहुः- **'अथेत्यादि ॥ सामान्येनेति ॥** सङ्ख्यानिर्देशम् अकृत्वा इत्यर्थः । (**इन्द्रियत्वमिति**) प्राणशब्दितानां त्रयोदशानामिति भावः । **काषायणश्रुतिरिति** ॥ द्वादशानामेवेति शेषः । प्राणानामिन्द्रियत्वं वक्तीति वर्तते । **अत इति ॥** श्रुतिद्वयविरोधपरिहारार्थमित्यर्थः । **कस्येति** ॥ त्रयोदशानां मध्ये कस्यान्यतमस्य इत्यर्थः । मुख्य(प्राण)स्यापि इन्द्रियत्वे इन्द्रियाणां त्रयोदशत्वं प्राप्नोति इत्यवश्यं एकस्य इन्द्रियत्वाभावे वक्तव्ये कस्य (वक्तव्य इति संशय) इति भावः ॥ न च पौत्रायणश्रुत्यनुरोधेन काषायणश्रुतावेकस्य मेलनं स्यादिति वाच्यम् । काषायणश्रुतौ द्वादशैवेति एवकारसत्त्वेन मेलनायोगात् । **अत इति ॥** उक्तशङ्कापरिहारार्थमित्यर्थः ॥

**(मुख्यप्राणमृते द्वादशैवेन्द्रियाणि)**

### ॥ ॐ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॐ ॥ १८ ॥

**अन्यत्रेति प्रथमान्तात् त्रल् । अयमर्थः- श्रेष्ठादन्यत्र मुख्यप्राणादन्ये, ते प्राणाः चक्षुरादयः द्वादशैव इन्द्रियाणि** इन्द्रियशब्दवाच्याः । **तद्व्यपदेशात्** तेन प्रकारेण **'द्वादशैवेन्द्रियाण्याहुः' इति श्रुतावुक्तत्वादिति ॥**

---

१. **अथेन्द्रियाणीति** ॥ **अथ** प्रमेयान्तरमारभ्यते, **इन्द्रियाणि** उच्यन्त इति शेषः । **प्राणाः** मुख्यप्राणादयः **इन्द्रियाणि** इन्द्रियशब्दवाच्याः, **हि** यतः **प्राणा एव इदं** विषयजातं **प्रति, द्रवन्ति** गच्छन्ति अत इत्यर्थः । अनया श्रुत्या चक्षुरादीनां पञ्चानां वागादीनां मनोबुद्ध्योः मुख्यप्राणस्य चेति त्रयोदशानामिन्द्रियत्वमुक्तमिति भावः । **द्वादशैवेति ॥ एवः** अधिकसङ्ख्याव्यावर्तकः । **मनोबुद्धी** तन्नामके इन्द्रिये, **द्वादशे** एकादशत्व-द्वादशत्वसङ्ख्यापूरके इत्यर्थः । अत्र द्वादशशब्दयोरेकशेषः । एकं द्वादशपदं समीपवृत्त्येकादशपरं 'प्रथमयोः पूर्वसवर्णः' इति पाणिनिसूत्रे एकप्रथमापदस्य स्वार्थसमीपवृत्तिद्वितीयाविभक्तिपरत्ववदिति ज्ञेयम् ॥

**मुख्यप्राणमृते त एवेन्द्रियाणि ।**

**'द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम् ।**
**द्रवतां हीन्द्रियाणां तु नियन्ता प्राण एकराट् ॥' इति पौत्रायणश्रुतिः ।**
**'श्रोत्रादीनि तु पञ्चैव तथा वागादिपञ्चकम् ।**
**मनोबुद्धिसहायानि द्वादशैवेन्द्रियाणि तु ॥**
**विषयद्रवणात्तेषमिन्द्रियत्वमुदाहृतम् ।**
**तेषां नियामकः प्राणः स्थित एवाखिलप्रभुः ॥'**

**इति बृहत्संहितायाम् ॥ १८ ॥**

भा. ॥ सूत्रतात्पर्यार्थमाहुः- **मुख्यप्राणमिति** ॥ व्यपदेशश्रुतिमाहुः- [1]**'द्वादशैवेति** ॥ **श्रुतिरिति** ॥ अत्रेति शेषः । अत्रैव स्मृतिमाहुः- [2]**श्रोत्रादीनीति** ॥ **संहितायामिति** ॥ अत्र श्रुतौ, बृहत्संहितायां च, तद्व्यपदेशादिति सौत्रेण एकवाक्यतयाऽन्वयः ॥ १८ ॥

मुख्यप्राण इन्द्रियं न चेत् चक्षुरपीन्द्रियं न स्यात् अविशेषादिति शङ्कापरिहाराय सूत्रम्-

**(प्राणे सर्वकर्तृत्वादिधर्मस्यान्यत्र तदभावाच्च न तस्य चक्षुराद्यविशेषः)**

**॥ ॐ भेदश्रुतेः ॐ ॥ १९ ॥**

त इन्द्रियाणि, अन्यत्र श्रेष्ठादिति वर्तते । अयमर्थः- श्रेष्ठादन्यत्र मुख्यप्राणादन्ये, ते प्राणाः इन्द्रियाणि, भेदश्रुतेः, मुख्यप्राणतदन्ययोः भेदकसर्वकार्यकर्तृत्व(सर्व)नियामकत्वतदभावबोधक'स्थित एव हि' इति श्रुतेरिति ॥

**'स्थित एव हीदं मुख्यप्राणः करोति कारयति बलति बालयति धत्ते धारयति प्रभुं वा एनमाहुरथेन्द्रियाणि न स्थितानि न कुर्वन्ति न कारयन्ति न बलन्ति न बालयन्ति न दधते न धारयन्ति तानि ह वा एतान्यबलानि तस्मादाहुरिन्द्रियाणि करणानि' इति पौत्रायणश्रुतेः ॥**

---

१. **द्वादशैवेति** ॥ **मुख्यप्राणः तु अनिन्द्रियः** विषयद्रवणशून्यत्वात् इन्द्रियशब्दवाच्यो न. **द्रवतां** विषयं प्रति गच्छताम् **इन्द्रियाणां** चक्षुरादीनां **नियन्ता एकराट्** स्वतन्त्रः इत्यर्थः । स्पष्टमन्यत् ।

२. **श्रोत्रादीनीति** ॥ **स्थितः** स्वस्थाने स्थितस्सन्नेव **नियामक** इत्यर्थः । स्पष्टमन्यत् ॥ १८ ॥

**भा.॥ सूत्रोपात्तश्रुतिमाहुः— [1]स्थित इति ॥ सूत्रार्थः स्पष्ट इति भावः । एवं चानुमानेन मुख्य (प्राण) स्येन्द्रियत्वं नेत्युक्तं भवति । अनुमानप्रयोगस्तु 'मुख्यप्राणो नेन्द्रियं सर्वकर्तृनियामकत्वात् ईश्वरवत्' इति ॥ १९ ॥**

**ननु मुख्यस्येश्वरवशत्वानङ्गीकारे पूर्वोक्तेश्वरवशत्वविरोधः, तद्वशत्वे च इन्द्रियत्ववारकयुक्तिविरोध इति शङ्कावारणाय सूत्रम्–**

**(मुख्यतदन्ययोः ईशमात्राधीनप्रवृत्तिमत्त्वेशजीवोभयापेक्षप्रवृत्तिमत्त्वरूपवैलक्षण्यमस्ति)**

**॥ ॐ वैलक्ष्यण्याच्च ॐ ॥ २० ॥**

त, इन्द्रियाणि, श्रेष्ठाद्, अन्यत्रेति वर्तते । चोऽप्यर्थे, समुच्चये च । अयमर्थः- च ईशवशत्वाविशेषेऽपि श्रेष्ठादन्यत्र त इन्द्रियाणि **वैलक्षण्याच्च** मुख्यतदन्ययोः ईशमात्राधीनप्रवृत्तिमत्त्वेशजीवोभयापेक्षप्रवृत्तिमत्त्ववैलक्षण्याच्चेति ॥

**पुरुषापेक्षया प्रवृत्तिरिन्द्रियाणां दृश्यते न मुख्यस्य । 'प्राणाग्नय एवैतस्मिन्पुरे जाग्रति' (प्र.उ.४–३) इति च श्रुतिः ॥**

**॥ इति इन्द्रियाधिकरणम् ॥**

**भा.॥ सूत्रतात्पर्यार्थमाहुः- पुरुषेति ॥ जीवेत्यर्थः । प्रवृत्तिः विषयेषु व्यापृतिः । न मुख्यस्येति ॥ इतीति शेषः । इति वैलक्ष्यण्याच्चेति सूत्रेऽन्वयः । मुख्यस्य प्रवृत्तिर्न पुरुषप्रयत्नापेक्षयेत्यत्र श्रुतिमाहुः- [2]प्राणाग्नय इति ॥ (श्रुतेरिति ॥ न मुख्यस्य प्रवृत्तिरित्यनेनान्वयः ।) २० ॥ अ.११॥**

**॥ इति त इन्द्रियाधिकरणम् ॥**

---

१. **स्थित इति ॥ मुख्यप्राणः** स्वस्थाने स्थितस्सन्नेव इदं कार्यजातं **करोति, कारयति** अन्येन, **बलति** चेष्टते **बालयति** बलवन्तं करोति, **इन्द्रियाणि** चक्षुरादीनि **न स्थितानि** एकत्र स्थितानि न भवन्ति, **अबलानि** असमर्थानि, **तस्मात्** चक्षुरादीनि **करणानि** जीवप्रयोज्यानि **आहुः** विद्वांस इत्यर्थः । शिष्टं स्पष्टम् ॥१९॥

२. **प्राणाग्नय इति ॥** (ष.प्र.४.३) स्वापकाले **एतस्मिन् पुरे** शरीरे **प्राणाग्नयः** प्राणापानादिमुख्यप्राणरूपाण्येव अग्नयः, त **एव जाग्रति** शरीरधारणादिस्वस्वव्यापरं कुर्वन्ति इत्यर्थः ॥ २० ॥ अ.११ ॥

## १२. सञ्ज्ञाधिकरणम्

**'विरिञ्चो वा इदं सर्वं विरेचयति विदधाति ब्रह्मा वाव विरिञ्च एतस्माद्धीमे रूपनामनी' इति गोपवनश्रुतिः ।**

**'यस्माद्विरेचयेत्सर्वं विरिञ्चस्तेन भण्यते ।**
**एको हि कर्ता जगतो ब्रह्मैव च चतुर्मुखः ॥' इति च युक्तिर्ब्राह्मे ॥**

**अथ कस्मादुच्यते परम इति परमाद्ध्येते नामरूपे व्याक्रियेते तस्मादेनमाहुः परम इति । अथ कस्मादुच्यते ब्रह्मेति बृहत्त्वाद् बृंहितत्त्वाच्च इत्याग्निवेश्यश्रुतिः । अत आह–**

अत्र नये शरीरादिरूपनामात्मकप्रपञ्चस्य चतुर्मुखसृष्टत्वश्रुतिविरोधपरिहारः । शरीरादिकं विषयः। चतुर्मुखसृष्टं विष्णुसृष्टं वेति संशयः । चतुर्मुखसृष्टमिति पूर्वपक्षः ॥ संशयबीजश्रुतिस्मृती आहुः- **'विरिञ्च इत्यादि ॥ युक्तिरिति ॥** ब्राह्मोक्तयुक्तिसहिता गौपवनश्रुतिरस्तीत्यर्थः । **आग्निवेश्यश्रुतिरिति ॥** अस्तीति शेषः । **अत इति** प्राप्तदोषपरिहारार्थमित्यर्थः ॥

**(नामरूपात्मकशरीरेन्द्रियादिप्रपञ्चसृष्टिः विष्णोरेव)**

### ॥ ॐ संज्ञामूर्तिकॢप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॐ ॥ २१ ॥

**तुरेवार्थे । त्रिभिर्वृतस्त्रिवृत् कर्मणि क्विप् त्रिवृतं करोतीति त्रिवृत्कृत् । तृवृदिति पाठे छान्दसं सम्प्रसारणम् । त्रिवृदिति हेतुगर्भम् । अयमर्थः- सञ्ज्ञामूर्तिकॢप्तिः नामरूपात्मकशरीरेन्द्रियादिप्रपञ्चसृष्टिः,**

---

१. **विरिञ्च इति ॥ विरिञ्च एव इदं सर्वं** विश्वं नामरूपात्मकं **विरेचयति** अस्यैव व्याख्यानं **विदधातीति ॥ रूपनामनी** उत्पद्येते इति शेष इत्यर्थः । स्पष्टमन्यत् । **यस्मादिति ॥ यस्मात्** कारणात् **ब्रह्मा चतुर्मुखः,** सर्वं **विरेचयेत्** विदधाति । तेन कारणेन **विरिञ्च** इति **भण्यते** कथ्यते हि यतः **जगतः कर्ता** मुख्यकर्ता **न** तु द्वारभूतः अतो विरेचयेदित्यन्वयः । अयं च पूर्वपक्षे । **सिद्धान्ते तु-** गौणकर्तृत्वपरम् । **अथ कस्मादिति ॥ अथेति** प्रश्ने, विष्णुः **परम इति कस्मात्** कारणाद् **उच्यते,** उत्तरमाह- **परमादिति ॥ हि** यतः **परमाद्** विष्णोः **एते नामरूपे** प्रपञ्चौ **व्याक्रियेते** सृज्येते, **बृहत्त्वात्** वृद्धिमत्त्वात् **बृंहितत्वात्** नामरूपप्रपञ्चस्य सर्जनात् बृंहणकर्तृत्वात् **ब्रह्मेत्याहुः** इत्यर्थः । शिष्टं स्पष्टम् । अत्र परमात् नामरूपसृष्ट्युक्त्या सर्वोत्तमत्वमुक्तं सर्वोत्तमत्वात्परमशब्दवाच्यमित्युक्तमिति ज्ञेयम् ॥

**त्रिवृत्कुर्वतस्तु** पृथिव्यप्तेजसां मिश्रीभावं कुर्वतः परमात्मत एव । **उपदेशात्** 'सर्वाणि रूपाणि' इति श्रुतेरिति ॥

**नामरूपक्लृप्तिः परादेव । 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यद् आस्ते' (तै.आ.३–१२) इति श्रुतेः । त्रिवृत्कुर्वत इति हेतुगर्भः । त्रिवृत्करणापेक्षत्वान्नामरूपयोः ॥**

**'सर्वनाम्नां च रूपाणां व्यवहारेषु केशवः ।**
**एक एव यतः स्रष्टा ब्रह्माद्यास्तदवान्तराः ॥' इति च पाद्मे ॥**
**'त्रिवृत्क्रिया यतो विष्णो रूपं च तदपेक्षया ।**
**रूपापेक्षं तथा नाम व्यवहारस्तदात्मकः ॥**
**अतो नाम्नश्च रूपस्य व्यवहारस्य चैकराट् ।**
**हरिरेव यतः कर्ता पिताऽतो भगवान्प्रभुः ॥' इति च ब्रह्माण्डे ।**

**॥ इति सञ्ज्ञाधिकरणम् ॥ १२ ॥**

**भा.** ॥ सूत्रार्थमाहुः- **नामेति** ॥ सूत्रोपात्तश्रुतिमाहुः- [1]**सर्वाणीति** ॥ उभयत्र श्रुतेः सत्त्वात्कथं निर्णयोऽत आहुः- **त्रिवृदिति** ॥ विशेषणस्य हेतुगर्भत्वादियं युक्तिः सूचिता । 'नामरूपकर्ता (परमात्मा) तत्कारणीभूतपृथिव्यादिभूतत्रय(स्य)मिश्रीभावकर्तृत्वात्' इति । (एतदेवाहुः- **त्रिवृत्करणेति** ॥) विरिञ्चत्वादियुक्तियुक्तत्वेऽपि श्रुतेः सावकाशत्वमाहुः- [2]**सर्वेति** ॥ **पाद्म इति** ॥ तत्रेत्युक्तेः परादेवेत्यन्वयः । सूत्रार्थे स्मृतिमाहुः- [3]**त्रिवृदिति** ॥ **ब्रह्माण्डे इति** ॥ एतत्सूत्रार्थ उक्त इति शेषः ॥ २१ ॥अ.१२॥

॥ इति **सञ्ज्ञाधिकरणम्** ॥

---

१.**सर्वाणीति** ॥ (तै. आ.३.१२) **यत्** यः **धीरः** परमधैर्यशाली भगवान् **सर्वाणि रूपाणि विचित्य** सृष्ट्वा **नामानि** तेषां वाचकशब्दांश्च कृत्वा तैः शब्दैः **अभिवदन्** व्यवहरन् **आस्ते** । तमेवं विद्वान् अमृतो(मुक्तो) भवतीत्यर्थः।
२. **सर्वेति** ॥ **व्यवहारेषु** तद्विषयीभूतानामिति यावत् । **सर्वनाम्नां** नामात्मकप्रपञ्चानां, **रूपाणां** रूपात्मकप्रपञ्चानां **च, केशवः एक एव स्रष्टा यतः** । तत् तस्मात् **ब्रह्माद्याः अवान्तराः** द्वारभूता इत्यर्थः ॥
३. **त्रिवृत्क्रियेति** ॥ **यतः त्रिवृत्क्रिया** पृथिव्यप्तेजसां मिश्रीकरणं **विष्णोः** तत्सम्बन्धि भवति । **यतो रूपं तदपेक्षया** त्रिवृत्करणापेक्षया भवति । यतश्च नामरूपापेक्षया तत्साध्यं, यतश्च **व्यवहारः** अभिलपनादिरूपः **तदात्मकः** नामापेक्षः, **अतो नाम्नः रूपस्य व्यवहारस्य च, हरिः एकराट्** स्वतन्त्रः **कर्ता** नान्यः । **यतः कर्ता** भगवान् **अतः** सर्वजीवानां **पिता प्रभुः** स्वामी चेत्यर्थः ॥ २१ ॥ अ. १२ ॥

## १३. मांसाधिकरणम्

**'अद्भ्यो हीदमुत्पद्यते आपो वाव मांसमस्थि च भवत्यापः शरीरमाप एवेदं सर्वम्'**

**इति कौण्डिन्यश्रुतिः ।**

**'अम्मयं तु यतो मांसमतस्तृप्तिश्च मांसतः' इति च भारते ।**

**'पृथिवी शरीरमाकाशमात्मा' (बृ.उ.५–२–१३)**

**इति च श्रुतिः अतो ब्रवीति–**

अत्र नये शरीरस्याबादिषु त्रिषु (मध्ये) अन्यतमविकारत्वश्रुतिविरोधपरिहारः । शरीरं विषयः । पार्थिवं वा, आप्यं वा, तैजसं वा, भूतत्रयात्मकं वेति संशयः । पार्थिवादित्रितयान्यतमात्मकमिति पूर्वपक्षः ।। संशयबीजं दर्शयितुमादौ शरीरस्याऽप्यत्वे श्रुतिमाहुः- **[1]अद्भ्य इति ।।** (श्रुतेस्सयुक्तिकत्वे स्मृतिमाहुः- **[2]अम्मयमिति ।।) भारत इति ।।** भारते इत्युक्तयुक्तिसहिता कौण्डिन्यश्रुतिरित्यर्थः । उक्तश्रुतावपि सूक्ष्मदृष्ट्या युक्तिरूह्या । यद्यपि मांसस्यैवाबात्मकत्वे युक्तिरुक्ता (स्मृतौ) न तु सर्वशरीरस्य । तथाऽपि शरीरे सर्वं मांसात्मकमेवेत्याशयः । पार्थिवत्वे श्रुतिमाहुः- **[3]पृथिवीमिति ।।** इदमुपलक्षणम् । तैजसत्वे 'सोऽग्नेर्देवयोन्यामाहुतिभ्यः सम्भूय हिरण्यशरीरमूर्ध्वं लोकमेति' इति (ऐ.ब्रा.७.४) श्रुतिः । सर्वात्मकत्वे 'इमास्तिस्रो देवताः पुरुषं प्राप्य' (छा.६.४.७) इत्यादिश्रुतिरित्यस्यापि । अत्र सर्वत्रास्तीति शेषः । **अत इति ।।** उक्तश्रुतिषु एकस्याः प्रामाण्येऽपि अन्यासां प्राप्ताप्रामाण्यपरिहारार्थमित्यर्थः ।।

---

१. **अद्भ्य इति ।।** इदं शरीरम् **उत्पद्यत** इति प्रतिज्ञावाक्यं, तदुपपादनम् **आप इति ।। आपो मांसं भवति अस्थि च भवति,** यत **आपः शरीरं** शरीरमब्जन्यं **भवति,** नियमयति-**आप एवेति** ।। इदं शरीरमित्यर्थः ।।

२. **अम्मयमिति ।।** स्पष्टम् ।।

३. **पृथिवीमिति ।।** (बृ.५.२.१३) 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः चक्षुरादित्यं मनश्चन्द्रं दिशःश्रोत्रं पृथिवीं शरीरमाकाशमात्मा' इति श्रुतौ वागादीनामंशैर्गमनमुक्त्वा इदमुच्यते । पुरुषस्य शरीरं **पृथिवीमप्येति ।।** तत्र विलीनं भवति । **आत्मा** देहान्तर्गतो हरिः । **आकाशं** मूलरूपं **प्राप्नोति** इत्यर्थः (अयं च **सिद्धान्ते** । पूर्वपक्षे तु- प्रतीतोऽर्थः ।

(शरीरं भूतत्रयात्मकम्)

**॥ ॐ मांसादि भौमं यथाशब्दमितरयोश्च ॐ ॥ २२ ॥**

अनुक्तसमुच्चयार्थकचेन, यथाशब्दमित्यनेन च, द्रवोष्णमिति लभ्यते। अयमर्थः- **यथाशब्दं** 'यत्कठिनं सा पृथिवी' इति श्रुत्यनुसारेण **मांसादि च** तदादिकठिनद्रव्यमेव, भौमं पार्थिवं, द्रवोष्णं रक्तादि द्रवद्रव्यमुष्णद्रव्यं च, क्रमेण **इतरयोः** अप्तेजसोः सम्बन्धि तज्जन्यमिति यावत्, इति ॥ (एवं द्रवोष्णस्य अप्तेजोजन्यत्वे सूत्रार्थो वक्तव्यः ।) यद्वा- यथाशब्दं 'यद्वा वाऽथो' इति श्रुत्यनुसारेण मांसादि मांसम् आदिना द्रवद्रव्यमुष्णद्रव्यं च, भौममितरयोश्चेत्यर्थः। एवं च सर्वशरीरस्य मांसाद्यात्मकत्वेन भूतत्रयात्मकत्वं, मांसादेरपि भूतत्रयात्मकत्वमिति पूर्वोदाहृतश्रुतीनां प्रामाण्यं सिद्धमिति भावः ।

**'यत्कठिनं सा पृथिवी यद्द्रवं तदापो यदुष्णं तत्तेजः'**

**इति श्रुतेर्मांसाद्येव भौमं न सर्वशरीरम् । अप्तेजसोश्च कार्यं यथाशब्दमङ्गीकर्तव्यम् ।**

**'यद्वावाथो विमिश्रं मिश्राद्ध्येतद्भवति मिश्राणि हि भूतानि तस्मादेवैवमाचक्षते भूतानि' इति हि काषायणश्रुतिः ।**

**'पञ्चभूतात्मकं सर्वं तदप्येकविवक्षया ।**
**एकभूतात्मकत्वेन व्यवहारस्तु वैदिके ।**
**भौममित्येव काठिन्याच्छैक्ष्ण्यादौदकमित्यपि ।**
**'तेजिष्ठत्वात्तैजसं च यथाऽस्थ्नां वचनं श्रुतौ' ॥ इति वायुप्रोक्ते ॥ २२ ॥**

भा.॥ श्रुत्युदाहरणपूर्वं सूत्रार्थमाहुः- **'यत्कठिनमिति** ॥ (**एवेति** ॥ अनेन द्रवोष्णस्य भौमत्वव्यावृत्तिः। एवमितरविषयेऽपि व्यावृत्तिरूह्या ।) **अप्तेजसोरिति** ॥ रक्ताद्येव अप्कार्यम्, उष्णद्रव्यमेव तेजः- कार्यमित्यर्थः। ननु कथं मांसस्याप्यकार्यस्य पार्थिवत्वं तथात्वे 'आपो वाव मांसम्' इति श्रुतेः, आप्यत्वे युक्तेश्च सत्त्वादित्यतो वाऽऽहुः- **अप्तेजसोश्चेति** ॥ मांसादिभौममप्तेजसोश्च कार्यमित्यर्थः ।

---

१. **यत्कठिनमिति** ॥ (गर्भोपनिषत्-३) **यत्कठिनं** मांसादि **सा पृथिवी** । **यद्द्रवं** शोणितादि **तदापः** । **यदुष्णं** मज्जादि **तत्तेज** इत्यर्थः ।

अत्रपक्षे यथाशब्दमित्युक्तश्रुतिमाहुः- **'यद्वावेति** ॥ उक्तार्थे स्मृतिं चाहुः- **'पञ्चेति** ॥ **वायुप्रोक्ते इति** ॥ श्रुतिः, वायुप्रोक्ते श्रुताविति वचनं च, सूत्रस्थयथाशब्दपदार्थ इत्यर्थः ॥ २२ ॥

**कथं तर्हि विशेषवचनमित्यत आह–**

सूत्रमवतारयन्ति- **कथं तर्हीति** ॥ सर्वशरीरस्य भूतत्रयात्मकत्वे पार्थिवं शरीरमित्यादिविशेषव्यवहारः किं निबन्धन इत्यर्थः ॥

**(तत्तद्भूतसम्बन्धाधिक्याद् पार्थिवत्वादिव्यवहारः)**

**॥ ॐ वैशेष्यात्तु तद्वादस्तद्वादः ॐ ॥ २३ ॥**

युज्यते इति शेषः । अयमर्थः - **तद्वादः** शरीरे पार्थिवमाप्यं तैजसमिति व्यवहारः । **वैशेष्यात्तु** तत्तद्भूतसम्बन्धाधिक्यात् युज्यत इति ॥ एवं मांसादिविषयेऽपि ज्ञेयम् । द्विरुक्तिः तात्पर्यार्था ॥

**भूतानां तु विशेषसंयोगादेव विशेषव्यवहारः ।**

**'पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता ।**
**इतरेऽर्धे त्रिभागिन्य आपस्तेजस्तु भागतः ॥**
**इति सामान्यतो ज्ञेयं भेदश्च प्रतिपूरुषम् ।**
**स्वर्गस्थानां शरीराणामर्धं तेज उदाहृतम् ॥' इति च बृहत्संहितायाम् ॥**

---

२. **यदिति** ॥ **यत्** यस्मात् **विमिश्राणि भूतानीति हि** प्रसिद्धम् **अथो** तस्मात् यच्छरीरे मांसादि तदपि **मिश्रमेव** भवेत् । **हि** यस्मात् **एतत्** मांसादि **विमिश्रात्** भूम्यादेः **भवति** । **अथो** तस्मात् विमिश्रितत्वाद्धेतोः पृथिव्यादीनि **भूतानीति आचक्षते** विद्वांस इत्यर्थः ।

२. **पञ्चेति** ॥ **सर्वं** पार्थिवादि सर्वशरीरेष्वपि मांसादिकं **सर्वं** प्रत्येकं प्रत्येकं **पञ्चभूतात्मकम्** । **तदपि** तथापि **एकविवक्षया** एकैकभूतसम्बन्धविवक्षया **एकभूतात्मकत्वेन** एकभूतकार्यत्वेन **वैदिके** वचने **काठिन्यात् भौमम्** इति, **शौक्ल्यादौदकम्** इति । **तेजिष्ठत्वात्** अतिशयिततेजोभागवत्त्वात् **तैजसं** चेति **व्यवहारः** अस्ति । उदाहरणमाह- **यथेति** ॥ **अस्थ्नां वचनं** त्रिविधत्वेन प्रतिपादनं, **श्रुतौ** 'यत्कठिनं सा पृथिवी' इति श्रुतौ, सामान्यरूपेण अस्थ्नः पृथिवीत्वम् । 'अस्थि च भवन्त्याप' इति कौण्डिन्यश्रुतौ, अस्थ्न आप्यत्वं 'तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुः तदस्थि भवति' इति छन्दोगश्रुतौ तैजसत्वं प्रतिपादितमित्यर्थः ॥२२॥

**सर्वाध्यायार्थावधारणार्थाऽध्यायान्ते द्विरुक्तिः । गारुडे च–**

**'अध्यायान्ते द्विरुक्तिः स्याद्वेदे वा वैदिकेऽपि वा ।**
**विचारो यत्र सज्येत पूर्वोक्तस्यावधारणे ।।**
**अनुक्तानां प्रमाणानां स्वीकारश्च कृतो भवेत् ।**
**विनिन्द्य चेतरान्मार्गान्सम्पूर्णफलता तथा ।।' इति च ।।**

**।। इति मांसाधिकरणम् ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये द्वितीयाध्यायस्य चतुर्थः पादः ।। ।। २ ।। ४ ।।**

**भा.** ।। सूत्रतात्पर्यमाहुः- **भूतानामिति** ।। शरीरे भूतानां विशेषसंयोगे मानमाहुः- [1]**पार्थिवानामिति** ।। **संहितायामिति** ।। **उक्तादिति शेषः** । उक्ताद्विशेषसंयोगादेवेत्यन्वयः । द्विरुक्तेः फलमाहुः- **सर्वेति** ।। अत्र मानमाहुः- [2]**गारुडे च - अध्यायेति** ।। द्विरुक्तेः फलमुक्तमिति शेषः । **इति चेति** ।। इति वचनेन चेत्यर्थः ।। २३ ।। अ.१३ ।।

।। इति मांसाधिकरणम् ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीब्रह्मसूत्रभाष्यस्य व्याख्यायां भाष्यार्थसहितसूत्रार्थमणिमञ्जर्यां द्वितीयाध्यायस्य चतुर्थः पादः ।।**

---

१. **पार्थिवानामिति** ।। स्थलजानां **शरीराणामर्धेन** भागेन अष्टधा विभक्तशरीरसम्बन्धिभागाष्टकमध्ये अर्धभूतभागचतुष्टयेनेति यावत् । अभेदे तृतीया उक्तार्धाभिन्ना **पृथिवी स्मृता** । **इतरे** उक्तादन्यस्मिन् भागे चतुष्टयात्मके, घटकत्वं सप्तम्यर्थः । **त्रिभागिन्यः** भागत्रयवत्यः **आपः**, **तेजस्तु इतरेऽर्धे भागत** एकभागेन युक्तमिति स्वजातीयभागचतुष्टयवत्त्वं सामान्यतः सर्वत्राप्यतैजसशरीरयोरपि ज्ञेयम् । **भेदश्च** अवशिष्टार्धे भूतविशेष-सम्बन्धवैलक्षण्यं च **प्रतिपुरुषं** पार्थिवाप्यतैजसेषु सर्वशरीरेष्वस्ति । तथाहि- जलजानां शरीराणामर्धमापः । इतरेऽर्धे त्रिभागिनी पृथिवी । भागमात्रं तेज इति । उक्तार्थं तैजसेषु शरीरेषु दर्शयति- **स्वर्गस्थानामिति** ।। **अर्धं** भागचतुष्टयात्मकं **तेज उदाहृतं** तेजोरूपमिति यावत् । **इतरेऽर्धे त्रिभागिन्य आपः** । एकभागः पृथिवीति शेष इत्यर्थः। एवं च सम्भूय शरीरेषु अपां दशभागाः । पृथिव्या अष्टौ भागाः। तेजसः षट्भागाः,सन्तीति ज्ञेयम् ।

२.**अध्यायान्त इति** ।। **यत्र वेदे वैदिके वा** ग्रन्थे, **विचारः** हेतुना अर्थनिर्णयः । **सज्येत** क्रियते । **तत्र** ग्रन्थे **अध्यायान्ते** पदस्य वा, वाक्यस्य वा **द्विरुक्तिः स्यात् पूर्वोक्तस्यावधारणे** । तदर्थम् **इतरान्** सूत्रतदनुकूलेतरान् **मार्गान्** शास्त्राणि **विनिन्द्य** विषयादिशून्यत्वेन हेयानीति गर्हयित्वा, **अनुक्तानां** सूत्राद्यक्षरैरनुक्तानाम् । किन्तु सूचितानां **प्रमाणानां स्वीकारः** सङ्ग्रहः **कृतो भवेत्** । **सम्पूर्णफलता तथा** मोक्षरूपप्रयोजनसाधनत्वं च शास्त्रस्य भवेदिति च द्विरुक्तिः स्यादित्यन्वयः ।। २३ ।। अ. १४ ।।

| पा | सू. | अ. |
|---|---|---|
| प्र. | ३८ | ११ |
| द्वि. | ४५ | १२ |
| तृ. | ५३ | १९ |
| च. | २३ | १३ |
| ४.पा. | १५९ | ५५ |

॥ इति द्वितीयोऽध्यायः ॥

## ॥ ब्रह्मसूत्रानुक्रमणिका ॥

### प्रथमाध्यायः

*******

## द्वितीयाध्यायः

*******



महामहोपाध्याय श्रीमुष्णम् सुब्बरायाचा

उडुपि कृष्णापुरमठाधीशानां
श्रीविद्याधीश-श्रीमच्चरणानां
शिष्यप्रवराः। चतुश्शास्त्रनदीष्णाः।
वाक्यार्थ-प्रबन्धनिर्माणकुशलाः।
श्रीमदुत्तरादिमठाधीशैः प्रातःस्मरणीयैः
श्रीसत्यध्यानतीर्थैः सम्मानिताः।
महामहोपाध्यायबिरुदभाजः।
एतेषां शिष्यप्रवराः
कृष्णमूर्तिशास्त्रि, दण्डपाणि दीक्षित्,
शतावधानि-लक्ष्मणाचार्य, झलकीकर्
वामनाचार्य, आर्. वि. कृष्णमाचार्य,
नदीतीरसेतुमाधवाचार्यप्रभृतयः नैके
विद्वद्वरेण्याः समग्रेऽपि भारतदेशे
पाठप्रवचनादिना अतुलां कीर्तिमापुः।
एभिः प्रणीताः विद्वज्जनैका-
ध्ययनयोग्याः ग्रन्था अपूर्वां तत्तच्छास्त्र-
विचारप्रणालीं प्रकटीकुर्वन्ति।

सज्ज्ञानायानन्दविज्ञानमूर्ती प्राप्तौ पृथ्वीमाश्रमे तत्र तावत् ।
जाज्वल्येते विष्णुवायू स्म देवौ वेदव्यासानन्दतीर्थाभिधानौ ॥



